३ खण्डम्

## श्रीमद्भगवद्रामानुजविरचित-
## वेदान्तसूत्रव्याख्यानम्

# श्रीभाष्यम् ।

## श्रीसुदर्शनाचार्य-श्रीरङ्गरामानुजार्यप्रणीत-
## श्रुतप्रकाशिका-भावप्रकाशिकाटीका-
## द्वयोपेतम्



वृन्दावनवास्तव्य-सर्वतन्त्रस्वतन्त्र-श्रीसुदर्शनाचार्य-
शास्त्रिणामन्तेवासिना पं० धरणीधरशास्त्रिणा
सम्पादितम् प्रकाशितञ्च

तच्च

श्रीधरणीधरशास्त्रिपादान्तेवासि वे० शिरोमणि
वेदान्ततीर्थ पं० श्रीधराचार्यद्वारा संशोध्य


श्रीवृन्दावनधामनि
श्री "श्रीनिवास" यन्त्रालये मुद्रापितम्

printed by p. Shridharacharya at the
Shri "Shrinibas" Press Brindaban

सन् १९१७ ] [ रामानुजवत्सर ९०१

# श्रीभाष्यतृतीयखण्डस्थविषयानुक्रमणिका ।





## प्रथमपादः समाप्तः ।

---

## प्रथमाध्याये द्वितीयपादः



## द्वितीयपादः समाप्तः ।

---

## प्रथमाध्याये तृतीयपादः ।

* श्रीभाष्यकाराय नमः *

'यतो वा इमानि' इत्यादिजगत्कारणवादिवाक्य-प्रतिपाद्यं सर्वज्ञं सर्वशक्तिसमस्तहेयप्रत्यनीककल्याण-गुणैकतानं ब्रह्म जिज्ञास्यमित्युक्तम् । इदानीं जगत्कारणवादिवाक्यानामानुमानिकप्रधानादिप्रतिपादनानर्हतोच्यते- ईक्षतेर्नाशब्दमित्यादिना ॥

* श्रुतप्रकाशिका *

प्रथमे सूत्रे उद्देशः कृतः । द्वितीये लक्षणमुक्तम् । तृतीयचतुर्थाभ्यां लक्ष्यस्य ब्रह्मणः परीक्ष्यत्वसिद्ध्यर्थं लक्षणस्वभावासिद्धत्वाल्लक्ष्यस्वभावाशक्यत्वेन ज्ञातत्वाप्रयोजनत्वशङ्के परिहृते । अथ लक्ष्यं वस्तु किं चिदचिद्विलक्षणम् ? उत अविलक्षणम् ? इति परीक्ष्यते । यद्वा पूर्वं कारणत्वमनूद्य तस्य लक्षणत्वमुक्तम् । लक्षणलक्ष्यस्वभावनिबन्धनं शङ्काद्वयं च परिहृतम् । अथ लक्षणभूतकारणत्वप्रापकवाक्यानि निरूप्यन्ते । यद्वा चतुस्सूत्र्या वेदान्तवाक्यानां ब्रह्मणि प्रामाण्यस्वरूपपरीक्षणात्मकस्थापनं कृतम् । अथ प्रमेयनिरूपणपरीक्षा क्रियते इति पेटिकासङ्गतिः । ननु ईक्षत्यधिकरणमनारम्भणीयम्, समन्वयाधिकरणे पुरुषार्थभूतस्यैव ब्रह्मणः प्रतिपाद्यत्वनिश्चयेन तद्विपरीतस्य प्रधानस्य प्रसङ्गाभावादिति. नैवम् ; पुरुषार्थभूतस्य ब्रह्मणः प्रतिपाद्यत्वं न सम्भवति, अपुरुषार्थभूतस्य प्रधानादेः प्रतिपादनादिति समन्वयाधिकरणोक्तार्थस्याक्षेपेण उत्थानादिति । इयमवान्तरसङ्गतिः, इत्येतदभिप्रायेण पेटिकाभेदतस्सङ्गत्यवान्तरसङ्गती आह ( यतो वा इमानीत्यादीति ) उद्दिष्टस्य ब्रह्मणो लक्षण-

* भावप्रकाशिका *

( प्रथमे सूत्रे उद्देशः कृत इति ) अत्रायं विवेकः, प्रथमद्वितीयपक्षयोः तृतीय-चतुर्थाधिकरणे लक्ष्यलक्षणस्वभावनिबन्धनापरीक्ष्यत्वाशङ्कानिवर्तकत्वेनैका पेटिका । तत्रापि 'यतो वा इमानि' इत्यादिवाक्ये जगत्कारणानुवादेन ब्रह्मत्वं विधीयत इति पक्षानुसारेण प्रथमः पक्षः । यतो वा इमानीतिवाक्ये कारणत्वानुवादेन लक्षणत्वं विधीयत इति पक्षानुसारेण द्वितीयः पक्षः । न्यायशास्त्रस्योद्देशलक्षण-परीक्षारूपत्वस्य आवश्यकत्वेपि अस्य शास्त्रस्य तदनावश्यकत्वात् प्रथमद्वितीय-

## ईक्षतेर्नाशब्दम् ॥ ५ ॥

५ अधिकरणम्

इदमाम्नायते छान्दोग्ये-- "सदेव सोम्येदमग्र आसीदेकमेवाद्वि-

* श्रुतप्रकाशिका *

मुक्तम् । लक्षितस्य परीक्षणं वर्तिष्यत इत्यभिप्रायेण लक्षणवाक्यमुपात्तम्' कारणत्वानुवादेन तस्य लक्षणत्वविधानात् कारणस्य चिदचिद्वैलक्षण्यनिर्णयस्य कारणत्वप्रापकवाक्यनिरूपणसापेक्षत्वादस्मिन्नधिकरणे कारणवाक्यानि निरूप्यन्त इति च ज्ञापनार्थं लक्षणवाक्योपादानम् । आदिशब्देन कारणत्वप्रापकवाक्यानि गृह्यन्ते, अत एव ह्यनुवादपुरोवादसाधारण्येन जगत्कारणवादीत्युक्तम् । समन्वयाधिकरणार्थाक्षेपहेतुकावान्तरसङ्गत्युपयोगीनि सर्वज्ञत्वादिविशेषणानि ( जिज्ञास्यमित्युक्तमिति ) प्रामाणिकतया परीक्ष्यमित्यर्थः। तदनन्तरं परीक्षा हि सङ्गतेत्यभिप्रायेणाह ( इदानीमिति ) अनेन चतुस्सूत्र्यानन्तर्यं ब्रह्मणः पुरुषार्थताप्रतिपादनपरसमन्वयाधिकरणानन्तर्यमप्युक्तम्। आनुमानिकप्रधानादीत्यनेनानन्तरोक्तसमन्वयाक्षेपेणोत्थानादवान्तरसङ्गतिरिति सूच्यते, प्रधानादीत्यादिशब्देन क्षेत्रज्ञमात्रं चिद्विशेषाः अचिद्विशेषाश्च गृह्यन्ते , ( ईक्षतेर्नाशब्दमित्यादिनेति ) पादशेषेणाध्यायशेषेणेति वार्थः ॥ ....

विषयमुदाहरति ( इदमिति ) प्रतिज्ञादृष्टान्तोपेतं सङ्कल्पप्रतिपादकं सामान्यशब्दवत् कारणवाक्यं विषयः । तत्र सद्विद्यावाक्यमेवास्याधिकरणस्य साक्षाद्विषयः , सद्विद्याद्वारेणेतरकारणवाक्यानां विषयत्वम्, न तु साक्षादेव, विषयवाक्योपादान-

ঌ भावप्रकाशिका ঌ

याधिकरणयोर्निर्देशलक्षणार्थप्रवृत्तत्वम् , अपि तु व्युत्पत्त्यभावप्रतिपत्तिदौस्थ्यमानान्तरसिद्धत्वाफलत्वनिबन्धनानारम्भशङ्कानिवर्तकत्वेन चतुर्णामप्यधिकरणानामेकपेटिकात्वमिति तृतीयः पक्षः । ( क्षेत्रज्ञमात्रमिति ) जीवसामान्यमित्यर्थः ॥ .... .... .... .... ....

( सद्विद्याद्वारेणेति ) न्यायतौल्यात्तेषां पक्षसमत्वमिति भावः । उपनिषदन्तरगतगतिसामान्याद्ब्रह्मविषयत्वं सिद्धवत्कृत्य तस्य हेतुतयोपन्यासाच्च सद्वि-

तीयम् । तदैक्षत बहु स्यां प्रजायेयेति तत्तेजो ऽसृजत " इत्यादि । तत्र सन्देहः, किं सच्छब्दवाच्यं जगत्कारणं परोक्षमानुमानिकं प्रधानम् ?

* श्रुतप्रकाशिका *

समये वाक्यान्तराणामनुपादानात् दीपसारयोश्च तेषामनुपात्तत्वात्प्रतिज्ञाविरोधस्वाप्ययोरत्रत्ययोरेव सूचितत्वात्तदनुग्राहकत्वेनोपनिषदन्तःगतिसामान्यस्य अस्यामुपनिषदि विद्यान्तरेषु श्रुतत्वस्यापि सूत्रितत्वात् बुद्ध्यवतरणक्रमेण प्रथममुपादानत्वोचिताचेतनत्वशङ्कायाः प्रतिक्षेप्यत्वात् सद्ब्रह्मात्मादिपदचिह्नितेषु वाक्येषु सामान्यशब्दचिह्नितवाक्यस्य प्रथमनिरूपणीयत्वाच्च । सामान्यद्वारा हि विशेषो बुद्धिमधिरोहति . सामान्यपरिग्रहे प्रतिक्षेपे च विशेषविषयसंशयोऽवकाशवान्, विशेषे तु प्रतिपन्ने हि सामान्याकाङ्क्षा न स्वरसवाहिनी , सन्दिग्धे हि न्यायप्रवृत्तिः, अतः संशयसद्भावमाह ( तत्रेति ) कारणस्येदंशब्दवाच्यकार्यसालक्षण्यावश्यम्भावेक्षितृत्वाभ्यां संशयः। संशयशरीरं दर्शयति ( किमिति ) सच्छब्दवाच्यमिति धर्मिवाचिपदस्य साधारणतया संशयसहत्वं दर्शितम्। जगत्कारणमिति उपादानत्वात् कार्यसालक्षण्यं दुस्त्यजम्, निमित्तत्वान्मुख्येक्षितृत्वं चेति संशयहेतुस्थिरीकरणम् । ( परोक्षमिति ) विप्रतिपत्तिरपि संशय-

ꣳ भावप्रकाशिका ꣳ

द्यावाक्यस्यैव विषयत्वमित्याह ( तदनुग्राहकत्वेनेति ) सिद्धान्तानुग्राहकत्वेनेत्यर्थः । नचैवं वेदान्तान्तराणामपि पक्षतुल्य इति पूर्वग्रन्थविरोध इति वाच्यम् . तस्योत्तरत्र समाधास्यमानत्वादिति द्रष्टव्यम् । ( उपादानत्वोचितेति ) विकारित्वादिति भावः । नन्वचेतनत्वशङ्कायाः प्रतिक्षेप्यत्वेपि ब्रह्मपदादियुक्तवाक्यस्य विषयत्वमस्त्वित्यत आह ( सद्ब्रह्मात्मादीति ) सत्त्वस्य ब्रह्मत्वापेक्षया साधारणतया तस्यैव विचारो युक्त इति भावः । ( विशेषे तु प्रतिपन्ने हीति ) प्रथमत एवाकाशेन्द्रियादिपदावलम्बने पूर्वपक्षे निरस्ते सदादिसामान्यशब्दावलम्बनपूर्वपक्षो दण्डापूपन्यायपराहतस्स्यात् , अत एतस्यैव पूर्वप्रवृत्तत्वमुचितमिति भावः । ( अतस्संशयसद्भावमाहेति ) सच्छब्दयुक्तवाक्य एवेति शेषः । केचित्तु संदिग्धे हि न्यायप्रवृत्तिः, अतो न्यायावतारार्थं संशयसद्भावमाहेत्येक-

* श्रुतप्रकाशिका *

हेत्वोरनुग्राहिकेति भावः । पूर्वपक्षबीजस्मारणपरसौत्रपदद्योतनार्थमानुमानिकमिति पदम् । उक्तलक्षणम्– सर्वज्ञत्वादिलक्षणम्, आनुमानिकोक्तलक्षणपदाभ्यां संशयहेतुद्वयसूचनम् । किञ्च जगत्कारणवादिवेदान्तवाक्यानि किं प्रधानादिप्रतिपादनपराणि ? उत तद्विलक्षणब्रह्मपराणि ? इति पादशेषसाधारणो विचारः , अत्र तु तदर्थं सद्विद्यावाक्यानि किं प्रधानप्रतिपादनपराणि ? उतोक्तलक्षणब्रह्मपराणि ? इति विचारः, तदर्थं किमत्रेक्षणं गौणम् ? उत मुख्यम् ? इति । तदर्थं किमनुमानाकारता गौणेक्षणसाहचर्यं च विद्यते ? नेति , तदर्थं प्रतिज्ञादृष्टान्तौ किं हेतोराक्षेपकौ नेति , तेजःप्रभृतिशब्दाः किं तेजःप्रभृतिमात्रवाचिनः ? उत परमात्मपराः ? इति च । तदर्थमात्मशब्दस्तेजःप्रभृतिशब्दानाम् अब्रह्मपरत्वस्याविरोधि ? उत विरोधीति । तदर्थमात्मशब्दस्वारस्यभङ्गहेतवोऽनुरोद्धव्याः? उत तदनुग्राहकहेतवः ? इति विचारः । तत्स्वारस्यभङ्गहेतवोऽनुरोद्धव्या इति पूर्वः पक्षः । तदनुग्राहका एवानुरोद्धव्या इति सिद्धान्तः । यदा स्वारस्यभङ्गहेतोरनुरोद्धव्यत्वेनात्मशब्दस्य तेजःप्रभृतिशब्दानाम् अब्रह्मपरत्वाविरोधितया तेजःप्रभृतिशब्दास्तेजःप्रभृतिमात्रवाचिनः, प्रतिज्ञादृष्टान्तौ च यदा हेत्वाक्षेपकौ तदा हेत्वाक्षेपौ गौणेक्षणसाहचर्यं चास्तीति प्रथमश्रुतेक्षणस्य गौणत्वेन सद्विद्या-

* भावप्रकाशिका *

ग्रन्थतया योजयन्ति ( विप्रतिपत्तिरपीति ) परोक्तमित्यनेन स्वोक्तस्याक्षेपाद्विरुद्धार्थप्रतिपादकवचनद्वयरूपविप्रतिपत्तिरुपन्यस्ता भवति , अत्र परोक्तमित्यनेन त्रिगुणात्मकत्वस्य सूचितत्वात् कार्यसालक्षण्यरूपहेतुरनुगृहीतो भवति । स्वोक्तमित्यनेन चेतनत्वस्य सूचनान्मुख्येक्षितृत्वस्यानुग्रहो भवतीति भावः । ( पादशेषसाधारणो विचार इति ) नन्वयं विचारोऽध्यायमात्रसाधारण एवेति कथं पादशेषमात्रसाधारणत्वमुच्यत इति चेन्न ; सर्वाण्यपि वेदान्तवाक्यानि प्रधानादिप्रतिपादनपराणि ? उत तद्विलक्षणत्वपराणीति तदर्थात् . प्रथमपादे चिदचिद्विलक्षणास्तित्वस्य सिद्धत्वेन त्रिपाद्या अन्ययोगव्यवच्छेदार्थत्वेन कतिपयवाक्यमात्रविषयत्वादिति द्रष्टव्यम् । ( अब्रह्मपरत्वस्याविरोधीति ) साधको नवेत्यर्थः । ततश्चात्मशब्दस्य तेजःप्रभृतिशब्दब्रह्मपरत्वविरोधित्वस्य पूर्वपक्षिणाप्यनभ्युपेतत्वात्कथमियमुक्तिरितिशङ्का परास्ता । एवमुत्तरत्रापीति द्रष्टव्यम् ।

उतोक्तलक्षणं ब्रह्म ? इति । किं प्राप्तम् ? प्रधानमिति । कुतः ? "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इतीदंशब्दवाच्यस्य चेतनभोग्यभूतस्य सत्त्वरजस्त-

* श्रुतप्रकाशिका *

वाक्यानां प्रधानपरत्वात्तदेकार्थतया सर्वाणि कारणवाक्यानि प्रधानपराणीति पूर्वपक्षे फलफलिभावः । यदा आत्मशब्दस्वारस्योत्तम्भकहेतोरनुरोद्धव्यत्वेनात्मशब्दस्य तेजःप्रभृतिशब्दानामब्रह्मपरत्वविरोधित्वेन तेजःप्रभृतिशब्दाः परमात्मपराः, प्रतिज्ञादृष्टान्तौ च यदा न हेत्वाक्षेपकौ तदाऽनुमानाकारत्वगौणत्वसाहचर्ययोरसिद्ध्या प्राथमिकेक्षणस्यागौणत्वात् सद्विद्यावाक्यानि परब्रह्मपराणि, अतस्तदैकार्थ्यात्सर्वाणि कारणवाक्यानि परब्रह्मपराणीति सिद्धान्ते फलफलिभावः । तत्र पूर्वपक्षं वक्तुमन्यतरशिरसो युक्तिमत्त्वेन निर्द्धारणाकाङ्क्षां दर्शयति ( किं प्राप्तमिति ) प्राप्तम्—युक्तम्, युक्तिमदित्यर्थः । पूर्वपक्षी स्वपक्षं युक्तिमत्त्वेन प्रतिजानीते ( प्रधानमितीति ) संशयकोटीकृते शिरोद्वये प्रधानमिति शिरो युक्तिमदित्यर्थः । युक्तिविशेषाकाङ्क्षां दर्शयति ( कुत इति ) तदुपपादयति ( सदेवेति ) कारणस्य प्रधानत्वसिद्ध्यौपयिकानि तद्विलक्षणपुरुषविशेषत्वविरोधीनि च विशेषणान्याह— इदंशब्देत्यादिना । ( इदंशब्दवाच्यस्येति ) परागर्थे हीदंशब्दस्वारस्यम्, न तु प्रत्यग्रूपे चेतन इति भावः । जगतश्चिदचिदात्मकतया चेतनस्यापीदंशब्दवाच्यान्तर्भावव्युदासायाह ( चेतनभोग्यभूतस्येति ) चिदंशस्य कार्यत्वकारणत्वायोगात् न तस्य कार्यान्तर्भाव इति भोक्तृतयाऽवस्थानमेव तस्य, भोग्यस्यैव तु कार्यत्वमिति भावः । चेतनस्य ज्ञेयतैकस्वभावजगद्रूपत्वमयुक्तमिति चाभिप्रायः । कार्यस्य भोग्यत्वौपयिकं कारणस्य प्रधानत्वापादकं च विशेषणमाह ( सत्त्वरजस्तमोमयस्येति ) सत्त्वादिकार्यसुखदुःखमोहान्वयहेतुत्वदर्शना-

* भावप्रकाशिका *

( अन्यतरशिरस इति ) अनयोर्मध्ये किं वा शिरो युक्तिमत्तया निर्धारणार्हमित्याकाङ्क्षां दर्शयतीत्यर्थः । ( सुखदुःखमोहान्वयहेतुत्वदर्शनादिति ) यथा एका स्त्री रूपयौवनकुलशीलसम्पन्ना स्वामिनं सुखाकरोति, तत्कस्य हेतोः ? स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्. सैव स्त्री सपत्नीं प्रति दुःखाकरोति, तत्कस्य हेतोः ?

भोग्यमयस्य वियदादिनानारूपविकारावस्थस्य वस्तुनः कारणावस्थां वदति, कारणभूतद्रव्यस्यावस्थान्तरापत्तिरेव हि कार्य्यता, अतो यद्द्रव्यं यत्स्वभावं च कार्य्यावस्थम्; तत्स्वभावं तदेव द्रव्यं कारणावस्थम्। सत्त्वादिमयं च कार्य्यमिति गुणसाम्यावस्थं प्रधानमेव कारणम्। तदेवोपसंहृतसकलविशेषं सन्मात्रमिति

* श्रुतप्रकाशिका *

जगतः सत्त्वादिमयत्वम्, निर्गुणः कथं गुणमयस्य कारणमिति चाभिप्रायः। भोग्यत्वोपपादनायाह (वियदादीति) यद्वा, इदंशब्दवाच्यद्रव्यस्य कारणत्वे कार्यत्वकारणत्वयोः को भेद इत्यत्राह– वियदादीति। एकत्वावस्थं कारणम्, बहुत्वावस्थं कार्यमिति भिदे यर्थः। एकरूपस्य पुरुषस्य नानारूपकार्यभावोऽनुपपन्नश्चेति भावः। कारणस्य कार्यसालक्षण्यावश्यम्भावे हि चेतनस्य इदंशब्दवाच्यं प्रति कारणत्वानुपपत्तिः, कारणावस्था कार्योत्पादनभूतद्रव्यान्तरनिष्ठेति कथं सालक्षण्यावश्यम्भाव इति शङ्कायां कार्यकारणयोरेकद्रव्यत्वमाह (कारणभूतद्रव्यस्येति) ततः किमित्यपेक्षायां कार्यकारणसालक्षण्यनियमं फलितमाह (अत इति) ततोऽपि किमित्याशङ्कायां कार्यस्य प्रधानसालक्षण्यमाह (सत्त्वादिमयञ्चेति) प्रधानस्य कार्यसारूप्यमाह (गुणसाम्यावस्थमिति) कार्ये गुणवैषम्यदर्शनात्कारणमपि तथाविधं स्यादिति शङ्कापाकरणार्थं गुणसाम्यावस्थमित्युक्तम्, न तु गुणमयमिति. विषमावस्थस्य सर्वस्य कार्यत्वदर्शनात् कारणस्यापि तथात्वे कारणान्तरापेक्षयाऽनवस्थाप्रसङ्गाच्च प्रधानस्य गुणसाम्यावस्थत्वसिद्धिरिति भावः। अनेकगुणसाम्यावस्थस्य प्रधानस्य कारणत्वे एकत्वावधारणमनुपपन्नम्, एकस्यैव ब्रह्मणः कारणत्वे तूपपन्नमित्यत्राह (तदेवोपसंहृतेति) एकमेवेति नामरूपविभागव्युदासः, अद्वितीयमिति गुणवैषम्यव्युदास इत्यभिप्रायेण उपसंहृतसकलविशेषमित्युक्तम्। (सन्मात्रमिति) सदेवेति

७ भावप्रकाशिका ७

तां प्रति तस्याः दुःखरूपसमुद्भवात्, एवं तामविन्दत्पुरुषान्तरं सैव मोहयति,

"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इत्यभिधीयते। तत एव च कार्य्यकारणयोरनन्यत्वम्, तथा सत्येवैकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपत्तिः । अन्यथा "यथा सोम्यैकेन मृत्पिण्डेन" इत्यादिमृत्पिण्डतत्कार्यदृष्टान्तदार्ष्टान्तिकयोर्वैरूप्यं चेति जगत्कारणवादिवाक्येन महर्षिणा कपिलेनोक्तं प्रधानमेव प्रतिपाद्यते।

* श्रुतप्रकाशिका *

कादाचित्कासत्त्वव्युदास इति भावः । सन्मात्रमितीत्यत्रेतिशब्दो हेतौ । प्रधानकारणत्वमेव युक्त्यन्तरेणोपपादयितुमाह ( तत एवेति ) इदंशब्दवाच्यं प्रति कारणस्य त्रिगुणात्मकस्य प्रधानस्य सच्छब्दवाच्यत्वादेव हि कार्यकारणयोरनन्यत्वसिद्धिः, न हि विजातीययोरनन्यत्वमितिभावः । अनन्यत्वं माभूदित्यत्राह ( तथा सतीति ) अनन्यत्वे सति ह्येकविज्ञानेन सर्वविज्ञानसिद्धिः, तच्चिदचिद्विलक्षणकारणत्वपक्षे न सम्भवतीति भावः । एवं प्रतिज्ञासिद्धिरूपयुक्तिरुक्ता भवति । यद्वा इदमग्रे सदिति सामानाधिकरण्यात् 'तद्धैक आहुः' इत्यसत्कार्यवादप्रतिक्षेपाच्चानन्यत्वसिद्धिः पूर्वग्रन्थे ऽभिप्रेता । हेत्वन्तरं चाह— तथा सतीति । तथा सति— प्रधानकारणत्वे सतीत्यर्थः । कार्यकारणयोरनन्यत्वे प्रतिज्ञावाक्यतात्पर्यात्तत्रैकशब्दोऽपि गुणसमुदायैक्याद्युक्त इति भावः । युक्त्यन्तरमाह ( अन्यथेति ) अचेतनमृत्पिण्डलोहमण्यादिदृष्टान्तश्चेतनकारणस्य दार्ष्टान्तिकत्वे न सङ्गच्छत इत्यभिप्रायः । यद्वा सरूपमृत्पिण्डघटादिकार्यकारणदृष्टान्तो न विरूपकार्यकारणयोर्दार्ष्टान्तिकत्वे घटत इति भावः । कपिलस्मृत्यैकार्थ्ये हेतुत्वेनाभिप्रयन्नाह ( जगत्कारणेति ) उक्तन्यायेन श्रुत्य-

* भावप्रकाशिका *

तत्कस्य हेतोः? तत्प्रति तस्या मोहरूपसमुद्भवात्, अतस्सर्वे पदार्थास्सुखदुःखमोहान्वयहेतुत्वात् सुखदुःखमोहरूपाः, अतस्तादृशसत्त्वरजस्तमोमूलका इत्यर्थः । तत एव च कार्यकारणयोरनन्यत्वमिति भाष्ये तत इत्यस्याभिधीयत इत्युक्ताभिधानपरतया व्याख्याय सदेवेति श्रुतिपरतया व्याचष्टे ( यद्वा इदमग्रे सदिति )

प्रतिज्ञादृष्टान्तरूपेणानुमानवेषमेव चेदं वाक्यमिति सच्छब्दवाच्यमानुमानिकमेव—

इत्येवंप्राप्तेऽभिधीयते-ईक्षतेर्नाशब्दमिति । यस्मिन्

* श्रुतप्रकाशिका *

विरोधात्स्मृतिनिरासो न युक्त इति भावः । महर्षिणेतिपदेन "ऋषिं प्रसूतं कपिलं महान्तम्" इति श्रुतिः स्मारिता । हेत्वन्तरमाह ( प्रतिज्ञेति ) प्रतिज्ञादृष्टान्तयोर्हेत्वाक्षेपकत्वाभिप्रायेणोक्तमनुमानवेषमेवेति । ननु न कारणविषया प्रतिज्ञा , अपि त्वेकविज्ञानेन सर्वविज्ञानविषया ; अतोऽनुमानवेषत्वेऽपि न प्रधानकारणत्वसिद्धिरिति न वाच्यम्, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः सर्वस्यैकस्य चानन्यत्वेन निर्वाह्यत्वादनन्यत्वस्य कार्यकारणभावनिबन्धनत्वाच्च प्रधानकारणत्वप्रतिज्ञानस्य फलितत्वात् । अत्रायं प्रयोगोऽभिमतो वेदितव्यः , जगत्स्वानन्योपादानकम्, कार्यत्वाद्घटवत् । यद्वा इदं जगत् स्वकारणैकज्ञानेन ज्ञातं भवितुमर्हति , कार्यत्वात् एकमृत्पिण्डाद्यारब्धघटादिवदिति । पूर्वपक्षं निगमयति ( इतीति ) इतिर्हेतौ । सुखदुःखमोहान्वयसत्त्वरजस्तमोमयस्येदंशब्दवाच्यस्य कारणत्वमेकः पूर्वपक्षहेतुः , कार्यकारणानन्यत्वफलभूतमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं तदुत्तम्भकम् . अनुमानाकारप्रतीतिश्चान्यो हेतुः ॥ .... .... ....

अस्मिन् पूर्वपक्षे सिद्धान्तस्थापनाय सूत्रस्यावतीर्णत्वं दर्शयति ( इत्येवं प्राप्त इति ) उच्यमानाः विषयसंशयपूर्वपक्षाः अस्याधिकरणस्येति ज्ञापनाय पूर्वं सूत्रोपादानम् । अस्य राद्धान्तसूत्रत्वज्ञापनार्थमक्षरव्याख्यानार्थं चेदानीं तदुपादानमिति वैषम्यम् । शब्दवेद्यतयाऽभिमतस्य कथमशब्दत्वमिति शङ्कायामाह ( यस्मिन्निति ) अब्भक्षो वायुभक्ष इतिवदवधारणगर्भितमितिभावः । शब्दैक-

छ भावप्रकाशिका छ

अत्रायं प्रयोगो वेदितव्य इत्यस्यानन्तरं प्रयोगस्वरूपप्रतिपादकग्रन्थो लेखकदोषात् पतितः । स तावदित्थम् ; इदं जगदेकोपादानविज्ञानविज्ञातम् , कार्यत्वात् सम्प्रतिपन्नैकमृत्पिण्डारब्धकार्यवदिति ॥ भाष्ये— यस्मिन् शब्द एव प्रमाणं न भवतीति । अत्र केचित् , अत्र एवकारो भिन्नक्रमः । शब्दः प्रमाणमेव न भवतीत्यर्थः । साङ्ख्यमते श्रुतेरनुमानसिद्धानुवादितया श्रुतेरप्रमाणत्वात् अशब्दत्व-

**शब्द एव प्रमाणं न भवति तदशब्दम् । आनुमानिकम्, प्रधानमित्यर्थः । न तज्जगत्कारणवादिवाक्यप्रतिपा-**

* श्रुतप्रकाशिका *

प्रमाणकत्वं न चेत्तत्र किमन्यत् प्रमाणमित्यत्राह ( आनुमानिकमिति ) तर्हि प्रमाणान्तरप्राप्तं शास्त्रं न प्रतिपादयतीति चेन्न, सामान्यतो दृष्टानुमानेन कारणमात्रे प्रतिपन्नेऽपि तद्विशेषाणामप्रतिपन्नतया तद्विशिष्टेन रूपेण शास्त्रप्रतिपाद्यत्वात् । अप्राप्ते हि शास्त्रमर्थवदिति मीमांसकानां मतम्, नतु साङ्ख्यानामिति पूर्वपक्षिणोऽभिप्रायः । तस्यानुपपन्नतां च ज्ञापयितुम् अशब्दशब्दप्रयोगः । आनुमानिकत्वमिन्द्रियाणां परमाणूनामप्यविशिष्टमिति तद्व्युदासार्थं सौत्रमेकवचनमित्यभिप्रायेणाह ( प्रधानमिति ) प्रधानं ह्येकं सदनेकेषां कारणम् , परमाणवस्त्वनेके सन्त एकैकस्य कार्यस्य कारणम्, इन्द्रियाणि तु बहूनि ज्ञानकारणानि, न त्वर्थकारणानीति तद्व्यवच्छेदसिद्धिः । नेतिपदस्य प्रधानस्वरूपप्रतिक्षेपार्थत्वशङ्कां व्युदस्यन् वाक्यार्थं

७ भावप्रकाशिका ७

मस्त्येव। उक्तं च वाचस्पतिना,– 'प्रधानं जगदुपादानकारणमनुमानसिद्धमनुवदन्त्युपनिषद इति साङ्ख्याः" इति । अत एव टीकायां प्रमाणान्तरप्राप्तं शास्त्रं न प्रतिपादयतीति चेदित्यादि चोद्यपरिहारयोरपि नावकाशः , श्रुतेः प्रमाणत्वाभ्युपगमेपि अशब्दशब्दात् शब्दभिन्नप्रमाणवचनात् अर्श आद्यचि आनुमानिकमित्यर्थलाभात् । टीकायामप्यानुमानिकादिशब्दवदिति परमतदूषणे वक्ष्यमाणत्वाच्च शब्द एव प्रमाणं न भवतीत्यवधारणगर्भतया व्याख्यानमतिक्लिष्टम् । तथासति घटपटवति भूतले अघटमिति प्रयोगोपपत्तेरिति वदन्ति । अन्ये तु एकमात्रकर्तृकत्वरहिते रथगोपुरादौ एककर्तृकं नेति प्रयोगदर्शनात् शब्दमात्रप्रमाणकत्वाभावमादाय अशब्दत्वोक्त्युपपत्तिः । नच तन्मते शब्दस्यानुमानसिद्धानुवादितया शब्दप्रमाणानभ्युपगमात् टीकाकृदाक्षेपपरिहारयोरस्थानविजृम्भितत्वमिति युक्तं वक्तुम्, अनुवादितयैव पूर्वपक्षः प्रवर्तयितव्य इति निर्बन्धाभावात् । श्रुत्यनुमाने परस्परसहकारिणी प्रतिपादयत इति पूर्वपक्षसम्भवादिति वदन्ति ॥

( तस्यानुपपन्नताञ्च ज्ञापयितुमिति ) पूर्वपक्ष्यभिमतं शब्दतदतिरिक्तप्रमाण-

# द्यम् । कुतः ? ईक्षतेः—सच्छब्दवाच्यसम्बन्धिव्यापार·

* श्रुतप्रकाशिका *

योजयति ( न तदिति ) धर्मिनिषेधपरत्वेऽपि शास्त्रस्य वाक्यनिरूपणपरत्वाद्धेतुपदेन धातुस्वरूपोपादानाच्च प्रतिपाद्यताविशेषेण निषेध्यत्वं विवक्षितमितिभावः । वाक्यप्रतिपाद्यत्वाभावः प्रमाणान्तरप्रतिपन्नत्वबाधितत्वाभ्यां वाक्यस्यान्यपरत्वाद्वा स्यात् , योग्यानुपलम्भाद्यभावादप्रतिपन्नाकारवैशिष्ट्यसद्भावाच्च बाधितत्वप्रतिपन्नत्वासम्भवः , अन्यपरत्वं तु पूर्वपक्षयुक्तिभिरेव निरस्तम् , अतो हेतुर्न सम्भवतीत्यभिप्रायेण हेत्वाकाङ्क्षां दर्शयति ( कुत इति ) हेतोरसिद्धिमन्यथासिद्धिञ्च व्युदसितुं व्याचष्टे ( सच्छब्दवाच्येति ) सच्छब्दवाच्यसम्बन्धीति व्यधिकरणासिद्धिव्युदासः । प्रकृतं सदेव हि 'तदैक्षत' इति तच्छब्देन परामृश्यते इति भावः । व्यापारविशेषशब्देनाभिधायिशब्देन चान्यथासिद्धिव्युदासः । न हि चेतनाचेतनसाधारणं कार्योन्मुख्यमात्रमीक्षतिधात्वभिधेयम्, अपि तु चेतनरूपकर्त्रसाधारणो व्यापारविशेषः । न च मुख्ये सम्भवति उपचारो युक्त इति भावः । "इक्श्तिपौ धातुनिर्देशे वक्तव्यौ" इति प्रक्रियया ईक्षतिशब्देन धातूपादानम्, नार्थोपादानम्, तथा सतीक्षितेरिति हि वक्तव्य स्यात्, अनेन च शब्दस्य

* भावप्रकाशिका *

कत्वलक्षणमशब्दत्वं प्रदर्शयता सूत्रकृता पूर्वपक्षिणो व्याहतवादित्वमाविष्कृतं भवतीति भावः । ( वाक्यनिरूपणपरत्वादिति ) समन्वयलक्षणस्य सर्वस्यापि वाक्यप्रतिपाद्यत्वविचाररूपत्वादितिभावः । ( व्यधिकरणसिद्धीति ) हेतोस्स्वरूपासिद्धिव्युदास इत्यर्थः । ( इक्श्तिपाविति ) धातुनिर्देशे धात्वनुकरण इत्यर्थः । शित्वाच्छप् । शित्वसामर्थ्याच्च कर्तृवाचिन्यपि सार्वधातुके शबित्याहुः । ( ईक्षितेरिति हि वक्तव्यमिति ) ननु ईक्षतेर्गुरुत्वात् 'गुरोश्च हल' इति अङि ईक्षेत्येव भाव्यम्, नतु स्त्रियां क्तिन्निति क्तिन्, स्त्र्यधिकारे च वा सरूपविध्यभावात् सति च क्तिनि ईक्षितेरिति रूपाप्रसङ्गः । तितुत्रेतीटो निषेधात् स्कोरिति कलोपे ईष्टेरित्येव रूपं तदा स्यादिति चेन्न, इतिशब्दः प्रकारार्थः । गुरोश्च हल इति अङि ईक्षेति रूपं स्यात् । स्त्रियां क्तिन्नबादिभ्य इति क्तिन्नन्तत्वेन प्रयोगोऽस्तीति चेत्, आप्तिदीप्त्यादिवत् अत्रापि अङपवादः किं न स्यात् ? 'आङ्बादयः प्रयोगतो-

विशेषाभिधायिन ईक्षतेर्धातोः श्रवणात् । [1]"तदैक्षत बहु स्यां प्रजायेय" इति ईक्षणक्रियायोगश्चाचेतने प्रधाने न सम्भवति, अत ईदृशेक्षणक्षमश्चेतन-

* श्रुतप्रकाशिका *

विवक्षितार्थे स्वारस्यं सूचितमित्यभिप्रायेणाह ( धातोरिति ) श्रवणादित्यज्ञानासिद्धिपरिहारः, श्रूयमाणादीक्षतेरिति सूत्रविवक्षितम्, तत्फलितं तु षष्ठ्या निष्कृष्य व्याख्यातम्, ईक्षतिशब्देनेक्षणं लक्षितमिति वेदान्तदीपे व्याख्यातमर्थस्वारस्याय, अत्र तु शब्दस्वारस्येन व्याख्यातम् । ननु 'तत्तेज ऐक्षत' 'ता आप ऐक्षन्त"इति वाक्यद्वयगतमीक्षणमचित्सम्बन्धितया प्रतीयते, 'सेयं देवतैक्षत' इत्यत्रापि ईक्षणमचिद्गतमुचितम्, देवताशब्दस्य 'हन्ताहमिमास्तिस्रो देवताः' इत्यासन्नवाक्यस्थदेवताशब्दविरूपार्थत्वायोगात् । प्रथमेक्षणं च सेयमिति तच्छब्दपरामृष्टसत्सम्बन्धित्वादचिद्गतमेवेत्याकाङ्क्षायामाह ( तदैक्षतेति ) चरमवाक्यानुरोधेनोपक्रमस्वारस्यभङ्गो न युक्त इतीदन्तावदीक्षणं मुख्यमिति भावः । धात्वर्थानां क्रियात्वादचेतनस्य च क्रियायोगसम्भवान्नात्रानुपपत्तिरित्यत्राह ( ईक्षणक्रियेति ) अयं क्रियाविशेषो न सम्भवतीत्यर्थः । ततः किमित्यत्राह ( अत इति ) अतः— अचेतनस्यासम्भावितत्वेनेक्षणस्य त्वत्पक्षविरुद्धत्वादित्यर्थः । ( ईदृशेक्षणक्षम इति ) अनेनाचिद्व्यावृत्तिरुक्ता । ईदृशशब्देन चेतनविशेषणशब्देन चेक्षणस्वभावफलिताचेतनमात्रादपि व्यावृत्तिरुक्ता, यच्चेतनमात्रेऽपि न सम्भवति तत्कथमचेतने

७ भावप्रकाशिका ७

ऽनुसर्तव्या' इति वृत्तिकारेणोक्तेः । किंनि च ईक्षतेरिति प्रयोगोऽस्तीति चेत् 'तितुत्रेष्वग्रहादीना'मित्युक्तत्वान्निगृहीत्यादिवदत्रापीट् स्यात्, अन्यथा ईष्टिरिति स्यात् न कथञ्चिदपीक्षतेरिति स्यादिति । ( विवक्षितार्थे स्वारस्यं सूचितमिति ) ईक्षणादित्यर्थस्वरूपानुपादानेन ईक्षतेरिति शब्दरूपोपादानस्य धातुस्वारस्यसूचकत्वादिति भावः । ( सूत्रविवक्षितमिति ) ततश्च सौत्रमीक्षतिपदं पञ्चम्यन्तम्, श्रवणादिति चाध्याहर्तव्यमिति भाष्यकाराभिप्राय इति न भ्रमितव्यमिति भावः । ( चेतनमात्रादपीति ) जीवसामान्यादपीत्यर्थः । ( तस्य मङ्गलप्रतिबन्धेति )

[1] छा. ६-प्र. २-ख. ३-वा ॥

विशेषस्सर्वज्ञः सर्वशक्तिः पुरुषोत्तमः सच्छब्दाभिधेयः । तथा च सर्वेष्वेव सृष्टिप्रकरणेष्वीक्षापूर्विकैव सृष्टिः प्रतीयते [१] "स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत" [२] "स ईक्षाञ्चक्रे— स प्राणमसृजत" इत्यादिषु । ननु च कार्यानुगुणेनैव कारणेन भवितव्यम्। सत्यम् , सर्वकार्य्यानुगुण एव सर्वज्ञः सर्वशक्तिः सत्यसङ्कल्पः पुरुषोत्तमः सूक्ष्मचिद-

* श्रुतप्रकाशिका *

सम्भवतीति भावः । तदैक्षतेति सिद्धं गुणमाह ( सर्वज्ञ इति ) बहु स्यामिति फलितमर्थमाह ( सर्वशक्तिरिति ) चिदचिद्व्यावर्त्तकलिङ्गबलसिद्धं सदिति सामान्यश्रुतेः पर्यवसानस्थलं दर्शयति ( पुरुषोत्तम इति ) सेयं देवतेति देवताशब्दोऽपेक्षितविशेषसामर्थ्याच्छागपशुन्यायेन चानुगृहीतः प्रकरणान्तरोक्तदेवताविशेषविषय इति भावः । सद्विद्यावाक्यस्योक्तार्थपरत्वमनेकश्रुत्यन्तरस्वारस्येनोपपादयति ( तथा चेति ) नात्र विषयवाक्यतया श्रुत्यन्तरोपादानम् । सर्वेष्वेव— सर्वेष्वपि ; अनेन प्राचुर्यमभिप्रेतम् । ईक्षणस्य गौणत्वाश्रयणे अनेकश्रुतिस्वारस्यभङ्गप्रसङ्ग इति भावः । ( प्रतीयत इति ) प्रतीतिस्तावदविगीतेति भावः । स्वपक्षसाधकमुक्त्वा पूर्वपक्षयुक्तिं परिहर्तुं चोद्यमुपक्षिपति ( ननु चेति ) कार्यकारणयोः सालक्षण्यन्तावदङ्गीकार्यम्. मृत्तत्कार्यादिषु दर्शनात् । तच्च सालक्षण्यं ब्रह्मणस्त्रिगुणात्मकत्वादियोगेन वा जगतस्तद्विधुरत्वेन वा निर्वाह्यम् ? आद्ये शब्दान्तरेण प्रधानाङ्गीकारः । द्वितीये सुखदुःखमोहान्वयाद्युपलम्भविरोध इति भावः । परिहरति ( सत्यमिति ) अर्द्धाङ्गीकारे सत्यशब्दः । कार्यानुगुण्यमङ्गीकृतम् , न तु प्रधानत्वमिति । ( सर्वेति ) प्रधानस्यैव हि सर्वकार्याननुगुणत्वम्, कार्यानुप्रविष्टचिदपेक्षया तस्य कारणत्वौपयिकाकारविरहादिति भावः । कार्यानुगुणनिमित्तोपादानभावसिद्ध्यर्थं सर्वज्ञः सर्वशक्तिरितिपदद्वयम्, तदुभयफलितमाह ( सत्यसङ्कल्प इति ) सर्वशक्तित्वासङ्कोचान्न तस्य सङ्कल्पप्रतिबन्धसम्भावनेति भावः ।

१ ऐत. १-ख. १-२ ॥ | २ प्रश्न. ६-प्रश्न. ३-४ ॥

चिदचिद्वस्तुशरीरकः । यथाह [1]"पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" [2]"यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" [3]"यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युः शरीरम्- एष सर्वभूतान्तरात्मा" इति । तदेतत् [4]"न विलक्षणत्वात्" इत्यादिषु प्रतिपादयिष्यते । अत्र सृष्टिवाक्यानि न प्रधानप्रतिपादनयोग्यानीत्युच्यते । वस्तुविरोधस्तु तत्रैव परिहरिष्यते । यत्तूक्तम्- प्रतिज्ञादृष्टान्तयोगादनुमानरूपमेवेदं वाक्यमिति । तदसत्, हेत्वनुपादानात् । [5]"येनाश्रुतं

* श्रुतप्रकाशिका *

विकारादीनां सद्वारकत्वसिद्ध्यर्थं सूक्ष्मेत्यादिपदम्, उक्ताकारविरहे कारणत्वायोगात् । तद्वत्त्वे श्रुतिवाक्यानि दर्शयति ( परास्येति ) चिदचितोः शरीरत्वं कथम्? शरीरत्वे च तद्वतः कर्मवश्यत्वादिदोषः स्यादित्यत्राह ( तदेतदिति ) न विलक्षणत्वादित्यादिसूत्रैरेषां सूत्राणां पौनरुक्त्यमाशङ्क्याह ( अत्र सृष्टीति ) वस्तुविरोधः- अर्थसामर्थ्यविरोधः । अत्र वाक्यतर्केणार्थनिष्कर्षः, तत्र त्वाभिमानिकव्याप्त्याभासनिबन्धनबाह्यतर्कविमर्शतन्निरासमुखेनार्थनिष्कर्ष इति भिदेत्यर्थः । एवं सत्त्वादिगुणमयस्येदंशब्दवाच्यस्य कारणत्वं तदुत्तम्भकमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं च परिहृतं भवति । अथ परोक्तं हेत्वन्तरमनुवदति ( यत्तूक्तमिति ) तस्यानुपपन्नत्वमाह ( तदसदिति ) कथमित्यत्राह ( हेत्वनुपादानादिति ) वक्तु-

* भावप्रकाशिका *

अप्रतिबद्धसङ्कल्पत्वमेव सत्यसङ्कल्पत्वमिति भावः । ( चिदचितोश्शरीरत्वं कथमिति ) इदमुपलक्षणम् । विलक्षणयोः कार्यकारणभावः कथमित्यपि

१ श्वे. ६-अ. ८-वा.
२ मु. १-मु. १-ख. ९.
३ सु. ७-ख. तुरीयातीतावधूतोप. च. १.
४ शारी. २-अ. १-पा. ४-सू ॥
५ छां. ६-प्र- १-ख- ३-वा.

**श्रुतम्" इत्येकविज्ञानेन सर्वविज्ञाने प्रतिपिपादयिषिते सर्वात्मना तदसम्भवं मन्वानस्य तत्सम्भवमात्रप्रदर्शनाय**

* श्रुतप्रकाशिका *

रनुमानविवक्षाऽस्ति चेत् तत्र प्रधानावयवो हेतुरवश्योपादेयः, तदभावान्न तद्विवक्षेति भावः । प्रतिज्ञादृष्टान्ताभ्यां हेत्वाक्षेपोऽप्ययुक्त इत्याह ( येनाश्रुतमिति ) अनन्यथासिद्धं ह्याक्षेपकम्, सर्वप्रमाणसाधारणत्वात्प्रतिज्ञाऽन्यथासिद्धेति सिद्धं कृत्वा दृष्टान्तस्य हेत्वाक्षेपकत्वायोग उच्यते, न केवलं व्याप्तिप्रदर्शनायैव दृष्टान्तोपन्यासः, अपि त्वसम्भवव्यावृत्तिप्रदर्शनायापि सम्भवतीत्यन्यथासिद्धत्वात् स नाक्षेपक इत्यर्थः । ( सर्वात्मना तदसम्भवमिति ) एकविज्ञानेन

७ भावप्रकाशिका ७

द्रष्टव्यम् । न विलक्षणत्वादित्यस्य तच्छङ्कानिराकरणप्रवृत्तत्वात् ( तदभावान्न तद्विवक्षेति भाव इति ) नच 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' इति कार्यलिङ्गोपन्यासादनुमानविवक्षा प्रतीयत एवेति आनुमानिकमेवेह प्रधानमिह प्रतिपाद्यम्, श्रुत्येकसमधिगम्ये ब्रह्मणि लिङ्गोपन्यासासम्भवादिति वाच्यम्, उपन्यस्तप्रतिज्ञादृष्टान्तानुसारिहेत्वनुपन्यासात् ब्रह्मण्यपि श्रुत्यनुग्राहकानुमानप्रवृत्त्यविरोधाच्च । श्वेताश्वतरे "कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माप्यनीशस्सुखदुःखहेतोः" इति मन्त्रेण कालस्वभावकर्ममहाभूतप्रकृतिपुरुषातिरिक्तब्रह्मण्येव कार्यलिङ्गानुमानोपन्यासादर्शनाच्च । नचैवं श्रुतेर्निरपेक्षत्वहानिः, श्रुतितात्पर्यनिर्णयाय मीमांसाशास्त्रप्रथितन्यायकलापापेक्षावच्छ्रुतिदर्शितस्वानुग्राहकानुमानापेक्षायामपि निर्णीते तात्पर्येऽर्थसम्वादाय प्रमाणान्तरानपेक्षणात्, उपक्रमोपसंहाराद्यन्तर्गतोपपत्तिरूपतयानुमानस्य तात्पर्यनिर्णयार्थमपेक्षायास्सम्प्रतिपन्नत्वात्, न चासम्भवाशङ्काव्यावृत्त्यर्थो मृत्पिण्डादिदृष्टान्त एव उपन्यसनीयो नानुमानमिति वाच्यम्, नहि 'द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते' 'अविनाशित्वादात्मनः' इत्यादौ अनुमानरूपोपपत्तेरपि दर्शनेन तदसङ्ग्रहायोगात् । ननु तर्हि किमर्थं हेतुवन्निगदादिकरणे 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र हेतुत्वान्वयनिरास इति चेन्न, अन्नकरणस्य हेतुत्वेनान्वये यद्यदन्नकरणं तेन तेन होतव्यमिति व्याप्त्या-

हि दृष्टान्तोपादानम् । ईक्षत्यादिश्रवणादेव ह्यनुमानगन्धाभावोऽवगतः ॥ ५ ॥ .... .... .... ....

अथ स्यात्– न चेतनगतं मुख्यमीक्षणमिहोच्यते ,

* श्रुतप्रकाशिका *

सर्वविज्ञानं धर्मैक्यादेकाकारान्वयाद्वा वस्त्वन्तरव्यतिरेकाद्वा सम्भवति, घटपटादिषु त्रेधापि तन्न सम्भवति , घटपटादिषु धर्मैक्यस्यान्वयेनान्यस्माद्व्यतिरेकेण वा समानाकारयोगस्य चाभावादिति भावः । अस्तु दृष्टान्तस्यानुमानाङ्गत्वे सम्भवप्रदर्शनार्थत्वे च साधारण्यम्, तथा सत्यस्मन्मतेऽपि सम्भवः पाक्षिकः स्यादित्यत्राह ( ईक्षत्यादीति ) आदिशब्देन वक्ष्यमाणहेतवो विवक्षिताः । प्रतिज्ञादृष्टान्तयोः साधारण्येनानुमानत्वं शङ्कितम् , ईक्षणाद्यसाधारणहेतुसद्भावाच्छङ्काऽपि निरस्तेत्यभिप्रायेणोक्तम् अनुमानगन्धाभाव इति ॥ * ॥ .... ....

उत्तरसूत्रमवतारयितुमीक्षणस्य गौणत्वं शङ्कते ( अथ स्यादिति ) चेतन-

❀ भावप्रकाशिका ❀

क्षेपे दर्वीपिठरादीनामपि होमसाधनत्वानुमानादानुमानिकैः दर्वीपिठरादिभिः प्रत्यक्षश्रुतस्य शूर्पस्य ' अन्याय्यो विकल्पस्स्यात् ' इति तदर्थं हेत्वन्वयनिरासः । ननु हेत्वन्वये तस्य सापेक्षत्वेन प्रामाण्यं स्यादिति तद्व्यावृत्त्यर्थम्; अत एव तत्रैवाधिकरणे न्यायसुधायामातिथ्येष्टौ " चतुर्गृहीतान्याज्यानि भवन्ति नक्षत्रानूयाजा इज्यन्ते " इत्यत्र चतुर्गृहीतान्तरपरिसङ्ख्यायामनूयाजाभावस्य हेतूकरणात् , यत्र यत्रानूयाजाभावस्तत्र सर्वत्र चतुर्गृहीतान्तराभाव इति सिध्यतीत्युक्तम् । ( अप्रामाण्यनिरासार्थं हेत्वन्वयनिराकरणमिति ) निबन्धनकारनिर्बन्धमात्रम्, अतः प्रधानानुमापकत्वेन साङ्ख्याभिमतहेतोरिहानुपन्यासात् प्रधानपरत्वमित्यत्र तात्पर्यम् । ( सर्वविज्ञानं धर्मैक्यादिति ) धर्मैक्याद्वा भवेत् अतिरिक्तवस्तुनोऽभावाद्वा भवेदिति वाक्यार्थः । ( घटपटादिष्विति ) अन्यस्माद्व्यतिरेकेणान्वयेन घटपटादिषु धर्मैक्यस्य समानाकारयोगस्य चाभावादित्यन्वयः । अन्यस्माद्व्यतिरेकेणान्वयेनेत्यनेन वस्त्वन्तरासत्त्वलक्षणवस्त्वन्तरव्यतिरेकस्याभाव उपन्यस्तो भवति . व्यतिरेकेणान्वयेन व्यतिरिक्ततया सद्भावेनेति हि तदर्थः ॥

अमुख्येक्षणस्यापि चेतनगतत्वात् चेतनत्वसाधनतया यदीक्षणमुक्तमित्यस्यैवोद्भाव-

अपि तु प्रधानगतं गौणमीक्षणम् [1]"तत्तेज ऐक्षत- ता आप ऐक्षन्त" इति गौणेक्षणसाहचर्य्यात्। भवति चाचेतनेष्वपि चेतनधर्मोपचारः। यथा 'वृष्टिप्रतीक्षाः

* श्रुतप्रकाशिका *

गतम्– चेतनत्वानुगुणम्। ( इहेति ) प्रकरणमालोचनीयमिति भावः। प्रधानगतम्– अचेतनत्वानुगुणमित्यर्थः। प्रथमेक्षणस्यं तेजःप्रभृतिकार्याचिद्गतत्वायोगात् प्रधानशब्दः। हेतुमाह ( तत्तेज इति ) प्रायदर्शनाय वाक्यद्वयमुपात्तम्, अग्र्यप्रायन्यायोऽपि बाधकाभावे जीवतीति भावः। सेयं देवतेति देवताशब्दोऽप्यनेनैव न्यायेन इमास्तिस्रो देवता इतिवत् अचिद्विषयत्वौचित्यान्न गौणत्वबाधक इति भावः। गौणप्रयोगं दर्शयति ( भवति चेति ) ईक्षणातुल्ययोगक्षेमहर्षादिधर्मान्तरसङ्ग्रहाय चेतनधर्मशब्दः। लोके शास्त्रे च प्रयोगद्वयं दर्शितम्।

ꣳ भावप्रकाशिका ꣳ

नार्हत्वाच्च चेतनगतमित्यस्य चेतनत्वसाधकमित्यर्थ इति व्याचष्टे ( चेतनत्वानुगुणमिति ) ऐकरूप्याय प्रधानगतपदमपि तद्व्याचष्टे ( अचेतनत्वानुगुणमित्यर्थ इति ) ( अग्र्यप्रायन्यायो बाधकाभावे हीति ) श्रेष्ठप्रायलेख्ये लिखितस्य श्रेष्ठत्वम् अग्र्यप्रायन्यायः। ननु बाधकाभावे ह्यग्र्यप्रायन्यायः, अस्ति चात्र बाधकम्. ईक्षणश्रुतेरेव बाधकत्वात्. सन्निधिलक्षणाग्र्यप्रायन्यायस्येक्षणश्रुतिविरोधे दुर्बलत्वात्. 'विशये प्रायदर्शना'दितिन्यायेन सन्देह एव प्रायपाठन्यायावतारात्, प्रकृते चेक्षणश्रुतिसत्त्वेन सन्देहाभावादिति चेन्न; सत्त्वादिमयस्य तादृशकारणारब्धत्वं वक्तव्यमित्यनुमानविरोधेनेक्षणश्रुतेर्निष्परिबन्धित्वाभावेन प्रकृते संशयस्यैवावतारे प्रायपाठेन निर्णयसम्भवादिति तात्पर्यात्। ( अनेनैव न्यायेनेति ) अग्र्यप्रायन्यायेनेत्यर्थः। "हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' 'इमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्' 'यथा तु खलु सोम्येमास्तिस्रो देवताः" इति तेजोबन्नेषु गौणदेवताशब्दानां बहूनां सत्त्वात् प्रायत्वमुपपद्यत इति द्रष्टव्यम्; अतो यदत्र तूलिकायां 'यद्यप्यचेतनविषय एक एव देवताशब्दः श्रूयते तथापि

१ छां ६-प्र- २. ख. ३-४ ॥

शालयः'' 'वर्षेण बीजं प्रतिसञ्जहर्ष' इति । अतो गौण-मीक्षणमितीमामाशङ्कामनुभाष्य परिहरति —

गौणश्चेन्नात्मशब्दात् ॥ ६ ॥

यदुक्तम्–गौणेक्षणसाहचर्यात् सतोऽपीक्षणव्यपदेशः सर्गनियतपूर्वावस्थाभिप्रायो गौण इति । तन्न [2]"एत-दात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इति सच्छब्दप्रति-पादितस्य आत्मशब्देन व्यपदेशात् । एतदुक्तं भवति

* श्रुतप्रकाशिका *

गौणत्वं निगमयन्नुक्तशङ्कापरिहाराय सूत्रस्यावतीर्णत्वमाह ( अत इति ) शङ्काया उत्सूत्रत्वाभावात् अनुभाष्येत्युक्तम् । .... .... .... .... ....

गौणश्चेन्नात्मशब्दात् ॥ केन गुणयोगेन गौणत्वमिति शङ्कां परिहरन् सूत्रं योजयति ( यदुक्तमिति ) पुँल्लिङ्गगौणशब्दविशेष्यः प्रकृत ईक्षतिरित्यभिप्रायेणो क्तमीक्षणव्यपदेश इति , गौण ईक्षतिर्नेत्युक्ते विशेष्यप्रतिक्षेपशङ्काव्युदासाय यत्तच्छब्दाभ्यां विशेषणनिषेधपरत्वेन व्याख्यातम् । यद्गौणत्वमुक्तं तन्नेत्यर्थः । ( सर्गेति ) गौणोऽर्थः सर्गप्रागवस्था , तत्र नियतपूर्वत्वलक्षणं कार्यानुरूप्यं गुणयोग इत्यर्थः । आत्मशब्दादितिसौत्रेण पदेनाविशेषेण "एतदात्म्यं 'स आत्मा" इति वाक्यद्वयगतात्मशब्दो विवक्षित इत्यभिप्रायेण वाक्यद्वयमुपात्तम् । ( सच्छ-ब्दप्रतिपादितस्येति ) ऐतदात्म्यमित्यत्र एतच्छब्दस्य स आत्मेत्यत्र स इतिपदस्य च प्रकृतपरामर्शित्वादिति भावः । आत्मशब्दोऽपि मृदात्मको घटः घटस्य मृदात्मेतिवत्स्वरूपानतिरिक्तार्थः स्यादित्यत्राह ( एतदुक्तमिति ) ( चेतनाचेतन-

ॐ भावप्रकाशिका ॐ

बहुवचनान्ततया कृतैकशेषत्वाच्छब्दत्रयमस्तीति प्रायत्वमिति भावः " इत्युक्तम् , तस्य न सम्यक्त्वमिति ध्येयम् ॥ .... .... .... ॥ * ॥

( आत्मशब्दोपीति ) 'ऐतदात्म्यमिदं सर्वम् । स आत्मा " इत्यात्मशब्दा-भिप्रायेण मृदात्मको घटः घटस्य मृदात्मेति द्वयमपि निर्दिष्टमिति द्रष्टव्यम् ।

१ श्रीरामायणे सुन्द० का० २९-स. ६-श्लो. | २ छां-६-प्र-८-ख- ७ ॥

"ऐतदात्म्यमिदं सर्वम् । स आत्मा" इति चेतनाचेतनप्रपञ्चोद्देशेन सत आत्मत्वोपदेशोऽयं नाचेतने प्रधाने सङ्गच्छत इति, अतस्तेजोबन्नानामपि परमात्मैवात्मेति तेजःप्रभृतयोऽपि शब्दाः परमात्मन एव वाचकाः। तथा हि[१] "हन्ताऽहमिमास्तिस्रो देवता

* श्रुतप्रकाशिका *

प्रपञ्चोद्देशेनेति) 'इदं सर्व'मिति सर्वशब्दासङ्कोचस्य स्वतःप्राप्तत्वात् 'सन्मूलाः सर्वाः प्रजाः" इति पूर्ववाक्यैकार्थ्यात् 'इदं सर्वमसृजत 'सच्च त्यच्चाभवत् 'विज्ञानं चाविज्ञानं च" इति श्रुत्यन्तरैकार्थ्याच्च सर्वशब्दश्चिदचिदात्मकजगद्गोचर इति भावः। (नाचेतने इति) न हि चेतनस्याचेतनेन स्वरूपैक्यं सम्भवतीत्यर्थः । एवं गौणेक्षणसाहचर्यमभ्युपगम्य दूषणमुक्तम् । अथ तदेव नास्तीत्याह (अत इति) अतः– चिदचिदात्मकप्रपञ्चस्यात्मत्वादित्यर्थः । किमर्थमीक्षणोपदेशरहितस्यान्नस्योपादानम्? उच्यते; ईक्षणोपदेशविरहनिबन्धनाब्रह्मात्मकत्वशङ्कानिराकरणार्थम्, अन्यथा सर्वस्य कार्यस्य ब्रह्मात्मकत्वानवगमादिदं सदिति सामानाधिकरण्यायोग्यत्वेनैकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं न घटते, अतस्तदुपादानेन प्रतिज्ञासिद्ध्यौपयिकमनुप्रवेशश्रुतिसिद्धमन्नस्य ब्रह्मात्मकत्वमिहानुषङ्गिकं दर्शितम् । न हि किञ्चिदप्यतदात्मकमिति अपिशब्दाभिप्रायः, अतदात्मकत्वेन त्वदभिमतानामपीति वा, यदाश्रयतया प्रथममीक्षणं मुख्यं स एवेत्येवकाराभिप्रायः। (तेजःप्रभृतयोऽपीति) सच्छब्दवदित्यपिशब्दस्य भावः । लोके तेजःप्रभृतिमात्रपरत्वेन व्युत्पन्ना अपीति वा। (परमात्मन एवेति) विशेष्यतया प्राधान्येन प्रतिपाद्यः परमात्मैव, तेजःप्रभृतयस्तु द्वारमात्रमिति भावः । परमात्मवाचित्वमुपपादयति (तथाहीति) वस्तुत्वम्– तद्रूपवस्तुत्वम्। तेजसो वस्तुत्वं तेज-

* भावप्रकाशिका *

(स्वरूपैक्यं सम्भवतीत्यर्थ इति) सिद्धान्ते तु शरीरप्रतिबन्धित्वलक्षणमात्मत्वं सम्भवतीति भावः। अपिशब्दं समुच्चयपरतया व्याख्याय विरोधपरतयापि व्याचष्टे

१ छां-६-प्र-३-ख- २ ॥

अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति परमात्मानुप्रवेशादेव तेजःप्रभृतीनां वस्तुत्वं तत्तन्नामभाक्त्वं चेति[1] "तत्तेज ऐक्षत — ता आप ऐक्षन्त" इत्यपि मुख्य एवेक्षणव्यपदेशः, अतः साहचर्यादपि "तदैक्षत" इत्यत्र गौणत्वाशङ्का दूरोत्सारितेति

* श्रुतप्रकाशिका *

स्त्वम्, अपां वस्तुत्वमप्त्वम्, पृथिव्या वस्तुत्वं पृथिवीत्वम्, देवमनुष्यादीनां वस्तुत्वं देवत्वमनुष्यत्वादिकम्, तत्तदवस्थाभाक्त्वमित्यर्थः । नामभाक्त्वम्– नामवाच्यत्वम् । ननु कथं परस्य नामव्याकर्तृत्वश्रवणान्नामवाच्यत्वसिद्धिः ? उच्यते; 'तन्नामरूपाभ्यां व्याक्रियते' इति समानवाक्ये व्याकृतत्वश्रवणात्. नाम्ना विशेषितत्वं हि नामव्याकृतत्वम्. नामविशेषितत्वञ्च नामवाच्यत्वरूपमिति प्रसिद्धम्, न तु तदुत्पादकत्वमात्रम्, न ह्याकाशस्य वा मातापित्रादेर्वा देवदत्तादिनामविशेषितत्वप्रसिद्धिः. अतो नामव्याकृतत्वं नामवाच्यत्वम्. अतस्तदैकार्थ्यादिहापि नामवाच्यत्वं विवक्षितम्। 'वचसां वाच्यमुत्तमम्' इति चायमर्थ उच्यते, एवं तेजःप्रभृतिशब्दानां परमात्मवाचित्वोपपादनफलमाह (इति तत्तेज ऐक्षतेति) इतिशब्दो हेतुपरः । मुख्यत्वफलमाह (अत इति) अपिशब्दो गौणत्वशङ्काहेतुसमुच्चयपरः, इदंशब्दवाच्यजगत्कारणत्वादिना गौणत्वशङ्का परिहृता, गौणेक्षणसाहचर्याच्च गौणत्वशङ्का निरस्तेत्यर्थः । यद्वा त्वन्मतसाधकादपि त्वन्मतं निरस्तमिति भावः । (दूरोत्सारितेति) गौणसाहचर्ये सत्यपि सर्वशब्दतत्प्रति-

* भावप्रकाशिका *

(अतदात्मकत्वेन त्वदभिमतानामपीति चेति) भाष्ये– मुख्य एवेक्षणव्यपदेश इति । ननु तेजोऽन्नेषु सृष्टेषु "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति सङ्कल्पपूर्वकपरमात्मानुप्रवेशः कथं तत्पूर्वकालीनतेजोजलकर्तृकेक्षणमुख्यत्वं साधयेदिति चेन्न. नोदाहरणमादर्तव्यमिति न्यायेन परमात्मन आत्मत्वप्रतिपादकानां प्रमाणानां सत्त्वाच्छरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्य चाकृत्यधिकरण-

1 छां-६-प्र-२-ख-३-४-॥

**सूत्राभिप्रायः ॥ ६ ॥**　　....　　....　　....　　....

**इतश्च न प्रधानं सच्छब्दप्रतिपाद्यम् —**

* श्रुतप्रकाशिका *

सम्बन्धिवाचकात्मशब्दस्वारस्येन 'तदैक्षते'त्यत्र गौणत्वाशङ्कोत्सारिता, गौणसाहचर्यासिद्ध्या दूरोत्सारितेत्यर्थः । गौणेक्षणसाहचर्ये सत्यपि आत्मशब्दात् प्रथमेक्षणमगौणम्, आत्मशब्दादेव गौणेक्षणसाहचर्यमसिद्धं चेत्यर्थद्वयं कथमेकेन वाक्येनोच्यत इत्यत्राह ( इति सूत्राभिप्राय इति ) प्रतिज्ञादृष्टान्तयोर्हेत्वनाक्षेपकत्वं मुख्यामुख्यार्थानुग्राहकेषु मुख्यानुग्राहकस्यानुरोद्धव्यत्वं चास्मिन्नधिकरणे व्युत्पाद्यमिति सूत्रद्वये स्पष्टम् ॥　....　....　....　॥

अवान्तरसाध्यविषयत्वशङ्कां व्युदस्यन्नुत्तरसूत्रमवतारयति ( इतश्चेति ) कारणत्वौपयिकेक्षणधर्मनिरूपणेन परमात्मत्वं सतः समर्थितम् । अथ "कारणन्तु ध्येयः" इति कारणवस्त्वसाधारणमोक्षप्रदत्वधर्मणः परमात्मत्वं साध्यत इति सङ्गतिः ।　....　....　....　....　....

* भावप्रकाशिका *

सिद्धत्वादित्यर्थः । ( इति सूत्राभिप्राय इतीति ) सूत्रे अनेकाभिप्रायत्वस्यालङ्कारत्वादिति भावः । ( मुख्यामुख्यार्थानुग्राहकेष्विति ) यद्यपि मुख्यार्थानुग्राहकप्रायपाठस्य सन्निधिरूपस्य मुख्यानुग्राहकात्मश्रुत्यपेक्षया दुर्बलत्वान्न प्रायपाठानुसारेण ईक्षणस्य गौणत्वमित्येव भाष्ये प्रतीयते, नतु मुख्यार्थानुग्राहकत्वेनैवानुरोद्धव्यत्वम्, तथापि तस्यापि न्यायस्य व्युत्पादनं सम्भवतीत्यत्र तात्पर्यम् ॥ * ॥

( अवान्तरसाध्यविषयत्वशङ्कामिति ) गौणत्वाभावरूपावान्तरसाध्यविषयत्वशङ्कामित्यर्थः । ( कारणत्वौपयिकेक्षणधर्मनिरूपणेनेति ) ननु प्रधानस्यैव जगत्कारणत्वमितिवदन्तं प्रतीक्षणाभावात् मुमुक्षुध्येयत्वाभावान्न जगत्कारणत्वमित्युक्ते न समीचीनमुत्तरं स्यात् . परेण ईक्षणमुमुक्षुध्येयत्वयोर्जगत्कारणत्वव्यापकत्वानभ्युपगमेन तद्व्यतिरेकेण कारणव्यतिरेकसाधनासम्भवात्, ततश्च न प्रधानं सद्विद्याप्रतिपाद्यम् उपक्रमगतेक्षणस्य तत्रासम्भवादुपसंहारश्रुतानामपि तत्रासमवायान्न वाक्यसन्दर्भप्रतिपाद्यत्वमित्येवोपन्यसनीयमिति चेन्न ; अस्यापि ग्रन्थस्य तत्रैव तात्पर्यात् ।　....　....　....　....　....　....

तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥
मुमुक्षोः श्वेतकेतोः 'तत्त्वमसि' इति सदात्मकत्वानु-
सन्धानमुपदिश्य तन्निष्ठस्य [1]"तस्य तावदेव चिरं यावन्न

* श्रुतप्रकाशिका *

तन्निष्ठस्य मोक्षोपदेशात् ॥ "तस्य तावत्"इति श्रुतौ तस्येतिपदस्य व्याख्यानं सूत्रे तन्निष्ठस्येतिपदमिति दर्शयंस्तच्छब्दनिष्ठाशब्दयोरर्थं विवृण्वन् सूत्रार्थमाह ( मुमुक्षोरिति ) अर्वाचीनफलकदृष्टिविधिसम्भवाच्चेतने कृत्स्नजगदुपादानतयोत्कृष्टप्रधानदृष्टिविधिरयमितिशङ्का मुमुक्षोरितिपदेन निरस्ता ( तत्त्वमसीति सदात्मकत्वानुसन्धानमुपदिश्येति ) सदात्मकत्वोपदेशवाक्यगतस्तच्छब्दः प्रकृतसद्विषय इति ज्ञापनपरस्सूत्रे तच्छब्द इत्यभिप्रायेण सदात्मकत्वेत्युक्तम् । अनुसन्धानशब्देन निष्ठाशब्दार्थ उक्तः, इहोपदेशस्यानुसन्धानार्थत्वं कथमवगतम् ? उच्यते, उपक्रमे 'येनाश्रुतं श्रुतं भवति अमतं मतमविज्ञातं विज्ञातम्'इति श्रवणमननसमनन्तरभाविविज्ञानशब्द उपासनपरः, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यनेनैकार्थ्यात्, उपसंहारे च 'तद्धाऽस्य विजज्ञौ' इति तत्तुल्यार्थं विजज्ञाविति पदमावर्त्तितम् । मध्येऽपि 'आचार्यवान् पुरुषो वेद" इत्याचार्यवत्ता-

* भावप्रकाशिका *

( अनुसन्धानार्थत्वं कथमवगतमिति ) ततश्च सदात्मकत्वानुसन्धानमुपदिश्येत्युक्तमितिभावः । ननु तत्त्वमसीति सदात्मकत्वानुसन्धानमुपदिश्येति भाष्यस्यायमर्थः , तत्त्वमसीतिप्रतिपन्नस्य सदात्मकत्वस्यानुसन्धानमाचार्यवान् पुरुषो वेदेत्युपदिश्येत्यर्थ इति वक्तव्यम्, अन्यथा तत्त्वमसीत्यनेन सदात्मकत्वोपदेशेपि सदात्मकत्वानुसन्धानोपदेशसम्भवात्, ततश्चैवमर्थे कथिते अनयोश्शङ्कापरिहारयोरनुत्थितिरितिचेत् . सत्यम् ; वेदशब्दप्रतिपन्नस्यानुसन्धानस्योपासनारूपत्वसमर्थनार्थतया साफल्यसम्भवात् . उपक्रमोपसंहाराभ्यां सफलार्थवादैरुपासनतात्पर्यं वाक्यसन्दर्भस्य प्रतिपादयति ( उच्यत इत्यादिना ( विजज्ञाविति पदमावर्तितमिति ) अनेनाभ्यासरूपमुपासनतात्पर्यलिङ्गमुपपादितं भवति । नच द्विरुक्तेरध्यायपरिसमाप्तिद्योतनार्थत्वान्न तस्य द्विरुक्तेरभ्यासतया तात्पर्यलिङ्गत्व-

[1] छां ६-प्र. १४-ख. २ ॥

विमोक्ष्ये अथ सम्पत्स्ये" इति शरीरपातमात्रान्तरायो ब्रह्मसम्पत्तिलक्षणो मोक्ष इत्युपदिशति, यदि च प्रधा-

* श्रुतप्रकाशिका *

फलत्वेन प्रतिपादितार्थविशेषवेदनवचनमाचार्योपदिष्टार्थस्यानुसन्धेयत्वे लिङ्गम् .एवमेभिः कारणैः सदात्मकत्वोपदेशस्योपासनार्थत्वावगमः । ( शरीरपातमात्रान्तराय इति ) अन्तरायशब्देन विलम्बो लक्ष्यते, शरीरपातावधि विलम्ब इत्यर्थः । 'यावन्न विमोक्ष्ये ' इत्युक्ते कथं शरीरान्मोक्षसिद्धिः ? उच्यते; मोक्ष इत्युक्ते कस्मान्मोक्ष इति बन्धकं किञ्चिदाकाङ्क्षितम्, तच्च किमित्यपेक्षायामस्यामेव विद्यायाम् "अथ यदाऽस्य वाङ्मनसि सम्पद्यते ' इत्यादिना देहादुत्क्रमणश्रवणात् अन्यत्र च "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य' धूत्वा शरीरम् 'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः"इति श्रवणात् ' त्यक्त्वा देहं पुनर्जन्म नैति' इत्यादिस्मरणाच्च शरीरमित्यवगम्यते। ( ब्रह्मसम्पत्तिलक्षण इति ) ' अथ सम्पत्स्ये' इति सम्पत्तेः ' सता सोम्य तदा सम्पन्नो भवति'इति वाक्यान्तरप्रतिपन्नं ब्रह्मैव कर्मेति भावः ( मोक्ष इति ) सौत्रस्य मोक्षशब्दस्य शरीरपातपूर्विका ब्रह्मसम्पत्तिरेवार्थः, न तु शरीरपातमात्रमित्यभिप्रायः । ततः किं प्रधानवैलक्षण्यस्येत्यपेक्षायां मुमुक्षोरितिपदेनाभिप्रेतं विवृणोति ( यदि चेति ) कथमनुपपत्तिः ?

ॐ भावप्रकाशिका ॐ

मितिवाच्यम् ; अध्यायपरिसमाप्तिद्योतकत्वेपि अभ्यासरूपत्वानपायात् । ननु त्रिवृदेकैका भवति , तन्मे विजानीहि स्वप्नान्तमेव विजानीहि भूय एव मा भगवान् विज्ञापयत्विति तद्धास्य विजज्ञाविति प्रकरणगतानां विज्ञानशब्दानां शाब्दज्ञानपरत्वमेव, नोपासनपरत्वम्. नहि तद्धास्य विजज्ञावित्यस्योपासाद्यक्क इत्यर्थः । येनेदं युक्तं स्यादित्यस्वरसादाह ( मध्येऽपि आचार्यवान् पुरुषो वेदेति ) ( अनुसन्धेयत्वे लिङ्गमिति ) आचार्यवत्ताफलत्वेनोपासनस्य स्तुतिरुपासनतात्पर्ये लिङ्गमित्यर्थः । ननु 'यदा स वाङ्मनसि सम्पद्यते' इत्यस्य वस्तुतो देहोत्क्रमणविषयत्वेपि तत्र देहस्यानुपात्तत्वादित्यस्वरसादाह ( अन्यत्र च अस्माच्छरीरात्समुत्थायेति ) ( शरीरमित्यवगम्यत इति ) शरीरारम्भकं प्रारब्धकर्मेत्यर्थः । 'भोगेन त्वितरे क्षपयित्वा' इति सूत्रभाष्ये 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इति भोगेन तयोः कर्मणोर्विमोक्ष

नमचेतनं कारणमुपदिश्येत ; तदा तदात्मकत्वानुसन्धानस्य मोक्षसाधनत्वोपदेशो नोपपद्यते [1] "यथा क्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति तन्निष्ठस्याचेतनसम्पत्तिरेव स्यात् । न च मातापितृसहस्रेभ्योऽपि वत्सलतरं शास्त्रमेवंविधतापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमुपदिशति । प्रधानकारणवादिनोऽपि हि प्रधाननिष्ठस्य मोक्षं नाभ्युपगच्छन्ति ॥७॥

* श्रुतप्रकाशिका *

तीर्थक्षेत्रसेवादिवदचिदुपासनस्य मोक्षोपयोगित्वं शास्त्रबलात् किं न स्यादिति शङ्कायामाह (यथा क्रतुरिति) उपासनानुरूपफलभाक्त्वं श्रुत्यर्थः, ततश्च हेयोपासनाद्धेयप्रहाणानुपपत्तिः । अचेतनसम्पत्तिः—चित्प्राप्तिः, संसारित्वम् . कर्मकृताचित्सम्बन्धो हि संसारः । सम्पत्तिशब्दस्य प्राप्त्यर्थत्वं तापत्रयाभिहतिहेतुभूतामचित्सम्पत्तिमित्यनन्तरभाष्येण व्यक्तम् । अचेतनसम्पत्तिरस्तु, ततः किमित्यत्राह (न चेति) अत्र "शास्त्रं हि वत्सलतरं मातापितृसहस्रतः" इति पुराणवचनं स्मारितम् । (मातापितृसहस्रेभ्य इति) मातापितरावेकस्मिन् जन्मन्यैहिकपोषणमात्रपरौ, शास्त्रं त्वनेकेषु जन्मसु ऐहिकामुष्मिकसर्वविधरक्षणपरमिति भावः । (तापत्रयेति) शास्त्रस्य प्रयोजनपर्य्यवसानं न स्यादित्यभिप्रायः । एवं श्रुतिसिद्धन्यायविरोधप्रयोजनपर्य्यवसानाभावाभ्यां मोक्षोपयोगित्वं निरस्तम् । अस्मिन्नर्थे परमतसम्वादं दर्शयति (प्रधानकारणेति) (प्रधाननिष्ठस्येति) 'व्यक्ताव्यक्तज्ञविज्ञानात्'

ॐ भावप्रकाशिका ॐ

इति वक्ष्यमाणत्वात् वसिष्ठावान्तरतपःप्रभृतीनां विद्यायोनिदेहपातानन्तरमपि ब्रह्मसम्पत्त्यभावाच्चेत्यपि द्रष्टव्यम् । विमोक्ष्ये सम्पत्स्ये इत्यत्र पुरुषव्यत्ययश्छान्दसः । विमोक्ष्यते सम्पत्स्यते इत्यर्थः । अचेतनसम्पत्तिरित्यत्र सम्पत्तिशब्दस्य तत्स्वरूपतासम्पत्तिपरत्वशङ्कां व्यावर्तयितुं व्याचष्टे (अचित्प्राप्तिरिति) सम्पत्तिशब्दस्य प्राप्तिपरत्वनिश्चायकं किमित्यत आह (सम्पत्तिशब्दस्येति)

[1] छां. ३-प्र. १४-ख. १ ॥

इतश्च न प्रधानम् —

हेयत्वावचनाच्च ॥ ८ ॥

यदि प्रधानमेव कारणं सच्छब्दाभिहितं भवेत् तदा मुमुक्षोः श्वेतकेतोस्तदात्मकत्वं मोक्षविरोधित्वाद्धेयत्वेनैवोपदेश्यं स्यात् । न च तत्क्रियते, प्रत्युत उपादेयत्वेनैव [1]"तत्त्वमसि" [2]"तस्य तावदेव चिरम्" इत्युपदिश्यते ।

* श्रुतप्रकाशिका *

इति वदताऽपि साङ्ख्येन प्रधानस्य व्याधेरिव परिज्ञानमात्रं विवक्षितम्, न तूपासनमिति भावः ॥ .... .... .... .... .... .... ॥ * ॥

ननु तत्त्वमसीति न सदात्मकत्वानुसन्धानोपदेशः, किन्तु स्थूलोऽहमित्यादिदेहात्मभ्रमानुवादः, अतः सच्छब्दवाच्याचेतनस्य मुमुक्षुणा ज्ञातव्यत्वं हानार्थमिति शङ्कया अनन्तरसूत्रसङ्गतिमभिप्रयन्नाह ( इतश्चेति ) —

हेयत्वावचनाच्च ॥ न परं प्रत्यानुकूल्याभावमात्रम्, किन्तु प्रातिकूल्यं चास्तीत्याह ( प्रत्युतेति ) स्थूलोऽहमित्याद्यनुसन्धानस्येव न सदात्मकत्वानुसन्धानस्य हेयत्वं प्रतिपाद्यते, अपि तूपादेयत्वमेवोच्यते; तच्च प्रधानपरत्वेऽनुपपन्नम्, "अनादिमायया सुप्तः 'मायया सन्निरुद्धः' 'अनीशया शोचति मुह्यमानः' 'जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिषु प्रधानप्रस्तावेषु तस्य हेयत्वेनैव प्रतिपादनादित्यर्थः । एवं 'तदैक्षते'त्यादिवाक्यप्रभृति तदुपरितनवाक्यावगता हेतव उक्ताः,

ξ भावप्रकाशिका ξ

तापत्रयाभिहतिहेतुत्वप्रतिपादनात् अचित्प्राप्तेरेव तापत्रयाभिहतिहेतुत्वाच्च सम्पत्तिशब्दस्य प्राप्तिवाचित्वं निश्चीयत इत्यर्थः ॥ .... .... .... ॥ * ॥

प्रति सूत्रं वा सर्वान्ते वा समुच्चयपरशब्दे कार्यमध्ये च शब्दप्रयोगः किंनिबन्धन इति शङ्कां परिहरति ( एवं तदैक्षतेत्यादीति ) उपरिगतवाक्यगतहेतुसमुच्चयार्थो मध्ये मध्ये चशब्दप्रयोग इत्यर्थः । एवं विभज्य समुच्चयप्रतिपादने प्रयो-

१ छां. ६-प्र. ८-ख. ७ ॥ | २ छां. ६-प्र. १४-ख. २ ॥

इतश्च न प्रधानम्—

प्रतिज्ञाविरोधात् ॥ ६ ॥

प्रधानकारणत्वे प्रतिज्ञाविरोधश्च भवति । वाक्योपक्रमे ह्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातम् । तच्च कार्य्यकारणयोरनन्यत्वेन कारणभूतसद्विज्ञानात्तत्कार्य-

* श्रुतप्रकाशिका *

तेषां समाप्तौ चशब्दः प्रयुक्तः। यद्वा उपादेयतोक्त्यनुपादेयतानुक्त्योः सूत्रद्वयप्रतिपादितयोरन्वयव्यतिरेकात्मना परस्परसङ्गतयोरेकीकारार्थं इह चशब्दः, अत एव हि प्रत्युतेत्यादिना पूर्वसूत्रार्थनिगमनं कृतम्। .... .... .... ....

अथोपक्रमविरोधे सत्युत्तरवाक्यगतहेतूनां दौर्बल्यात् प्रधानमेव प्रतिपाद्यमिति शङ्कां परिहरति—

प्रतिज्ञाविरोधात् ॥ कस्मिन्नर्थे विरोध इत्यपेक्षां पूरयन् व्याचष्टे ( प्रधानकारणत्व इति ) त्वन्मतानुगुणत्वेन यदुक्तं तदेव त्वन्मतप्रतिकूलमिति सूत्रकारहृदयमिति भावः । कथमित्यत्राह ( वाक्योपक्रमे हीति ) प्रतिज्ञावाक्ये सर्वशब्दाभावेऽपि "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विज्ञात"मिति समानप्रकरणवाक्यैकार्थ्यात् सर्वाः प्रजा इति वक्ष्यमाणस्वारस्याच्च सर्वविज्ञानं प्रतिज्ञातमित्युक्तम्। न च सर्वं मृण्मयमितिवत्कार्य्यभूतसर्वाचिद्विज्ञानमेव सर्वविज्ञानमिति वाच्यम्;— " सन्मूलास्सोम्येमाः सर्वाः प्रजाः"इति सर्वशब्दसमानाधिकरणप्रजाशब्दस्वारस्यावगतानां चेतनानामपि सन्मूलतया ज्ञातव्यसर्वकार्यान्तर्भावादिति भावः । ततः किमित्यत्राह ( तच्चेति ) ( कार्यकारणयोरनन्यत्वेनेति ) न हि चिदचितोरनन्यत्वमिति भावः । नन्वन्यत्वेऽपि एकविज्ञानात् सर्वविज्ञानं घटते, पृथिव्यादीनां कार्य्यतया चिदंशस्याकार्य्यतया च ज्ञानसम्भवादित्यत्राह ( तत्कार्य्यभूतचेतना-

* भावप्रकाशिका *

जनमान्द्यात् अन्यथा चशब्दप्रयोजनमाह ( यद्वा उपादेयतोक्त्येत्यादिना )—

( चिदंशस्याकार्यतया च ज्ञानसम्भवादित्यत्राहेति ) प्रधाने ज्ञाते तदकार्य-

भूतचेतनाचेतनप्रपञ्चस्य ज्ञाततयैवोपपादनीयम् । तत्तु प्रधानकारणत्वे चेतनवर्गस्य प्रधानकार्य्यत्वाभावात् प्रधानविज्ञानेन चेतनवर्गविज्ञानासिद्धेर्विरुद्ध्यते ॥ ९ ॥

इतश्च न प्रधानम्—

स्वाप्ययात् ॥ १० ॥

तदेव सच्छब्दवाच्यं प्रकृत्याह [1] "स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य

* श्रुतप्रकाशिका *

चेतनप्रपञ्चस्येति ) मृत्पिण्डतत्कार्य्यादिदृष्टान्तबलात् 'सन्मूलाः सर्वाः प्रजाः' इति वाक्ये प्रजाशब्दस्वारस्याच्च चेतनस्यापि कार्य्यतयैव ज्ञातत्वं वक्तव्यमिति भावः । ( ज्ञाततयैवोपपादनीयमिति ) देवदत्तज्ञानेन ग्रामविज्ञानवन्नात्र सर्वविज्ञानमौपचारिकम् , औपचारिकत्वे सर्वविज्ञानस्य लोकदृष्टत्वेन कथं नु भगव इति प्रश्नायोगात् अनन्यभूतमृत्तत्कार्यादिदृष्टान्तमुखेन मुख्यतयैव सर्वविज्ञानोपपादनदर्शनाच्चेति भावः । उक्तविपर्ययेण प्रतिज्ञाविरोधं दर्शयति ( तत्त्विति ) ···· ····

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं कार्य्यकारणभावनिबन्धनम् , सुषुप्तौ परमात्मनि चेतनस्य प्रलयश्च तन्निबन्धन इति कार्य्यकारणभावनिबन्धनत्वसाम्यात् सङ्गतं सुषुप्तौ लयं हेतुत्वेनाहेत्यभिप्रयन्नाह ( इतश्चेति )

स्वाप्ययात् ॥ सच्छब्दस्य जीवोपस्थापकस्वशब्दसमानविषयत्वनिबन्धनामर्थान्तरत्वशङ्कां व्युदस्यति ( तदेव सच्छब्दवाच्यमिति ) जगत्कारणवस्तुविषय

ᛃ भावप्रकाशिका ᛃ

त्वेन चिदंशस्य ज्ञानं सम्भवति , प्रधानापरिज्ञाने तदकार्यत्वेन चिदंशस्य ज्ञानासम्भवात् , प्रधानज्ञानस्य तदकार्यत्वप्रकारकचिद्विशेष्यकज्ञानहेतुतया तज्ज्ञाने तदकार्यत्वेन चिज्ज्ञानमप्युपपद्यत इति भावः ॥···· ···· ···· ···· ····

'स्वप्नान्तं मे सोम्य विजानीहि' इति । स्वप्नान्तसुषुप्तिः मे उपदिशतो मम वचनात् जानीहीत्यर्थः । ( अर्थान्तरत्वशङ्कामिति ) सता सोम्येत्यत्र स-

[1] छां-६-प्र-८-ख-१ ॥

तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति" इति सुषुप्तं जीवं सता सम्पन्नं, स्वमपीतः– स्वस्मिन् प्रलीन इति व्यप-

* श्रुतप्रकाशिका *

एवात्रापि सच्छब्द इत्यभिप्रायः । यत्र–यदेत्यर्थः । ननु सता सम्पत्तिः प्रकृतिसंसर्गोऽस्तु, स्वाप्ययोऽपि जीवस्य स्वस्वरूपेऽवस्थानमिति स्वसच्छब्दयोर्भिन्नार्थः स्यादिति नैतद्वाक्यं प्रधानकारणताविरोधीति । तदेतत्परिहरन् व्याचष्टे (सुषुप्तमिति) स्वमपीत इतीदं विवृणोति ( स्वस्मिन् प्रलीन इति ) स्वमिति द्वितीया, सतेति तृतीया च फलतस्सति सम्पद्येति सप्तम्यनुगुणार्थे, व्यपदेशभेदस्तु धातुस्वभावभेदादित्यभिप्रायः । अपीतेः प्राप्तिरूपत्वात् द्वितीयानिर्देशः, "ब्रह्मैव सन् ब्रह्माप्येति" "यत्प्रयन्त्यभिसंविशन्ती"ति हि श्रुत्यन्तरम् । साहित्यसद्भावात् तृतीयानिर्देशः, सम्पन्न इति कर्मणि निष्ठा वा, तदानीं सम्पत्तेः प्राप्तिरूपत्वात्सतः कर्तृत्वविवक्षया तृतीया, "प्राज्ञेनात्मना सम्परिष्वक्तः "इतिवत्, अप्ययस्य स्थानसापेक्षत्वात्सप्तमीनिर्देशः । व्युत्पत्तिवशेन प्रलयवाचिनां शब्दानां स्थानापेक्षाया उत्कटत्वात् सप्तम्यनुरोधेन व्याख्यातम्; एवं सम्पत्त्यप्ययशब्दयोः प्रलयपरतयैकार्थ्यमुक्तम्, स्वसच्छब्दयोश्च प्रलयस्थानपरतया ऐकार्थ्यमुक्तम् । अयमभिप्रायः,– 'सता सोम्य तदा सम्पन्नः 'सति सम्पद्येति प्रतिज्ञानिगमनवाक्यमध्यगतस्य स्वाप्ययवाक्यस्यानपेक्षितार्थान्तरपरत्वेऽन्वयवैधुर्य्यं स्फुटम् । "अथैतदपियन्त्यन्ततः 'ब्रह्मैव सन् ब्रह्माऽप्येति' तदा सम्पद्यते ब्रह्म" इत्यादिप्रयोगप्राचुर्य्यादप्ययसम्पत्तिशब्दस्वारस्योपस्थापितस्य प्रलयस्य स्थानप्रतिपादकत्वात् स्वसच्छब्दयोरेकार्थत्वपर्य्यवसायित्वं सूचितम् । "जीवेनात्मना 'तत्त्वमसीति'" जीवात्मशब्दयोस्त्वं

७ भावप्रकाशिका ७

च्छब्दस्य ब्रह्मणोऽर्थान्तरभूतजीवपरत्वशङ्कामित्यर्थः । ( धातुस्वभावभेदादित्यभिप्राय इति ) सता सम्पन्न इति कर्मणिनिष्ठान्तप्रयोगवत् सता अपीत इति न वक्तुं शक्यत इत्यादिधातुस्वभावायत्तमिति भावः । ननु स्वसच्छब्दयोरेकार्थपर्यवसायित्वे अन्यतरवैयर्थ्यमित्याशङ्क्याह ( जीवेनात्मनेति ) यथा अनेन जीवेनात्मनेत्यत्रात्मशब्देन स्वरूपेणोपस्थितस्य परमात्मनो जीवशरीरकत्वप्रतिपत्त्यर्थ-

दिशति। प्रलयश्च—स्वकारणे लयः। न चाचेतनं प्रधानं चेतनस्य जीवस्य कारणं भवितुमर्हति। स्वमपीतो भवति आत्मानमेव जीवोऽपीतो भवतीत्यर्थः। चिद्वस्तुशरीरकं तदात्मभूतं ब्रह्मैव जीवशब्देनाभिधीयत इति नामरूपव्याकरणश्रुत्योक्तम्। तज्जीवशब्दाभिधेयं ब्रह्म सुषुप्तिकालेऽपि प्रलयकाल इव नामरूपपरिष्वङ्गाभावात् केवलसच्छब्दाभिधेयमिति [1]"सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इत्युच्यते। तथा समानप्रकरणे नामरूपपरिष्वङ्गाभावेन प्राज्ञेनैव परिष्वङ्गात् [2]"प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" इत्युच्यते। आमोक्षाज्जीवस्य नामरूपपरिष्वङ्गादेव

* श्रुतप्रकाशिका *

तच्छब्दयोरिव च स्वसच्छब्दयोरपि जीवरूपेण स्वेन रूपेण चावस्थितकारणवस्तुविषयतयैकार्थपरत्वं प्रकरणवशादप्युचितम्। जीवादर्थान्तरे सति तस्य लयानुपपत्तिशङ्कापरिहारार्थं स्वशब्दाभिधेयस्य तस्य सत्पर्य्यन्ततताप्रतिपादनस्यापेक्षितत्वाच्च तयोरेकार्थत्वं युक्तमिति। अस्तु लयस्थानोपस्थापकयोः स्वसच्छब्दयोरैकार्थ्यम्, तत्तु स्वशब्दस्य स्वीयपरत्वेन स्वसच्छब्दयोरुभयोरपि प्रधानपरत्वेऽप्युपपद्यत इत्यत्राह (प्रलयश्चेति) कार्य्यतारूपविसदृशावस्थाप्रहाणेन कारणान्तर्भावो हि लयः। ततः किमित्यत्राह (नचेति) अचेतनम्—अचित्त्वादित्यर्थः। स्थूलावस्थस्य जीवस्य सूक्ष्मावस्थे स्वकारणीभूते सत्तायोगिनि

* भावप्रकाशिका *

त्वाज्जीवशब्दस्य नान्यतरवैफल्यम्; एवं सच्छब्देन रूपेणोपस्थितस्य परमात्मनो जीवशरीरत्वज्ञापकत्वात् स्वशब्दस्य पदद्वयसाफल्यमिति भावः। (स्वेन रूपेणेति) परमात्मरूपेणेत्यर्थः। (जीवादर्थान्तरे सतीति) सति— सच्छब्दिते

१ छां-६-प्र-८-ख-१॥ | २ बृ. ६-अ. ३-ब्रा. २१॥

हि स्वव्यतिरिक्तविषयज्ञानोदयः । सुषुप्तिकाले हि नामरूपे विहाय सता सम्परिष्वक्तः पुनरपि जागरदशायां नामरूपे परिष्वज्य तन्नामरूपो भवतीति श्रुत्यन्तरे स्पष्टमभिधीयते [1]"यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथ हास्मिन् प्राण एवैकधा भवति" "तस्माद्वा आत्मनः प्राणा यथायतनं विप्रतिष्ठन्ते" तथा [2]"त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा दंशो वा मशको वा यद्यद्भवन्ति तथा भवन्ति" इति । तथा सुषुप्तं जीवं 'प्राज्ञेनात्मना सम्परिष्वक्तः' इति च वदति ।

* श्रुतप्रकाशिका *

स्वात्मनि लयोपपत्तेः सच्छब्दस्य तत्परत्वं सम्भवतीति शङ्कां व्युदसितुमाह ( तथा सुषुप्तमिति ) सृज्यदेहेन्द्रियानपेक्षेक्षणादिगुणकपरमकारणविषयत्वात् तत्संवादिश्रुत्यन्तरानुगुण्याच्च नात्र सच्छब्दोऽतिसङ्कुचितज्ञानसूक्ष्मावस्थजीवमात्रविषय इत्यभिप्रायः । ननु नित्यस्य जीवस्य लयोऽनुपपन्नः, कार्य्यकारणयोरनन्यत्वात्, जीवविलक्षणस्य परस्य तत्कारणत्वायोगात्तस्मिन्जीवस्य लयश्चानुपपन्नः । नैवम्, सर्वदा जीवविशिष्टस्य परमात्मनोऽवस्थाविशेषरूपकार्यकारणभावोपपत्तेः । तथा हि ; 'स्वमपीत' इत्यत्र स्वशब्दस्तावन्न जीवमात्रपरः, "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इति स्वशब्दस्य सच्छब्दसमानविषयत्वात् सच्छब्दस्य चास्मिन् प्रकरणे परमात्मविषयत्वात् नापि निष्कृष्टब्रह्मपरः, नित्यनिर्विकारस्य तस्योपादानत्वायोगेनाप्ययस्थानत्वायोगात्. कार्य्यस्य हि प्रलय उपादान एव, अतो जीवरूपेणावस्थितपरमात्मपरत्वं वक्तव्यम्, तत्रापि न शुक्तौ

* भावप्रकाशिका *

इत्यर्थः । ननु सतिसप्तमीति भ्रमितव्यम् । दूषणान्तरमाह ( कार्यकारणयोरनन्यत्वादित्यादिना ) ( नापि निष्कृष्टब्रह्मपर इति ) स्वशब्द इति शेषः ।

१ कौषीतकी-४-अ. १९ ॥ | २ छां ६-प्र.९-ख. ३ ॥

* श्रुतप्रकाशिका *

रजतस्येव लयः, तस्येव जीवस्य स्वरूपनिवृत्तिप्रसङ्गात् । नापि महाकाशे घटाकाशस्येव लयः, देहाद्युपाधेरवस्थितत्वात् । नापि क्षितितले घटस्येव लयः, घटत्वस्येव जीवत्वस्य प्रहाणे जीवनित्यत्वश्रुतिविरोधादुपाधेरवस्थितत्वेन जीवत्वप्रहाणायोगात्, आमोक्षावस्थायितयाऽभिमतस्य जीवभावस्य स्वापमात्रेण निवृत्तौ मोक्षोपायवैयर्थ्यप्रसङ्गात्, अकृताभ्यागमादिप्रसङ्गात्, प्रत्यभिज्ञाविरोधात्, 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति तदानीमज्ञत्वसर्वज्ञत्वाभ्यां भेदव्यपदेशाच्च जीवत्वे स्थित एव स्वाप्ययस्य सर्वैरभ्युपगन्तव्यत्वात्; अतो भेदादेव स्वशब्दो जीवविशिष्टपरमात्मपरः, अत एव ह्युक्तं सारे, "आत्मानमेव जीवोऽपीतो भवतीत्यर्थः । जीवस्वरूपो हि पर एव नामरूपव्याकरणश्रुते"रिति । तस्य सम्पत्तिर्नाम बहिर्मुखज्ञानप्रसरविरहितजीवरूपेणावस्थानम्, निर्गमो नाम बहिर्मुखज्ञानप्रसरः । ननु कथं देहविशिष्टस्य सतो जीवस्य स्थिते देहे विशेष्यांशलयः ? नैवम्; विशेष्यांशे रागद्वेषाद्यन्वयवत् तत्रैव प्रलयरूपावस्थान्वयोपपत्तेः । ननु तर्हि स्वापे ज्ञानेन देहधारणाभावात्स्वरूपेण धारणस्य महाप्रलयेऽपि तुल्यत्वात् देहस्य जीवं प्रत्यपृथक्सिद्धिर्देहलक्षणं च न घटते । न, जीवस्य देहापरित्यागाद्देहस्य तत्सङ्कल्पेन धारणयोग्यत्वाच्चापृथक्सिद्धिदेह-

* भावप्रकाशिका *

( स्वरूपेण धारणस्य महाप्रलयेपि तुल्यत्वादिति ) स्वरूपमात्रबलेन धारकत्वे उच्यमाने महाप्रलयेपि शरीरधारकत्वप्रसङ्ग इत्यर्थः । ( देहस्य जीवं प्रति अपृथक्सिद्धिः देहलक्षणञ्च न घटत इति ) ननु जीवस्य देहे सत्त्वेनापृथक्सिद्धौ काऽनुपपत्तिरितिचेन्न; जीवस्वरूपापृथक्सिद्धिर्नापृथक्सिद्धिः, तथा सति सौभरिशरीरेषु सर्वेषु जीवस्वरूपापृथक्सिद्ध्यसम्भवात् शरीरत्वानापत्तेः, अपि तु धर्मभूतज्ञानव्याप्तत्वम्, अत एव 'यदेकां शाखां जीवो जहाति अथ सा शुष्यति' इति यत्प्रदेशे धर्मभूतज्ञानव्याप्त्यभावः, तदंशस्य शोषप्रतिपादनात् जीवधर्मभूतज्ञानापृथक्सिद्धिरित्यर्थः । ( जीवस्य देहापरित्यागादिति ) ज्ञानव्याप्तेस्सत्त्वादित्यर्थः । बहिर्निर्गमने इन्द्रियादिसापेक्षतया बहिर्निर्गमनाभावेपि देहधारणोपयुक्तज्ञानप्राप्तिमात्रसत्त्वादितिभावः । ( धारणयोग्यत्वाच्चेति ) धार्यमाणत्वादित्यर्थः । ननु कारणावस्थान्वयिन्यन्तर्भावो लयश्चेत् यावतो लयस्थानत्वं

* श्रुतप्रकाशिका *

लक्षणोपपत्तेः, अतो मनुष्यादिनामरूपाभिमानरागलोभाद्यनुगुणबाहिर्मुखज्ञानप्रसरवज्जागरितावस्थजीवविशिष्टः परमात्मा, देवमनुष्यादिनामरूपरागद्वेषलोभमोहाद्यौपाधिकबाह्याभ्यन्तराकाराभिमानकालुष्यविरहितजीवशरीरकः सन्नात्मन्यन्तर्भूत इति श्रुत्यर्थः । अप्ययस्य प्राप्तिरूपत्वात् सारे आत्मानामिति द्वितीयानिर्देशः । अप्ययस्य स्थानसापेक्षत्वात् स्वस्मिन् प्रलीन इत्युक्तं भाष्ये । एकस्य परमात्मनः स्थानस्थानिभावव्यपदेशश्चांशभेदाभिप्रायः, घटादेर्लयस्थानस्य घटानुपयुक्तस्यापि पृथिव्यंशस्य हि कारणजातीयत्वात् कारणत्वम्, ब्रह्मणि तु जीवविशेषविशिष्टतदितरांशभेदेन स्थानस्थानिभावो धर्म्यैक्यात्कारणत्वम्, कारणावस्थान्वयिनि धर्मिण्यन्तर्भावः सर्वत्र समानः, औपाधिकाकाराभिमानानुगुणज्ञानविकासवज्जीवविशिष्टता कार्य्यावस्था, अतदभिमानजीवविशिष्टता कारणावस्था, तत्र लयस्थानभूतस्य परमात्मनः कारणावस्थापेक्षया लीयमानांशस्य विसदृशावस्था हि नामरूपाद्यौपाधिकाकाराभिमानानुगुणज्ञानप्रसरवज्जीवविशिष्टता, तस्मादौपाधिकाकारानभिमानजीवविशिष्टतारूपकारणावस्थाश्रये स्वात्मन्यवस्थानं स्वाप्यय इत्युपपन्नम् । अत एव जीवस्य नित्यत्वाविरोधश्च, ज्ञानसङ्कोचविकासविशेषव्यतिरेकेण जीवत्वप्रहाणाभावात् । आमोक्षाज्जीवभावस्य स्थिरत्वं हि परैरप्यभ्युपेयम्, अतस्तदविरोधेन स्वाप्ययो वर्णनीयः, तदानीं 'प्राज्ञेनात्मना सम्परिष्वक्त" इति भेदप्रतिपादनाविरोधश्चैवं सति भवति, एवंविध एव प्रलयो महाप्रलयोऽपीत्यभ्युपगन्तव्यम्, जीवबहुत्वानादित्वकर्मवासनाविशेषस्थित्युपगमेन वैषम्यनैर्घृण्यादेः परिहर्त्तव्यत्वात् । न च 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते 'इति ज्ञाननित्यत्वश्रुतिविरोधः, तस्य सङ्कोचमात्रवतस्तुच्छत्वाभावात् । न च प्रसरोपलम्भयोरभावात् ज्ञानद्रव्यस्य तुच्छत्वं शङ्कनीयम्, न ह्यनुल्लङ्घितरत्नप्रभायाः प्रसरोपलम्भाभावान्नास्तित्वम् " यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । दोषप्रहाणान्न ज्ञानमात्मनः क्रियते तथा" इति हि स्मृतिः । आत्यन्तिकप्रलयेऽपि यथोक्तप्रकार उपपद्यते, तदानीं नामरूपाद्यौपाधिकाकाराभिमानरूपविसदृशाप्रहाणेन कारणावस्थे परमा-

* भावप्रकाशिका *

न तावत उपादानत्वम्, यदंशस्योपादानत्वं न तस्य लयाधारत्वम् . तदंश एव तस्यान्तर्भावासम्भवादित्याशङ्कयाविरोधमाह (एकस्य परमात्मन इत्यादिना)

**तस्मात्सच्छब्दवाच्यः परं ब्रह्म सर्वज्ञः परमेश्वरः पुरुषोत्तम एव। तदाह वृत्तिकारः "सता सोम्य तदा सम्पन्नो भवतीति, सम्पत्त्यसम्पत्तिभ्यामेतदध्यवसीयते 'प्राज्ञेनात्मना सम्परिष्वक्त' इति चाहेति ॥ १० ॥**

* श्रुतप्रकाशिका *

त्मन्यवस्थानात् औपाधिकाकाराभिमानार्हरूपत्वकार्यावस्थाविरहितजीवविशिष्टत्वं हि परस्य कारणावस्थत्वम्, विकृतिविरहितजीवविशिष्टत्वमिति यावत्। तन्महाप्रलये मुक्तौ च समानम्। ननु 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'' इति सुषुप्तौ प्राज्ञत्वाज्ञत्वरूपवैषम्यावगमात् मोक्षे चेश्वरत्वेशितव्यत्वादिवैषम्यस्थित्यभ्युपगमात् भवदभिमतप्रलयप्रकारोऽनुपपन्न इति। नैवम्; कारणावस्थामपेक्ष्य विसदृशावस्थाया विवक्षितत्वात्, नामरूपाद्यौपाधिकाकाराभिमानविरहितजीवविशिष्टता कारणावस्था, तदपेक्षया विसदृशावस्था च तादृगभिमानवज्जीवविशिष्टता। तत्प्रहाणस्य चात्र विद्यमानत्वात् सुषुप्तौ लय उपपन्नः। मोक्षे चेशितव्यत्वाकारेण वैषम्यं नात्यन्तिकप्रलयविरोधि, ईशितव्यताया अवस्थारूपत्वाभावात्, कादाचित्कधर्मो ह्यवस्था, ईशितव्यत्वादि तु नित्यम्, "स ईशोऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय" "यस्यात्मा शरीरम्' 'य आत्मानमन्तरो यमयति" इत्यादिश्रुतेः। अतो नेशितव्यत्वादिकमवस्थेति वैधर्म्यरूपस्यापि तस्याप्रहाणं न दोषः, अतो यथोक्त एव स्वाप्ययः। सौत्रं हेतुं परमसाध्येन सङ्गमयति (तस्मादिति) अप्ययस्थानस्य परमकारणत्वायाह (परं ब्रह्मेति) जीवव्यावृत्त्यर्थं सर्वज्ञशब्दः। 'प्राज्ञेनात्मने'ति हि श्रुतिः। 'तदैक्षते'त्येतत्सम्वादिनी। अप्ययेऽपि जीवनियन्तृत्वज्ञापनार्थमीश्वरोत्तीर्णतत्त्वव्युदासार्थं च परमेश्वरशब्दः। सुषुप्तपुरुषवैलक्षण्यपरो देवताविशेषपरश्च पुरुषोत्तमशब्दः। व्याख्यानान्तरव्यावृत्त्यर्थमाह (तदाहेति) (सम्पत्त्यसम्पत्तिभ्यामिति)

ও भावप्रकाशिका ও

(व्याख्यानान्तरव्यावृत्त्यर्थमिति) स्वभाष्यस्य महर्षिप्रणीतव्याख्यानानुरोधित्वलक्षणवैलक्षण्यसूचनार्थं मध्ये मध्ये वृत्तिकारं कीर्तयतीत्यर्थः। असम्पत्तिशब्दस्य

इतश्च न प्रधानम्—

गतिसामान्यात् ॥ ११ ॥

[1]"आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्। स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजत"[2]"तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी"

* श्रुतप्रकाशिका *

'सति सम्पद्य न विदुः सति सम्पत्स्यामहे' इति सत आगम्य न विदुः सत आगच्छामह इत्युक्ताभ्यां सम्पत्तिनिर्गमाभ्यामित्यर्थः। यद्वा परमात्मनि सम्पत्त्या अन्यत्र असम्पत्त्या चेत्यर्थः। स्वाप्ययशब्देनासम्पत्तिरप्यभिप्रेतेति वृत्तिकारस्य भावः। एतत्—परब्रह्मकारणत्वमित्यर्थः ॥ .... .... ....

पूर्वसूत्रे 'प्राज्ञेनात्मने'त्यादेः सुषुप्तिविषयस्य श्रुत्यन्तरस्य प्रकृतार्थोपपादकतया बुद्धिस्थत्वात् कारणस्य परमात्मत्वमपि कारणविषयैः श्रुत्यन्तरैरुपपाद्यते—

गतिसामान्यात् ॥ पूर्वं 'गौणश्चेन्नात्मशब्दा'दित्युक्तत्वादात्मशब्दवतीः श्रुतीरुदाहरति (आत्मा वा इत्यादिना) तस्य ह वा एतस्येत्यत्राप्यात्मशब्दः श्रूयते "आत्मा वा अरे द्रष्टव्यः' 'आत्मनि खल्वरे दृष्टे' 'योऽन्यत्रात्मनस्सर्वं वेद"इति च।

* भावप्रकाशिका *

निर्गमनपरत्वमस्वरसमित्यन्यथा व्याचष्टे (यद्वा परमात्मनीति) (वृत्तिकारस्य भाव इति) ततश्च स्वाप्ययादितिसूत्रस्य सोऽप्यर्थ इति वृत्तिग्रन्थसम्वादेन सूचनं तदुदाहरणस्यानन्यथासिद्धं फलमिति भावः ॥ .... .... .... ....

ननु भाष्ये— 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुत्यन्तरैकार्थ्यात् चेतनकारणत्वं वक्तव्यमित्युपसंहारे कर्तव्ये सर्वेश्वर एव कारणमिति विशिष्योपसंहारः कथमचेतनव्यावृत्तिमात्रस्यैव प्रकृते अपेक्षितत्वादित्याशङ्क्याह (पूर्वसूत्रे प्राज्ञेनेत्यादि) भाष्ये— निश्वसितमेतद्यदृग्वेद इति। ऋग्वेदादिनिखिलप्रपञ्चो निश्वासवदनायासेन उत्पन्न इत्यर्थः ॥ .... .... .... .... ....

१ ऐत. १-अ. १-ख. । २ तै-आन. १. अनु ॥

[1]"तस्य ह वा एतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदः' इत्यादिसृष्टिवाक्यानां या गतिः—प्रवृत्तिः, तत्सामान्यात् तत्समानार्थत्वादस्य; तेषु च सर्वेषु सर्वेश्वरः कारणमवगम्यते। तस्मादत्रापि सर्वेश्वर एव कारणमिति निश्चीयते ॥ ११ ॥

इतश्च न प्रधानम्—

श्रुतत्वाच्च ॥ १२ ॥

श्रुतमेव ह्यस्यामुपनिषदि अस्य सच्छब्दवाच्यस्य आत्मत्वेन नामरूपयोर्व्याकर्तृत्वं सर्वज्ञत्वं सर्वशक्तित्वं सर्वाधारत्वमपहतपाप्मत्वादिकं सत्यकामत्वं सत्यसङ्कल्पत्वञ्च [2]"अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" [3] "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" [4]"ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा [5]"यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्

* श्रुतप्रकाशिका *

गतिशब्दं व्याचष्टे (प्रवृत्तिरिति) बोधनव्यापारपरः प्रवृत्तिशब्दः, "भिन्नप्रवृत्तिनिमित्तानाम्' इत्यत्र प्रवृत्तिशब्दवत्। समानत्वमर्थद्वारकमित्याह (तत्समानेति) ततः किमित्यत्राह (तेषु चेति) ततोऽपि किमित्यत्राह (तस्मादिति)॥

न केवलमुपनिषदन्तरेषु, अत्रैव सर्वेश्वरकारणत्वं स्फुटमित्याह—

श्रुतत्वाच्च ॥ आत्मत्वेन नामरूपव्याकर्तृत्वं दर्शयति (अनेन जीवेनेति)। सर्वज्ञत्वसर्वशक्तित्वे "तदैक्षत बहु स्याम्"इत्यादिवाक्येन पूर्वमेव दर्शिते, सन्मूला इति सूचिते च। आधारत्वं दर्शयति—सदायतना इति, यच्चास्येति च। धारकत्वं चात्मत्वेनेति दर्शयति (ऐतदात्म्यमिति) न ह्यत्र कारणतया

१ सुबा. २ ॥
२ छां-६-प्र- ३- खं. २ ॥
३-४ छां-६-प्र. ८-खं- ६-७ ॥
५ छां ८-प्र- १- खं- ३-५ ॥

समाहितम् । तस्मिन्कामाः समाहिताः" [1]"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" इति । तथा च श्रुत्यन्तराणि [2]"न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" [3]'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' [4]'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' [5]'विश्वात्मानं परायणम्' 'पतिं विश्वस्यात्मेश्वरम्' 'यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' [6]'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो

* श्रुतप्रकाशिका *

कार्याधारत्वमात्रं विवक्षितमिति भावः । यच्चेत्यादिकं सत्यकामत्वप्रतिपादनोपयुक्तञ्च । अपहतपाप्मत्वादिगुणान् दर्शयति ( एष आत्मेति ) उक्तगुणवैशद्यार्थमनुक्तगुणदर्शनार्थं तद्वत ईश्वरत्वदेवताविशेषत्वस्फुटीकरणार्थं च पूर्वसूत्राभिप्रेतान्यनुदाहृतानि श्रुत्यन्तराण्युदाहरति ( तथा चेति ) न त्वेतत्सूत्रविषयवाक्यत्वेन, अस्य सूत्रस्य छान्दोग्योपनिषन्मात्रविषयत्वं दीपसारयोरपि ह्युक्तम् "श्रुतमेव

§ भावप्रकाशिका §

( नन्वेतत्सूत्रविषयवाक्यत्वेनेति ) अत्र केचित् , पूर्वसूत्रे चेतनत्वावगमकगतिसामान्यं विवक्षितम् । इह तु बहूनां परमात्मासाधारणानां श्रवणमुच्यत इति विशेषः । अयमेव विशेषः पूर्वसूत्रोदाहृतश्रुतीनाम्, इतरथा एतदुपनिषद्गतानां गतिसामान्यादित्यनेनापरिग्रहे हेत्वभावादिति वदन्ति . ननु श्रुत्यन्तरोदा-

---

1 छां. ८-१-५ ॥
2 श्वे. ६.अ. ९ ॥
3 तैत्त. आरण्यब्रह्ममेध पुरुषसू. ३-१२-१३
4 तै.आरण्य-चित्ति. ३-प्रश्न. ११-अनु. २१ पं.
5 तै ना. ११-अनु ॥
6 सुबा. खं. ७ ॥

देव एको नारायणः" इत्यादीनि। तस्माज्जगत्कारणवादिवाक्यं न प्रधानादिप्रतिपादनयोग्यम्, अतः सर्वज्ञस्सर्वशक्तिस्सर्वेश्वरेश्वरो निरस्तनिखिलदोषगन्धोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगणौघमहार्णवः पुरुषोत्तमो नारायण एव निखिलजगदेककारणं जिज्ञास्यं ब्रह्मेति स्थितम् ॥

अत एव निर्विशेषचिन्मात्रब्रह्मवादोऽपि सूत्रकारेणाभिः

* श्रुतप्रकाशिका *

ह्यस्यामेवोपनिषदि" इति। नात्र क्रमविवक्षा। लिङ्गम्—शरीरम्। नाशब्दमित्युपक्रमसूत्रानुरोधेन प्रधानस्याप्रतिपाद्यत्वं निगमयति (तस्मादिति) तेन फलितं ब्रह्मणः प्रतिपाद्यत्वं निगमयति (अत इति) सर्वज्ञत्वादयस्सर्गादिकारणत्वोपयोगिगुणाः। शोधकवाक्योक्तगुणा निरस्तनिखिलेत्यादिनोक्ताः। अनवधिकेत्यादिना पुरुषार्थत्वञ्च दर्शितम्, ओघशब्दोऽस्ति चेत् गुणानामन्यत्रापर्य्यवसायित्वं दर्शयति, महार्णवशब्दो गुणेभ्योऽपि तदाश्रयस्य महत्त्वं दर्शयति। पुरुषोत्तमनारायणशब्दौ पुरुषसूक्तनारायणानुवाकसिद्धविशेषपर्य्यवसायित्वं कारणशोधकवाक्यानां दर्शयन्तौ चिदचिद्विलक्षणत्वं तच्छरीरकत्वं च दर्शयतः। (निखिलजगदेककारणमिति) निखिलशब्देन गगनादिकमपि कबलीकृतम्। एकशब्देन निमित्तोपादानत्वे अभिप्रेते ॥

एषां सूत्राणां ब्रह्माज्ञानवादिनोऽननुगुणत्वं पूर्वमुक्तं विस्तरेणाह (अत एवेति) (सूत्रकारेणेति) न्यायनिबन्धनकृतेत्याभिप्रायः। आभिरित्यर्थप्रत्यायकत्वं विवक्षितम्; न्यायानुगृहीताभिर्विशदार्थाभिः श्रुतिभिरिति भावः।

* भावप्रकाशिका *

हरणे प्रथमोक्तनामरूपव्याकरणप्रतिपादकश्रुत्यन्तरे प्रथमोदाहर्तव्ये 'न तस्य कश्चित्पतिः' इति गुणान्तरवाक्यस्य कथं पूर्वमुपादानमित्याशङ्क्याह (नात्र क्रमविवक्षेति) ॥

(ब्रह्माज्ञानवादिनोऽननुगुणत्वं पूर्वमुक्तमिति) जन्मादिसूत्रे एवमुक्त-

श्रुतिभिर्निरस्तो वेदितव्यः, पारमार्थिकमुख्येक्षणादिगुणयोगि जिज्ञास्यं ब्रह्मेति स्थापनात् । निर्विशेषवादे हि साक्षित्वमप्यपारमार्थिकं वेदान्तवेद्यं

* श्रुतप्रकाशिका *

किञ्च प्रामाणिकस्याप्रामाणिकत्वाभिमानादपसिद्धान्तता सिद्धान्तस्यापि भ्रान्तिमूलत्वादप्रामाणिकता च लोके दृष्टेति तदुभयव्यवच्छेदार्थस्सूत्रकारश्रुत्योर्निर्देशः । (निरस्तो वेदितव्य इति ) निरासः फलित इत्यर्थः । अत एवेत्युक्तं विवृणोति (पारमार्थिकेति) ईक्षणस्यापारमार्थिकत्वे साङ्ख्याभिमतं प्रधानमेव ब्रह्म स्यात्, शुक्तित्वापारमार्थ्ये हि रजतमेव परमार्थः स्यादिति साङ्ख्यनिरासोऽनुपपन्नः स्यादिति पारमार्थिकशब्दाभिप्रायः । सच्छब्दोक्तस्वरूपस्य संशयसहत्वात्तदतिरिक्तेन व्यावर्त्तकेन भाव्यमिति गुणशब्दस्य भावः । अतस्सदादिशब्दानां साङ्ख्याभिमतप्रधानपरत्वव्यवच्छेदसिद्ध्यर्थमीक्षणादिगुणतत्पारमार्थिकत्वविवक्षावद्भिस्सूत्रै— र्निर्विशेषनिरासः फलित इत्यर्थः । 'तदैक्षत' इत्यादिवाक्यानि साक्षित्वमात्रपराणि, न तु गुणविशेषपराणि । साक्षित्वमात्रेणापि सूत्राभिमता प्रधानव्यावृत्तिः सिध्यतीत्यत्राह ( निर्विशेषेति ) सच्छब्दोपस्थापितविमतिपदस्वरूपातिरेकेण साक्षित्वमप्यपारमार्थिकं त्वन्मत इत्यर्थः । ज्ञातृत्वाभावे साक्षित्वमपि न सिध्यतीति प्रागेवोक्तमित्यपिशब्दाभिप्रायः । अपारमार्थिकत्वे किं स्यादित्यत्राह (वेदान्तेति ) न ह्यारोपिताकारस्तत्त्वावेदकप्रमाणविषयः, न चार्वाचीनं ब्रह्म जिज्ञा-

६ भावप्रकाशिका ६

रेषामपि सूत्राणामित्यादिनोक्तमित्यर्थः । ( प्रामाणिकस्याप्रामाणिकत्वाभिमानादिति ) प्रामाणिकस्याप्यपसिद्धान्तता दृष्टा , अप्रामाणिकत्वाभिमानादित्यन्वयः । अपसिद्धान्तता— असिद्धान्तत्वमित्यर्थः । यथा ब्रह्मोपादानत्वस्य शास्त्रान्तरसिद्धत्वाभाव इति भावः । ( सूत्रकारश्रुत्योर्निर्देश इति ) श्रुतिनिर्देशात्सविशेषत्वं प्रामाणिकं सूत्रकृतोक्तत्वादसिद्धान्तत्वशङ्कापि नास्तीत्यर्थः । ( अपिशब्दाभिप्राय इति ) ज्ञातृत्वसमुच्चयार्थोऽपिशब्द इति भावः । अत एव 'निर्विशेषचिन्मात्र' इत्यादिभाष्यस्यायमर्थः ,— जिज्ञास्यब्रह्मणः पारमार्थिकेक्षणगुणयोगित्वस्थापनात् निर्विशेषब्रह्मवादस्सूत्रकृता निरस्तः । न च जिज्ञास्यब्रह्मणो गुणयोगेपि

ब्रह्म जिज्ञास्यतया प्रतिज्ञातम्, तच्च चेतनमिति 'ईक्षतेर्नाशब्दम्' इत्यादिभिस्सूत्रैः प्रतिपाद्यते । चेतनत्वं नाम चैतन्यगुणयोगः । अत ईक्षणगुणविरहिणः

* श्रुतप्रकाशिका *

स्यतया प्रतिज्ञातमिति भावः । ततः किमित्यत्राह ( तच्चेति ) ततोऽपि किम् ? न ह्यस्माभिरचेतनमुच्यत इत्यत्राह ( चेतनत्वं नाम चैतन्यगुणयोग इति ) ईक्षितृत्वं हि न चिद्रूपतामात्रमित्यभिप्रायः । निर्विशेषनिरासस्य फलितत्वं निगमयति (अत इति) न ह्यत्र चिद्रूपतामात्रेण प्रधानव्यावृत्तिः सूत्रिता, अपि त्वीक्षणगुणयोगेन. तदनभ्युपगच्छतो व्यावर्तकाभावे व्यावृत्तिरेव न स्यादित्यर्थः । पारमार्थिके-त्यादिना एतदधिकरणविरोध उक्तः । वेदान्तेत्यादिना पूर्वाधिकरणैर्विरोध उक्तः । यद्वा स्वरूपमेव साक्षित्वं न धर्म्मः, अतो नापारमार्थिकमित्यत्राह—वेदान्तेति । स्वरूपमेव चेत्तत्पूर्वसूत्रैः सिद्धमिति प्रतिपाद्याधिक्याभावात् "ईक्षते"रित्यादिसूत्रवैयर्थ्यमित्यभिप्रायः । स्वरूपविशेषोऽप्रतिपन्न इति चेत् . किं स्वरूपमेव विशेषः ? उत स्वरूपस्य विशेषः ? प्रथमे प्रागुक्तदोषः । द्वितीये सविशेषत्वम् । पूर्वसूत्रेषु ब्रह्म कारणात्मना सिद्धम्, न तु चेतनरूपेण; अतः 'ईक्षते'रित्यादिसूत्राणामारम्भणीयत्वमिति शङ्कायां चेतनरूपेण प्रतिपाद्यत्वमभ्युपगच्छन्नाह—तच्चेति । चेतनतया प्रधानव्यावृत्तिश्चैतन्यगुणविरहे न सिध्यतीति वक्तुं चेतनत्वं शोधयति—चेतनत्वं नामेति । गुणशब्दो धर्मपरः । ततः किमित्यत्राह—अत इति । व्यावर्तकाभावाद्व्यावृत्त्यसिद्धिरित्यर्थः । चेतनशब्दस्य स्वरूपमात्रपरत्वे अधिकरणा-

७ भावप्रकाशिका ७

परस्य ब्रह्मणो न तथात्वमिति वाच्यम्; वेदान्तवेद्यब्रह्मण एव जिज्ञास्यत्वं प्रतिज्ञाय तस्य चेतनत्वलक्षणेक्षितृत्वं प्रतिपाद्य तद्द्वारा प्रधानव्यावृत्तिप्रतिपादनात् । नच चिद्रूपलक्षणचेतनत्वलक्षणमीक्षितृत्वं प्रधानव्यावर्तकतयोच्यत इति वाच्यम्, चेतनशब्दस्यातदर्थत्वात् . ततश्च चेतनत्वलक्षणेक्षितृत्वासिद्धौ प्रधानव्यावृत्तिरेव न सिध्येदिति व्यावर्तकासिद्धौ व्यावृत्त्यसिद्धेरिति । वेदान्तवेद्यमिति भाष्यस्य पूर्ववाक्योक्ताक्षेपपरिहारपरत्वं स्वरसमिति व्याचष्टे ( यद्वा स्वरूपमेव साक्षित्वमिति ) द्रव्यत्वाभ्युपगमात् द्रव्यभिन्नगुणवचनत्वं नेत्यत आह ( गुण-

प्रधानतुल्यत्वमेव । किञ्च निर्विशेषप्रकाशमात्रब्रह्मवादे तस्य प्रकाशत्वमपि दुरुपपादम् । प्रकाशो हि नाम स्वस्य परस्य च व्यवहारयोग्यतामापादयन् वस्तुविशेषः । निर्विशेषस्य वस्तुनस्तदुभयरूपत्वाभावाद्घटादिवदचित्त्वमेव . तदुभयरूपत्वाभावेऽपि तत्क्षमत्वमस्तीति चेत्. तन्न, तत्क्षमत्वं हि तत्सामर्थ्यमेव । सामर्थ्यगुणयोगे हि निर्विशेषवादः परित्यक्तः स्यात् । अथ श्रुतिप्रामाण्यादयमेको विशेषोऽभ्युपगम्यत इति चेत्, हन्त तर्हि तत एव सर्वज्ञता, सर्वशक्तित्वम्, सर्वेश्वरेश्वरत्वं, सर्वकल्याणगुणाकरत्वम्, सकलहेयप्रत्यनीकतेत्यादयः सर्वेऽभ्युपगन्तव्याः । शक्तिमत्त्वं च कार्य्यविशेषानुगुणत्वम् ; तच्च कार्य्यविशेषैकनिरूपणीयम् । कार्य्यविशेषस्य निष्प्रमाणकत्वे तदेकनिरूपणीयं

* श्रुतप्रकाशिका *

रम्भवैयर्थ्यमर्थसिद्धम्, न प्रधानतुल्यत्वम्, प्रकाशत्वाभ्युपगमात्; यथा आत्मधर्मभूतज्ञानस्य ज्ञानान्तरायोगेऽप्यचिद्व्यावृत्तिस्त्वन्मते तद्वदित्यत्राह ( किञ्चेति ) कथं दुरुपपादत्वमित्यत्राह (प्रकाशो हीति) व्यवहारयोग्यता—व्यवहारप्रतिसम्बन्धिता । तदुभयरूपत्वाभावात् स्वव्यवहारहेतुत्वपरव्यवहारहेतुत्वाभावादित्यर्थः । अथ तदुभयक्षमत्वं शङ्कते ( तदुभयेति ) तत्क्षमत्वमभ्युपगम्य दूषणमाह ( तन्नेति ) परस्य अगतित्वं दर्शयितुमाह ( अथेति ) परिहरति ( हन्त तर्हीति ) तत्क्षमत्वमेव नास्तीत्याह ( शक्तिमत्त्वं चेति ) कार्य्यविशेषस्य निष्प्रमाणकत्वे—स्वपरव्यवहारयोग्यतापादनाभावे, निरूपकाभावे निरूप्याभाव इत्यर्थः । वस्तुत्वे सम्भवत्यपि

७ भावप्रकाशिका ७

शब्दो धर्म पर इति ) ( तत्क्षमत्वमभ्युपगम्येति ) तदुपायरूपत्वाभावेपि तत्क्षमत्वसम्भावनामभ्युपगम्येत्यर्थः । ननु 'यत्तु कालान्तरेणापि नान्यसञ्ज्ञामुपैति

**शक्तिमत्त्वमपि निष्प्रमाणकं स्यात् । किञ्च निर्विशेषवस्तुवादिनो वस्तुत्वमपि निष्प्रमाणम् । प्रत्यक्षानुमानागमस्वानुभवाः सविशेषगोचरा इति पूर्वमेवोक्तम् । तस्माद्विचित्रचेतनाचेतनात्मकजगद्रूपेण 'बहु स्या'मितीक्षणक्षमः पुरुषोत्तम एव जिज्ञास्य इति सिद्धम् ।१२।**

---

* श्रुतप्रकाशिका *

प्रधानतुल्यत्वमुक्तम् । अथ वस्तुत्वमेव न सिध्यतीत्याह ( किञ्चेति ) वस्तुत्वम्—तुच्छव्यावृत्तत्वम् । कुत इत्यत्राह ( प्रत्यक्षेति ) प्रत्यक्षान्तर्भूतस्यापि स्वानुभवस्य पृथक्प्रमाणत्वं परमताभ्युपगमेनोक्तम् । सविशेषगोचराः—वस्तुतः सविशेषभूतार्थगोचरा इत्यर्थः । वस्तुत्वं चिदचित्साधारणम् । तच्च तुच्छव्यावृत्तत्वम्, तन्न सिध्यतीत्यर्थः । परपक्षदूषणानन्तरं स्वपक्षं निगमयति ( तस्मादिति ) ॥ .... ....

परैस्त्वेवं सूत्रयोजना कृता,—प्रधानं न प्रतिपाद्यम्, अशब्दं हि तत्, शब्देन प्रतिपादयितुमशक्यं हि तत्, अशक्यत्वञ्च ईक्षतिश्रवणादिति नैषोचिता प्रतिज्ञावाक्ये धर्म्युपस्थापकशब्दस्याध्याहार्य्यत्वात् अशब्दं हि तदित्युक्तेऽपि हेत्वन्तरसाकाङ्क्षत्वाच्च । "नानुमानमतच्छब्दात्" "आनुमानिकमप्येकेषाम्" इत्यादिसूत्रेषु आनुमानिकादिशब्दवदशब्दशब्दस्याप्यवयवार्थमुखेन धर्म्युपस्थापनक्षमतया अध्याहारनिरपेक्षत्वादवयवशक्त्यैवानुमानाकारावगमरूपपूर्वपक्षबीजस्य सूत्रेणैव द्योतमानत्वसिद्धेश्च भाष्यकाराभिमता योजना साधीयसी 'गौणश्चेन्नात्मशब्दात्' इत्यत्रात्मशब्दस्य स्वरूपपरत्वमाश्रित्य जीवं निर्दिश्य सच्छब्दवाच्यस्य स्वरूपत्वेन व्यपदेशादगौणमीक्षणमित्यप्ययुक्तम्, तस्यामोधेक्षणत्वायोगात् सूत्रा-

॥ भावप्रकाशिका ॥

वै । परिणामादिसम्भूतं तद्वस्तु नृप तच्च किम् ॥" इति वस्तुत्वस्य परमात्ममात्रनिष्ठस्य न प्रमाणविषयत्वप्रयोज्यत्वं प्रमाणविषयेष्वप्यचिद्वस्तुषु तादृशवस्तुत्वाभावादित्याशङ्क्याह ( वस्तुत्वं चिदचित्साधारणमिति ) ॥ .... ....

(परैस्त्वित्यादि) (जीवं निर्दिश्य सच्छब्दवाच्यस्येति) अनेन जीवेनात्मनानुप्रविश्येति वाक्य इति शेषः । अनेन जीवेनात्मना मम स्वरूपेणानेन जीवेनेति सच्छब्दितायाः

* श्रुतप्रकाशिका *

स्वारस्याच्च। न हि गौणश्चेन्न जीवशब्दादित्युक्तम्. स्वरूपपर आत्मशब्दस्सापेक्षः, जीववाचिपदसमभिव्याहारेण विना तस्याचिद्व्यावर्तनासामर्थ्यात् । चेतनपरस्त्वात्मशब्दः 'ऐतदात्म्यमिदं सर्वम्'इति चिदचिदात्मकसमस्तप्रपञ्चं प्रत्यात्मत्वं दर्शयन्नचिद्व्यावर्तनेऽतीव निराकाङ्क्षः, अतः साकाङ्क्षहेतुनिर्देशादपि निराकाङ्क्षहेतुनिर्देशो वरमिति तस्यापि सूत्रस्य यथोक्त एवार्थः । चिदचिदात्मकसमस्तजगदन्तरात्मवाचिन आत्मशब्दस्य 'ममात्मा भद्रसेन' इतिवन्मुख्यार्थानुपपत्त्यभावेन गौणत्वशङ्कानुदयादात्मशब्दो न गौण इति प्रतिज्ञावाक्यान्तरानिरपेक्षत्वाच्च तृतीयं सूत्रमपि परमसाध्यहेतुवाचीति युक्तम् । सर्ववेदान्तानामेककण्ठ्यं दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वात् श्वेताश्वतरवाक्यस्य 'श्रुतत्वात्'इति सूत्रविषयत्वाश्रयणमयुक्तम्। यत्तूक्तं यादवप्रकाशीयैः सता सम्पन्न इति सत्प्राप्तिमात्रमुक्तम्, न त्वैक्यम्, सच्छब्दस्य प्रधानपरत्वेऽपि सति सम्पत्तिर्घटते. स्वाप्ययश्च सर्वेषां जीवानां पृथक् पृथक् स्वस्मिन्नप्ययो भवत्विति शङ्कापरिहाराय सुषुप्तौ सर्वजीवानां गन्तव्यस्य वस्तुन एकत्वम्, तत्र सति तेषामैक्यापत्तिश्च गतिसामान्यसूत्रेणोच्यते । विषयश्च "यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणां रसान् समवहारमेकतां रसङ्गमयन्ति ते

ॐ भावप्रकाशिका ॐ

देवताया वाक्यमिदमितिभावः । ननु गौणश्चेन्न जीवशब्दादित्युक्तेपि न स्वारस्यम्. जीवस्यात्मत्वव्यपदेशादित्यस्यार्थस्यासिद्धेरित्यस्वरसादाह (स्वरूपपर आत्मशब्दस्सापेक्ष इति) अत एव यद्योन्यां गायति तदुत्तरयोर्गायतीत्यत्रोत्तरशब्दस्य ग्रन्थविशेषसञ्ज्ञारूपेण रूढत्वात्तस्यैव ग्रहणम्, नतु योन्युत्तरयोः । सम्बन्धिशब्दत्वेन सापेक्षत्वे विलम्बितप्रतीतिकत्वादित्युक्तम् । "नैमित्तकं तूत्तरात्वमानन्तर्यात्प्रतीयते" इत्यत्र नावमिकाधिकरणे । ममात्मा भद्रसेन इतिवत् 'अनेन जीवेनात्मने'ति आत्मशब्दो गौण इत्याशङ्क्य तन्निराकरणार्थं 'तन्निष्ठस्य मोक्षोपदेशात्' इति सूत्रमिति परैर्व्याख्यातम्; तद्दूषयति (चिदचिदात्मकेति) (परमसाध्यहेतुवाचीति युक्तमिति) अत एवास्वारस्यात् शङ्करभाष्येपि 'अथवा पूर्वसूत्र एवे'त्यादिना परमसाध्य एव हेतुतया तृतीयसूत्रं योजितमिति द्रष्टव्यम्। (यथा सोम्य मधु मधुकृत इत्यादि) मधुकृतो माक्षिकाः। मधु निस्तिष्ठन्ति

* श्रुतप्रकाशिका *

यथा तत्र न विवेकं लभन्ते अमुष्याहं वृक्षस्य रसोऽस्मि अमुष्याहं वृक्षस्य रसोऽस्मीति एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः"इति वाक्यमिति। तदप्ययुक्तम्। तथा हि; दृष्टान्तानुगृहीतमेकतामवगमयत् 'सति सम्पद्य 'इत्यादि वाक्यं किं कारणत्वमुपजीव्य सतः प्रधानत्वव्युदासकम्? उत कारणत्वमनुपजीव्य?। प्रथमे गतिसामान्यसूत्रवैयर्थ्यं स्यात्, स्वाप्ययस्य कारणत्वापत्तिरूपतया स्वाप्ययसूत्रेणैव प्रधानत्वव्युदाससिद्धेः। दृष्टान्तवैधर्म्यञ्च, बहूनां रसानामेकस्मिन् कारणे लयस्य निदर्शितत्वाभावात्. रसवतामवयवानां मधुरत्वरूपेण समानरसत्वापत्तिरेव हि तत्र दृश्यते। द्वितीये च जीवानां कीदृशमेकत्वं सतः प्रधानत्वव्युदासकम्, न तावज्जीवत्वप्रहाणेन सतैकत्वम् जीवत्वप्रहाणस्य भवतामनभ्युपगमात् जीवनित्यत्वश्रुतिविरोधात् ' प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्'इति अज्ञस्य जीवस्य तदा प्राज्ञाधिष्ठितत्वश्रवणविरोधात् पुनरपि व्यवस्थितकर्मफलभोगाद्यनुपपत्तेश्च। न च सद्रूपेणैकत्वम्, तज्जाग्रद्दशायामप्यस्तीति तदानीमिव जीवानां स्वापे स्वस्वरूपावस्थानप्रधानसंसर्गयोरविरोधादभिमतासिद्धेः। न च देवत्वमनुष्यत्वरागद्वेषादिबाह्याभ्यन्तरविकल्पाभिमानविरहेणैकत्वम्, तस्यापि स्वस्वरूपावस्थानप्रधानसंसर्गयोरविरोधित्वेन सम्पत्त्यप्ययाधिकरणस्य स्वस्वरूपप्रधानव्यतिरेकासिद्धेः, अतः सूत्रवैयर्थ्यशङ्कापरिहारासिद्ध्योरन्यतरावश्यम्भावात् परोक्तार्थपरत्वं सूत्रस्यायुक्तम्। यच्च श्रुतत्वादिति सूत्रस्य प्रतिज्ञावाक्यप्रभृति 'स एषोऽणिमा 'ऐतदात्म्य'मित्यादिवाक्यजातं विषयतयोपात्तम्। तदप्ययुक्तम्, प्रतिज्ञाविरोधात्' 'नात्मशब्दात्'इत्यादिभिः सौत्रपदैरस्य पुनरुक्तिप्रसङ्गात्, अतः सूत्राणां यथोक्त एवार्थः॥ .... .... .... .... .... .... ....



७ भावप्रकाशिका ७

निष्पादयन्ति. नानात्ययानाम्– नानादिक्कानां वृक्षाणां रसान् समवहारम्–समाहृत्य। एकताम्–एकभावं, मधुत्वेन रसं गमयन्ति मधुत्वमापादयन्ति, ते रसाः मधुत्वेनैकीभूताः, तत्र–मधुनि, विवेकं न लभन्ते—अयममुष्य वकुलस्य रसः, न चूतस्य रसः, एवं सतैकीभूता अपि प्रजा विवेकं न लभन्त इत्यर्थः॥ .... ....

* इति ईक्षत्यधिकरणम् *



एवं जिज्ञासितस्य ब्रह्मणश्चेतनभोग्यभूतजडरूपसत्त्वरजस्तमोमयप्रधानाद्व्यावृत्तिरुक्ता; इदानीं कर्मवश्यात् त्रिगुणात्मकप्रकृतिसंसर्गनिमित्तनानाविधानन्तदुःखसागरनिमज्जनेनाशुद्धाच्छुद्धाच्च प्रत्यगात्मनोऽन्यन्निखिलहेयप्रत्यनीकनिरतिशयानन्दं ब्रह्मेति प्रतिपाद्यते—

* श्रुतप्रकाशिका *

अथोत्तराधिकरणस्य पूर्वाधिकरणेन सङ्गतिमाह ( एवं जिज्ञासितस्येति ) जगत्कारणस्य निरूपणीयत्वे चतुस्सूत्र्या सिद्धे प्रत्यक्षादिसिद्धतया प्रसिद्ध्यतिशयादचेतने प्रथममवतरन्ती बुद्धिरीक्षणादिभिस्ततो व्यावर्त्य चेतनवस्त्वभिमुखीकृता । इदानीमचेतनापेक्षया प्रसिद्धिमान्द्येऽपि परमात्मापेक्षया प्रसिद्धतरेऽहम्प्रत्ययसिद्धे प्रत्यगात्मन्यवतरन्ती बुद्धिर्व्यावर्त्यत इत्यर्थः ।

छ भावप्रकाशिका छ

( प्रत्यगात्मन्यवतरन्ती बुद्धिरिति ) कारणत्वबुद्धिरित्यर्थः । ननु नास्मिन्नधिकरणे जगत्कारणं जीव इति पूर्वपक्षीकृत्य तदतिरिक्तं ब्रह्मेति सिद्धान्त्यते. अपि त्वानन्दमयो जीवः परमात्मा वा ? इति विचार्यानन्दमयो जीव इति पूर्वपक्षं कृत्वा ब्रह्मेति सिद्धान्त्यते, इतरथा जगत्कारणं जीव इति पूर्वपक्षे जीवासम्भावितधर्मप्रतिपादकसकलश्रुत्युपन्यासस्यैव युक्ततया आनन्दवल्लीमात्रार्थनिर्णायकन्यायग्रथनस्यायुक्तत्वप्रसङ्गात् 'श्रुतत्वाच्च' इति पूर्वाधिकरणगुणसूत्रोदाहृतश्रुतिप्रतिपादितजीवासम्भावितधर्मैरेव जीवातिरिक्तब्रह्मसिद्धेश्च 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' 'अधिकं तु भेदनिर्देशात्' इत्यादिभिः कृतकरत्वाच्च. अतः आनन्दवल्लीप्रतिपाद्यानन्दमयः किं जीवः, उत परं ब्रह्म ? इत्येव चिन्तनीयम्. नच कारणविषयत्वाभावे समन्वयाध्यायासङ्गतिस्स्यादिति वाच्यम्. त्रिपादीविचारवदुपपत्तेः । नच तत्रापि कारणत्वचिन्तात्मकत्वमेवेति वाच्यम्. तत्तद्गुणाकरत्वं ब्रह्मणः प्रतिपाद्यत इति भाष्योक्तेः । 'अधिकरणगुणैस्तद्गुणानुद्गृणाति' इत्यधिकरणसारावल्युक्तेश्च । ननु सामान्यतो जगत्कारणं जीवो वा

## आनन्दमयोऽभ्यासात्॥ १३ ॥

६ अधिकरणम्

तैत्तिरीया अधीयते [1]"स वा एष पुरुषोऽन्नरसमयः" इति प्रकृत्य [2]"तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽन-

* श्रुतप्रकाशिका *

आनन्दमयोऽभ्यासात् ॥ कारणविषयस्य 'तस्माद्वा एतस्मादात्मनः"इति वाक्यस्योत्तरत्र चोद्यपरिहारमुखेन उदाहरिष्यमाणत्वात् प्रथममात्मशब्दव्याख्यानोपक्रमभूतं 'स वा एष पुरुषः' इत्यादिकमुपात्तम्, अत एव हि प्रबन्धान्तरे 'तस्माद्वा'

७ भावप्रकाशिका ७

ब्रह्म वेति चिन्तनीयमिति चेत्. सत्यम्, तथैव चिन्त्यते; किन्त्वानन्दमयस्य जीवत्वे जीवातिरिक्तब्रह्मकारणत्ववादे किञ्चिच्छ्रद्धावैकल्यं जायेतापीत्येतदभिप्रेत्यायोगव्यवच्छेदोक्त्युपपत्तेः । अत एव ज्योतिरधिकरणे निरूपितमित्याशङ्क्य संशयहेत्वभावादिति परिहृत्य पुनस्तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारम्भस्स्यादिति परिचोद्य बहूनां वेदान्तवाक्यानां प्रकृतिपुरुषकारणमात्रपरत्वे पुरुषसूक्तेपि संशयप्रसङ्गान्न वैयर्थ्यमस्तीति परिहरिष्यति । अन्ये तु—अन्ययोगव्यवच्छेदार्थायां त्रिपाद्याम् आनुमानिकमप्येकेषामिति चेत्' इत्यपिशब्देन प्रधानमपि जगत्कारणं भवत्विति प्रदर्शयता सूत्रकृता पूर्वत्र प्रधानादिकमेव जगत्कारणं ब्रह्मेति प्रथमपादपूर्वपक्ष्याशय उन्नीयते अत एव कल्पतरुग्रन्थे आनुमानिकाधिकरणे पूर्वत्र हि प्रधानाद्येव सर्ववेदान्तार्थ इति प्रत्यवस्थितं निषेधेन. इह तु तदभ्युपेत्य प्रधानाद्यपि कारणमिति प्रत्यवस्थीयते. सूत्रकारोप्यपिशब्दं प्रयुञ्जानो ब्रह्माभ्युपगमेन काचित्कोयं विचार इति सूत्रयामासेत्युक्तमिति वदन्ति—

कारणवाक्यविचारपरे अस्मिन्नधिकरणे 'तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" इत्यारभ्य श्रूयत इति वक्तव्ये भाष्यकृता किमिति 'स वा एष' इत्यादिकमुदाहृतमित्याशङ्क्याह (कारणविषयस्येति) (आत्मशब्द-

१ तै. आन. १-अनु ॥ | २ तै. आन. ५-२ ॥

न्दमयः" इति । तत्र सन्देहः, किमयमानन्दमयो बन्ध-मोक्षभागिनः प्रत्यगात्मनो जीवशब्दाभिलपनीया-दन्यः परमात्मा ; उत स एव ? इति ॥ किं युक्तम् ? प्रत्यगात्मेति । कुतः? "'तस्यैष एव शारीर आत्मा' इत्या-नन्दमयस्य शारीरत्वश्रवणात् ; शारीरो हि शरीर-

* श्रुतप्रकाशिका *

इत्यादिकमुदाहृतम् । ( तत्रेति ) शारीरत्वानन्दप्राचुर्याभ्यां संशय इत्यभिप्रायः । सद्विद्यायां 'जीवेनात्मने'तिसमानाधिकरण्यमत्र पूर्वपक्षोत्थानबीजमिति सूचनार्थं जीवशब्दाभिलपनीयादितिपदम् । किं कारणवादिनः सर्वे वेदान्ताः परिशुद्ध-प्रत्यगात्मस्वरूपपराः, उत तद्विलक्षणपराः । इति प्रथमविचारः । तदर्थमानन्दमयः किं परिशुद्धावस्थः प्रत्यगात्मा; उत परमात्मा ? इति । तदर्थमिह प्रतिपन्नः शारीर-सम्बन्धः किं जीवात्मासाधारणः उत न ? । तदर्थं मयट् किं स्वार्थकत्वविकारार्थ-कत्वयोरन्यतरवान् ; उत प्राचुर्य्यार्थः ?। तदर्थं किं विकाराद्यर्थानुगुणहेतवोऽनु-रोद्धव्याः, उत प्राचुर्य्याद्यर्थानुगुणहेतवः ? । विज्ञानमयशब्दः किं विज्ञानमात्रपरः, उत जीवपरः? । तदर्थं तत्र मयट् किं स्वार्थिकः ? उत न ? । तदर्थं 'विज्ञानं यज्ञं तनुते' इति विज्ञानशब्दः किं ज्ञानमात्रे वर्त्तते, उत ज्ञानगुणके प्रत्यगात्मनि ? इति । पूर्वे कल्पाः पूर्वपक्षाः, इतरे तु सिद्धान्ताः । यदा विकारार्थत्वाद्यनुगुणहेतोरनुरो-द्धव्यत्वेन मयट् स्वार्थिको विकारार्थो वा भवति, तदा निरतिशयप्राचुर्य्या-प्रतिपत्तेरानन्दमात्रस्य जीवे सम्भवात्त्वतो जीवानुगुणतया प्रतिपन्नस्य शरीरसम्बन्धस्य जीवासाधारणत्वे विरोधाभावादानन्दमयो जीवः, यदा च श्लोकस्थविज्ञानशब्दो विज्ञानमात्रपरः तदा विज्ञानमयशब्दस्यापि स्वार्थिकमयड-न्तत्वेन विज्ञानमात्रपरत्वाद्विज्ञानशब्दस्य बुद्धिपरत्वसम्भवात् तदन्तर आनन्द-

७ भावप्रकाशिका ७

व्याख्यानोपक्रमभूतमिति ) ततश्चात्मशब्दव्याख्यानानां मध्ये स वा एष इत्य-स्योपक्रमभूतत्वात् विषयभूतकारणवाक्योपक्रमत्वाभावेपि प्रकृतेत्युक्तिरुपपन्नेति

१ तै. आन. ५-अनु ॥

सम्बन्धी जीवात्मा ॥ ननु च जगत्कारणतया प्रतिपादितस्य ब्रह्मणः सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्य तदेव जगत्कारणमानन्दमय इत्युपदिशति ; जगत्कारणञ्च [1]"तदैक्षत" इतीक्षणश्रवणात्सर्वज्ञः सर्वेश्वर इत्युक्तम् । सत्यमुक्तम्, स तु जीवान्नातिरिच्यते । [2]"अनेन जीवेनात्मनाऽनुप्रविश्य" [3]"तत्त्वमसि श्वेत-

* श्रुतप्रकाशिका *

मयः प्रत्यगात्मेति पूर्वपक्षे फलफलिभावः । राद्धान्ते तु यदा प्राचुर्य्यार्थानुगुणहेतोरनुरोद्धव्यत्वेनानन्दमय इत्यत्र मयट् प्राचुर्य्यार्थः, तदानीमानन्दप्राचुर्य्यस्य निरवधिकतयाऽवगतस्य श्रुतिविरुद्धाश्रुतोपाधिकल्पनायोगेन स्वतो निरतिशयस्य जीवात्मन्यसम्भवात्तद्विरोधेन शरीरसम्बन्धस्य जीवासाधारणकर्ममूलत्वाभावाच्च नानन्दमयः प्रत्यगात्मा, यदा च श्लोकस्थविज्ञानशब्दो विज्ञानगुणके प्रत्यगात्मनि वर्तते तदा विज्ञानमयशब्दस्यापि प्राचुर्यार्थमयडन्ततया प्रत्यगात्मवाचित्वाच्च तदन्तर आनन्दमयः परमात्मेति फलफलिभावः ॥ पूर्वपक्षोत्थानमाक्षिपति ( ननु चेति ) ( सुखप्रतिपत्त्यर्थमन्नमयादीननुक्रम्येति ) अनेन जगत्कारणप्रकरणस्याविच्छिन्नत्वं द्योतितम् । ( तदेव जगत्कारणमिति ) वक्ष्यमाणपर्यालोचनया विभूतिप्रकर्षाधीनातिशयितानन्दस्याश्रयत्वोपपादकं सकलजगत्कारणत्वमिति भावः । ततः किमित्यत्राह ( जगत्कारणञ्चेति ) ज्ञानशक्त्युपयोगज्ञापनाय जगत्कारणमिति पुनरुपादानम् । परिहरति (सत्यमिति) चेतनत्वादावभ्युपगमः, जीवादतिरेके विवादः । सामानाधिकरण्यनिर्देशोऽस्तु, ततः

७ भावप्रकाशिका ७

भावः ॥ ( चेतनत्वादावभ्युपगम इति ) सर्वज्ञशब्दप्रतिपन्नचेतनत्वेऽभ्युपगमः सर्वेश्वरशब्दप्रतिपन्नजीवातिरेकेनाभ्युपगम इत्यर्थः । ततश्च जीवातिरिक्तत्वादेः प्रागनुक्तत्वात्, अनुक्तांशे कथं सत्यशब्दप्रयोग इति न चोदनीयम्, इदमुपलक्षणम्. उक्तांशेऽङ्गीकारः । उक्तस्य वास्तवत्वांशे त्वनङ्गीकारः, सत्यमुक्तमिति

१ छां ६-२-३ ॥ २ छां ६-३-२ ॥ ३ छां-६-८-७ ॥

केतो" इति कारणतया निर्दिष्टस्य जीवसामानाधिकरण्यनिर्देशात्। सामानाधिकरण्यं ह्येकत्वप्रतिपादनपरम्; यथा 'सोऽयं देवदत्तः' इत्यादौ। ईक्षापूर्विका च सृष्टिश्चेतनस्य जीवस्योपपद्यत एव, अतः 'ब्रह्मविदाप्नोति

* श्रुतप्रकाशिका *

किं जीवादवैलक्षण्यस्येत्यत्राह ( सामानाधिकरण्यमिति ) ईक्षतिश्रवणाज्जीवविलक्षणत्वमुक्तमित्यत्राह ( ईक्षेति ) उपपद्यत एवेत्येवकारः अस्वारस्यसूचकः। साक्षित्वमेव ईक्षितृत्वमिति भावः। 'भेदव्यपदेशाच्च' इति भेदव्यपदेशं सिद्धान्तहेतुं वदता सूत्रकारेण ऐक्यव्यपदेशस्य पूर्वपक्षहेतुत्वं विवक्षितमित्यवगम्यते; एवमुत्थानोपपत्तेः सौत्रहेतुवशाच्च ऐक्यव्यपदेशः पूर्वपक्षहेतुतयोपन्यस्तः। एवं पूर्वाधिकरणेन जीवव्यतिरेकासिद्धेरधिकरणान्तरमारम्भणीयमिति भावः। ननु 'ब्रह्मविदाप्नोति पर'मित्यत्र ब्रह्म प्राप्यं श्रूयते, अनन्तरं लक्षणं कथ्यते, तत्र सत्यत्वमानन्त्यञ्चान्तर्भूतम्। जीवस्य नित्यप्राप्तत्वात् प्राप्यत्वमनुपपन्नम्, ज्ञातत्वाल्लक्षणञ्च न वाच्यम्; सत्यत्वानन्तत्वरूपलक्षणविशेषश्च नैकरूपज्ञानस्य परिच्छिन्नस्य नोपपद्यते, अतः परमात्मैव प्रतिपाद्यत इति शङ्कां परिहरन् पूर्वपक्षमाह (अतो ब्रह्मविदिति ) अतश्शारीरत्वश्रवणात्सामानाधिकरण्यबलेनैक्यस्य प्रतिपन्नत्वाच्चाचिद्वियुक्तस्वरूपप्राप्यतापरत्वं कल्प्यमित्यर्थः। लक्षणकथनं

❁ भावप्रकाशिका ❁

ग्रन्थस्वारस्यादित्यपि द्रष्टव्यम्। ( अस्वारस्यसूचक इति ) क्रियासङ्गतैवकारस्यात्यन्तायोगव्यवच्छेदार्थपरत्वादिति भावः। ननु साङ्ख्यमते जीवस्य प्रत्ययार्थीभूतकर्तृत्वाभावात् ईक्षितृत्वमनुपपन्नमित्याशङ्क्य प्रत्ययार्थानुपपत्तावपि प्रकृत्यर्थोपपत्तिरित्यभिप्रयन्नाह ( साक्षित्वमेवेति ) नन्वस्मिन्नधिकरणे जीवब्रह्माभेदः पूर्वपक्ष्यभिमतः। तद्भेदस्तु सिद्धान्त्यभिमत इति भाष्यकृता जीवब्रह्माभेदद्वेषानुबन्धवशात्परं व्याख्यायते. न त्वेवं सूत्रकृदभिप्रायः, तादृशाभिप्रायज्ञापकाभावादित्यत आह ( भेदव्यपदेशाच्चेतीति ) ( जीवव्यतिरेकासिद्धेरिति ) जीवभिन्नत्वासिद्धेरित्यर्थः। ( नैकरूपज्ञानस्येति ) ज्ञानसङ्कोचविकासरूपावस्थायोगित्वादिति

परम्' इति जीवस्याचित्संसर्गवियुक्तं स्वरूपं प्राप्यतयोपदिश्यते। अचिद्वियुक्तस्वरूपस्य लक्षणमिदमुच्यते [१] "सत्यं ज्ञानमनन्तं ब्रह्म" इति। तद्रूपप्राप्तिरेव हि मोक्षः। [२] "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः" इति। अतो जीवस्याविद्यावियुक्तं स्वरूपं प्राप्यतया प्रक्रान्तमानन्दमय इत्युपदिश्यते। तथा हि; शाखाचन्द्रन्यायेनात्मस्वरूपं दर्शयितुम् 'अन्नमयः पुरुषः' इति शरीरं प्रथमं निर्दिश्य तदन्तरभूतं तस्य धारकं पञ्चवृत्तिप्राणम् तस्याप्यन्तरभूतं मनः तदन्तरभूतां च बुद्धिं

* श्रुतप्रकाशिका *

तत्प्रतिपत्त्यर्थं तद्विशेषोक्तिश्च अचिद्वियुक्ते स्वरूपे सम्भवतीत्याह ( अचिद्वियुक्तेति ) न केवलं शारीरत्वसामानाधिकरण्यबलादचिद्वियुक्तस्वरूपस्य प्राप्यत्वम्, किन्तु कण्ठोक्तं चेत्याह ( तद्रूपेति ) हिशब्दः श्रुतिप्रसिद्धिद्योतकः। यद्वा स्वरूपस्यैवौपाधिकाकारनिवृत्तिमात्रपरमोक्षशब्दस्वारस्यसूचकः। श्रुतिमेव दर्शयति ( न ह वा इति ) इति--श्रवणादिति शेषः। प्राप्यत्वानुगुणपुरुषार्थतां दर्शयन् निगमयति (अत इति) ननु नात्राचिद्वियुक्तजीवस्वरूपमुपदिश्यते 'स वा एष पुरुषोऽन्नरसमयः' इति शरीरसम्बन्धश्रवणादपरिच्छिन्नानन्दत्वश्रवणाच्चेत्यत्राह (तथा हीति) शरीरमुपलक्षणमात्रम्, न तु विशेषणमिति तद्वियोगेनापरिच्छिन्नानन्दत्वादिकमुपदिश्यत इत्यर्थः। ( तदन्तरभूतां च बुद्धिमिति ) प्राणमयमनोमययोर्मयट्प्रत्ययस्य स्वार्थिकत्वाद्विज्ञानमय इत्यत्रापि मयट् स्वार्थिकः, 'विज्ञानं यज्ञं तनुते' इति मयडन्तत्वं विना वक्ष्यमाणत्वात्, "विज्ञानसारथिर्यस्तु" 'बुद्धिं

ऍ भावप्रकाशिका ऍ

भावः। ( प्राप्यत्वानुगुणेति ) अचिद्वियुक्तस्वरूपस्य प्राप्यत्वे आनन्दमयतया

१ तै. आन. १॥ | २ छां ८-१२-१॥

[1]'प्राणमयो' [2]'मनोमयो' [3]'विज्ञानमयः' इति तत्र तत्र बुद्ध्यवतरणक्रमेण निर्दिश्य सर्वान्तरभूतं जीवात्मानम् [4]'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्युपदिश्यान्तरात्मपरम्परां समापयति, अतो जीवात्मस्वरूपमेव 'ब्रह्मविदाप्नोति' इति प्रक्रान्तं ब्रह्म ; तदेवानन्दमय इत्युपदिष्टमिति निश्चीयते ॥

* श्रुतप्रकाशिका *

तु सारथिं विद्धि" इति बुद्धिविज्ञानशब्दयोरेकार्थत्वेन प्रयोगाच्च, विज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानं बुद्धिरिति भावः । किमर्थमन्नमयादिनिर्देश इत्यत्राह ( तत्र तत्र बुद्ध्यवतरणेति ) अपरिच्छिन्नानन्दत्वमपि परिशुद्धात्मस्वरूपस्य सम्भवतीत्यर्थसिद्धम् । शारीरत्वश्रवणात् जीवसामानाधिकरण्याद्विज्ञानमयशब्दस्यान्तःकरणपरत्वात्प्राप्यत्वादेः परिशुद्धस्वरूपेऽप्युपपन्नत्वाच्छरीरस्योपलक्षणत्वेन तद्वियुक्तस्वरूपेण प्राप्यत्वादिसम्भवान्मयट्प्रत्ययस्य स्वार्थिकत्वेन विकारपरत्वाभावाच्च परिशुद्धप्रत्यगात्मस्वरूपविषयमिदं वाक्यमिति पूर्वपक्षसङ्ग्रहः, तत्र द्वौ हेतू साधकौ, अन्ये तु शङ्कितदूषणान्यथासिद्धिरूपाः ॥

ए भावप्रकाशिका ए

पुरुषार्थत्वमित्यभिप्रायः । ( विज्ञायतेऽनेनेति व्युत्पत्त्येति ) मनोबुद्ध्यहङ्कारभेदेन अन्तःकरणत्रैविध्यस्य साङ्ख्याभिमतत्वात्, साङ्ख्यमते बुद्धिशब्दस्यान्तःकरणपरत्वेन तत्र विज्ञानशब्दस्य भावव्युत्पत्तिसम्भवादिति भावः । ( विकारपरत्वाभावाच्चेति ) ननु पूर्वपक्षिणा विकारपरत्वप्रत्याख्यानं " विकारशब्दान्नेति चेन्न प्राचुर्यात् " इति सूत्रविरुद्धम् । तस्मिन् सूत्रे विकारार्थत्वस्यैव पूर्वपक्षहेतुतयोपन्यासात्, मयट्प्रत्ययस्वार्थिकत्वविकारार्थत्वयोः पूर्वपक्षसाधकत्वस्य तदर्थचिन्ताग्रन्थ एव प्रदर्शितत्वेन स्वोक्तिविरोधाच्चेति चेत् . अत्राहुः,— अस्मिन्नधिकरणे पूर्वपक्षो द्विविधः, साङ्ख्यपक्षावलम्बी पुच्छप्रधानावलम्बी च . तत्रानन्दमय इत्यत्र

१ तै. आन. २-अनु ॥
२ तै. आन. ३ ॥
३ तै. आन. ४-अनु ॥
४ तै. आन ५-२ ॥

ननु च [1]"ब्रह्म पुच्छं प्रतिष्ठा" इत्यानन्दमयादन्यद्ब्रह्मेति प्रतीयते। नैवम्; ब्रह्मैव स्वस्वभावविशेषेण पुरुषविधत्वरूपितं शिरःपक्षपुच्छरूपेण व्यपदिश्यते। यथाऽन्नमयो देहोऽवयवी स्वस्मादनतिरिक्तैः स्वावयवैरेव

* श्रुतप्रकाशिका *

एवमानन्दमयशब्दस्य प्रत्यगात्मपरत्ववादिनं पूर्वपक्षिणं साङ्ख्यं मृषवादिपक्षस्थश्चोदयति ( ननु चेति ) तस्य पुच्छमिति षष्ठ्याऽवयविसम्बन्धप्रतीतेस्सम्बन्धस्य द्विनिष्ठतया प्रतिष्ठातद्वद्भावेन च व्यतिरेकावगमादन्यत्वमित्यर्थः। परिहरति ( नैवमिति ) 'अन्वयं पुरुषविधः' इति श्रुतिवाक्यस्मरणार्थं पुरुषविधत्वरूपितमित्युक्तम्। पुरुषविधत्वेन रूपितम्। अनतिरिक्तत्वमुपपादयति ( यथेति ) प्रकरणे स्वस्मादनतिरिक्तैस्स्वावयवैः पुच्छप्रतिष्ठात्वरूपणदर्शनादत्रापि पुच्छप्रतिष्ठात्वेन रूपितं ब्रह्म आनन्दमयादनतिरिक्तमित्यर्थः। षष्ठीनिर्देशः समुदाय-

ध भावप्रकाशिका ध

मयट्प्रत्ययस्स्वार्थिकः, सच प्राप्यमुक्तस्वरूपपरः, नतु विकारार्थो नवा प्राचुर्यार्थः, प्राप्यस्वरूपस्य निर्विकारत्वात्, अतो द्वितीयपक्षवादिनः सिद्धान्तिनो वा नावकाश इति प्रथमः। मयट्प्रत्ययो विकारार्थः, नतु स्वार्थिकः प्राचुर्यार्थो वा. ततश्च विकारवाचिमयट्प्रत्ययानुरोधेन सुखाकारवृत्तिप्रतिबिम्बिततया तदुपहिततया वा आनन्दविकारत्वेन वा आनन्दमयो जीव एवेत्यपरः। तत्र प्रथमे विकारशब्दान्नेतिचेदित्याक्षेपस्तटस्थकर्तृकः। द्वितीये तु पूर्वपक्षिकर्तृक इति विवेकः, एवञ्च विकारपरत्वाभावाच्चेतिग्रन्थः प्रथमपक्षाभिप्रायेणेति द्रष्टव्यम्। केचित्तु—विकारपरत्वाभावाच्चेति विज्ञानमयशब्दस्येत्यर्थः। विकारपरत्वाभावादित्युपलक्षणम्. प्राचुर्यार्थकत्वाभावादित्यपि द्रष्टव्यम्. विकारप्राचुर्यान्यतरार्थत्वे हि विज्ञानमयशब्दस्य जीवपरत्वशङ्का स्यादिति वदन्ति॥

( प्रतिष्ठातद्वद्भावेनेति ) प्रतिष्ठारूपस्य ब्रह्मणस्तद्वदानन्दमयेन ऐक्यासम्भवादिति भावः। ( पुरुषविधत्व इति ) 'तस्य पुरुषविधताम् अन्वयं पुरुषविधः' इति श्रुतिवाक्ये तस्य विज्ञानमयस्य पुरुषविधत्वमनुकृत्य अयमानन्दमयः पुरुष-

१ तै. आन. ५-२॥

"तस्येदमेव शिरः' इत्यादिना शिरःपक्षपुच्छवत्तया निदर्शितः, तथाऽऽनन्दमयं ब्रह्मापि स्वस्मादनतिरिक्तैः प्रियादिभिर्निदर्शितम्, तत्रावयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामाश्रयतयाऽखण्डरूपमानन्दमयं 'ब्रह्म पुच्छं प्रतिष्ठे'त्युच्यते । यदि चानन्दमयादन्यद्ब्रह्माभविष्यत्, 'तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्म इत्यपि निरदेक्ष्यत, न चैवं निर्दिश्यते । एतदुक्तं

* श्रुतप्रकाशिका *

तदेकदेशत्वनिबन्धनतयोपपन्न इति भावः। ननु 'आनन्द आत्मा'इत्यानन्दोऽवयवित्वेन रूपितः, न त्ववयवत्वेन. तत्कथमुच्यते अवयवत्वेन रूपितानां प्रियमोदप्रमोदानन्दानामिति । नैष दोषः, आत्मशब्दस्य स्ववाचित्वाभावात्। कायस्य मध्यभागो ह्यात्मशब्दवाच्यः "दशहस्त्या अङ्गुलयो दशपाद्या द्वावूरू द्वौ बाहू पञ्चविंश आत्मा"इत्यादौ तथा प्रयोगदर्शनात् । अत एव तस्यानन्द आत्मेति पञ्चया व्यतिरेकनिर्देशस्वारस्यं सिध्यति, तस्मादानन्दो मध्यभागत्वेन रूपितः । नन्वेवमपि पुच्छतया निर्दिष्टं ब्रह्मेत्यङ्गीकृतं स्यात् । ततः किम् ? तर्हि किं निरसनीयम् ?। आनन्दमयस्याब्रह्मत्वम्; अतस्तन्निरासमुखेन पुच्छस्य तदन्तर्भावो ऽभिधीयते । हेत्वन्तरमाह ( यदि चेति ) ननु तस्माद्वा एतस्मादानन्दमयादन्योऽन्तर आत्मा ब्रह्मेत्यन्तरात्मतयैव भेदो वक्तव्य इति न ह्यस्ति नियमः, "पृथगात्मानं प्रेरितारम्"पतिं विश्वस्य"इत्यादिवत् व्यावर्तकाकारान्तरेणाप्यन्यत्वप्रतिपादनसम्भवादित्याशङ्क्याह ( एतदुक्तमिति ) प्रकरणस्य तत्तदन्तर-

ॐ भावप्रकाशिका ॐ

विधः, तदनुकारी पुरुष इत्यर्थः । ( व्यतिरेकनिर्देशस्वारस्यं सिध्यतीति ) आत्मशब्दस्य मध्यभागपरत्वानादरेण स्वरूपपरत्वाङ्गीकारे घटस्य स्वरूपमित्यादिवदस्वारस्यं स्यादिति भावः। का नः क्षतिरित्यभिप्रायेण प्रतिवक्ति ( ततः किमिति) पुच्छब्रह्मत्वस्योभयाभ्युपेतत्वे शान्तो विवाद इत्यभिप्रायेण पृच्छति ( तर्हि किमिति )

१ तै. आन. १·अनु ७

भवति; [1]'ब्रह्मविदाप्नोति परम्' इति प्रक्रान्तं ब्रह्म [2]'सत्यं ज्ञानमनन्तं ब्रह्म' इति लक्षणतस्सकलेतरव्यावृत्ताकारं प्रतिपाद्य तदेव [3]"तस्माद्वा एतस्मादात्मनः" इत्यात्मशब्देन निर्दिश्य तस्य सर्वान्तरत्वेनात्मत्वं व्यञ्जयद्वाक्यमन्नमयादिषु तत्तदन्तरतया आत्मत्वेन निर्दिष्टान् प्राणमयादीनतिक्रम्य [4]'अन्योऽन्तर आत्माऽऽनन्दमयः' इत्यात्मशब्देन निर्देशमानन्दमये समापयति। अत आत्मशब्देन प्रक्रान्तं ब्रह्मानन्दमय इति निश्चीयत इति। ननु च [5]'ब्रह्म पुच्छं प्रतिष्ठा' इत्युक्त्वा [6]'असन्नेव स भवति।

* श्रुतप्रकाशिका *

तयैवान्यत्वप्रतिपादनपरत्वात् तत्प्रकरणस्थेन वाक्येन तादृशेन भवितव्यमित्यर्थः। आत्मशब्दस्य श्रुत्यैव व्याख्यानं कृतमिति कथमवगम्यत इति शङ्कायां स्वोक्तस्य स्वयमेव व्याख्यानं प्रकरणसिद्धमिति दर्शयितुमात्मशब्दनिर्दिष्टस्यैव ब्रह्मत्वोपपादनोपयोगितया च 'ब्रह्मविदाप्नोती'त्याद्युक्तम्। तत्र ब्रह्मशब्दव्याख्यानं सत्यज्ञानादिवाक्यम्. आत्मशब्दव्याख्यानमानन्दमये समाप्तमस्तु ततः किमानन्दमयस्यैव ब्रह्मत्व इति शङ्कायां ब्रह्मशब्देन प्रकृतस्यैवात्मशब्देन निर्दिष्टत्वं दर्शयति (तदेवेति) "तस्माद्वा एतस्मात्"इति। तदेतच्छब्दौ प्रकृतपरामर्शिनावित्यभिप्रायः॥ पुनश्चोदयति (ननु चेति) पूर्वं प्राधान्येनोक्तानामन्नमयादीनां श्लोकेषु तत्तच्छब्दैरेव निर्देशो दृष्टः, एवमत्राप्यानन्दमयः प्रधानश्चेत्तद्विषयश्लोकेऽपि तच्छब्देनैव निर्देष्टव्यम्। यद्वा यद्यानन्दमये आत्मशब्दव्याख्यानपरिसमाप्तिः तर्ह्यात्मशब्देन निर्देष्टव्यम्, तथा च न कृतम्, अपि तु ब्रह्मशब्देन निर्दिष्टम्. तस्मादानन्दमयस्य न प्राधान्यम्. अतः पुच्छब्रह्मैव प्रधानप्रतिपाद्यमित्यर्थः। ब्रह्मशब्दस्यानन्द-

ॐ भावप्रकाशिका ॐ

त्वया पुच्छस्यैव ब्रह्मत्वं नानन्दमयस्योच्यते, अस्माभिस्तु उभयोरप्यैक्याद्ब्रह्मत्व-

१-२-३ तै. आन. १॥
४ तै. आन. ५-२॥
५ तै. आन. ५-३॥
६ तै. आन. ६-१॥

असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः" इति ब्रह्मज्ञानाज्ञानाभ्यामात्मनः सद्भावासद्भावौ दर्शयति; नानन्दमयज्ञानाज्ञानाभ्याम् । न चानन्दमयस्य प्रियमोदादिरूपेण सर्वलोकविदितस्य सद्भावासद्भावज्ञानाशङ्का युक्ता; अतो नानन्दमयमधिकृत्यायं श्लोक उदाहृतः, तस्मादानन्दमयादन्यद्ब्रह्म । नैवम्; [1]"'इदं पुच्छं प्रतिष्ठा' [2]'पृथिवी पुच्छं प्रतिष्ठा' [3]'अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा' [4]'महः पुच्छं प्रतिष्ठा' इत्युक्त्वा तत्र तत्रोदाहृताः [5]'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादिश्लोका यथा न पुच्छमात्रप्रतिपादनपराः, अपि त्वन्नमयादिपुरुषप्रतिपादनपराः, एवमत्राप्यानन्दमयस्यायम् [6]'असन्नेव' इति श्लोकः, नानन्दम-

* श्रुतप्रकाशिका *

मयविषयत्वे सिद्धे ब्रह्मशब्देन निर्देशो न दोष इति शङ्कामर्थात्परिहरन् युक्त्यन्तरमाह ( न चानन्दमयस्येति ) आशङ्काशब्देनोदाहृतश्रुतिवाक्यद्वयस्थः चेदर्थो व्याख्यातः । सर्वलोकप्रसिद्धस्य दुरपह्नवत्वेनासद्भाव इव सद्भावेऽप्याशङ्कावादो न युक्त इत्यर्थः । परिहरति ( नैवमिति ) ब्रह्मात्मानन्दमयशब्दानामैकार्थ्ये निश्चिते आनन्दमयशब्दनिर्देशसमो ब्रह्मशब्दनिर्देश इति स्फुटमितिबुद्ध्या आनन्दमयप्राधान्ये युक्तिमाह ( इदं पुच्छमिति ) प्रकरणस्थपूर्वश्लोकानां

* भावप्रकाशिका *

मुच्यत इति विवेक इति भावः । ( अर्थात्परिहरन्निति ) ब्रह्मशब्दस्यानन्दमयविषयत्वसिद्धमिति परिहरन्निति भावः । ( सद्भावेप्याशङ्कावाद इति ) नहि

१ तै. आन. १-३ ॥
२ तै. आन. २-३ ॥
३ तै. आन. ३-३ ॥
४ तै. आन. ४-२ ॥
५ तै. आन. २-१ ।
६ तै आन. ६-१ ॥

यव्यतिरिक्तस्य पुच्छस्य। आनन्दमयस्यैव ब्रह्मत्वेऽपि प्रियमोदादिरूपेण रूपितस्यापरिच्छिन्नानन्दस्य सद्भावासद्भावज्ञानाशङ्का युक्तैव। पुच्छब्रह्मणोऽप्यपरिच्छिन्नानन्दतयैव ह्यप्रसिद्धता। शिरःप्रभृत्यवयवित्वाभावाद्ब्रह्मणो नानन्दमयो ब्रह्मेति चेत्; ब्रह्मणः पुच्छत्वप्रतिष्ठात्वाभावात्पुच्छमपि ब्रह्म न भवेत्। अथाविद्यापरिकल्पितस्य वस्तुनस्तस्याश्रयभूतत्वात् ब्रह्मणः पुच्छं प्रतिष्ठेति रूपणमात्रमित्युच्येत; हन्त तर्हि तस्यासुखाद्व्यावृत्तस्यानन्दमयस्य ब्रह्मणः प्रियशिरस्त्वादिरूपणं भविष्यति। एवञ्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इति

* श्रुतप्रकाशिका *

पुच्छमात्रप्रतिपादनपरत्वाभावादयमपि श्लोको न पुच्छमात्रप्रतिपादनपर इत्यर्थः। प्रसिद्धानन्दस्य सद्भावासद्भावशङ्कानुपपत्तिं परिहरति (आनन्दमयस्येति) प्रतिबन्दीमभिप्रेत्याह (पुच्छब्रह्मणोऽपीति) 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्म' इत्यादिवाक्येन ब्रह्मण आनन्दरूपत्वस्योक्तत्वात् आनन्दस्य च प्रसिद्धत्वात् न तस्य सद्भावासद्भावज्ञानाशङ्का युक्तेति चोदिते, तस्यानन्दरूपस्य ब्रह्मणोऽविदित्वमपरिच्छिन्नानन्दत्वादेव हि त्वयोपपादनीयम्, तदत्रापि तुल्यमित्यर्थः। शङ्कते (शिरःप्रभृतीति) परिहरति (ब्रह्मण इति) पुच्छत्वम्—अवयवविशेषत्वम्। प्रतिष्ठात्वम्—आधारत्वम्। ब्रह्मणोऽवयवित्वमनुपपन्नमिति चेत्, अवयवत्वमप्यनुपपन्नमित्यर्थः। अवयत्वं रूपणमात्रमिति शङ्कते (अथेति) परिहरति (हन्त तर्हीति) (असुखादिति) असुखव्यावृत्तिविशेषाः शिरःप्रभृतित्वेन रूपिता इत्यर्थः। सत्यज्ञानादिवाक्येन सकलेतरव्यावृत्तत्वे सिद्धे किमत्र क्रियत इत्यत्राह (एवञ्चेति) सत्यशब्दनिर्दिष्टस्य ब्रह्मणः कस्यचिद्विकारत्वाभावादानन्दमयशब्द-

ꣳ भावप्रकाशिका ꣳ

षटं प्रमेयं वेद चेदित्याशङ्काबादो युज्यत इति भावः। (किमत्र क्रियत इतीति)

विकारास्पदजडपरिच्छिन्नवस्त्वन्तरव्यावृत्तस्यासुखा-
द्व्यावृत्तिरानन्दमय इत्युपदिश्यते। ततश्चाखण्डैक-

* श्रुतप्रकाशिका *

वाच्यत्वमप्ययुक्तमित्यत्राह (ततश्चेति) ततः—उक्तानुपपत्तीनां परिहृतत्वादुपपत्त्यन्तरसद्भावाच्चेत्यर्थः। किञ्च 'सोऽकामयत' इतिवाक्ये स इति पुँल्लिङ्गतच्छब्देन कारणवस्तुनिर्देशाच्च आनन्दमयः परं ब्रह्म 'तस्माद्वा एतस्मादात्मनः' इत्यात्मशब्दनिर्दिष्टात्माभिप्रायोऽयं पुँल्लिङ्गनिर्देश इति चेन्न, व्यवहितादव्यवहितस्य ग्राह्यत्वेनानन्दमयस्य ग्राह्यत्वात् 'ब्रह्मपुच्छं प्रतिष्ठा' इति वाक्यात्पश्चात्पठितस्य 'तस्यैष एव शारीर आत्मा' इतिवाक्यस्थस्यात्मशब्दस्य व्यवधानाभावात्तदभिप्रायः स इति पुँल्लिङ्गनिर्देशः, आनन्दमयस्त्वेतद्वाक्यापेक्षया व्यवहित इति न स परामृश्यत इति चेन्न; 'तस्यैष एव शारीर आत्मा' इति वाक्यस्थस्यात्मनः सर्वपर्य्यायसाधारणत्वेन एतत्पर्य्यायस्य प्रधानप्रतिपाद्यत्वाभावात् सर्वनामशब्दस्य प्रधानपरामर्शित्वस्वारस्याच्च स इत्यानन्दमय एवोच्यते। "विज्ञानं ब्रह्मेति व्यजानात्' 'आनन्दो ब्रह्मेति व्यजानात्" इत्यत्र 'विज्ञानमयमात्मानमुपसङ्क्रम्य' 'आनन्दमयमात्मानमुपसङ्क्रम्य'

७ भावप्रकाशिका ७

रूपणस्यापि इतरव्यावृत्तस्वरूपप्रतिपत्त्यर्थत्वादित्याशयः। (प्रधानप्रतिपाद्यत्वाभावादिति) ननु सर्वपर्यायसाधारण्यं न प्राधान्यविरोधि, अन्तर्यामिब्राह्मणे 'यः पृथिव्यां तिष्ठन्' इत्यादौ सर्वपर्यायसाधारण्येपि सर्वत्र यच्छब्दनिर्दिष्टस्यैव प्राधान्यं प्रतीयते, तद्वदिहापि पर्यायेषु 'तस्यैष एव शारीर आत्मे'ति आत्मशब्दनिर्दिष्टस्यैव प्राधान्यम्, ततश्च पुच्छब्रह्मण एवात्मशब्दनिर्दिष्टत्वात् तस्यैव 'सोऽकामयते'तिपुल्लिङ्गतच्छब्देन परामर्शस्सम्भवतीति चेदुच्यते; 'तस्यैष एव शारीर आत्मे'त्यत्र एष इति पुल्लिङ्गस्यानन्दमय एव स्वरसत्वात्तद्वाक्येपि न ब्रह्मणः परामर्श इति भावः। (प्रधानपरामर्शित्वस्वारस्याच्चेति) 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षे'त्यत्र नीयमानेनापि दध्ना व्याप्यमानस्यापि पयसः प्राधान्यात् तस्यैव तच्छब्देन परामर्शो युक्तः, न त्वप्रधानस्य सन्निहितस्यापि दध्नः, अतः पय एव घनीभूतमामिक्षेति पूर्वतन्त्रे चतुर्थाष्टमयोर्व्यवस्थापितत्वादिति भावः। (विज्ञानं ब्रह्मेति व्यजानादिति) भृगुवल्ल्यामिति भावः।

श्रुतप्रकाशिका *

इत्यत्र च स्थानप्रमाणेनानन्दानन्दमयशब्दयोरेकार्थत्वावगमादानन्दशब्दस्य परब्रह्मविषयत्वप्रसिद्धेश्चानन्दमयः परं ब्रह्म । न च 'आनन्दो ब्रह्मे'त्यत्रानन्दशब्दोऽप्यानन्दमयशब्दवत् बाह्यकोशपर इति वाच्यम्, "अन्नं ब्रह्म 'प्राणो ब्रह्म" इत्यादिविज्ञानानन्तरमिव 'आनन्दो ब्रह्म'इतिविज्ञानानन्तरं भृगोर्वरुणोपसत्त्यभावात् । न हि "तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार"इति पुनः श्रूयते । एतदुक्तं भवति "अन्नं ब्रह्मेति व्यजानात्"इत्यत्र किमन्नाद्युपलक्षितब्रह्मवेदनमुक्तम्; उत अन्नमयादौ ब्रह्मबुद्ध्यवतरणम्? । आद्ये अन्नं ब्रह्मेति ज्ञानानन्तरं वरुणोपसत्तिर्न स्यात्, उपलक्षणभूतेन तेन ब्रह्मणः प्रतिपन्नत्वात् । द्वितीये ह्यानन्दविषयब्रह्मबुद्धेर्यथार्थत्वं स्यात्, पुनर्वरुणोपसत्त्यभावादिति । किञ्च 'आनन्दो ब्रह्मे'त्यत्रानन्दशब्दस्य ब्रह्मपरत्वं युष्माभिरेव व्याख्यातम्, उक्तं हि 'या तु भार्गवी वारुणी विद्या आनन्दो ब्रह्मेति व्यजानादिति तस्यां मयटोऽश्रवणात् प्रियशिरस्त्वाद्यश्रवणाच्च युक्तमानन्दस्य ब्रह्मत्वम्'इति । अतश्च 'आनन्दो ब्रह्मे'त्यस्य वाक्यस्य परमात्मपरत्वात् स्थानप्रमाणेन "आनन्दमयमात्मान'मित्यत्र आनन्दमयशब्दोऽपि परमात्मपरः । आनन्दमयस्य शोध्यत्वञ्च तदनुगुणसंसारनिर्हरणादिरूपमिति चानुसन्धेयम् ॥ प्रत्यगात्मस्वरूपमेवा-

७ भावप्रकाशिका ७

( स्थानप्रमाणेनानन्दमयमात्मानमित्यत्रेति ) ननु भृगुवल्ल्याम्नातानन्दस्थानसाम्यादपि अन्नमयादिषु पञ्चस्वपि मयट्प्रत्ययसारूप्येणानन्दमयस्थानसाम्यस्यैव प्रबलतया ततोपि भृगुवल्ल्याम्नातानन्दमयस्य ब्रह्मत्वसिद्धिरिति चेत् . मैवम्; आनन्दवल्ल्याम्नातानन्दमयस्याद्याप्यब्रह्मत्वानिश्चयात्. अनिश्चितस्थानसाम्यस्याप्रयोजकतया निश्चितब्रह्मभावानन्दस्थानसाम्यस्यैवार्थनिर्णायकत्वात् 'एतमानन्दमयमात्मान'मिति प्रकृतानन्दपरामर्शकैतच्छब्दश्रुतिबलादपीति भावः । ( उक्तं हि या तु भार्गवीति ) शाङ्करभाष्य इति शेषः । (निर्हरणादिरूपमिति ) आदिपदेन परमात्मपक्षे प्रसाद्यत्वं विवक्षितम् । ननु परमात्मपक्षे कथं शोध्यत्वम्? प्रागशुद्धिमतो हि शुद्धिराधेया । नच नित्यशुद्धस्य ब्रह्मणः प्रागशुद्धिरस्तीति चेत् . नात्र शुद्ध्यशुद्धिशब्दाभ्यां कोपप्रसादौ विवक्षितौ. ब्रह्मणः कोपरूपाशुद्धिसद्भावेपि अपहतपाप्मत्वलक्षणनित्यशुद्धत्वस्याविरोधात्. इतरथा गङ्गाजलं कतकैश्शोध्यतामित्युक्तिरपि नोपपद्येत. नित्यशुद्धस्य गङ्गाजलस्य प्रागशुध्यभावात्. यदि च नित्यशुद्धस्यापि गङ्गाजलस्य कर्दमसम्ब-

रसानन्दरूपे ब्रह्मण्यानन्दमय इति मयट् प्राणमय इव स्वार्थिको द्रष्टव्यः ॥ तस्मादविद्यापरिकल्पितविविधविचित्रदेवादिभेदभिन्नस्य जीवात्मनः स्वाभाविकं रूपमखण्डैकरसं सुखैकतानमानन्दमय इत्युच्यत इत्यानन्दमयः प्रत्यगात्मा ॥ .... .... .... ....

* श्रुतप्रकाशिका *

परिच्छिन्नानन्दरूपश्चेत् कथं जीवानां दुःखित्वसुखित्वतारतम्यञ्चोपलभ्यत इति शङ्कां च परिहरन् पूर्वपक्षमुपसंहरति ( तस्मादिति ) तस्य प्रियमिति सम्बन्धवाचिन्या षष्ठ्या व्यतिरेकप्रतीतेर्ब्रह्मविषयस्योपरितनश्लोकस्य आनन्दमयविषयत्वाभावेन पुच्छतयोक्तब्रह्मण एव प्रधानत्वावगमात् , प्रियमोदादिरूपेण लोकविदितस्यानन्दमयस्य सद्भावासद्भावज्ञानाशङ्कानुपपत्तेर्निरवयवस्य परमात्मनोऽवयवित्वानुपपत्तेरविकारस्य विकारित्वानुपपत्तेः 'तस्यैष एव शारीर आत्मा'इत्यानन्दमयविषयवाक्यावगतस्यात्मान्तरस्य परमात्मतया आनन्दमयस्य परमात्मत्वानुपपत्तेः "अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्"इति श्रुतस्य शोध्यत्वस्य नित्यशुद्धे परमात्मन्यनुपपत्तेश्च नानन्दमयः परमात्मा , अपि तु पुच्छतया निर्दिष्टमेव ब्रह्म परमात्मेति पुच्छब्रह्मवादहेतुसङ्ग्रहः । प्रकरणस्य स्वस्मादनतिरिक्तैः स्वावयवैः शिरःपक्षादिरूपणपरत्वात्तदन्तरतया आत्मशब्दव्याख्यानस्यानन्दमये पर्य्यवसितत्वादन्नमयादिविषयाणां प्रकरणस्थश्लोकनां पुच्छवद्विषयत्वात्

* भावप्रकाशिका *

न्धादिकृतकालुष्यरूपाशुद्धिरभ्युपेयते तर्हि प्रकृतेपि दीयतां दृष्टिः । ( ब्रह्मविषयस्येति ) अन्नमयादिपर्यायेषु प्रधानानां तत्तत्पर्यायगतश्लोकविषयत्वदर्शनेन स्वपर्यायगतश्लोकाविषयस्य तस्य प्राधान्यादिति भावः । ( प्रकरणस्य स्वस्मादनतिरिक्तैरिति ) न च मनोमयशिरःपक्षपुच्छानामृक्सामयजुरथर्वाङ्गिरसां मनोमयादतिरिक्तत्वदर्शनेन प्रकरणस्य स्वस्मादनतिरिक्तैः स्वावयवैरेव शिरःपक्षादिरूपणपरत्वमसिद्धमिति वाच्यम् ; तत्र ऋक्सामादिशब्दानां तत्तद्विषयकमनोव्यापारपरत्वेन तेषामपि मनोमयादनतिरिक्तत्वात् ( आनन्दमये पर्यवसितत्वादिति ) ननु 'श्रुतं ह्येव मे

* श्रुतप्रकाशिका *

कारणत्वप्रतिपादके 'सोऽकामयत' इत्यनन्तरवाक्ये स इति पुँल्लिङ्गान्तेन प्रधानप्रकृतार्थपरामर्शिना तच्छब्देनाव्यवहितस्यानन्दमयस्यैव वक्तुं युक्तत्वात्, 'आनन्दो ब्रह्म' इत्यानन्दशब्दस्य ब्रह्मपरत्वाभ्युपगमात् 'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्दमयमात्मानमुपसङ्क्रम्य' इत्यानन्दानन्दमयशब्दयोरेकार्थत्वेनानन्दमयशब्दस्यापि परब्रह्मपरत्वात् आनन्दमयशब्दतुल्यार्थानन्दशब्दवाच्यब्रह्मज्ञानानन्तरं वरुणोपसत्त्यश्रवणात् सूत्रस्वारस्यात्स्वस्मादनतिरिक्तस्वावयवैरेव शिरःपक्षपुच्छादिरूपणपरप्रकरणानुगुण्येन षष्ठीनिर्देशस्य समुदायसमुदायिभावनिबन्धनत्वोपपत्तेरानन्दमयात्मब्रह्मशब्दानामैकार्थ्येन तेष्वन्यतमेन तद्विषयश्लोके निर्देशस्य युक्तत्वादपरिच्छिन्नानन्दस्याप्रसिद्धत्वेन 'आनन्दो ब्रह्मे' त्युक्ततयाऽभ्युपेतपुच्छब्रह्मण इव सद्भावासद्भावशङ्कासम्भवादवयवत्ववत् अवयवित्वेन रूपणसम्भवादानन्दमय इत्यत्र मयट्प्रत्ययस्य स्वार्थिकत्वेन प्राचुर्य्यार्थत्वेन वा विकारपरत्वाभावेन ब्रह्मणो निर्विकारत्वाविरोधात् 'तस्यैष एव शारीर आत्मा' इति वाक्यस्यानन्यात्मत्वप्रतिपादनपरत्वात् 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम्' इत्यत्र शोधनं

७ भावप्रकाशिका ७

भगवद्दृशेभ्यस्तरति शोकमात्मवित्' इत्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिषूत्तरोत्तरमर्थान्तरोपदेशे 'अस्ति भगवो नाम्नो भूय इति वाग्वा नाम्नो भूयसी' इत्यादिप्रश्नप्रतिवचनपरम्परायाः प्राण एव समापनेपि विनैव तादृशप्रश्नप्रतिवचने प्रवृत्तस्य 'एष तु वा अति वदति 'यस्सत्येनातिवदति' इत्यादेस्तु शब्दश्रुत्या आत्मनः प्राण इति प्राणोत्पत्तिलिङ्गेन च प्राणादर्थान्तरोपदेशपरत्वमिति तत्रैवात्मोपदेशपर्यवसानमभ्युपगम्यते, न तु प्राचिने प्राणे; एवमिहापि पूर्वोपन्यस्तप्रमाणैः प्रधानतयाऽवगते पुच्छब्रह्मण्येवोपक्रान्तोपदेशपर्यवसानमभ्युपगन्तुं युक्तमिति चेन्न. भूमविद्यायां प्राणोपदेशे नामादिष्वनुक्तस्यातिवादस्योक्त्या तत्तत्पर्यन्त एवात्मोपदेशं मत्वा शिष्ये भूयः प्रश्नमकुर्वति स्वयमेवाचार्यः तथा अर्थान्तरसत्त्वमुपचिक्षेपेति युज्यते. इह तूत्तरोत्तरमात्मोपदेशे दृष्टायाः 'तस्माद्वा एतस्मात्' इति शैल्याः ब्रह्मणि परित्यागे कारणाभावादिति भावः। (पुच्छवद्विषयत्वादिति) न च "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति" इति मनोमयपर्यायगतस्य श्लोकस्य ब्रह्मविषयस्य

—:( सिद्धान्तः ):—

एवं प्राप्ते प्रचक्ष्महे– आनन्दमयोऽभ्यासात् । आनन्दमयः परमात्मा । कुतः ? अभ्यासात् "सैषानन्दस्य

* श्रुतप्रकाशिका *

तत्तद्वस्त्वनुगुणं कार्य्यमिति प्रत्यगात्मत्वपक्षे संसारनिर्हरणेन शोध्यत्वात्तदतिरिक्तत्वपक्षे भगवतः कालुष्यशान्तिरूपशोध्यत्वस्य प्रपदनसाध्यस्योपपन्नत्वाच्चानन्दमयानतिरिक्तं पुच्छब्रह्मेत्यानन्दमय एव परमात्मेति पुच्छब्रह्मवादनिराकरणयुक्तिसङ्ग्रहः, अत्राद्यं हेतुषट्कं सिद्धान्तसाधकम् , इतरहेतुगणश्शङ्कितविपक्षयुक्तिपरिहारपरः ॥

अस्मिन् पूर्वपक्षे प्राप्ते सिद्धान्तसूत्रमवतारयति ( एवं प्राप्त इति) तत्र प्रतिज्ञांशं साध्यसमर्पकपदेन पूरयन् व्याचष्टे ( आनन्दमय इति ) उत्तराधिकरणे 'भेदव्यपदेशाच्चान्यः, इत्यन्यशब्दः प्रयुक्तः, इह तदाकर्षणलब्धोऽर्थ उक्तः परमात्मेति । यद्वा पूर्वाधिकरणसूत्रस्थयोर्नाशब्दमितिपदयोरनुषङ्गलब्धार्थमाह ( परमात्मेति ) यस्मिन् शब्द एव प्रमाणं न भवति स ह्यशब्दः, स्वयम्प्रकाशप्रत्यक्षानुमानादिभिः सिध्यतो जीवस्यापि तदशब्दत्वमुपपद्यते, यथा आत्मसिद्धौ ' एवमात्मा स्वतः सिध्यन्नागमेनानुमानतः । योगाभ्यासभुवा स्पष्टं प्रत्यक्षेण प्रकाशते " इति । यद्वा एतदधिकरणसूत्रस्थ एव नेतर इति साध्यांशोऽत्रापि विवक्षित इत्यभिप्रायेणोक्तं परमात्मेति । अन्तरात्मपरम्परासमाप्तिद्योतनाय अत्र परमात्मशब्देन

७ भावप्रकाशिका ७

मनोमयविषयत्वाभावात् प्रकरणस्थश्लोकानां पुच्छवद्विषयत्वमसिद्धमिति वाच्यम् ; यतो ब्रह्मानन्दाद्वाचाप्राप्य निवर्तन्ते तं ब्रह्मानन्दं कल्याणगुणजातं ब्रह्मणा सह परिशुद्धेन मनसा विद्वान् न बिभेतीत्यर्थकतया तस्यापि श्लोकस्य पुच्छवन्मनोमयप्रशंसापरत्वसम्भवात् । नचैवम्; 'असन्नेव स भवति' इति श्लोकस्यापि स आनन्दमयो जीवः असद्ब्रह्मेति वेद चेत् असन्नेव भवति । अस्ति ब्रह्मेति वेद चेत् सन् भवतीति पुच्छवदानन्दमयविषयत्वमस्त्विति वाच्यम् ; स इत्यस्यानन्दमयविषयत्वे तत्स्तावकत्वाभावेन तत्परत्वाभावप्रसङ्गात् ॥ .... ....

ननु " ईक्षतेर्नाशब्दम् ' 'नेतरोनुपपत्तेः' 'भेदव्यपदेशाच्चान्यः " इति सौत्रपदानुकर्ष इहाभिप्रेतश्चेत् तदेव पदं प्रयुज्यताम् , किं परमात्मशब्दनिर्देशेने-

मीमांसा भवति" इत्यारभ्य । "यतो वाचो निवर्तन्ते"

* श्रुतप्रकाशिका. *

धर्मिनिर्देशः । अभ्यासादानन्दमयत्वं श्रुतौ प्रतीतम् , अत आनन्दमयत्वापेक्षया हेतुनिर्देशशङ्काव्युदासाय साध्यांशे हेत्वाकाङ्क्षां दर्शयति ( कुत इति ) ननु भेदव्यपदेशस्य जीवादन्यत्वे स्फुटतरतया निरपेक्षहेतुत्वात् स्ववाक्यस्थत्वाच्च स एव प्रथमं वक्तव्यः, न तु वाक्यान्तरस्थोऽनुग्राहकयुक्त्यपेक्षोऽभ्यासः,। नैवम्; स्ववाक्यस्थाद्भेदव्यपदेशादपि स्वपदैकदेशमयड्वाच्यस्य प्राचुर्य्यस्योपपादनसापेक्षस्याप्यासन्नतरत्वात्तद्विवरणरूपस्य निरतिशयदशाशिरस्कस्याभ्यासस्यैव प्रथमं हेतुतया वक्तुं युक्तत्वात् । कस्याभ्यासादित्याकाङ्क्षां पूरयन् हेतुपदं व्याचष्टे ( सैषानन्दस्येति ) अभ्यासः—गुणनम् , आवृत्तिः । 'यतो वाचो निवर्तन्ते 'इत्यस्यार्थमभिप्रेत्य निरतिशयदशाशिरस्क इत्युक्तम् । 'स एको ब्रह्मण आनन्दः, इति वाक्यस्यार्थमभिप्रेत्य अभ्यस्यमान इत्युक्तम्। शतगुणितोत्तरक्रमेण गुणितत्वादित्यर्थः। 'स एको ब्रह्मण आनन्दः 'इतिवाक्यस्य चतुर्मुखानन्दविषयत्वेन 'यतो वाच 'इत्यादिवाक्य-

७ भावप्रकाशिका ७

त्याशङ्क्याह ( अन्तरात्मपरम्परेति ) परमशब्देन निरतिशयप्रतिपादनादिति भावः । ( साध्यांशे हेत्वाकाङ्क्षामिति ) परमात्मपदानन्तरमेव कुतश्शब्दप्रयोगात्परमात्मरूपसाध्यांश एव हेत्वाकाङ्क्षा प्रदर्शिता भवति , न तु व्यवहिते आनन्दमय इति भावः । यद्यप्यानन्दमयः परमात्मा अभ्यासादित्येतावत्युक्तेपि अभ्यासादित्यस्योक्तरीत्या समनन्तरनिर्दिष्टपरमात्मत्व एव हेतुत्वेनान्वय इति सुवचम् , तथाप्युपायान्तरस्योपायान्तरादूषकत्वात् स्थितस्य गतेर्वक्तव्यत्वाच्च तथोक्तमिति द्रष्टव्यम् ( स्ववाक्यस्थत्वाच्चेति ) अन्योऽन्तर आत्मानन्दमय इत्यस्य विषयतया तत्स्थत्वादानन्दमयो भेदव्यपदेशादित्येव सूत्रयितव्यमिति भावः । ( अनुग्राहकयुक्त्यपेक्ष इति ) मुक्तेपि तादृशानन्दोऽस्त्वितिशङ्काया असम्भावितत्वरूपयुक्त्यन्तरेण निवर्तनीयत्वात् 'विकारशब्दान्नेतिचेत्' इत्यादिसूत्रद्वयसापेक्षत्वाच्चेत्यर्थः । निरतिशयदशाशिरस्कत्वेनाभ्यस्यमान इत्यस्य हेतुगर्भत्वं स्फोरयति ( शतगुणितोत्तरक्रमेणेति ) स एको ब्रह्मण इति वाक्यस्य प्राजापत्यानन्दपरत्वं वर्णयतां पक्षे सूत्रविरोधं दर्शयति ( स एको ब्रह्मण आनन्द इति वाक्यस्येति ) ( स यश्चायं पुरुष

इत्येवमन्तेन वाक्येन शतगुणितोत्तरक्रमेण निरतिशय-

* श्रुतप्रकाशिका *

स्यैव ब्रह्मानन्दविषयत्वाङ्गीकारेऽभ्यासादिति हेतोर्व्यधिकरणता स्यात् । किञ्च अयं ब्रह्मशब्दः परमात्मवाचकः, ब्रह्मशब्दस्य भगवत्येव मुख्यत्वात् 'ब्रह्मविदाप्नोति' 'अस्ति ब्रह्मेति' इत्यादिषु वाक्येषु परब्रह्मपरतयैव ब्रह्मशब्दस्य प्रयोगकरणात् 'यतो वाचो निवर्तन्ते' इति पूर्वोत्तरयोर्वाक्ययोरानन्दप्रतिसम्बन्धिवाचिषष्ठ्यन्तब्रह्मशब्दस्य परब्रह्मपरत्वदर्शनात् 'सैषानन्दस्य मीमांसा' इति प्रकृतब्रह्मानन्दनिगमनस्यापेक्षितत्वात् 'स यश्चायं पुरुषे' इति प्रकृतपरामर्शिनाऽनन्तरवाक्यस्थेन कारणपरतच्छब्देन पूर्ववाक्यस्थस्यास्य ब्रह्मशब्दस्य परब्रह्मपरत्वनिश्चयात्, अन्यथा चतुर्मुखस्य सर्वान्तरात्मत्वपरमकारणत्वप्रसङ्गात्, 'तदप्येष श्लोको भवति' इति भगवदानन्दविषयश्लोकोत्थानस्य भगवदानन्दप्रसङ्गसापेक्षत्वात्, निरुपपदप्रजापतिशब्दस्य चतुर्मुखे स्वरसत्वात्, दक्षादिपरत्वे एकवचनस्वारस्याभावात् ''देवानाम्' 'देवगन्धर्वाणाम्' इन्द्रस्य 'बृहस्पतेः'' इति बहुषु व्यक्तिषु बहुवचनस्यैकैकव्यक्तिषु च एकवचनस्य प्रकरणे प्रयुज्यमानत्वाच्च । तथा 'स एक प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ते ये शतं प्रजापतिलोक आनन्दास्स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ एष एव पर आनन्द एष ब्रह्मलोकस्सम्राडिति होवाच" इति बृहदारण्यकवाक्यैकार्थ्याच्च, 'स एको ब्रह्मण आनन्दः' इति वाक्यस्य परमात्मानन्दपरत्वं सिद्धम् । न च स एक इति निर्देशात् ब्रह्मानन्दस्य परिच्छिन्नत्वम्, आधिक्यमात्रे वाक्यतात्पर्यात्, यथा 'क्षिप्रेषुरिव सर्पति' इति वाक्यं सूर्यगतिमान्द्यनिवृत्तिपरम्, न त्विषुसाम्यपरम्. सूर्यस्य निमेषमात्रे बहुयोजनातिलङ्घित्वस्य प्रमाणसिद्धत्वात्, तथात्रापि पूर्वापरवाक्यादिभिरपरिच्छिन्नानन्दत्वसिद्धेः 'स एकः' इति वाक्यस्य चतुर्मुखानन्दादाधिक्ये तात्पर्यमित्यवगम्यते । यद्वा " रोमकूपेष्वनन्तानि ब्रह्माण्डानि भ्रमन्ति ते ' 'अण्डानान्तु सहस्राणां

* भावप्रकाशिका *

इतीति ) 'ब्रह्मविदाप्नोति पर' मित्यारभ्य 'स एको ब्रह्मण आनन्द' इत्येवमन्तेनोक्तानन्तस्वरूपरूपगुणविभवस्य ब्रह्मण एव स यश्चायमिति तच्छब्देन परामर्शादिति भावः । ( भगवदानन्दप्रसङ्गसापेक्षत्वादिति ) इतरथा अस्य श्लोकस्यापि प्रजापत्या-

**दशशिरस्कोऽभ्यस्यमान आनन्दः अनन्तदुःखमिश्र-परिमितसुखलवभागिनि जीवात्मन्यसम्भवन्निखिलहे-**

* श्रुतप्रकाशिका *

सहस्राण्ययुतानि च। ईदृशानां तथा तत्र कोटिकोटिशतानि च "गङ्गायाः सिकता धारा यथा वर्षति वासरे। शक्या गणयितुं लोके न व्यतीताः पितामहाः ॥" इत्यादिभिरण्डानां तत्र तत्र चतुर्मुखानां चासङ्ख्येयत्वावगमान्नियाम्यान्नियन्तुश्शतगुणानन्दत्वे कथिते चतुर्मुखेभ्यो ऽसङ्ख्यातेभ्यः शतगुणानन्दतयाऽवगतस्य भगवतो ऽपरिच्छिन्नानन्दत्वमर्थसिद्धमिति; अतो यथोक्त एवार्थः।(अभ्यस्यमान इति) अभ्यासशब्दः कर्मार्थघञन्त इत्यभिप्रायः । यद्वा भावार्थत्वेऽप्यानन्दस्याभ्यस्तत्वं फलितमिति तथोक्तम्। तच्च हेतोर्वैयधिकरण्यशङ्काव्युदासार्थम् । ननु गुणनम्—वर्द्धनम्, प्रजापत्यानन्दो हि शतगुणत्वेन वर्धते, न तु ब्रह्मानन्दः, सत्यम्, तथापि गुणितः प्रजापत्यानन्द एव ब्रह्मानन्द इत्युपचारेणोक्तिः, व्रीहिचतुष्टयं गुञ्जेतिवत्। गुणिततत्तदानन्दसदृशस्त्वेकदेशतया प्रतिपाद्यमानो ब्रह्मानन्द इत्यर्थः । यद्वा मुहुर्मुहुरुक्तिरभ्यासः, तेन तात्पर्यलिङ्गसत्त्वं सूचितम् । अस्त्वानन्दस्यापरिच्छिन्नत्वम्, ततः किमित्यत्राह ( अनन्तदुःखेति ) अनेन निरतिशयानन्दविरुद्धधर्मयोग उक्तः । परिमितेति निरतिशयानन्दाभाव उक्तः । विरुद्धधर्मोपलम्भादभावोपलम्भाच्चासम्भव इत्यर्थः । कथमसम्भवः ? मुक्तस्यापरिच्छिन्नानन्दत्वं श्रुतमित्यत्राह ( निखिलहेयेति ) प्रत्यनीकत्वमत्र निवर्तकत्वं विवक्षितम्. मुक्तस्यापि

७ भावप्रकाशिका ७

नन्दपरत्वप्रसङ्गादिति भावः । श्रौतार्थं विहाय फलितार्थकथने बीजमाह ( तच्च हेतोर्वैयधिकरण्यशङ्काव्युदासार्थमिति ) ( सदृशस्त्वेकदेशतयेति ) यद्यपि 'स एको ब्रह्मण आनन्दः' इतिशतगुणितचतुर्मुखानन्दसादृश्यं ब्रह्मानन्दस्यैव कथ्यते, नतु तदेकदेशस्य. तथापि 'यतो वाचो निवर्तन्ते' इति वाक्यस्यार्थमभिप्रेत्य तथोक्तमिति द्रष्टव्यम् । अभ्यासशब्दस्य ब्रह्मानन्दे औपचारिकत्वाश्रयणमयुक्तमित्यस्वरसादाह ( यद्वा मुहुर्मुहुरुक्तिरिति ) ननु निरतिशयानन्दांशेन मुहुर्मुहुरुक्तिः , आनन्दमात्रे मुहुर्मुहुरुक्तिस्तु आनन्दमात्रतात्पर्ये लिङ्गम्, नतु निरतिशयानन्दतात्पर्ये. आनन्दमात्रञ्च जीवव्यावर्तकमिति चेन्न, "स एको ब्रह्मण आ-

यप्रत्यनीकं कल्याणैकतानं सकलेतरविलक्षणं परमात्मानमेव स्वाश्रयमावेदयति। यथाह [1] "तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्मा ऽऽनन्दमयः"

* श्रुतप्रकाशिका *

परमात्मप्रसादादेव हि हेयनिवृत्तिपूर्वकनिरतिशयानन्दप्राप्तिः, इह च स्वत एवापरिच्छिन्नानन्दत्वमवगम्यते, हेत्वश्रवणात् निरतिशयत्वश्रवणविरोधेन हेतुकल्पनायोगाच्च । न च मुक्तस्य स्वतोऽपरिच्छिन्नानन्दत्वम् "अथ सोऽभयं गतो भवति' 'एष ह्येवानन्दयाति' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति"इति परमात्मायत्तत्वश्रुतेः । न ह्येवं परमात्मानन्दस्यान्याधीनत्वं श्रुतम् . 'श्रोत्रियस्य चाकामहतस्य' इति मुक्तः पृथङ्निर्दिश्यते । श्रोत्रियः—श्रुतवेदान्तः । अकामहतः—उपासनानिवृत्तसमस्तक्लेशः 'यश्च श्रोत्रियोऽवृजिनोऽकामहतः' इति श्रुत्यन्तरम्। मुक्तस्य जगद्व्यापाराभावाच्च परस्यैव स्वतो निरतिशयानन्दयोगः । एवं निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपतर्कानुगृहीत आनन्दमयशब्दः परमात्मविषय इत्युक्तं भवति । न केवलं निरतिशयानन्दत्वरूपवस्तुसामर्थ्यानुगृहीतत्वाद्वैलक्षण्यमवगतम्, तत् कण्ठोक्तं चेत्याह ( यथाहेति ) ननु ' भेदव्यपदेशा'दिति सूत्रस्य विषयवाक्यं हीदम् ।

७ भावप्रकाशिका ७

नन्दः 'यतो वाचो निवर्तन्ते" इति मनोमयानन्दमयपर्यायोक्तिद्वयस्यापि निरतिशयानन्दविषयतया निरतिशयानन्दस्य मुहुर्मुहुरुक्त्युपपत्तेः ( निवर्तकत्वं विवक्षितमिति ) अनन्याधीननिवृत्तिर्विवक्षितेत्यर्थः । उत्तरग्रन्थानुसारादिति द्रष्टव्यम् ( निरतिशयत्वश्रवणविरोधेनेति ) हेत्वधीनत्वे हेतोरेव तदपेक्षया अतिशयिततया हेत्वधीनस्य वस्तुनस्सातिशयत्वमेव स्यात् . यदपेक्षया अतिशयितं नास्ति तस्यैव निरतिशयत्वादित्यर्थः । ननु परमात्मानन्दस्यानन्याधीनत्वेन तस्यैवानन्दस्य "स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य "इति श्रवणात् मुक्तेप्यनन्याधीनत्वमेवेत्याशङ्कयानन्दस्यैकरूपत्वेपि ब्रह्मणि स आनन्दो निर्हेतुकः। मुक्ते तु सहेतुकः, तत्राकामहतस्येति हेत्वन्तरस्य पृथङ्निर्देशादित्याह (श्रोत्रियस्य चाकामहतस्येतीति) ( इति श्रुत्यन्तरमिति ) तत्रत्याकामहतशब्दस्या-

१ तै. आन. ५-१ ॥

इति विज्ञानमयो हि जीवः, न बुद्धिमात्रम्, मयट्-

* श्रुतप्रकाशिका *

तत्र व्याख्यास्यमानस्यास्य कथमिहोपादानमर्थोपपादनं च ? उच्यते; निरतिशयानन्दस्य जीवात्मन्ययोग्यतारूपस्तर्को ह्यानन्दमयशब्दस्य परमात्मविषयत्वव्यवस्थापक उक्तः, अस्य तर्कस्य अनेन वाक्येन गर्भितत्वात्तत्सूचकत्वेनेदं वाक्यमत्रोपन्यस्तम्, अत्र हि एतस्मादितिपदेन 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च" इति पूर्ववाक्यप्रकृतकर्मवश्यत्वादिवैशिष्ट्यं जीवस्याभिप्रेतम्, धर्मिवाचिनापि मयडन्तेन विज्ञानमयशब्देन सर्वोपाधिविनिर्मुक्तं स्वाभाविकरूपमसङ्कुचितज्ञानमित्यवयवशक्त्या दर्शितम् । अनेन वाक्येन स्वभावपरिशुद्धस्यापि जीवस्य कर्मकृतानन्तदुःखभाजनस्य निरतिशयानन्दासम्भवात् ततः परमात्मनो विलक्षणत्वं प्रतिपादितमित्यत्रेदमुपात्तम्, अस्मिन् वाक्ये विज्ञानमयशब्दस्य बुद्धिमात्रपरत्वं व्युदस्यति ( विज्ञानमयो हीति ) "योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः" इति श्रुतिप्रसिद्धिद्योतको हिशब्दः । शब्दस्वारस्यानुग्राहकप्रत्यक्षप्रसिद्धिद्योतको वा, अहं जानामीति ज्ञातृत्वं ह्यात्मनः प्रतीयते । ज्ञप्तिवाचिनो विज्ञानमयशब्दस्य ज्ञायतेऽनेनेति व्युत्पत्त्याऽन्तःकरणपरत्वमस्वरसमित्यभिप्रयन्नाह ( न बुद्धिमात्रमिति ) मात्रचा अभिप्रेतं प्रत्ययवैयर्थ्यं विशदयति ( मयट्प्रत्ययेनेति ) प्रकरणवशात्स्वार्थकत्व-

* भावप्रकाशिका *

प्येवमेवार्थ इति भावः । तस्य वाक्यस्य तादृशतर्कसूचकत्वमुपपादयति ( अत्र हीति ) ( अवयवशक्त्या दर्शितमिति ) मयट्प्रत्ययस्य प्राचुर्यार्थत्वादिति भावः । भाष्ये– न बुद्धिमात्रमिति । ननु बुद्धिशब्दस्यान्तःकरणपरतयैव टीकाकृता व्याख्यातत्वात्, न बुद्धिरित्यनेनैव तत्प्रतिक्षेपसम्भवात् मात्रपदवैयर्थ्यम्. यदि च बुद्धिशब्दस्य ज्ञप्तिपरत्वं तदैव हि केवलं ज्ञप्तिपर्यवसायज्ञापनाय मात्रपदं सफलं स्यात्. यदि च मात्रपदमनुजिघृक्षितं तदा तदनन्तरभूताञ्च बुद्धिमिति पूर्वपक्षभाष्यस्थो बुद्धिशब्दो ज्ञप्तिपरतयैव व्याख्येयः। नान्तःकरणपरतयेति चेदुच्यते. न बुद्धिमात्रमित्येतत् तन्त्रवृत्त्यैकशेषाणामन्यतमाश्रयणे नान्तःकरणस्य ज्ञप्तेश्च व्युदासकं मात्रपदम्. ततश्च ज्ञप्तिव्युदासपक्षे तद्वत्येव पर्यवसानम्, नतु तन्मात्र इति प्रति-

प्रत्ययेन व्यतिरेकप्रतीतेः । प्राणमये त्वगत्या स्वार्थकता आश्रीयते । इह तु तद्वतो जीवस्य सम्भवान्नानर्थक्यं न्याय्यम् । बद्धो मुक्तश्च प्रत्यगात्मा ज्ञातैवेत्यभ्यधिष्महि । प्राणमयादौ च मयडर्थसम्भवोऽनन्तरमेव वक्ष्यते । कथं तर्हि विज्ञानमयविषयश्लोके "विज्ञानं यज्ञं तनुते" इति केवलविज्ञानशब्दोपादानमुपपद्यते । ज्ञातुरेवात्मनः स्वरूपमपि स्वप्रकाशतया विज्ञानमित्युच्यत इति न दोषः, ज्ञानैकनिरूपणीयत्वाच्च ज्ञातुः स्वरूपस्य । स्वरूपनिरूपणधर्मशब्दा हि धर्ममुखेन धर्मि-

* श्रुतप्रकाशिका *

माशङ्क्याह ( प्राणमये त्विति ) अगत्या विकारप्राचुर्याद्यर्थान्तरासम्भवात् । पक्षे तद्वैषम्यमाह ( इह त्विति ) ( तद्वत इति ) प्राचुर्यार्थत्वं सम्भवतीत्यर्थः । नात्र मयडर्थस्सम्भवति, ज्ञप्तिमात्रस्वरूपो ह्यात्मा, ज्ञातृत्वं हि काल्पनिकम् , मुक्तावस्थायां तदपि नास्तीत्याह ( बद्ध इति ) प्राणमयादौ स्वार्थकत्वमभ्युपगम्य परिहार उक्तः । अथ तदेव नास्तीत्याह ( प्राणमयादाविति ) विज्ञानमयशब्दस्य तद्विषयश्लोकस्थविज्ञानशब्दसमानार्थत्वात् मयट् स्वार्थिक इत्यभिप्रायेण पृच्छति ( कथं तर्हीति ) उपपद्यते—न हि विज्ञानस्य विज्ञानान्तराश्रयत्वं सम्भवतीति भावः । विज्ञानमयशब्दस्य ज्ञातरि प्रवृत्तौ निमित्तं दर्शयति ( ज्ञातुरेवेति ) एवकारश्शङ्कितविरोधाभावद्योतकः, अपिशब्दः स्वरूपधर्मयोर्निमित्तसाधारण्यपरः । ज्ञातृशब्दतुल्यार्थतयाऽपि निर्वाहं दर्शयति ( ज्ञानैकेति ) ततः किमित्यत्राह ( स्वरूपेति ) स्वरूपनिरूपणधर्मशब्दाः—अयुतसिद्धधर्मवाचिशब्दाः । आकृतिनय-

* भावप्रकाशिका *

पादनाय मात्रपदं सार्थकम् । केचित्तु सर्वत्र बुद्धिशब्दो ज्ञप्तिपर एव, नतु करणव्युत्पत्त्यान्तःकरणपर इत्याहुः । मयट्प्रत्ययेन व्यतिरेकप्रतीतेरितिभाष्यस्य स्वार्थिकत्वाश्रयणे मयट्प्रत्ययवैयर्थ्यप्रसङ्गादित्येतत्पर्यन्तोऽभिप्राय इति दर्शयति ( प्रत्ययवैयर्थ्यं विशदयतीति ) नीलादिशब्दानामपि सङ्ग्रहार्थं व्याचष्टे ( अयुतसिद्धधर्मवाचिशब्दा-

स्वरूपमपि प्रतिपादयन्ति, गवादिशब्दवत्। [1]"कृत्यल्युटो बहुलम्" इति वा कर्त्तरि ल्युडाश्रीयते। नन्द्यादित्वं वाऽऽश्रित्य [2]"नन्दिग्रहि" इत्यादिना कर्त्तरि ल्युः। अत एव च [3]"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति यज्ञादिकर्तृत्वं विज्ञानस्य श्रूयते। बुद्धि-

* श्रुतप्रकाशिका *

विषयतया सम्प्रतिपन्नं शब्दं निदर्शयति ( गवादीति ) एवं सूत्रन्यायाभ्यां द्विधा निर्वाह उक्तः। अथ शाब्दमर्यादया द्विधा निर्वाहमाह ( कृत्येति ) प्रथमे पक्षे कर्तृपरत्वं कल्पनीयम्। द्वितीये गणान्तर्भावः कल्पनीय इत्युभयत्राश्रयणशब्दप्रयोगः। प्रत्यक्षानुगुण्यात् श्रुत्यन्तरप्रत्यभिज्ञानात् प्रथमश्रुतत्वात्प्रकृतिस्वारस्यात् प्रत्ययानर्थक्यानुपपत्तेश्च प्रबलविज्ञानमयशब्दानुरोधेन विज्ञानशब्दो निर्वाह्य इति भावः। स्ववाक्यस्थं युक्त्यन्तरमाह ( अत एवेति ) अत एव–विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थः। यज्ञादिकर्तृत्वे श्रुते कथं विज्ञानशब्दवाच्यस्य चेतनत्वमित्यत्राह ( बुद्धिमात्रस्येति ) बोद्धुरेव हि कर्तृत्वं प्रत्यक्षश्रुतिभिस्सू-

❁ भावप्रकाशिका ❁

इति) (सूत्रन्यायाभ्यामिति) यावदात्मभावित्वाच्चेति शारीरकसूत्रन्यायाभ्यामित्यर्थः। (प्रथमे पक्षे कर्तृपरत्वं कल्पनीयमिति ) अत्यन्तागतिकबाहुलकर्त्रर्थत्वमवश्याश्रयणीयमिति भावः। (गणान्तर्भाव इति ) नन्द्यादिगणे अस्यापठितत्वादिति भावः। (प्रत्यक्षानुगुण्यादित्यादि ) आत्मनो विज्ञानमयत्वस्य जानामीति प्रत्यक्षसिद्धत्वात्, 'योऽयं विज्ञानमय' इति श्रुतिसिद्धत्वात् विज्ञानं यज्ञं तनुत इत्येतदपेक्षया विज्ञानमयशब्दस्य प्रथमश्रुतत्वेनासञ्जातविरोधित्वात्. ज्ञायतेऽनेनेति व्युत्पत्त्या विज्ञानशब्दस्यान्तःकरणपरत्वेपि प्रकृतिप्रत्ययास्वारस्यात्, जीवपरत्वे द्वयोरपि स्वारस्यापरित्यागात् विज्ञानमयशब्दानुरोधेनैव विज्ञानशब्दो नेय इति भावः। ( बोद्धुरेव हि कर्तृत्वमिति ) जानामि करोमीति प्रत्यक्षेण 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इत्यादिश्रुतिभिः 'कर्ता शास्त्रार्थवत्त्वात्' इत्यादिसूत्रैश्चेत्यर्थः । ननु न कर्तृत्वं

१ अष्टाध्याय्याम्. ३-३-११३ ॥ २ अष्टा० ३-१-१३४ ॥ ३ तै. आन. ५-अनु ॥

मात्रस्य हि न कर्तृत्वं सम्भवति। अचेतनेषु हि चेतनोपकरणभूतेषु विज्ञानमयात्प्राचीनेष्वन्नमयादिषु न चेतनधर्मभूतं कर्तृत्वं श्रूयते। अत एव चेतनमचेतनं च स्वासाधारणैर्निलयनत्वानिलयनत्वादिभिर्धर्मविशेषै-

* श्रुतप्रकाशिका *

त्रैश्च सिद्धमिति भावः। ननु सर्वेषां स्वव्यापारकर्तृत्वमस्ति। सत्यम्, नात्र तावन्मात्रं विवक्षितम्, किन्तु चेतनासाधारणः कर्तृत्वविशेषः प्रयत्नाधारत्वलक्षणः, यज्ञादिकर्तृत्वमिति ह्युक्तम्। अत्र विज्ञानशब्दास्वारस्यमुभयोरप्यविशिष्टम्, यज्ञादिकर्तृत्वास्वारस्यं तु परस्याधिकम्। ननु 'अद्यतेऽत्ति च भूतानि' इत्यन्नमय इव प्राकरणिकमौपचारिकं कर्तृत्वमुपकरणत्वाविशेषात् बुद्धेरपि स्यादित्यत्राह (अचेतनेषु हीति) बाधकाभावे सति उपचार एव दोषः, स च प्रकरणानुवृत्तश्चेत् सोढव्यः स्यात, न च तदनुवृत्तिः, प्राणमये मनोमये च तस्य विच्छिन्नत्वादित्यभिप्रायः। विज्ञानशब्दस्य चेतनपरत्वे प्रयोगान्तरं दर्शयति (अत एव चेतनमिति) अत एव—विज्ञानशब्दस्य चेतनपरत्वादेवेत्यर्थः। (चेतनमचेतनं चेति) न ह्यन्तःकरणानन्तःकरणविभागोऽत्र क्रियते, किन्तु चिदचिद्विभाग एवेति भावः। कुत इत्यत्राह (निलयनत्वेति) अचिद्विकार-

* भावप्रकाशिका *

चेतनैकान्तम्, अचेतनानामपि कर्तृत्वसम्भवात् 'शुक्रं यजमानोऽन्वारभत' इत्यादिविहितशुक्रान्वारम्भणादौ अस्थियागपक्षे अचेतनानामस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासम्भवात्. शुक्रान्वारम्भणादिकमकर्तव्यमिति पूर्वपक्षं कृत्वा काष्ठानामपि ज्वलनादौ कर्तृत्वसम्भवेन कर्तृत्वस्य चैतन्यानपेक्षत्वेन अस्थ्नां कर्तृत्वं सम्भवतीति दशमे सिद्धान्तितत्वादित्यभिप्रेत्याशङ्कते (ननु सर्वेषामिति) (विज्ञानशब्दास्वारस्यमुभयोरप्यविशिष्टमिति) विज्ञानं यज्ञं तनुते इत्यत्र विज्ञानशब्द इत्यर्थः। ननु विज्ञानमयशब्दगतविज्ञानमयशब्दे सिद्धान्ते तत्रत्यविज्ञानशब्दस्य ज्ञप्तिपरत्वेनास्वारस्याभावादिति द्रष्टव्यम्। (स च प्रकरणानुवृत्तश्चेदिति) विज्ञानमयात्प्राचीनेष्वन्नमयादिषु—इति भाष्ये सर्वेष्विति पदमध्याहर्तव्यमिति भावः।

विभज्य निर्दिशद्वाक्यम् "विज्ञानं चाविज्ञानं च" इति विज्ञानशब्देन तद्गुणं चेतनं वदति। तथाऽन्तर्य्यामिब्राह्मणे [1]"यो विज्ञाने तिष्ठन्" इत्यस्य काण्वपाठगतस्य पर्य्यायस्य स्थाने [2]"य आत्मनि तिष्ठन्" इति

* श्रुतप्रकाशिका *

विशेषस्यान्तःकरणस्य "जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति प्रकारेण चेतनधार्यस्य विश्वनिलयनत्वायोगात् परेण तस्य सत्यत्वानभ्युपगमाच्चेति भावः। विज्ञानशब्दस्य संवित्परत्वमप्ययुक्तम्, 'अनुप्रविश्य'त्यनेनानुप्रवेशश्रवणात् न हि संविद्रूप आत्मा आत्मान्तरव्याप्यतयाऽभिमतः परस्य। विज्ञानशब्दस्य चेतनपरत्वेन प्रयोगान्तरं दर्शयति (तथेति) विज्ञानस्यात्मशब्दस्थाने श्रुतत्वादन्तःकरणपरत्वमनुपपन्नम्। न चात्मशब्दोऽप्यन्तःकरणपरः, विज्ञानशब्दवत्तस्यापि तत्रास्वरसत्वात्। यथा ज्ञायतेऽनेनति व्युत्पत्त्याऽऽश्रयणं विज्ञानशब्दस्य क्लिष्टम् तद्वच्चेतनव्यतिरिक्तेष्वात्मशब्दोऽपि ह्यस्वरसः। अन्तःकरणपरत्वे विज्ञानात्मशब्दयोर्द्वयोरप्यस्वारस्यम्, चेतनपरत्वे तु विज्ञानशब्दमात्रास्वारस्यम्, न तु द्वयोरिति विशेषः। अत्रात्मशब्दस्य परमात्मतया स्वाभिमतसंवित्परत्वञ्च परेण दुर्वचम्, 'य आत्मनि तिष्ठन्' इत्यत्रात्मान्तरस्थितिश्रवणात्, आत्मान्तरव्याप्यस्य परमात्मत्वासिद्धेः, सर्वत्र प्रयुक्तस्य विज्ञानशब्दस्य ल्युट्प्रत्ययान्तत्वे विशेष्यानुगुण-

* भावप्रकाशिका *

(चेतनपरत्वादेवेत्यर्थ इति) 'व्यपदेशाच्च क्रियायाम्' इति सूत्रेण विज्ञानं यज्ञं तनुत इति वाक्यस्य जीवकर्तृकत्वे प्रमाणतया परैरप्युपन्यासादिति भावः। (अनुप्रवेशश्रवणादिति) अनुप्रवेशकर्मत्वश्रवणादित्यर्थः। व्याप्यत्वश्रवणादिति यावत्। (आत्मान्तरस्थितिश्रवणादिति) नच 'स्वे महिम्नि प्रतिष्ठितः, इतिवत् भेदस्यौपचारिकत्वमिति वाच्यम्. "उभयेपि हि भेदेनैनमधीयते" इति सूत्रे विज्ञानशब्दस्य जीवपरत्वमेव, नतु परमात्मपरत्वम्. अभेदोपचारक्लेशस्यानाश्रयणीयत्वादिति परैरेवोक्तत्वादिति द्रष्टव्यम्। (सर्वत्र प्रयुक्तस्येति) 'विज्ञानं

---

१ बृ-६-७-२२ ॥ | २ विज्ञानस्थाने माध्यन्दिनपाठः ॥

पर्य्यायमधीयाना माध्यन्दिनाः काण्वपाठगतं विज्ञानशब्दनिर्दिष्टं जीवात्मेति स्फुटीकुर्वन्ति । विज्ञानमिति च नपुंसकलिङ्गं वस्तुत्वाभिप्रायम् । तदेवं विज्ञानमयाजीवादन्यस्तदन्तरः परमात्मा आनन्दमयः । यद्यपि [1]"विज्ञानं यज्ञं तनुते" इति श्लोकेन ज्ञानमात्रमेवोपादीयते, न ज्ञाता ; तथापि [2]"अन्योन्तर आत्मा विज्ञानमयः" इति तद्वान् ज्ञातैवोपदिश्यते; यथा [3]'अन्नाद्वै

* श्रुतप्रकाशिका *

लिङ्गत्वादात्मविषयस्य तस्य कथं नपुंसकत्वमित्यत्राह ( विज्ञानमिति ) उपपादितमर्थं परममाध्येन घटयति ( तदेवमिति ) तत्—उक्तोपपत्तिभिः । एवम्—विज्ञानशब्दस्य चेतनपरत्वसिद्धिमित्यर्थः । श्लोकस्थविज्ञानशब्दस्य ज्ञातृपरत्वोपपादनेन विज्ञानमयशब्दस्य ज्ञातृपरत्वमुक्तम् । अथ श्लोकस्य ज्ञातृपरत्वाभावेऽपि विज्ञानमयशब्दस्य ज्ञातृपरत्वमाह ( यद्यपीति ) मयड्विहितवाक्ये तदर्थः परित्यक्त इति तद्वत्यपि वाक्ये स न त्याज्य इत्यर्थः । तर्हि ब्राह्मणस्य श्लोकस्य च कथमैकार्थ्यमित्यत्राह ( यथेति ) पूर्ववाक्योक्तार्थैकदेशविषयत्वात् श्लोकस्य

✿ भावप्रकाशिका ✿

चाविज्ञानञ्च' विज्ञानं यज्ञं तनुते' इत्येवम्भूते सर्वत्र वाक्ये प्रयुक्तस्य विज्ञानशब्दस्य कर्तृवाचिप्रत्ययान्तत्वे नपुंसके 'भावे क्तः' ल्युट् च' इतिविहितभावार्थल्युडन्तस्यैव नपुंसकतया तदतिरिक्तार्थस्य ल्युडन्तस्य विशेष्यनिघ्नतया नपुंसकत्वनियमाभावेनात्मविषयस्य विज्ञानशब्दस्य पुल्लिङ्गत्वापत्तिरिति भावः । ( श्लोकस्य ज्ञातृपरत्वाभावेपीति ) वस्तुशब्दस्येहानुपात्ततया तदभिप्रायेण नपुंसकलिङ्गनिर्देशो न युक्तः । अतएव सारस्वत्यां मेष्यां पशुशब्दाभिप्रायेण 'प्रास्मा अग्निं भरत' इति निर्देशो युक्त इति पूर्वपक्षं कृत्वा पशुशब्दस्य प्रागनुपात्ततया सारस्वत्याश्च मेष्या वस्तुतस्स्त्रीत्वात् प्रास्या इत्येवं स्त्रीलिङ्गनिर्देशः कर्तव्य इति पूर्वतन्त्रे नवमे स्थितत्वात् वस्तुशब्दाभिप्रायेण नपुंसकलिङ्गनिर्देशोऽनुपपन्नः, किन्तु 'अन्योऽन्तर आत्मा

---

१ तै. आन. ५. अनु ॥　　२ तै. आन. ४-२ ॥　　३ तै. आन. १-१ ॥

प्रजाः प्रजायन्ते' इत्यत्र श्लोके केवलान्नोपादानेऽपि [1]"स वा एष पुरुषोऽन्नरसमयः" इत्यत्र नान्नमात्रं निर्दिष्टम्; अपि तु तन्मयः– तद्विकारः । एतत्सर्वं हृदि निधाय सूत्रकारः स्वयमेव [2]'भेदव्यपदेशात्' इत्यनन्तरमेव वदति ॥ यदुक्तं जगत्कारणतया निर्दिष्टस्य [3]"अनेन जीवेनात्मनाऽनुप्रविश्य' [4]'तत्त्वमसि" इति च जीवसामानाधिकरण्यनिर्देशाज्जगत्कारणमपि जीवस्वरूपान्नातिरिच्यत इति कृत्वा जीवस्यैव स्वरूपं "ब्रह्मविदाप्नोति परम्" इति प्रक्रान्तमसुखाद्व्यावृत्तत्वेनानन्दमय इत्युपदिश्यत इति; तदयुक्तम्, जीवस्य

श्रुतप्रकाशिका *

तदैकार्थ्यम्, यथाऽन्नमयविषयश्लोकस्येत्यर्थः । तन्मय इति श्रुतिवाक्यगतमयडर्थानुवादः । तद्विकार इति तद्व्याख्यानम् । उक्तार्थजातस्य उत्सूत्रत्वशङ्कां परिहरन् व्याख्यास्यमानसूत्रोपयोगित्वञ्च दर्शयितुमाह (एतत्सर्वमिति) "तस्माद्वा एतस्माद्विज्ञानमयात्" इति वाक्यं जीवपरयोर्भेदप्रतिपादकं वदन् सूत्रकारो विज्ञानशब्दस्य ज्ञातृपरत्वं तदुपपत्तींश्च हृदि निदधदेव वदतीत्यर्थः । पूर्वपक्षे जीवसामानाधिकरण्यं शारीरत्वश्रवणं च हेतुद्वयमुक्तम्, तत्र सामानाधिकरण्यस्य भेदावहत्वमुपपादयितुं यदुक्तमित्यादिनोपदिश्यत इत्यन्तेनानूदितं पूर्वपक्षहेतुं दूषयति (तदयुक्तमिति) प्राकरणिकवाक्यैस्समानाधिकरणपदप्रातिपदिकांशेन च विरुद्धधर्माध्यासप्रतिपत्त्या भेदसिद्धेः कालात्ययापदिष्टहेतुरिव परोक्तहेतुर्न

छ भावप्रकाशिका छ

विज्ञानमयः' इत्यात्मशब्देन प्राङ्निर्देशात् पुल्लिङ्गनिर्देश एवोचितः, अतो विज्ञानं यज्ञं तनुत इति नपुंसकविज्ञानशब्दे ज्ञप्तेः परामर्शेपीत्यभ्युपगमेपीत्यर्थः । तन्मयस्तद्विकार इति पदद्वयस्य प्रयोजनमाह (तन्मय इतीति) (विरुद्धधर्माध्यासप्रतिपत्त्येति)

[1] तै. आ. १ ॥ [2] शारी. १-१-१८ ॥ [3] छा. ६-३-२-४ ॥ [4] छा. ६-८-७ ॥

चेतनत्वे सत्यपि [1]"तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' इति स्वसङ्कल्पपूर्वकानन्तविचित्रसृष्टियोगानुपपत्तेः । शुद्धावस्थस्यापि हि तस्य सर्गादिजगद्व्यापारासम्भवो [2]"जगद्व्यापारवर्जम्" [3]"भोगमात्रसाम्यलिङ्गात्" इत्यत्रोपपादयिष्यते । कारणभूतस्य ब्रह्मणो जीवस्वरूपत्वानभ्युपगमे [4]" अनेन जीवेनात्मना " [5]"तत्त्वमसि" इति सामानाधिकरण्यनिर्देशः कथमुपपद्यत इति चेत् ; कथं वा निरस्तनिखिलदोषगन्धस्य सत्यसङ्कल्पस्य सर्वज्ञस्य सर्वशक्तेरनवधिकातिशयासङ्ख्येयकल्याणगुणगणस्य सकलकारणभूतस्य ब्रह्मणः

* श्रुतप्रकाशिका *

साध्यसाधक इति दूषणं वक्तुं तत्पदोपस्थाप्यविशेषसमर्पकैः प्राकरणिकवाक्यैः पराभिमतैक्यविरुद्धभेदसिद्धिं दर्शयति ( जीवस्येति ) प्रलयदशायामुपसंहृतकरणकलेबरस्य कर्मवश्यस्य सङ्कल्पमात्रेण विचित्रजगत्सर्गायोगात् बद्धस्य स्रष्टृत्वमनुपपन्नमित्यर्थः । शुद्धावस्थस्य सम्भवतीत्यत्राह ( शुद्धेति ) उक्तं विपरीतुं शङ्कते ( कारणेति ) समानविभक्त्यवगतैक्योपपत्तिः कथमित्यर्थः । ( कथं वेति ) प्रातिपदिकावगतविशेषणान्वयः कथमित्यर्थः । निरस्तेत्यादिपदैस्तत्पदप्रातिपदिकावगतविशेषणान्वयो दर्शितः " तदैक्षत " " असृजत "इति यथासङ्कल्पं जगत्सृष्टिश्रवणेन सत्यसङ्कल्पादिगुणानामतिरोहितत्वावगमात् तिरोधायकहेयसम्बन्धानर्हत्वमर्थसिद्धमित्यभिप्रायेण निरस्तनिखिलदोषगन्धत्वमुक्तम् । जगद्व्यापारौपयिकगुणान्तराणामन्यत्र कण्ठोक्तानां सद्विद्यायां गतिसामान्यनयादर्थसिद्धत्वमभिप्रेत्योक्तमनवधिकेति । त्वंपदप्रातिपदिकावगतविशेषणान्वयो दर्शितः

---

१ छा. ६-२-३ ॥
२ शारी. ४-४-१७ ॥
३ शारी. ४-४-२१ ॥
४ छा ६-३-२ ॥
५ छा. ६-८-७ ॥

नानाविधानन्तदुःखाकरकर्माधीनचिन्तितनिमिषितादिसकलप्रवृत्तिजीवस्वरूपत्वम् ? । अन्यतरस्य मिथ्यात्वेनोपपद्यत इति चेत् ; कस्य भोः ? । किं हेयसम्बन्धस्य ? किं वा हेयप्रत्यनीककल्याणैकतानस्वभावस्य ?। हेयप्रत्यनीककल्याणैकतानस्य ब्रह्मणोऽनाद्यविद्याश्रयत्वेन हेयसम्बन्धमिथ्याप्रतिभासो मिथ्यारूप इति चेत्; विप्रतिषिद्धमिदमभिधीयते, ब्रह्मणो हेयप्रत्यनीक-

* श्रुतप्रकाशिका *

नानाविधेति । जीवस्वरूपत्वम्— जीवेन सह स्वरूपैक्यम् । जीवत्वमित्युक्ते जीवशरीरकत्वप्रतिपत्तिश्च सम्भवतीति तद्व्यावृत्त्यर्थं जीवस्वरूपत्वमित्युक्तम् । साक्षात् पराभिमतं पदद्वयावगतविशेषणपरित्यागपक्षं दूषयिष्यन् सम्भावितं पक्षद्वयं शङ्कते ( अन्यतरस्येति ) तत्त्वंपदप्रतिपन्नविषयोरन्यतरस्येत्यर्थः । विकल्पयति ( कस्येति ) प्रत्यक्षसिद्धागमसिद्धत्वन्तत्पदावगतविशेषणजातं दुस्त्यजमिति भावः । सहेतुकमविरुद्धं परेण प्रथमशिरःपरिग्रहं शङ्कते ( हेयप्रत्यनीकेति ) हेयम् -दुःखम् । मिथ्याप्रतिभासः-- भ्रान्तिज्ञानम् । स्वतश्शुद्धस्य पटस्यौपाधिकमालिन्यवत् परमार्थतो निर्मलस्य स्फटिकस्याध्यासादरुणिमवच्च ब्रह्मणो निर्दोषकल्याणगुणैकतानत्वं हेयसम्बन्धश्च स्वाभाविकौपाधिकविभागेन परमार्थापरमार्थविभागेन वा अविरुद्धम्, उभयोरपि स्वाभाविकत्वसत्यत्वाभ्युपगमे हि विरोध इति शङ्काऽभिप्रेता । दूषयति ( विप्रतिषिद्धमिति ) विप्रतिषेधमुपपादयति

ஓ भावप्रकाशिका ஓ

विरुद्धधर्माश्रयत्वप्रतिपत्त्येत्यर्थः । ( सहेतुकमविरुद्धमिति ) हेयप्रत्यनीकत्वदोषाश्रयत्वयोरविरोधसमर्थनं प्रथमशिरःपरिग्रहं हेतूपन्यासपूर्वकं परमुखेन शङ्कत इत्यर्थः । हेयसम्बन्धमिथ्याप्रतिभासो मिथ्यारूप इतिभाष्यं व्याचष्टे ( हेयं दुःखं मिथ्याप्रतिभास इति ) ननु प्रतिभासो मिथ्यारूप इत्ययुक्तम्, साक्षिरूपस्याविद्यावृत्तिरूपस्य वा स्वरूपतस्सत्यत्वेन मिथ्यात्वाभावादित्याशङ्क्याह ( भ्रान्तिज्ञानमिति ) तत्कार्यदुःखप्रतिभासाश्रयत्वं चैव हि हेयसम्बन्धः-इति भाष्यमयुक्तम्.

कल्याणैकतानत्वमनाद्यविद्याश्रयत्वेनानन्तदुःखविषयमिथ्याप्रतिभासाश्रयत्वञ्चेति। अविद्याश्रयत्वं तत्कार्यदुःखप्रतिभासाश्रयत्वञ्चैव हि हेयसम्बन्धः। तत्सम्बन्धित्वं तत्प्रत्यनीकत्वञ्च विरुद्धमेव। तथापि तस्य मिथ्यात्वान्न विरोध इति मा वोचः। मिथ्याभूतमप्यपुरुषार्थ एव; यन्निरसनाय सर्वे वेदान्ता आरभ्यन्त इति ब्रूपे। निरसनीयापुरुषार्थयोगश्च हेयप्रत्यनीककल्याणैकतानतया विरुध्यते। किं कुर्मः? 'येनाश्रुतं

* श्रुतप्रकाशिका *

(अविद्याश्रयत्वमिति) न केवलं दुःखमेव हेयम्, अपि तु तद्धेतुतत्प्रतिभासावपि हेयावित्यर्थः। ततः किमित्यत्राह (तत्सम्बन्धित्वमिति) अविद्यातत्कार्यदुःखतत्प्रतिभासरूपहेयानामाश्रयत्वं तत्प्रत्यनीकत्वञ्च विरुद्धमित्यर्थः। सम्बन्धमिथ्यात्वादविरोधं शङ्कते (तथापीति) तथापि—अविद्यादीनां हेयत्वेऽपि। तस्य—आश्रयत्वरूपसम्बन्धस्येत्यर्थः। दूषयति (मिथ्याभूतमपीति) आश्रयत्वं मिथ्याभूतमप्यपुरुषार्थ इत्यर्थः। अपुरुषार्थत्वमुपपादयति (यन्निरसनायेति) ततः किमित्यत्राह (निरसनीयेति) एतदुक्तं भवति, मिथ्यात्वं किमत्यन्ताभावः, उत ज्ञानबाध्यत्वम्? प्रथमे निरसनीयाभावात्तन्निरासाय शास्त्रारम्भो न स्यात्। द्वितीये च मिथ्याभूतस्यापुरुषार्थत्वमस्ति, न वा? न चेन्निरसनीयत्वाभावाच्छास्त्रारम्भवैयर्थ्यम्, अपुरुषार्थत्वमस्ति चेद्धेयप्रत्यनीकत्वव्याघातो दुष्परिहर इति। तद्विरोधेऽपि हेयसम्बन्धस्य श्रुतिबलादभ्युपगन्तव्यत्वं शङ्कते (किं कुर्म इति)

* भावप्रकाशिका *

तथा हि सति दुःखाश्रयत्वस्य हेयसम्बन्धरूपत्वं न स्यादित्याशङ्क्यात्रत्यस्यैवकारस्य हेयसम्बन्धत्वरूपविशेषणान्विततया तदयोगव्यवच्छेदकत्वमेव. नान्ययोगव्यवच्छेदकत्वमित्यभिप्रयन्नाह (न केवलं दुःखमेवेति) 'क्षणिकस्य यागादेः श्रुतकालान्तरभाविस्वर्गसाधनतोपपत्तये तावत्पर्यन्तस्थायी अपूर्वलक्षणो व्या-

श्रुतं भवति" इत्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय [1]'सदेव सोम्येदमग्र आसीत्' इत्यादिना निखिलजगदेककारणताम् [2] 'तदैक्षत बहु स्याम्' इति सत्यसङ्कल्पताञ्च ब्रह्मणः प्रतिपाद्य तस्यैव ब्रह्मणः [3]"तत्त्वमसि" इति सामानाधिकरण्येनानन्तदुःखाश्रयजीवैक्यं प्रतिपादितम्; तदन्यथानुपपत्त्या ब्रह्मण एवाविद्याश्रयत्वादि परिकल्पनीयमिति चेत्। श्रुतोपपत्तयेऽप्यनुपपन्नं विरुद्धञ्च न कल्पनीयम्। अथ हेयसम्बन्ध एव पारमार्थिकः, कल्याणैकस्वभावता तु मिथ्याभूता, हन्तैवं तापत्रयाभिहतचेतनोज्जिजीवयिषया प्रवृत्तं शास्त्रम्; तापत्रयाभिहतिरेव तस्य पारमार्थिकी, कल्याणैक-

* श्रुतप्रकाशिका *

परिहरति (श्रुतोपपत्तय इति) अनुपपन्नम्—तर्कपराहतम्। विरुद्धम्—प्रमाणविरुद्धम्। "अपहतपाप्मा" 'विशोको विजघत्सः' 'एष हि सर्वेभ्यः पाप्मभ्य उदितः" 'अनश्नन्नन्यः' 'अनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशम्' 'अस्मान्मायी सृजते' 'तस्मिंश्चान्यो मायया सन्निरुद्धः' 'तमक्रतुं पश्यति' 'अनार्तां देवतां प्रपद्ये "इत्यादिश्रुतिविरोधः। एकस्मिन् हेयप्रत्यनीकत्वहेयास्पदत्वादिविरुद्धधर्म्मान्वयानुपपत्तिस्तर्कविरोधः। शिरोऽन्तरं शङ्कते (अथेति) दूषयति (हन्तैवमिति) शास्त्रस्य प्रयोजनपर्यवसायित्वाभावादप्रामाण्यं

छ भावप्रकाशिका छ

पारः परिकल्प्यते, न तु विनष्टस्यासत एव यागस्य कार्यजनकत्वमिति वा तस्यैव फलपर्यन्तस्थायित्वमिति वा कल्प्यते. तस्य सर्वप्रमाणविरुद्धत्वात्' इत्यपूर्वाधिकरणे निर्णीतत्वादिति भाष्याभिप्राय इत्यभिप्रयन्नाह (परिहरतीति) (अप्रामाण्यं प्रसजेदित्यर्थ इति) काकदन्तमीमांसासादृश्यां कर्ममीमांसायां

१ छा. ६-२-१॥ २ छा. ६-२-३॥ ३ छा. ६-८-७॥

स्वभावस्तु भ्रान्तिपरिकल्पित इति बोधयत्सम्यगुज्जीवयति । अथैतद्दोषपरिजिहीर्षया ब्रह्मणो निर्विशेषचिन्मात्रस्वरूपातिरिक्तजीवत्वदुःखित्वादिकं सत्यसङ्कल्पत्वकल्याणगुणाकरत्वजगत्कारणत्वाद्यपि मिथ्याभूतमिति कल्पनीयमिति चेत्; अहो भवतां वाक्यार्थपर्य्यालोचनकुशलता । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सर्वस्य मिथ्यात्वे सर्वस्य ज्ञातव्यस्याभावान्न सेत्स्यति । यथैकविज्ञानं परमार्थविषयम्, तथैव सर्वविज्ञानमपि यदि परमार्थविषयम्, तदन्तर्गतञ्च तदा तज्ज्ञानेन सर्वविज्ञानमिति शक्यते वक्तुम् । न हि परमार्थशुक्तिकाज्ञानेन तदाश्रयमपरमार्थरजतं ज्ञातं भवति ।

* श्रुतप्रकाशिका *

प्रसजेदित्यर्थः । परस्य सिद्धान्तभूतमुभयप्रहाणं शङ्कते ( अथैतदिति ) परिहरति ( अहो भवतामिति ) अर्थनिष्कर्षोपयुक्तपदद्वयवाक्यैतत्प्रकरणप्रकरणान्तरोपनिषदन्तरप्रमाणान्तरतर्कसामानाधिकरण्यनिरूपणं पर्यालोचनम् । प्रथममेतत्प्रकरणोपक्रमविरोधं दर्शयति ( एकेति ) सर्वसत्यत्वेऽपि कथं सेत्स्यतीत्यत्राह ( यथैकेति ) परमार्थविषयमिथ्याविषयत्वे ज्ञानयोर्वैरूप्यं स्यादिति भावः ( तदन्तर्गतश्चेति ) परिषद्ज्ञानेन तद्गताः पुरुषा हि ज्ञाता भवन्ति, न तु तद्बहिष्ठा इति भावः । ज्ञानस्य तदन्तर्गतत्वं तद्विषयान्तर्गतत्वम् । यद्वा तदन्तर्गतम्—सर्वमिति शेषः । परमार्थविषयं तदन्तर्गतमित्युक्तमर्थं व्यतिरेकेणोपपादयति ( न हि परमार्थेति ) न हि शुक्तिरजतयोरेकधीविषयत्वमित्यर्थः । एकत्वसर्वत्वावस्थाभेदे सत्यपि धर्म्मैक्या-

* भावप्रकाशिका *

कस्याप्यप्रवृत्त्या मीमांसारूपाङ्गसहकृतस्य च वेदस्याप्रत्यायकत्वात् प्रमितिजनकत्वरूपं प्रामाण्यं न स्यादित्यर्थः । (तद्विषयान्तर्गतमिति) ज्ञानान्तर्गतत्वोक्त्या विषयान्तर्गतत्वं लक्ष्यत इति भावः । ( सर्वमितिशेष इति ) सर्वज्ञानविषयभूतवस्तुजातं

अथोच्येत– एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः अयमर्थः,– निर्विशेषवस्तुमात्रमेव सत्यम्, अन्यदसत्यमिति । न तर्हि 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' इति श्रूयेत; येन श्रुतेनाश्रुतमपि श्रुतं भवतीति ह्यस्य वाक्यस्यार्थः । कारणतयोपलक्षितनिर्विशेषवस्तुमात्रस्यैव सद्भावश्चेत्प्रतिज्ञातः, "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातम्" इति दृष्टान्तोऽपि न घटते । मृत्पिण्डविज्ञानेन हि तद्विकारस्य ज्ञातता निदर्शिता । तत्रापि विकारस्यासत्यताभि-

* श्रुतप्रकाशिका *

देकविज्ञानेन सर्वविज्ञानमुपपद्यते, ज्ञातत्वसर्वत्वे ह्येकाश्रयवर्तिनी, न हि ज्ञातत्वविशिष्टाकारेण सर्वत्वम्, सर्वत्वविशिष्टाकारेण ज्ञातत्वं वा, प्रागेवायं मया ज्ञात इत्यपि हि धर्मिमात्रस्यैव ज्ञातत्वम् , न त्वेतदवस्थाविशेषविशिष्टस्य, देशकालादिभेदात् । न हि पूर्वमेतत्कालादिविशिष्टतया ज्ञातत्वम् . ब्रह्मैकमेव सत्यमिति ज्ञाते अन्यन्मिथ्यात्वेन ज्ञातं स्यादिति शङ्कते ( अथोच्येतेति ) परिहरति ( न तर्हीति ) सर्वं मिथ्यात्वेन ज्ञातं भवतीति वा सर्वं निवृत्तं भवतीति वा श्रूयेतेत्यर्थः । एवञ्चार्थे सति मिथ्यात्वेनेतिपदस्याध्याहारः , धर्म्यन्तरविषयतया ज्ञानशब्दयोर्वैरूप्यम् , स्वरसतः प्राप्तं हि ज्ञानैकरूप्यम् , तच्च भज्यते, ज्ञातं भवतीति ज्ञातृज्ञेयतदवच्छिन्नज्ञानाभावान्निवृत्तिलक्षणा चेति दोषत्रयमभिप्रेतम्, श्रूयमाणान्वयप्रकारस्य परविरुद्धतामाह ( येनेति ) एवं प्रतिज्ञावाक्यास्वारस्यमुक्तम् । अथ दृष्टान्तवाक्याननुगुणत्वमाह ( कारणतयेति ) अघटितत्वमुपपादयति ( मृत्पिण्डेति ) न हि शुक्तिज्ञानाद्रजतनिवृत्तिवत्मृत्पिण्डज्ञानात् घटादिनिवृत्तिर्निदर्शितेति भावः । दृष्टान्ताविरोधं शङ्कते ( तत्रापीति ) प्रसिद्धवदुपन्यासानुपपत्त्या दूषयति

७ भावप्रकाशिका ७

सर्वं यद्येकज्ञानविषयान्तर्गतमित्यर्थः । ( न हि ज्ञातत्वविशिष्टाकारेणेति ) एकत्वा-

प्रेतेति चेत्; मृद्विकारस्य रज्जुसर्पादिवदसत्यत्वं शुश्रूषोरसिद्धमिति प्रतिज्ञातार्थसम्भावनाप्रदर्शनाय [1]'यथा सोम्य 'इति प्रसिद्धवदुपन्यासो न युज्यते। न च तत्त्वमस्यादिवाक्यजन्यज्ञानोत्पत्तेः प्राग्विकारजातस्यासत्यतामापादयत्तर्कानुगृहीतमननुगृहीतं वा प्रमाणमुपलभामह इति । अयमर्थः [2]" तदनन्यत्वमारम्भणशब्दादिभ्यः " इत्यत्र वक्ष्यते । तथा [3]" सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' [4]'तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत' [5]" हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' [6]' सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः– एतदात्म्यमिदं सर्वम् " इत्यादिनाऽस्य जगतः सदात्मकता, सृष्टेः पूर्वकाले नामरूपविभागप्रहाणम्, जगदुत्पत्तौ सच्छब्दवाच्यस्य ब्रह्मणः स्वव्यतिरिक्तनिमित्तान्तरानपेक्षत्वम्, सृष्टिकाले अहमेवानन्तस्थिरत्रसरूपेण 'बहु स्याम् ' इत्यनन्यसाधारण-

---

* श्रुतप्रकाशिका *

( मृद्विकारस्येति ) मृद्विकारासत्यत्वमनुमानादिनाऽवगतमित्यत्राह ( न चेति ) अननुगृहीतमिति ज्वालैक्यबुद्धिवदापातप्रतीतिमात्रजनकं विवक्षितम् । उपरितनवाक्यापर्यालोचनां दर्शयति ( तथेति ) सदायतनत्वफलितं स्वप्रवर्त्यत्वं

* भावप्रकाशिका *

वस्थस्यैव सर्वत्वाभावादिति भावः । ( सर्वत्वविशिष्टाकारेणेति ) सर्वत्व-

---

[1] छां. ६-१ ॥ [2] शारी. २-१-१५ ॥ [3] छां. ६-२-१ ॥
[4] छां. ६-२-३ ॥ [5] छां. ६-३-२ ॥ [6] छां ६-३-२

सङ्कल्पविशेषः, यथासङ्कल्पमनन्तविचित्रतत्त्वानां विलक्षणक्रमविशेषविशिष्टा सृष्टिः समस्तेष्वचेतनेषु वस्तुषु स्वात्मकजीवानुप्रवेशेनैवानन्तनामरूपव्याकरणम्, स्वव्यतिरिक्तस्य समस्तस्य स्वमूलत्वम्, स्वायतनत्वम्, स्वप्रवर्त्यत्वम्, स्वेनैव जीवनम्, स्वप्रतिष्ठत्वमित्याद्यनन्तविशेषाः शास्त्रैकसमधिगम्याः प्रतिपादिताः। तत्सम्बन्धितया प्रकरणान्तरेष्वप्यपहतपाप्मत्वादिनिरस्तनिखिलदोषतासर्वज्ञतासर्वेश्वरत्वसत्यकामत्वसत्यसङ्कल्पत्वसर्वानन्दकरणनिरतिशयानन्दयोगादयः सकलेतरप्रामाणाविषयाः सहस्रशः प्रतिपादिताः। एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतब्रह्मपरामर्शितच्छब्दस्य निर्विशेषवस्तुमात्रोपदेशपरत्वमसङ्गतत्वेनोन्मत्तप्रलपितायेत। त्वंपदञ्च संसारित्वविशिष्टजीववाचि। तस्यापि निर्वि-

* श्रुतप्रकाशिका *

स्वेनैव जीवनञ्च, प्रशासनेन हि धारणम्, धृत्या च तज्जीवनम्। निषेधाय गुणानुवाद इति शङ्काया व्युदासायाह (शास्त्रैकेति) न हि विधेरनुवादित्वमिति भावः। श्रुत्यन्तरापर्यालोचनां दर्शयति (तत्सम्बन्धितया प्रकरणान्तरेष्वपीति) अपहतपाप्मत्वादिरूपा निरस्तनिखिलदोषतेत्यर्थः। अपूर्वतालक्षणं गुणेषु तात्पर्यलिङ्गं दर्शयितुं सकलेतरप्रमाणाविषया इत्युक्तम्। ततः किमित्याकाङ्क्षां पूरयन् पदद्वयपर्यालोचनाभावं दर्शयति (एवमिति) एवमनन्यगोचरानन्तविशेषविशिष्टप्रकृतेत्यनेन प्राकरणिकवाक्यविरोधो विवक्षितः। प्रकृतब्रह्मपरामर्शितच्छब्दस्येत्यनेन यत्र क्वापि प्रकृताकारविशिष्टपरामर्शितया तच्छब्दव्युत्पत्तिविरोध उक्तः। त्वंपदस्यापि वस्तुमात्रपरत्वे मुख्यार्थप्रहाणमाह (त्वंपदञ्चेति) स्वाभि-

७ भावप्रकाशिका ७

रूपविशेषणस्य ज्ञातत्वादिति भावः। एतत्कालादिविशिष्टतया ज्ञातत्वमितिच्छेदः॥

शेषस्वरूपोपस्थापनपरत्वे स्वार्थः परित्यक्तः स्यात् । निर्विशेषप्रकाशस्वरूपस्य च वस्तुनो ह्यविद्यया तिरोधानं स्वरूपनाशप्रसङ्गादिभिर्न सम्भवतीति पूर्वमेवोक्तम् । एवञ्च सति समानाधिकरणवृत्तयोस्तत्त्वमिति द्वयोरपि पदयोर्मुख्यार्थपरित्यागेन लक्षणा च समाश्रयणीया ॥

अथोच्येत— समानाधिकरणवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे तात्पर्य्यासम्भवादेव विशेषणनिवृत्तेर्वस्तुमात्रैकत्वप्रतिपादनान्न लक्षणाप्र-

* श्रुतप्रकाशिका *

मुखश्चेतनस्त्वंशब्दार्थः । आभिमुख्यं च स्ववाक्यबोध्यत्वम् , बोध्यत्वं चाज्ञस्य संसारिणस्स्वतः प्राप्तमिति भावः । तस्माद्बोधनार्हतोपयोग्याकारविशिष्टस्त्वमर्थः, अतस्स परित्यक्तो भवति । प्रमाणतर्कापर्यालोचना पूर्वोक्तेत्याह ( निर्विशेषेति ) पदद्वयनिमित्तप्रहाणे निर्विशेषत्वस्य बुद्धिस्थत्वात्तदनुपपत्तिरूपतर्कापर्यालोचनं दर्शितम् । सामानाधिकरण्यबलान्निर्विशेषवस्त्वभ्युपगम इति शङ्कायां पदद्वयलक्षणालक्षणं दूषणमाह ( एवञ्चेति ) एवञ्च सति- निर्विशेषस्वरूपोपस्थापनपरत्वे मुख्यार्थसम्बन्धितया वस्तुमात्रावबोधनेऽभ्युपगते लक्षणास्वीकार इत्यर्थः ॥

अथ परमतमुपन्यस्यति (अथोच्यतेति) समानाधिकरणवृत्तानामितिग्रन्थः पक्षविषयसङ्ग्रहरूपः । ( विशेषणांशे तात्पर्य्यासम्भवादिति ) अन्यथा विशेषणबहुत्वादेकार्थत्वासिद्धेरिति भावः । पूर्वमप्युक्तादेवेत्येवकाराभिप्रायः । प्रथमसूत्रे हि बहुश उक्तः । यद्वा अन्यनैरपेक्ष्यपर एवकारः ( न लक्षणाप्रसङ्ग इति ) वाच्य-

* भावप्रकाशिका *

समानाधिकरणवृत्तानामित्यादेस्सोयं देवदत्त इति समानाधिकरणवाक्यपर्यवसानं प्रतीयते . तावन्मात्रपर्यवसाने तत्त्वमसीत्यादिपक्षविषयग्रन्थस्य कस्याप्यभावात् प्रकृतानुपयोगमाशङ्क्याह ( पक्षविषयसङ्ग्रहरूप इति ) ततश्च नील-

सङ्गः । यथा 'नीलमुत्पलम्' इति पदद्वयस्य विशेष्यैकत्वप्रतिपादनपरत्वेन नीलत्वोत्पलत्वरूपविशेषणद्वयं न विवक्ष्यते । तद्विवक्षायां हि नीलत्वविशिष्टाकारेणोत्पलत्वविशिष्टाकारस्यैकत्वप्रतिपादनं प्रसज्येत । तत्तु न सम्भवति । न हि नैल्यविशिष्टाकारेण तद्वस्तूत्पलपदेन विशेष्यते, जातिगुणयोरन्योन्यसमवायप्रसङ्गात्. अतो नीलत्वोत्पलत्वोपलक्षितव-

* श्रुतप्रकाशिका *

बहिर्भूतप्रतिपादनादिति भावः । एवं पक्षद्विषये सङ्क्षेपेणोक्तमर्थमुपपादयति ( यथेत्यादिना ) तत्र महाभाष्योक्तेऽप्युदाहरणे विशेषणांशे तात्पर्यासम्भवं सिद्धं कृत्वा उदाहृतः । कथं तत्र विशेषणांशाविवक्षेत्यत्राह ( तद्विवक्षायामिति ) प्रसक्तस्यानिष्टतां दर्शयति ( तत्त्विति ) युगपदभिधाने उद्देश्योपादेयविभागहानिप्रसङ्गात् पदद्वयप्रकृत्युपस्थापितविशिष्टैक्ये समानविभक्त्या प्रतिपाद्यमाने विशेष्यांशस्येव विशेषणभूतजातिगुणांशयोरप्यैक्यप्रसङ्गाच्च क्रमेणाभिधानपक्षोऽभ्युपगन्तव्य इति हृदि निधायाह ( न हीति ) क्रमपक्षेऽपि पूर्वपदप्रतिपन्नाकारविशिष्टस्य पदान्तरप्रतिपन्नाकारविशिष्टवस्तुतादात्म्यं किं समानविभक्त्या बोध्यम् ? उत पूर्वपदप्रतिपन्ने विशिष्टे विशेषणान्तरान्वय ? इति विकल्पमभिप्रेत्य प्रथमे विशेषणभूतजातिगुणयोरप्यैक्यप्रसङ्गं सिद्धं बुद्ध्वा द्वितीये शिरस्यन्योन्यसमवायप्रसङ्गमाह ( जातिगुणयोरिति ) तात्पर्यबहिष्ठस्यापि विशेषणस्योपयोगं दर्शयन् फलितमाह ( अत इति ) नीलोत्पलमित्यत्र विशेषणान्वये स्फुटेपि तात्पर्याभाव उक्तः,

* भावप्रकाशिका *

मुत्पलमित्यादिग्रन्थस्य पक्षविषयसङ्ग्रहविधिविस्ताररूपत्वात्पौनरुक्त्यशङ्कापि परिहृता भवतीति भावः । भाष्ये—नहि नैल्यविशिष्टाकारेणेति । इदमुपलक्षणम्, नहि उत्पलत्वविशिष्टाकारेण तद्वस्तुनैल्येन विशेष्यते. जातिगुणयोरन्योन्यसमवायप्रसङ्गादित्युत्तरभाष्यानुसारादिति द्रष्टव्यम् । ( विशेषणान्वये स्फुटेपीति) विशेषणान्वयेऽस्फुटतात्पर्याभावमुदाहरणमुक्त्वा स्फुटतात्पर्याभावमुदाहरणान्तर-

स्त्वैकत्वमात्रं सामानाधिकरण्येन प्रतिपाद्यते। तथा "सोऽयं देवदत्तः" इत्यतीतकालविप्रकृष्टदेशविशिष्टस्य तेनैव रूपेण सन्निहितदेशवर्त्तमानकालविशिष्टतया प्रतिपादनानुपपत्तेरुभयदेशकालोपलक्षितस्वरूपमात्रैक्यं सामानाधिकरण्येन प्रतिपाद्यते। यद्यपि नीलमित्याद्येकपदश्रवणे प्रतीयमानं विशेषणं सामानाधिकरण्यवेलायां विरोधान्न प्रतिपाद्यते। तथापि वाच्येऽर्थे प्रधानांशस्य प्रतिपादनान्न लक्षणा, अपि तु विशेषणांशस्याविवक्षामात्रम्। सर्वत्र सामानाधिकर-

* श्रुतप्रकाशिका *

तत्र विशेषणानन्वयस्यास्फुटत्वाद्विशेषणान्वये स्पष्टतात्पर्याभावमुदाहरणान्तरं दर्शयति (तथेति) विशिष्टवाचिनश्शब्दस्य विशिष्टपरित्यागेन विशिष्टैकदेशतया तत्सम्बन्धिनि विशेष्यस्वरूपमात्रे वृत्तिर्लक्षणैव स्यादित्यत्राह (यद्यपीति) परिहरति (तथापीति) वाच्येऽर्थे–न हि शक्तिविषयाद्विशिष्टाद्बहिर्भूतं विशेष्यमिति भावः। (प्रधानांशस्येति) तात्पर्यविषयतया धर्मितया च प्रधानस्य विशेष्यांशस्यावर्जनादप्रधानविशेषणत्यागेऽप्यङ्गुल्यादिविकले पुरुषशब्दस्येव न लक्षणेति भावः। मुख्यार्थत्वे तुल्येऽपि विशिष्टप्रतिपादनदशातो वैलक्षण्यं दर्शयति (अपि त्विति) (अविवक्षामात्रमिति) अशक्ये कचिद्व्यापाराभावात् व्यापारविषयांशेऽपि न ह्यशक्तिरिति भावः। पूर्वं पक्षे लक्षणाभाव उक्तः, इदानीं सपक्षे विशदीकृतो भवति। विशेषणाविवक्षायामस्वारस्यं स्यादित्यत्राह (सर्वत्रेति)

ঙ্গ भावप्रकाशिका ঙ্গ

माहेति पर्यवसितोऽर्थः। (तत्र विशेषणान्वयस्यास्फुटत्वादिति) एकस्मिन्नीलत्वदशायामेव उत्पलत्वान्वयादिति भावः। (अशक्ये कचिद्व्यापाराभावादिति) अशक्यविषयकव्यापारस्यैव लक्षणात्वात्, प्रकृते च तदभावान्न लक्षणेति भावः। अशक्यव्यापाराभावमेवोपपादयति (व्यापारविषयांशेपीति) शक्ये

ण्यस्यैष एव स्वभाव इति न कश्चिद्दोष इति । तदिदमसारम्; सर्वेष्वेव वाक्येषु पदानां व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रं प्रत्याय्यम्, तत्र समानाधिकरणवृत्तानामपि नीलादिपदानां नैल्यादिविशिष्ट एवार्थो व्युत्पत्तिसिद्धः पदान्तरार्थसंसृष्टो ऽभिधीयते । यथा

* श्रुतप्रकाशिका *

सामानाधिकरण्यव्युत्पत्तेरीदृशत्वान्नास्वारस्यम्, व्युत्पत्त्यननुरोधे सति ह्यस्वारस्यम्, अत ऐकार्थ्यव्युत्पत्तिविरोधिविशेषणविवक्षायामेवास्वारस्यमिति भावः। इमं पूर्वपक्षं प्रतिक्षिपति ( तदिदमसारमिति ) प्रथमं चरमोक्ततया बुद्धिस्थं व्युत्पत्त्यन्तराश्रयणं निरस्यति ( सर्वेष्वेवेति ) सर्वेषु–समानाधिकरणेषु व्यधिकरणेषु च वाक्येष्वित्यर्थः । गामानय गां बधानेत्यादिव्यधिकरणवाक्येषु, न हि प्रतिवाक्यं पदानामर्थभेदव्युत्पत्तिकल्पनम् " क्लृप्तकल्प्यविरोधे तु युक्तः क्लृप्तपरिग्रहः" इति न्यायेन क्लृप्तव्युत्पत्त्यैव स्वार्थबोधनसम्भवे व्युत्पत्त्यन्तरकल्पनानुपपत्तेः, तथा समानाधिकरणवाक्येष्वपि न पदानां व्युत्पत्त्यन्तरं प्रवृत्तिनिमित्ताविशिष्टार्थविषयं कल्पनीयमिति भावः । व्युत्पत्त्यन्तराभावेऽपि वाक्यानां परस्परवैषम्यसम्भवोपपादनपरं व्युत्पत्तिसिद्धार्थसंसर्गविशेषमात्रमितिपदम् । व्युत्पत्तिसिद्धार्थसंसर्गविशेषाद्वाक्यवैषम्यम्, न तु प्रकृत्यंशस्य व्युत्पत्त्यनवगतार्थान्तरकल्पनादित्यभिप्रायः । एवं सर्ववाक्यसाधारणं रूपमुक्तम्, अनेन समानाधिकरणवाक्येषु फलितमर्थमाह ( तत्रेति ) तत्र–तेषु वाक्येषु । समानाधिकरणपदानां विशिष्टैकार्थप्रतीतिहेतुत्वमुदाहरणेन दर्शयति ( यथेति ) प्रत्यक्षविषयं परोक्षविषयञ्च उदाहरणद्वयम्, अत एव ह्यानीयते प्रतीयत इत्युक्तम्, कारकवि-

ॐ भावप्रकाशिका ॐ

व्यापाराभावादितिपाठे–शक्यैकदेशे क्वचिद्व्यापाराभावमात्रेण न शक्यांशेपि लक्षणेत्यर्थः । ननु नीलमुत्पलमानयेत्यत्र उत्पले नीलत्ववैशिष्ट्यप्रतीतिः न समानाधिकरणवाक्यायत्ता. अपितु प्रत्यक्षादेवेतिशङ्कां व्युदासितुं भाष्यकृता विन्ध्याटव्यामिति परोक्षोदाहरणमुपन्यस्तमित्याभिप्रयन्नाह ( प्रत्यक्षविषयं परो-

नीलमुत्पलमानयेत्युक्ते नीलिमादिविशिष्टमेवानीयते; यथा च 'विन्ध्याटव्यां मदमुदितो मातङ्गगणस्तिष्ठति' इति पदद्वयावगतविशेषणविशिष्ट एवार्थः प्रतीयते;

* श्रुतप्रकाशिका *

भक्त्यन्तत्वं न सामानाधिकरण्यविरोधीत्यभिप्रायेण नीलमुत्पलमानयेत्युक्तम् । ( नीलिमादिविशिष्टमेवानीयत इति ) समानाधिकरणपदसमुदायो वस्तुमात्रप्रत्यायकश्चेद्वस्तुमात्रत्वाविशेषादनीलमप्यानीयेतेत्यभिप्रायः । किञ्च समानाधिकरणपदानां विशेषणपरित्यागे को हेतुः? समानविभक्त्यावगतमैक्यमिति चेन्न; प्रातिपदिकावगतविशेषणान्वयबलात्समानविभक्तिरैक्यं न प्रतिपादयेत्, तदेव युक्तं विभक्त्यर्थादपि प्रातिपदिकार्थप्राधान्यात्, "अदितिः पाशान्" "गृहं सम्मार्ष्टि" इत्यादिषु हि विभक्त्यर्थोऽनादृतः, ऐक्यविषयप्रयोगदर्शनादैक्यविषयमिति चेत्; विशेषणान्वयेऽपि प्रयोगदर्शनाद्विशेषणान्वयमपि प्रतिपादयति । शाब्दप्रतीतिर्वस्तुमात्रस्यैव, विशेषणान्वयस्तु प्रत्यक्षबलात्स्वीक्रियते, प्रत्यक्षागोचरे तु यथाशब्दं न विशेषणप्रतीतिरिति चेन्न, विशेषणान्वयश्शाब्दप्रतीतिविषयः, ऐक्यन्तु प्रत्यक्षबलादङ्गीक्रियत इति किं न स्यात् । प्रत्यक्षागोचरेऽपि देवदत्तः श्यामो युवेत्यादिप्रयोगेष्वैक्यधीदर्शनादैक्यं शब्दप्रतीतिविषय इति चेत् तत्रैव परोक्षविषयप्रयोगे विशेषणान्वयस्यापि प्रतीतेर्विशेषणान्वयः शाब्द एव, न प्रत्यक्षसिद्ध इति । इत्थं प्रत्यक्षपरोक्षविभागरहितं समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थबोधकत्वं दृश्यत इति चरमपर्वाभिप्रायेणोदाहरणद्वयं दर्शितम्, तस्मात् "य एव लौकिकास्त एव वैदिकाः" इति लोकवेदाधिकरणन्यायेन वेदान्तवाक्येष्वपि पदद्वयावगतविशेषणापरित्यागेनैवार्थः' प्रतिपत्तव्य इत्याह

छ भावप्रकाशिका छ

क्षविषयश्चेतीति ) (अत एव ह्यनीयते प्रतीयत इत्युक्तमिति ) ननु नीलमुत्पलमानयेतिवाक्ये आनयेत्युक्त्या आनीयत इतिवक्तुमुचितत्वात्तथोक्तम्, न तु प्रत्यक्षत्वस्फोरणार्थमिति चेन्न; शब्दजन्यप्रतीत्याकारस्यैवोपन्यसनीयतया आनयनपर्यन्तोपन्यासस्य तदभिप्रायकत्वादिति भावः । ( विभक्त्यर्थोऽनादृत इति ) न तु प्रकृत्यर्थ इति भावः । अत एव 'संस्काराद्वा गुणानामव्यवस्था स्यात्'

एवं वेदान्तवाक्येष्वपि समानाधिकरणनिर्देशेषु तत्तद्विशेषणविशिष्टमेव ब्रह्म प्रतिपत्तव्यम् । न च विशेषणविवक्षायामितरविशिष्टाकारं वस्त्वन्येन विशेष्टव्यम्, अपि तु सर्वैर्विशेषणैः स्वरूपमेव विशेष्यम् । तथा हि 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति । अन्वयेन निवृत्त्या वा पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततया तस्यैव वस्तुनः पदान्तरप्रतिपाद्यत्वं सामानाधिकरण्यकार्य्यम् । यथा 'देवदत्तः श्यामो युवा लोहिताक्षोऽदीनो ऽकु-

* श्रुतप्रकाशिका *

( एवं वेदान्तेति ) अन्योन्यसमवायप्रसङ्गं परिहरति ( न चेति ) अरुणाधिकरणे विस्तरेण परिहारो वक्ष्यत इत्यत्र संक्षिप्तः, न हि यथाऽनुपपत्तिः स्यात् तथा वक्तव्यमिति भावः । युगपदभिधानं हृदि निधाय सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमित्युक्तम्, सर्वविशेषणैः । स्वरूपस्य विशेष्यत्वेऽनुगुणं सामानाधिकरण्यलक्षणमित्याह ( तथा हीति ) न हि विशेषणान्तरविशिष्टाकारे विशेषणान्तरान्वयप्रतिपादनं सामानाधिकरण्यमित्युक्तमित्यर्थः । सामानाधिकरण्यलक्षणग्रन्थं विवृणोति ( अन्वयेन निवृत्त्या वेति ) अन्वयरूपार्थस्य व्यावृत्तिरूपार्थत्वं न कल्प्यम् , यथा व्युत्पत्त्यन्वयमुखेन व्यावृत्तिमुखेन वा वस्तुनः पदान्तरप्रतिपाद्याकारादाकारान्तरयुक्ततापतिपादनं समानाधिकरणपदसमुदायकार्यमित्यर्थः । तत्रोदाहरति ( यथेति ) अन्वयमुखेनानेकप्रवृत्तिनिमित्तवैशिष्ट्योदाहरणं श्यामो युवेति । व्यतिरेकमुखेनानेकाकारान्वयोदाहरणम् अदीन इत्यादि; दीनत्वम्—अभा-

* भावप्रकाशिका *

इत्यधिकरणे ग्रहैकत्ववत् प्रातिपदिकार्थग्रहत्वस्याप्यविवक्षामाशङ्क्य प्रातिपदिकार्थो विवक्षा कारणाभावाद्विवक्षितमिति सिद्धान्तितमिति भावः । ( व्यावृत्तिरूपार्थत्वं न कल्प्यमिति ) ततश्च सत्यज्ञानादिवाक्ये सत्यादिशब्दस्यानृतादि-

पणोऽनवद्यः' इति । यत्र त्वेकस्मिन् वस्तुनि समन्व-

* श्रुतप्रकाशिका *

त्वरमनस्कत्वम् । कृपणत्वम्—निर्धनत्वम् । अत्रायमर्थः, क्रमेणाभिधाने व्यधिकरण-वाक्येष्वपि करणकारकविशिष्टेऽधिकरणकारकान्वयः स्यात्, तद्विशिष्टे इतरकार-कान्वयो वा प्रसजेदित्यन्योन्यविशेषणविशेष्यभावचोद्यं व्यधिकरणवाक्येऽपि समा-नम् । तत्र यः परिहारस्स एवात्रापि, तथापि "पदजातं श्रुतं सर्वं स्मारितानन्विता-र्थकम् । न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधकम् ॥" इत्युक्तप्रकारेण स्मरण-दशायां सर्वैः पदैः पृथक् पृथक् स्वार्थस्मरणान्न विशेषणानामन्योन्य-समवायप्रसङ्गः, परामर्शदशायां चोपपन्नं भवति यथा तथा परामर्शान्नायं प्रसङ्गः । पश्चाद्युगपत्सर्वैः पदैर्वाक्यार्थबोधनान्न मिथस्समवायप्रसङ्गः, तस्मात्समानाधि-करणपदैर्युगपत्तत्तत्प्रवृत्तिनिमित्तविशिष्टैकविशेष्यप्रतिपादनेन क्रमाभावान्नान्यो-न्यसमवाय इति । सर्वैर्विशेषणैः स्वरूपमेव विशेष्यमिति ग्रन्थे अयमर्थोऽभिप्रेतः, अत्र सामानाधिकरण्यलक्षणग्रन्थोपादानेन अन्यदपि चोद्यं परिहृतं भवति, युगपदभिधाने विशिष्टयोरैक्यं समानविभक्तिः प्रतिपादयतीति विशिष्टैक्यवत् विशेषणैक्यमपि स्यादिति चोद्यम् । अत्र परिहारः, 'एकस्मिन्नर्थे वृत्तिस्सामाना-धिकरण्यम्' इति समानविभक्त्या विशेष्यस्यैवैक्यप्रतिपादनान्न विशेषणैक्यमिति । ननु विशेषणे विशेष्ये चाविशेषेण प्रातिपदिकेनावगते सति समानविभक्ति-र्विशेष्यमात्रैक्यपरा, न तु विशेषणैक्यपरेति किं नियामकमिति चेत्; समान-विभक्तिरैक्यबोधिका, न तु भेदबोधिकेति किं नियामकम्? व्युत्पत्तिरिति चेत् साऽत्रापि तुल्या । किञ्च पदान्तरासमानाधिकृते घट इतिपदे प्रयुक्ते तत्स्था विभक्तिः प्रातिपदिकावगतानां विशेषणविशेष्यतत्सम्बन्धानामैक्यं न प्रतिपाद-यति विशेष्यमात्रैक्यमेव प्रतिपादयतीति किं नियामकम्? प्रत्यक्षमूला हि व्युत्पत्तिः, प्रत्यक्षञ्च विशेष्यमात्रैक्यं दर्शयति, न तु विशेषणविशेष्यतत्सम्बन्धाना-मैक्यम्, अतः प्रत्यक्षमूला व्युत्पत्तिर्नियामिकेति चेत्, सैवाऽत्रापि नियामिकेति तुल्यमिति । एवं सर्वत्र व्युत्पत्तिसिद्धोऽर्थ एव स्वीकार्यश्चेन्न क्वचिदपि वृत्त्यन्तर-कल्पनं व्युत्पत्त्यन्तरकल्पनं वा स्यादित्यत्राह ( यत्र त्विति ) विशेषणद्वयमिति त्रित्वादेरप्युपलक्षणम्, व्युत्पत्तिसिद्धार्थस्वीकार एव सर्वत्र स्वतः प्राप्तः, तस्य प्रमाण-

यायोग्यं विशेषणद्वयं समानाधिकरणपदनिर्दिष्टम्, तत्राप्यन्यतरत्पदममुख्यवृत्तमाश्रीयते, न द्वयम्; यथा 'गौर्वाहीकः' इति। नीलोत्पलादिषु तु विशेषणद्वयान्वयाविरोधादेकमेवोभयविशिष्टं प्रतिपाद्यते॥ अथ मनुषे- एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षणमिति

* श्रुतप्रकाशिका *

विरोधादन्वययोग्यत्वे सति वृत्त्यन्तरकल्पनं प्राप्तम्, तदसम्भवे व्युत्पत्त्यन्तरकल्पनम्, गोशब्दस्य किरणवाचित्वे वृत्त्यन्तराभावाद्धि शक्तिकल्पनम्, यदा वृत्त्यन्तरकल्पनं तदानीमप्यन्यतरपदस्यामुख्यत्वकल्पनम्, तावतैव विरोधशमनात्, न पुनस्सर्वेषां पदानाम्, तात्पर्यनिश्चायकाभावप्रसङ्गात्। +गौर्वाहीक इति प्रयोगे गोपदस्यैव ह्यमुख्यत्वम्, न तु वाहीकपदस्यापि. अन्यतरपदस्य वृत्त्यन्तरकल्पनेऽपि न निर्विशेषवस्तुपरत्वम्, मुख्यवृत्त्युपनीतविशेषणानन्वयेऽपि वृत्त्यन्तरोपनीतविशेषणान्वयादित्यभिप्रायः। नीलोत्पलादिवाक्येषु वृत्त्यन्तरकल्पनहेतुरेव नास्तीत्याह (नीलेति) विशेषणभेदेन विशेष्यभेदं शङ्कते (अथ मनुष इति) विशेषणप्रतिसम्बन्धित्वम्- विशेषणविशिष्टता। एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणमिति भावप्रधाननिर्देशः। निरूप्यमाणत्वं विवक्षितम्। एकविशेषणप्रतिसम्बन्धित्वं विशेषणान्तरप्रतिसम्बान्धित्वात् विलक्षणमित्यर्थः। यद्वा एकविशेषणप्रतिसम्बन्धित्वेन निरूप्यमाणं वस्तु विशेषणान्तरप्रतिसम्बन्धित्वाद्धेतोस्त-

ᗄ भावप्रकाशिका ᗄ

व्यावृत्तिपरत्वकल्पनं परस्यानुपपन्नमिति भावः। (तदसंभवे व्युत्पत्त्यन्तरकल्पनमिति) शक्त्यन्तरकल्पनमित्यर्थः। अनन्यलभ्यस्यैव शब्दार्थतया लक्षणादिलभ्ये शक्तेरकल्पनीयत्वात्, अत एव गङ्गापदस्य न तीरे शक्तिः कल्प्यते, सैन्धवादौ तु शक्यसम्बन्धाभावान्नानाशक्तिमत्त्वमभ्युपेयत इति भावः। (बाह्लीक इति) बाह्लीको नाम देशविशेषः। तत्स्थो जनो गोसदृश इत्यर्थः। (विशेषणान्तरप्रतिसम्बन्धित्वाद्विलक्षण-

+ गौर्बाह्लीक इत्यपि पाठः क्वाचित्कः॥

घटपटयोरिवैकविभक्तिनिर्देशेऽप्यैक्यप्रतिपादनासम्भवात्समानाधिकरणशब्दस्य न विशिष्टप्रतिपानपरत्वम्, अपि तु विशेषणमुखेन स्वरूपमुपस्थाप्य तदैक्यप्रतिपादनपरत्वमेवेति ॥ स्यादेतदेवम्; यदि विशेषणद्वयप्रतिसम्बन्धित्वमात्रमेवैक्यं निरुन्ध्यात् । न चैतदस्ति; एकस्मिन् धर्मिण्युपसंहर्तुमयोग्यधर्मद्वयविशिष्टत्वमेव ह्येकत्वं निरुणद्धि । अयोग्यता च प्रमाणा-

श्रुतप्रकाशिका *

साद्विशेषणान्तरविशेष्यात्पदार्थाद्भिलक्षणमित्यर्थः । विशेषणप्रतिसम्बन्धित्वभेदाद्विशेष्यस्वरूपभेदं निदर्शयति ( घटपटयोरिवेति ) यथा घटत्वविशिष्टतायाः पटत्वविशिष्टतायाश्च भेदेन तद्विशिष्टयोर्घटपटयोर्विशेष्ययोर्भेदः तथा विशेषणान्तरान्वयस्यान्यविशेषणान्वयस्य च भेदेन तद्विशेष्ययोश्च भेदः समानविभक्तिनिर्देशे सत्यप्यवर्जनीय इति सामानाधिकरण्यं न विशिष्टैक्यप्रतिपादनक्षममित्यर्थः । ( न विशिष्टप्रतिपादनपरत्वमिति ) विशेषणान्वयप्रतीतेरवर्जनीयत्वेऽपि न तत्र तात्पर्यमिति भावः । विशेषणत्यागे तत्प्रतिसम्बन्धिविशेष्योपस्थापनायोगात्तदैक्यमपि दुष्प्रतिपादमित्यत्राह ( अपि त्विति ) तात्पर्याविषयस्यापि विशेषणस्य परामर्शदशाप्रतीतिमात्रेण तद्विशेष्यप्रतीतिसिद्धेस्तदैक्यप्रतिपादनं सम्भवतीत्यर्थः ॥ परिहरति ( स्यादेतदिति ) यत्रायोग्यत्वमभ्युपगतं तत्रापि विशेषणत्वमेव अयोग्यत्वे प्रयोजकम्, अतो नीलत्वादिविशेषणमपि विरुद्धं स्यादित्यत्राह ( अयोग्यता चेति ) ( प्रमाणान्तरसिद्धेति ) न पुनर्विशेषणत्वप्रयुक्तमयोग्यत्वमिति भावः । प्रमाणान्तरमपि घटत्वपटत्वयोर्भिन्नाधि-

७ भावप्रकाशिका ७

मित्यर्थ इति ) विशेषणान्तरसम्बन्धित्वाद्व्यधिकरणमित्यर्थः । तेन धर्मवैलक्षण्येऽपि धर्मिभेदासिद्धेः नेदं परानिष्टमिति चोद्यं परास्तमिति वेदितव्यम् । केचित्तु विशेषणान्तरप्रतिसम्बन्धित्वादिति भाष्यस्य विशेषणान्तरेण प्रतिसम्बन्धित्वं यस्य

न्तरसिद्धा घटत्वपटत्वयोः । 'नीलमुत्पलम्' इत्यादिषु तु दण्डित्वकुण्डलित्ववद्रूपवत्त्वरसवत्त्वगन्धवत्त्वादिवच्च विरोधो नोपलभ्यते । न केवलमविरोध एव; प्रवृत्तिनिमित्तभेदेनैकार्थनिष्ठत्वरूपं सामानाधिकरण्यमुपपादयत्येव धर्मद्वयविशिष्टताम् । अन्यथा स्वरूपमात्रैक्ये अनेकपदप्रवृत्तौ निमित्ताभावात्सामानाधिकरण्यमेव न स्यात् । विशेषणानां स्वसम्बन्धानादरेण

* श्रुतप्रकाशिका *

करणत्वलक्षणं विरोधमवगमयति, नीलत्वोत्पलत्वयोरपि स विरोधस्तुल्यः, षट्पदे कुमुदे च पृथग्दर्शनादित्यत्राह ( नीलमुत्पलमित्यादिष्विति ) न केवलं भिन्नाश्रयत्वमात्रं विरोधः, अपि तु तन्नियमः, न च नीलत्वोत्पलत्वयोस्तादृशविरोधः, क्वचित्सहप्रतीतत्वादिति भावः । ( दण्डित्वेति ) दण्डादिकं युतसिद्धम्, रूपादिकमयुतसिद्धम्, युतसिद्धत्वायुतसिद्धत्वादिविभागवद्विशेषणत्वमपि विरोधाप्रयोजकमिति भावः । यद्वा दण्डित्वादिकं परस्परपरिहारेण वर्तते, रूपं तु रसं परिहृत्य वर्तते, रसस्तु रूपं परिहृत्य न वर्त्तते, तत्र रूपापरिहारिणो रसस्य रूपस्य चाविरोधो दुरपन्हवः, क्वचित्सहोपलम्भात् । तथा परस्परपरिहारिणोरपि नीलत्वोत्पलत्वयोः क्वचित्सहोपलम्भादविरोध इत्यभिप्रायेणोदाहरणद्वयं दर्शितम् । अविरोधेऽपि विवक्षितैक्यानुपयोगाद्विशेषणाविवक्षेत्यत्राह ( न केवलमिति ) [अ]पर्याययोः पदयोरेकार्थवृत्तौ निमित्तसापेक्षत्वात्तेन विना तत्र वृत्त्ययोगाच्चात्यन्तोपयोगाद्विशेषणस्य विवक्षितत्वमित्यर्थः । उपपादकत्वमेव विपक्षे बाधदर्शनेन दृढयति । ( अन्यथेति ) अन्यथा—विशेषणत्यागे । उपलक्षणतया निमित्तत्वं स्यादित्यत्राह ( विशेषणानामिति ) अनादरः—तात्पर्याभावः । यथो-

ဖ भावप्रकाशिका ဖ

स विशेषणान्तरप्रतिसम्बन्धित्वः, विशेषणान्तरप्रतिसम्बन्धीति यावत् । एवञ्च न प्रथमपक्षवत् भावप्रधानत्वम्. न वा द्वितीयपक्षवदध्याहार इति वदन्ति । ( युतसिद्धत्वायुतसिद्धत्वादिविभागवदिति ) विशेषणत्वमेव विरोधप्रयोजकमिति वदतः युत-

वस्तुस्वरूपोपलक्षणपरत्वे सत्येकेनैव वस्तूपलक्षितमित्युपलक्षणान्तरमनर्थकमेव ; उपलक्षणान्तरोपलक्ष्याकारभेदाभ्युपगमे तेनाकारेण सविशेषत्वप्रसङ्गः। सोऽयं देवदत्त इत्यत्रापि लक्षणागन्धो न विद्यते, विरोधाभा-

* श्रुतप्रकाशिका *

पलक्षणभूतायां शाखायां न तात्पर्यम्, अपि तु चन्द्र एव तात्पर्यं तद्वदित्यर्थः । ननूपलक्षणान्तरवैयर्थ्यं तवापि प्रसजेत् , एकस्मिन्नुपलक्ष्ये जन्माद्यनेकोपलक्षणाभ्युपगमादित्यत्राह ( उपलक्षणान्तरेति ) अस्माभिस्तु जन्मादिभिरुपलक्षणैरुपलक्ष्यास्तदनुगुणज्ञानशक्त्याद्याकारभेदाः स्वीकृता इति न नैरर्थक्यमिति भावः । ( तेनाकारेणेति ) अन्ततो गत्वाऽप्यवर्जनीयं सविशेषत्वम्, एवञ्च सत्युपलक्ष्याकारान्तराभ्युपगमेन तस्योपलक्षणत्वाङ्गीकारादप्युपलक्षणतयाऽभिमतानामेव विशेषणत्वाङ्गीकारो वरमिति भावः । पूर्वं लक्षणाङ्गीकारपक्षेऽन्यतरपदामुख्यत्वादिदूषणान्युक्तानि। यत्तु वाच्ये प्रधानांशस्य प्रतिपादनान्न लक्षणेति, तत्रापि लक्षणा स्यादेव , द्वारभूतप्रवृत्तिनिमित्ताभावेन तद्द्वारकस्याभिधानस्यानुपपत्तेरिति, इदञ्च दूषणं प्रवृत्तौ निमित्ताभावादिति भाष्येण फलितम् । अथोभयपदविशेषणाविवक्षायामपि सामानाधिकरण्यं सोऽयं देवदत्त इत्यादिषु दृश्यत इति यदुक्तं तत्प्रतिवक्ति ( सोऽयमित्यादिना ) विरोधाभावात्— मुख्यार्थभूतविशेषणद्वयसम्बन्धे विरोधाभावात् । प्रथमं कालद्वयसम्बन्धविरोधाभावमुपपादयति

ध भावप्रकाशिका ध

सिद्धत्वादिविशेषणस्याननुगतत्वेन विरोधाप्रयोजकत्वस्य सिद्धतया सिद्धान्तीकरणं सम्भवतीति द्रष्टव्यम् । अन्यथेति व्याख्येयं पदम् । ( शाखायां न तात्पर्यमिति ) तत्रापि तात्पर्ये शाखा ऋजुप्रदेशावस्थानदशायामेव चन्द्रत्वं स्यात्, अतश्शाखोपलक्षितस्वरूपविशेषे चन्द्रत्व एव तात्पर्यमिति भावः ।( तद्द्वारकस्याभिधानस्यानुपपत्तेरिति ) शक्तिजन्यप्रतीतेश्शक्यतावच्छेदकप्रकारकत्वनियमादिति भावः । ननु सोयं देवदत्त इत्यत्र एकस्य द्वयमिति न्यायेन देशद्वयसम्बन्धस्य कालद्वयसम्बन्धस्य च परस्परानादरेण वस्तुनिष्ठतयैव प्रतीयमानत्वादन्यतरस्यान्यतरोपाधित्वं कथ-

वात् । देशान्तरसम्बन्धितयाऽतीतस्य सन्निहितदेश-सम्बन्धितया वर्त्तमानत्वाविरोधात्; अत एव हि सो-

* श्रुतप्रकाशिका *

( देशान्तरेति ) वस्तुविशेषणतया निर्दिष्टावपि देशान्तरसम्बन्धसन्निहितदेश-सम्बन्धावतीतवर्त्तमानकालोपाधितया विवक्षितौ, इदञ्च कालोपाध्यन्तराणामुप-लक्षणम्, अतीतवर्त्तमानशब्दौ अतीतवर्त्तमानकालसम्बन्धिपरौ. देशान्तरसम्बन्धि-तयाऽतीतस्य, देशान्तरसम्बन्धाद्युपाध्यवच्छिन्नातीतकालसम्बन्धिनः, सन्निहित-देशसम्बन्धाद्युपाधिमद्वर्त्तमानकालसम्बन्धाविरोधादित्यर्थः । अतीतत्वञ्चान्यापेक्षया विवक्षितम्, न तूभयकालानुगतवस्त्वपेक्षया, एतदुक्तं भवति; एकस्य कालद्वया-सम्बन्धं वदतोऽतीतत्ववर्त्तमानत्वविरोधो विवक्षितः, स किं प्रध्वस्तस्य वर्त्तमानत्व-विरोधो विवक्षितः ? स नास्ति, प्रध्वंसानभ्युपगमात् । यद्यतीतोपाधिमत्कालसम्ब-न्धिनो वर्तमानत्वविरोध उच्यते, तन्निरूप्यम् . किं स्वापेक्षतयाऽतीतोपाधिमत्काल-सम्बन्धित्वम्, उतान्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वम् ? । न प्रथमः, स्वा-पेक्षयाऽतीतोपाधिमत्कालसम्बन्धित्वाभावात् घटादेः । न द्वितीयः, एकक्षणसम्बन्ध-स्यापि विरोधप्रसङ्गात्, एकस्य वस्तुन एकोऽपि हि क्षणः स्वपाश्चात्ययत्किञ्चिदु-पाध्यपेक्षयाऽतीतो भवति ; अतोऽन्यापेक्षयाऽतीतोपाधिमत्कालसम्बन्धिनो वर्त्त-मानत्वमविरुद्धम् । एवमेकस्य स्वप्रागभावस्वध्वंसोपहितकालसम्बन्धस्यैव विरुद्धत्वा-दन्यापेक्षयाऽतीतागाम्युपाधिमत्कालसम्बन्धे तदभावाच्च स्वाभावानुपहितकाल-द्वयसम्बन्ध एकस्य वस्तुन उपपन्न इति । युक्त्यन्तरञ्चाह ( अत एवेति ) अत एव—कालद्वयसम्बन्धाविरोधादेव । उपपाद्यते— सौगतान् प्रतीति शेषः । सौगत-

* भावप्रकाशिका *

मित्याशङ्कयाह ( वस्तुविशेषणतया निर्दिष्टावपीति ) ( कालोपाध्यन्तराणामिति ) गुणक्रियाद्युपाध्यन्तराणामित्यर्थः । देशान्तरसम्बन्धितया अतीतस्येति व्या-ख्येयं पदम् । ( अतीतत्वञ्चान्यापेक्षयेति ) शब्दप्रयोगाधारकालापेक्षयेत्यर्थः । लोके अतीतकाल इत्युक्ते शब्दप्रयोगाधारकालापेक्षया पूर्वकालः प्रतीयते. आगामिकाल इत्युक्ते शब्दप्रयोगाधारकालादुत्तरकालः प्रतीयते. वर्तमानध्वंस-प्रतियोगित्वस्य वर्तमानप्रागभावप्रतियोगित्वस्य चातीतागामिशब्दार्थत्वात्, वर्त-

ऽयमिति प्रत्यभिज्ञया कालद्वयसम्बन्धिनो वस्तुन ऐक्यमुपपाद्यते वस्तुनः स्थिरत्ववादिभिः, अन्यथा प्रतीतिविरोधे सति सर्वेषां क्षणिकत्वमेव स्यात् । देशद्वयसम्बन्धविरोधस्तु कालभेदेन परिह्रियते ॥ यतः समानाधिकरणपदानामनेकविशेषणविशिष्टैकार्थवाचित्वम्; अत एव [1]"अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यारुण्यादिविशिष्टैकहायन्या क्रयस्साध्यतया विधीयते ॥

* श्रुतप्रकाशिका *

मतनिरासकस्य कालद्वयसम्बन्धविरोधाभ्युपगमो विरुद्ध इत्यर्थः । तदेवोपपादयति (अन्यथेति) अन्यथा--कालद्वयसम्बन्धविरोधेन। प्रतीतिविरोधे --वस्तुस्थिरत्वविषयप्रतीतिविरोधे । (सर्वेषां क्षणिकत्वमेव स्यादिति) एकस्य देशद्वयकालद्वयान्वयविरोधे देशकालान्तरसाध्यफलसाधनविधानमात्मनित्यत्वोपदेशश्चाप्रमाणं स्यादित्यभिप्रायः। देशद्वयसम्बन्धविरोधं परिहरति (देशद्वयेति) परिच्छिन्नस्य वस्तुनः स्वानवच्छिन्नदेशसम्बन्धो यौगपद्य एव विरुध्यते, न तु क्रमभावित्वे इत्यर्थः । एवं लोकसिद्धस्य नीलोत्पलादिसमानाधिकरणपदप्रयोगस्य विशेषणविवक्षा स्थापिता ॥ एवं प्रवृत्तिनिमित्तभेदेनैकार्थपर्यवसायित्वं समानाधिकरणपदानां वैदिकप्रयोगसिद्धं चेत्याह (यत इति) अनेन वस्तुमात्रपरत्वे अरुणाधिकरणसिद्धान्तन्यायविरोधश्चोक्तः स्यात् । यतः अत एवेति लौकिकप्रयोगसिद्धवत्कारोक्त्या पूर्वोक्तस्वपक्षपरपक्षसाधनदूषणान्यरुणाधिकरणे विवक्षितानीति भावः ॥

* भावप्रकाशिका *

मानकाल इत्युक्ते शब्दप्रयोगाधारकालः प्रतीयत इत्यनुभवसिद्धत्वादिति द्रष्टव्यम् । (न तूभयकालानुगतेति) यद्यपीदमप्रसक्तप्रतिषेधात्मकम्, न ह्यतीतकालसम्बन्धी, घट इत्युक्ते घटापेक्षया घटस्यातीतकालसम्बन्धप्रतीतिरस्ति, तथापि

१ यजु. ६-१-६ ॥

तदुक्तम्- [1]"अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्" इति। तत्रैवं पूर्वपक्षी मन्यते; यद्यप्यरुणयेति

* श्रुतप्रकाशिका *

अरुणयैकहायन्येत्यादिवाक्ये पदानां न सामानाधिकरण्यमित्यत्राह ( तदुक्तमिति ) अर्थैकत्व इत्यादि सूत्रस्यान्यथा व्याख्यातत्वान्न सामानाधिकरण्यपरत्वमित्यत्राह ( तत्रैवमिति ) ( एवमिति ) अस्मदुक्तावेव पूर्वपक्षसिद्धान्तौ सूत्रकाराभिप्रेताविति भावः। किमत्रारुणयेति पदोक्तमारुण्यमेकहायनीमात्रान्वयि ? उत प्राकरणिकसर्वद्रव्यान्वयि ? इति प्रथमो विचारः। तत्रारुणयेतिपदमेकहायन्येत्यादिपदैरेकवाक्यतया अन्वेति ? उत भिन्नवाक्यतया स्थितम् ? इति तदर्थविचारः। इदं विचारद्वयं पूर्वमीमांसाव्याख्यातृभिरभ्युपेतम्। अधिकस्तदर्थविचार उच्यते, किमरुणयेत्यादिपदानि व्यधिकरणानि? उत समानाधिकरणानि ? इति पुनस्तदर्थविचारः, कारकविभक्त्यन्तत्वं किं सामानाधिकरण्यविरोधि ? उताविरोधि ? इति। विरोधीति पूर्वपक्षः, अविरोधीति सिद्धान्तः, यदा विरोधि तदा सामानाधिकरण्याभावेनैकवाक्यत्वाभावात् प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षे फलफलिभावः, अविरोधे सामानाधिकरण्येन वाक्यभेदाभावादेकहायन्यन्वयनियम इति सिद्धान्ते फलफलिभावः। अस्माकं तु पूर्वपक्षे सिद्धान्ते च अरुणयेतिपदस्य द्रव्यपर्यन्तत्वमनुयायि, परेषां तु गुणमात्रपर्यन्तत्वमुभयत्रानुयायि। आकृत्यधिकरणे गुणवाचिशुक्लादिपदानां जातिवाचिगवादिशब्दवद्द्रव्यपर्यन्तत्वं निर्णीतम् "आक्षिप्तद्रव्ये गुणजाती" इति हि टीकाकारः। तत्र चात्र च

* भावप्रकाशिका *

लोकसिद्धव्युत्पत्तिप्रदर्शनप्रकारोयमिति द्रष्टव्यम्। ( विवक्षितानीति ) आनन्दमयाधिकरणसिद्धान्तिनेति शेषः॥ .... .... .... ....

( द्रव्यपर्यन्तत्वं निर्णीतमिति ) द्रव्याक्षेपकत्वं निर्णीतमित्यर्थः। आक्षेपादेव द्रव्यलाभसम्भवेपि न शक्तिरस्तीति निर्णीतम्, अतो गौणमात्रपर्यन्तत्वमुभयत्रानुयायीति भावः। नन्वाकृत्यधिकरणे आकृतिवाचिन एव शब्दा विचारिताः, न तु गुणवाचिनः, अतोऽरुणाशब्दस्य न गुणमात्रपर्यन्तत्वम्. पूर्वमीमां-

१ पूर्वमीमांसासूत्रम्- ३-१-१२-२॥

पदमाकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात् द्रव्यपर्य्यन्तमेवारुणिमानमभिदधाति; तथाप्येकहायन्यन्वयनियमोऽरुणिम्नो न सम्भवति, एकहायन्या क्रीणाति तच्चारुणयेत्यर्थद्वयविधानासम्भवात् ।

* श्रुतप्रकाशिका *

को विशेष इति चेत्; एकैकप्रातिपदिकार्थनिरूपणमाकृत्यधिकरणे, अत्र त्वनेकप्रातिपदिकस्थसमानविभक्त्यर्थनिरूपणमिति भेदः । ननु गुणवाचिपदस्य द्रव्यपर्यन्तत्वे एतदधिकरणपूर्वपक्षोत्थानं न स्यात्, गुणमात्रपर्यन्तत्वे हि गुणस्य कारकतया निर्दिष्टस्य क्रयान्वयस्य द्रव्यान्वयस्य च एकवाक्येन बोधयितुमशक्यत्वेन वाक्यभेदात्प्राकरणिकसर्वद्रव्यान्वयीति पूर्वपक्षोत्थानं स्यात् । द्रव्यपर्यन्तत्वे त्वेकहायनीपदसामानाधिकरण्येन विशिष्टकरणैकत्वात्तस्य क्रयान्वयमात्रस्य एकवाक्येन बोधयितुं शक्यत्वेन वाक्यभेदाभावात् एकहायनीमात्रान्वयीति वाक्यभेदायत्तपूर्वपक्षानुदय इत्याशङ्क्याह ( यद्यपीति ) आकृतेरिव गुणस्यापि द्रव्यप्रकारतैकस्वभावत्वात्तद्वाचिशब्दो यद्यपि द्रव्यमात्रपर्यन्तस्तथाप्येकहायनीत्वाश्रयद्रव्यविशेषपर्यन्तत्वं न सिध्यतीत्यर्थः । कुत इत्यत्राह ( एकहायन्या क्रीणाति तच्चारुणयेत्यर्थद्वयविधानासम्भवादिति ) न च वाच्यमरुणयेतिपदं क्रीणातिनाऽन्वेति, द्रव्यविशेषाकाङ्क्षायां स विशेषः स्ववाक्यस्थैकहायनीपदोपस्थापितं द्रव्यं भवतीति । क्रयस्यैकहायन्यवरुद्धतयाऽरुणापदविभागे साका-

ऌ भावप्रकाशिका ऌ

सायां सिद्धमित्याशङ्क्याह ( आक्षिप्तद्रव्ये इति ) ( तत्र चात्र चेति ) नन्वस्माकं तु पूर्वपक्षे सिद्धान्ते च द्रव्यपर्यन्तत्वमनुयायीत्यादिग्रन्थेनैवाकृत्यधिकरणसिद्धद्रव्यपर्यन्तत्वोपजीवनेनारुणाधिकरणप्रवृत्तेराविष्कृततया आकृत्यधिकरणारुणाधिकरणयोर्विचार्यभेदस्य स्पष्टं प्रतीतेर्गतार्थत्वशङ्काया: कथमुत्थानमिति चेन्न; आकृत्यधिकरणारुणाधिकरणयोर्व्युत्पाद्यभेदमजानानस्यैतादृशबोधसम्भवात् । ( क्रयस्यैकहायन्यवरुद्धतयेति ) नन्वरुणावरुद्धत्वात् क्रयस्यैकहायन्या निवेशो न सम्भवतीति वैपरीत्यं किं न स्यात् । क्रियाकरणायत्वोयमाकृत्यधिकरणन्यायेन

* श्रुतप्रकाशिका *

ङ्क्षत्वाभावादाकाङ्क्षोत्थापकचशब्दद्वन्द्वाद्यभावाच्च, अत आरुण्यस्य क्रयान्वयद्वारा नैकहायन्यन्वयः। स किं पदयोस्सामानाधिकरण्येन? उत वैयधिकरण्येन स्ववाक्यस्थतया? न तावत्पदद्वयसामानाधिकरण्येन एकहायन्यन्वयनियम आरुण्यस्य सम्भवति, कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्त्या विशेषणविवक्षानुपपत्त्या च सामानाधिकरण्यायोगात् तत्र यद्यपि विशेषणविवक्षायां विशेषणभेदेन विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृतः, विशेषणैक्यान्योन्यसमवायादयश्च पूर्वमेव परिहृताः, तथापि कारकविभक्त्यन्तत्वप्रयुक्तानुपपत्तिः स्थिता, कारकविभक्तिर्हि क्रियान्वयबोधोपक्षीणत्वान्न परस्परान्वयबोधं जनयितुं शक्नोति,

छ भावप्रकाशिका छ

गुणिवाचकः। एकहायनीशब्दो बहुव्रीहितया लक्षकः, ततश्च श्रौतारुणावरुद्धत्वादेकहायनीलक्षितद्रव्यविशेषो न सम्भवतीत्येव वक्तुं युक्तम्। किञ्च एकहायन्यवरुद्धत्वात् पिङ्गाक्ष्या निवेशो न सम्भवतीत्यपि सुवचम्। खले कपोतन्यायेन युगपत्प्रवृत्तावुच्यमानायामन्यतरावरुद्ध इत्युक्तेर्निरालम्बनत्वाच्चेति चेत्. उच्यते; यदुक्तम् अरुणावरुद्धत्वादेकहायनीनिवेशो न सम्भवतीति वैपरीत्यं सुवचमिति. तत्सत्यमेव; अन्यतरविरुद्धेऽन्यतरस्य निवेशासम्भवात् द्वयोरेकेन वाक्येन विधानासम्भवादित्यत्र तात्पर्यात्। यच्चोक्तमरुणाशब्दस्य श्रौतत्वमेकहायनीशब्दस्य लक्षकत्वमित्यादि, तन्न; एकहायनीपदस्यापि बहुव्रीहितया निरूढलक्षणात्वेन शक्तितुल्यकल्प्यत्वात्। यत्तूक्तं पिङ्गाक्ष्या अपि निवेशो न सम्भवतीत्यादि, तथैव पिङ्गाक्षीशब्दस्याप्येतदधिकरणे अरुणापदवद्विषयत्वात्। यदुक्तं खले कपोतन्यायेनेत्यादि, तन्न; शाब्दबोधे क्रमिकान्वयबोधस्यैव दर्शनेन खले कपोतन्यायस्यासम्प्रतिपत्तेरिति तात्पर्यात्। (आकाङ्क्षोत्थापकचशब्दद्वन्द्वाद्यभावाच्चेति) इदमुपलक्षणम्, आकाङ्क्षोत्थापकचशब्दद्वन्द्वादिसत्त्वे चारुणाशब्दस्य द्रव्यान्तरत्वप्रसङ्गेन अरुणैकहायनीशब्दयोस्सिद्धान्त्यभिमतसामानाधिकरण्यासिद्धितादवस्थ्यापातादित्यपि द्रष्टव्यम्। न च 'यज्ञेन दानेन' इत्यादिवाक्ये चशब्दाभावेपि यज्ञदानाद्यर्थविधानवदरुणयैकहायन्येति कारकद्वयविधानमस्त्विति वाच्यम्; तत्र चशब्दस्याध्याहर्तव्यत्वात्. अत्र चशब्दाध्याहारेऽरुणैकहायन्योरैक्यासिद्धेश्च शब्दाध्याहारासम्भवात्, वस्तुतस्तु अरुणयेति-

* श्रुतप्रकाशिका *

परस्परान्वयो हि विशेष्यैक्यम् । एवं विशेषणविवक्षा कारकविभक्त्यन्तत्व-प्रयुक्तानुपपत्तिभिर्न सामानाधिकरण्यम्, अतोऽरुणयैकहायन्येतिपदद्वयं पृथ-

॥ भावप्रकाशिका ॥

वाक्ये क्रयस्यापि न विधानम् । 'तं वै दशभिः क्रीणाति' इतिवाक्येन दश-भिरित्यंशे 'वाससा क्रीणाति हिरण्येन क्रीणाति' इतिवाक्यप्राप्तसङ्ख्यानुवाद-रूपेण क्रयविधिसम्भवात्, अन्यत एव क्रयसिद्धेरतो गुणमात्रविधानं सिद्धम् । अत्र प्राप्तक्रयानुवादेनारुणाद्रव्यस्यैकहायनीकद्रव्यस्य च विधाने वाक्यभेदप्रसङ्गात् अरुणिमविशिष्टैकहायनीद्रव्यविधानं वक्तव्यम्. तच्च न सम्भवति . कारकवि-भक्त्यन्तत्वस्य सामानाधिकरण्यविरोधित्वेनान्यतरविशिष्टस्यान्यतरस्य विधानायो-गादिति पूर्वपक्षं कृत्वा कारकविभक्त्यन्तत्वस्य च सामानाधिकरण्याविरोधित्वात् । अन्यतरविशिष्टस्यान्यतरस्य क्रयानुवादेन विधानमिति सिद्धान्तवर्णनं भाष्य-कृतामभिमतम् । न च सामानाधिकरण्यवशेनान्यतरविशेषितस्यान्यतरस्य क्रये विधाने 'आग्नेयोऽष्टाकपाल' इत्यत्रापि सामानाधिकरण्यवशेनान्यतरविशेषितस्या-न्यतरस्य द्वन्द्ववाक्यविहितकर्मानुवादेन विधानसम्भवात् पौर्णमास्यधिकरण-विरोध इति वाच्यम्. यत्र क्रियान्वयात् प्रागेव विधिमनादृत्यैव सामानाधिकर-ण्येन षष्ठ्या वा मिथस्सम्बन्धितया शब्देन प्रतिपादितानि मन्त्रार्थवादादिप्रसिद्धानि तत्रान्यतरविशिष्टस्यापि प्राप्तकर्मानुवादेन विधिस्सम्भवति, अत एवाभ्युदयेष्ट्यां 'येऽग्निप्राप्तान्विष्णवे शिपिविष्टाय श्रते चरुम्' इत्यादौ शिपिविष्टत्वविशिष्टो विष्णुः प्राप्तानुवादेन विधीयते . प्रसिद्धश्च विष्णुः शिपिविष्टो मन्त्रार्थवादादिषु, नैवमाग्नेयस्याष्टाकपालस्य लोकतो मन्त्रार्थवादतो वा प्रसिद्धरस्ति . एवमेव ऽध्वर-मीमांसायां वार्तिकादौ पौर्णमास्यधिकरणे वर्णितम् । ततश्चारुणैकहायनीद्रव्यस्य लोकप्रसिद्धत्वात् क्रियान्वयात्प्रागेव सामानाधिकरण्यवशेन मिथस्सम्बन्धित्वा-वगमात् । आरुण्यविशिष्टैकहायनीद्रव्यं विधीयते . अमुमेवारुणाधिकरणन्याय-मवलम्ब्य विष्णवे शिपिविष्टायेत्यत्र शिपिविष्टत्वविशिष्टो विष्णुः प्राप्तानुवादेन विधीयत इति मीमांसकप्रवादोऽपि . अत एव 'तं वै दशभिः क्रीणाति' इति वचन मुपपद्यते . मीमांसकमतानुसारेणारुणिमगुणस्यापि पृथक् साधनत्वे साधनाना-मेकादशत्वसिद्ध्या दशत्वसङ्ख्यातिरेकाद्दशभिरिति वादो नोपपद्यते । द्रव्यमात्रा-

ततश्चारुणयेतिवाक्यं भित्त्वा प्रकरणविहितसर्व-

* श्रुतप्रकाशिका *

करणवाचीत्येतावत्सिद्धं कृत्वा वैयधिकरण्ये सति स्ववाक्यस्थतया आरुण्यस्यै-कहायन्यन्वयनियमेऽनुपपत्तिरुच्यते। एकहायन्या क्रीणातीतिवाक्येन एकहा-यन्याः क्रयस्य च सम्बन्धः प्रतिपन्नः, तत्र क्रयणमरुणया कर्त्तव्यमिति वाक्येनैकहायनीसाध्यत्वविशिष्टरूपेण क्रयणमरुणद्रव्यसाध्यमिति प्रतिपन्नम्, तत्पदं ह्येकहायनीसाध्यत्वविशिष्टक्रयणोपस्थापकम्; तत्र द्रव्यांशस्य तत्साध्यक्रय-णस्य च पूर्वप्रतिपन्नत्वेनानूदितत्वादेकहायनीद्रव्यस्यारुणिमसम्बन्ध एव विधेयः। एवञ्चैकहायन्याः क्रयः साध्यः, तया चारुणया भवितव्यमित्युक्तं भवति, । ततश्चैकहायन्याः क्रयम्बन्धोऽरुणिमसम्बन्धश्चेत्यर्थद्वयस्यैकवाक्येन विधाना-सम्भवादित्यर्थः। ततः किमित्यत्राह (ततश्चेति) वाक्यभेदे सति स्ववाक्यस्थ-त्वाभावादवान्तरप्रकरणेन वा महाप्रकरणेन वा द्रव्यविशेषनिश्चये वासोयज-

छ भावप्रकाशिका छ

भिप्राया दशत्वसङ्ख्येत्याश्रयणं च क्लिष्टम्. अत एव 'चतुरो मुष्टीर्निर्वपति' इत्यत्राध्वरमीमांसकमते चतुस्सङ्ख्याया मुष्टिद्रव्यानादरेणारुणिम्नः क्रियान्वय-वत् निर्वापक्रियान्वये सङ्ख्यया कर्मभेदप्रसङ्गः, न चेष्टापत्तिः, चतुर्मुष्टिनिर्वा-पस्यैकपदार्थत्वाच्चतुर्मुष्टिनिर्वापेणानुसमयः, नतु तदवयवेन एकैकमुष्टिनेति पाञ्चमिकाधिकरणविरोधप्रसङ्गादिति वदन्ति। भाष्ये—सामानाधिकरण्येनान्वयदूष-णानुक्तौ हेतुमाह स किम्पदयोरित्यादिना। स इत्यनेन च भाष्यस्थपूर्ववाक्य-स्थैकहायन्यन्वयनियमः परामृश्यते, न तु टीकास्थः। क्रमान्वयद्वारा एकहाय-न्यन्वय इत्यर्थः परामृश्यते. तथात्वेन तावत् पदद्वयसामानाधिकरण्येन एक-हायन्यन्वयनियम इत्युत्तरग्रन्थस्याप्रसक्तप्रतिषेधत्वापातात्। परस्परसम्बन्धाना-दरेण क्रयान्वयानन्तरमार्थिकस्य परस्परान्वयस्यैव क्रयद्वारा एकहायन्यन्वयरूप-त्वात्सामानाधिकरण्यस्य च तद्विरुद्धत्वादिति द्रष्टव्यम्। (पृथक्करणवाचीति) परस्परैक्यानापन्नकरणवाचीत्यर्थः। (वाक्यभेदे सति स्ववाक्यस्थत्वाभावादिति) ननु वाक्यभेदे सत्यपि तच्चारुणयेत्यध्याहृततत्पदेन एकहायनीमात्रान्वयसिद्ध्या प्राकरणिकसर्वद्रव्यान्वयासिद्धिरिति. चेन्न; पूर्वपक्षे एकहायनीसाध्यक्रयस्यापि

द्रव्यपर्यन्तमेवारुणिमानमविशेषेणाभिदधाति । अरुणयेतिस्त्रीलिङ्गनिर्देशः प्रकरणविहितसर्वलिङ्गकद्रव्याणां प्रदर्शनार्थः । तस्मादेकहायन्यन्वयनियमोऽरुणिम्नो न स्यादिति ॥

अत्राभिधीयते—"अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्"।[1] "अरुणयैकहायन्या"[2] इत्यारुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोः सामानाधिकरण्येनार्थै-

* श्रुतप्रकाशिका *

मानादिसर्वद्रव्याणां प्रकरणान्वयाविशेषात् क्रीणातीति वाक्यं भित्त्वाऽरुणयेति पदं प्राकरणिकसर्वद्रव्यपर्यन्तं स्वार्थमरुणिमानमभिदधातीत्यर्थः । अरुणयेति स्त्रीलिङ्गनिर्देशः कथमित्यत्राह (अरुणयेतीति) पूर्वपक्षमुपसंहरति (तस्मादिति)

(अत्राभिधीयत इति) अस्मिन् पूर्वपक्षे प्राप्ते सूत्रकारः स्वसिद्धान्तमाहेत्यर्थः । सूत्रमुपादत्ते (अर्थैकत्व इति) सूत्रस्याक्षरार्थमाह (अरुणयेत्यादिना) कयोरर्थैकत्व इत्याकाङ्क्षायां शब्दस्यार्थप्रतिसम्बन्धित्वात्पदविशेषयोः सन्निहितविषयवाक्यस्थत्वाच्च आरुण्यविशिष्टद्रव्यैकहायनीद्रव्यवाचिपदयोरित्यध्याहृतम्, पदद्वयसन्निधिज्ञापनार्थम् अरुणयैकहायन्येतीत्युक्तम्, आरुण्यविशिष्ट-

* भावप्रकाशिका *

वाक्यान्तर्गतत्वाविशेषात्, बुद्धिस्थत्वमात्रस्य एकहायनीबसाध्यक्रय इव वासःप्रभृतिसाध्यक्रयेपि सत्त्वात्. अत्यन्तसन्निधानस्य चाप्रयोजकत्वात्, वाक्यमेवाश्रयणे महाप्रकरणेन सर्वान्वयित्वसम्भवे तस्यवाध्याहारस्याप्रामाणिकत्वाचेति भावः । न च तथेत्यध्याहारे अरुणयेत्यस्य कथमन्वय इति वाच्यम्, अरुणयेति तृतीयया प्राकरणिककरणद्रव्याण्यनूद्य तत्रारुण्यं विधीयते, तत्र वाक्यान्तरप्रकरणमात्राश्रयणे वासःप्रभृतिक्रयसाधनेष्वप्यारुण्यसिद्धिः, महाप्रकरणाश्रयणे यजमानादिप्राकरणिकसर्वद्रव्यनिष्ठत्वमारुण्यस्य सिध्यतीति द्रष्टव्यम् ।

---

१ पूर्वमीमांसा. ३-१-१२ ॥ | २ यजु. ६-१-६ ॥

कत्वे सिद्धे सत्येकहायनीद्रव्यारुणयगुणयोररुणयेति पदेनैव विशेषणविशेष्यभावेन सम्बन्धितयाऽभिहितयोः क्रयाख्यैककर्मान्वयाविरोधादरुणिम्नः क्रयसाधन-

* श्रुतप्रकाशिका *

मेकहायनीत्वविशिष्टं च द्रव्यम् , तद्वाचिपदयोस्सामानाधिकरण्येन तत्तद्विशेषणद्वारैकविशेष्यवृत्तित्वादर्थैकत्वे सिद्ध इत्यर्थः । द्रव्यगुणयोरैककर्म्यादित्येतद्व्याचष्टे (एकहायनीद्रव्यारुण्यगुणयोरित्यादिना) गुणान्वयस्य क्रयान्वयस्य च वाक्यबोध्यत्वे वाक्यभेदप्रसङ्गो विरोध उक्तः, गुणान्वयस्य प्रातिपदिकसिद्धत्वान्न वाक्यबोध्यत्वं नार्थसिद्धत्वञ्च, अतः क्रयान्वयबोधनमेव वाक्यकृत्यमित्यभिप्रायेणारुणयेतिपदेनैवेत्युक्तम् । (क्रयाख्यैककर्मान्वयाविरोधादिति) वाक्यभेदप्रसङ्गरूपविरोधाभावादित्यर्थः । नियमः स्यादित्येतद्व्याचष्टे (अरुणिम्न इत्यादि) सर्वद्रव्यसाधारणप्रकरणानपेक्षत्वाद्वाक्यस्यतथैव नियमसिद्धिरित्यर्थः । अत्र गुणद्रव्ययोर्विशेषणविशेष्यभावः प्रातिपदिकावसेयः, विशेष्यैक्यं सामानाधिकरण्यावसेयम्, क्रयान्वयो वाक्यावसेय इति वाक्यस्य क्रयान्वयबोधनमेव कृत्यम् तस्मादेकस्मिन्वाक्येऽर्थद्वयविधानप्रसङ्गाभावाद्वाक्यभेदाभावेनारुण्यं न प्राकरणिकसर्वद्रव्यान्वयि, अपि त्वेकहायनीमात्रान्वयीति सूत्रार्थः, । वैयधि-

* भावप्रकाशिका *

(विशेषणविशेष्यभावः प्रातिपदिकावसेय इति) आकृत्यधिकरणन्यायेनारुणाशब्दो द्रव्यपर्यन्तवाचीत्यर्थः । (विशेष्यैक्यं सामानाधिकरण्यावसेयमिति) समानविभक्तिलक्षणश्रुतिगम्यमित्यर्थः । कारकविभक्तेस्समानविभक्तित्वाकारेण विशेष्यैक्ये शक्तेरेवाभ्युपगमात्, नतु पूर्वतन्त्र इव पदद्वयसामानाधिकरण्यरूपपदान्तरसमभिव्याहारलक्षणवाक्यावसेय इति मन्तव्यम् । (क्रयान्वयो वाक्यावसेय इति) ननु कारकविभक्तित्वाकारात् क्रयान्वयबोधनमेकवचनत्वाद्याकारात् सङ्ख्यान्वयबोधनं समानविभक्तित्वाकारात् परस्परान्वयबोधनमिति वदतस्सिद्धान्तिनो मते क्रियाकारकसम्बन्धस्यापि विभक्तिलक्षणश्रुतिगम्यत्वेन श्रौततया कथं वाक्यगम्यत्वम् ? अध्वरमीमांसकैरपि क्रियाकारकसम्बन्धस्य श्रौतत्वाभ्युपगमादिति चेत्. सत्यम्. क्रियाकारकसम्बन्धः श्रौतः, विभक्त्याख्यश्रुतिगम्यत्वात्; अथापि क्रया-

भूतैकहायन्यन्वयनियमः स्यात् ॥ यद्येकहायन्याः क्रयसम्बन्धवदरुणिमसम्बन्धोऽपि वाक्यावसेयः स्यात् तदा वाक्यस्यार्थद्वयविधानं स्यात् । न चैतदस्ति; अरुणयेतिपदेनैवारुणिमविशिष्टद्रव्यमभिहितम् । एकहायनीपदसामानाधिकरण्येन तस्यैकहायनीत्वमात्र-

* श्रुतप्रकाशिका *

करण्येन पदयोरर्थभेद इति पूर्वपक्षे प्राप्ते अर्थैकत्व इत्युक्तम् , द्रव्यगुणयोः क्रयान्वये द्वारद्वारिभावेन विना तदयोगाद् द्वारान्वयद्वार्यन्वयरूपार्थयोर्भिन्नत्वाद्वाक्यभेदप्रसङ्गरूपविरोधः स्यादिति शङ्कायामैककर्म्यादित्युक्तम् । एकहायन्यन्वयानियम इति पूर्वपक्षे नियमः स्यादित्युक्तमिति ॥ अत्र गुणसम्बन्धः प्रातिपदिकावसेयोऽस्तु, ततः किं वाक्यभेदायत्तानियमपरिहारस्येति शङ्कायां सूत्राक्षरयोजनायां सङ्ग्रहेणोक्तमर्थं विवृणोति ( यदीत्यादिना ) किमारुण्यस्य द्रव्यमात्रान्वये वा द्रव्यविशेषान्वये वा वाक्यबोध्ये तद्भेद उच्यते ? इति विकल्पे द्रव्यमात्रान्वयस्य प्रातिपदिकावसेयत्वमाह ( अरुणयेतीति ) यदि गुणगुणिसम्बन्धः प्रातिपदिकावसेयः; तर्हि सामानाधिकरण्यस्य किं कृत्यमित्यपेक्षां शमयन् द्वितीयं शिरः प्रतिवक्ति ( एकहायनीपदेति ) तस्यैकहायनीत्वमात्रम्–अरुणिमविशिष्टद्रव्यस्यैकहायनी-

* भावप्रकाशिका *

त्वक्रियाविशेषान्वयप्रतीतेः क्रीणातिपदसमभिव्याहारलक्षणवाक्यगम्यत्वात्तथोक्तमिति द्रष्टव्यम् । यद्वा क्रयान्वयो वाक्यावसेय इत्यस्यायमर्थः,– कारकविभक्तिलक्षणश्रुतिगम्यकारकसम्बन्धविशिष्टक्रयविधानमेव वाक्यकृत्यमिति . अयम्भावः, यद्यप्युभयत्र विधिव्यापारस्स्यात् तदा विध्यावृत्तिलक्षणो वाक्यभेदस्स्यात्; इह तु विभक्तिश्रुतिसमर्पितारुणिमगुणाश्रयद्रव्याभिन्नैकहायन्यन्वयविशिष्टे क्रये विहिते तद्विशेषणानामाक्षेपत एव विधानसिद्धेर्न विध्यावृत्तिलक्षणो वाक्यभेद इति । ( द्वारान्वयद्वार्यन्वयरूपार्थयोरिति ) गुणस्य हि क्रियान्वये गुणपरिच्छिन्नं द्रव्यं द्वारम्, ततश्च द्वारिणो गुणस्य द्वारभूतद्रव्यान्वयस्य क्रयान्वयस्य च बोध्यत्वाद्वाक्यभेदप्रसङ्ग इत्यर्थः । भाष्ये– सर्वविशेषणविशिष्टोर्थ एक इति ज्ञापयि-

मवगम्यते, न गुणसम्बन्धः । विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थः [1]"भिन्नप्रवृत्तिनिमित्तानां

* श्रुतप्रकाशिका *

त्वाश्रयत्वम्, विशेष्यैक्यमित्यर्थः । अनेन अरुणाधिकरणाकृत्यधिकरणयोः प्रतिपाद्यभेदश्चोक्तो भवति । प्रातिपदिकस्य धर्म्मिपर्यन्तत्वमाकृत्यधिकरणार्थः, अनेकप्रातिपदिकस्थसमानविभक्तेर्विशेष्यैक्यपरत्वप्रतिपादकमरुणाधिकरणमिति । कथं गुणसम्बन्धो न सामानाधिकरण्यावसेय इत्यत्राह ( विशिष्टद्रव्यैक्यमेव हि सामानाधिकरण्यस्यार्थ इति ) विशिष्टैक्यमित्युक्ते विशेषणांशस्यैक्यं माभूदिति विशिष्टद्रव्यैक्यमित्युक्तम्। द्रव्यशब्देन विशेष्यांशो विवक्षितः। एतदुपपादकत्वेन सामानाधिकरण्यलक्षणग्रन्थमाह ( भिन्नेति ) न हि विशेषणविशेष्यबाचिनोः पदयोः

* भावप्रकाशिका *

त्वेति । नन्वरुणिमाश्रयद्रव्याभिन्नत्वेन प्रतीताया एकहायन्याः क्रयसम्बन्धे खले कपोतन्यायेनारुणयोः क्रयसम्बन्धो न स्यात्, न चेष्टापत्तिः, तथा हि सति 'चतुरो मुष्टीर्निर्वपति' इत्यत्र मुष्टीनामेव चतुस्सङ्ख्यापेक्षया विशेष्यत्वेन प्राधान्यान्मुष्टीनामेवानुग्राह्यत्वेन सङ्ख्याया एव बाधप्रसङ्गेन सङ्ख्यामुष्टयधिकरणविरोधापत्तेः । तथा हि वाजपेये श्रूयते 'बार्हस्पत्यो नैवारस्सप्तदश शरावश्चरुर्भवति' इति । अस्ति च प्रकृतौ 'चतुरश्चतुरो मुष्टीन्निर्वपति' इति । तत्र मुष्टीनां द्वितीयाश्रुतिबलात् निर्वापसंस्कार्यत्वमुपपद्यते, निर्वापसंस्कृतानां मुष्टीनां भूतभाव्युपयोगाभावेन चतुस्सङ्ख्यामुष्टिभिश्च निर्वापः कर्तव्य इति तस्यार्थ इति सिद्धम्, ततश्चतुस्सङ्ख्यामुष्टिद्रव्यञ्च इह चोदकप्राप्तम्। तत्र चतुर्भिर्मुष्टिभिस्सप्तदशशरावपरिमाणश्चरुस्सम्पादयितुं न शक्य इत्यर्थवशात् बाधेऽवश्यम्भाविनि तत्र एकबाधेनोपपत्तौ नोभयबाधनं युक्तम्.. तस्मात्सङ्ख्यामुष्टयोरन्यतरबाधे कर्तव्ये सङ्ख्याया द्रव्याङ्गत्वात् प्रधानस्य मुष्टिद्रव्यस्यानुग्रहः सङ्ख्यायास्तु बाध इति पूर्वपक्षं कृत्वा न सङ्ख्याया मुष्टयङ्गत्वम्. सङ्ख्याया मुष्टिसम्बन्धस्य सामानाधिकरण्यलक्षणवाक्यबोध्यत्वात् निर्वापक्रियान्वयस्य द्वितीयाश्रुतिगतत्वात् वाक्यगम्यमुष्टिद्रव्यसम्बन्धपरित्यागेन सङ्ख्याया अपि श्रुत्या निर्वापक्रियान्वय इति द्वयोरपि

[1] मैत्रे. व्याकरणे ॥

शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्' इति हि सामानाधिकरण्यलक्षणम्, अत एव हि 'रक्तः

* श्रुतप्रकाशिका *

विशेषणविशेष्यभावसम्बन्धे वृत्तिः सामानाधिकरण्यमित्युक्तमित्यर्थः । एवं प्रातिपदिकेन गुणान्वयस्समानविभक्त्या परम्परान्वयो वाक्येन क्रयान्वयश्च बोध्यत इति कृत्यत्रयमुक्तम् । एतत्परैरभ्युपेतमित्याह ( अत एवेति ) किञ्च द्रव्यपर्यन्ताभिधानेऽप्येकहायनीपदेन वाक्यस्य निराकाङ्क्षत्वादरुणयेतिपदं न तत्रान्वेतीति शङ्का च परिहृता भवति, अर्थवादाधिकरणेऽर्थवादनैरपेक्ष्येण विधेरेव प्रवर्तकत्वाद्विधिवाक्येनार्थवादस्य नैकवाक्यत्वमिति शङ्कायामर्थवादस्य श्रूयमाणत्वात्तत्रापि विधेराकाङ्क्षास्तीति कल्प्यम्, तस्मादुत्थापिताकाङ्क्षोऽर्थवादो विधिनैकवाक्यतयाऽन्वित इति निश्चितः । तत्र तैरेवोक्तमुदाहरणमिदं रक्तः पटो भवतीति । तत्र हि पटो भवतीत्येतावता निराकाङ्क्षत्वेऽपि वाक्यस्य , प्रयुक्तं रक्तपदं कीदृशः पट इत्युत्थापिताकाङ्क्षमन्वेति , एवमत्राप्यरुणयेतिपदं श्रूयमाणमुत्थापिताकाङ्क्षत्वादेकवाक्यतयाऽन्वितमिति भावः । अत एव कृत्यत्रयस्यापि यथोक्तप्रकारत्वादेव ।

* भावप्रकाशिका *

निर्वापाङ्गत्वमिति सङ्ख्यामुष्ट्योः परस्परविशेषणविशेष्यभावाभावात् द्वयोरपि साम्ये सिद्धे सङ्ख्यायाः प्रकमश्रुतत्वेन प्रबलतया मुष्टीनामेव बाध इति सिद्धान्तितम्. तद्द्वयेन भवन्मते . सङ्ख्याविशेषितमुष्टीनामेव क्रियान्वयित्वात् । नास्माकं मते अनुपपत्तिः , विभक्तिबलेन चतुर्भिरभिन्नानां मुष्टीनां मुष्टिभिरभिन्नानां चतुर्णां च क्रियान्वयोऽस्तु, ततश्चोभयोरपि क्रियान्वयित्वाविशेषात् समप्राधान्यं सिध्यति . परस्पराभिन्नानां क्रियान्वयमात्रं हि तन्मिमाधयिषितम् । 'न तु द्रव्यवाचिपदस्य विशेष्यवाचित्वं गुणवाचिपदस्य विशेषणवाचित्वमित्यपि संरम्भ इति चेन्न ; द्रव्यवाचिगुणपदयोस्सन्निधाने द्रव्यवाचिपदस्य विशेष्यत्वं गुणवाचिनो विशेषणत्वमित्यस्य लोकसिद्धत्वेनाप्रत्याख्येयत्वात्, अन्यथा नीलोत्पलमित्यत्र नीलपदस्य विशेष्यतापत्तेः । ततश्च विशेषणं विशेष्येणेति समासे उत्पलनीलमित्यपि स्यादिति चेदुच्यते ; नात्र पदार्थयोर्मध्ये कस्यचित्प्राधान्यमितरस्य चाप्राधान्यं प्रतीयते , परस्परैक्यमात्रम्. ततश्च परस्पराभिन्नत्वेन प्रतीतयोश्चतुस्सङ्ख्याश्रयमुष्टिद्रव्ययोः खले

पटो भवति' इत्यादिष्वैकार्थ्यादेकवाक्यत्वम् , पटस्य भवनक्रियासम्बन्धे हि वाक्यव्यापारः, रागसम्बन्धस्तु रक्तपदेनैवाभिहितः,रागसम्बन्धिद्रव्यं पट इत्येतावन्मात्रं सामानाधिकरण्यावसेयम् । एवमेकेन गुणेन द्वाभ्यां बहुभिर्वा तेन तेन पदेन समस्तेन व्यस्तेन वा विशिष्टमुपस्थाप्य सामानाधिकरण्येन सर्वविशेषणविशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम् ,

* श्रुतप्रकाशिका *

रक्तः पटो भवतीतिवाक्ये यथोक्तप्रकारेण कृत्यत्रयं दर्शयति ( पटस्येति ) रक्तः पट इत्यादिवाक्ये विशेषणस्यैकत्वात्तदुत्थापिताकाङ्क्षमन्वेति । बहूनि विशेषणानि समस्तपदोक्तानि चेदन्वितानि स्युः, न तु व्यस्तपदोक्तानि, अत्र तु पदानि व्यस्तानि, तत्र प्रथमान्तत्वात्सामानाधिकरण्यम्, अत्र तु पदानि कारकविभक्त्यन्तानि , तस्मान्नात्र सामानाधिकरण्यमिति शङ्कात्रयमभिप्रेत्याह ( एवमेकेनेति ) ( पदेन समस्तेन व्यस्तेन वेति ) कारकविभक्त्यन्तेन प्रथमान्तेन वेति चात्राभिप्रेतम्, तत्र

छ भावप्रकाशिका छ

कपोतन्यायेन निर्वापक्रियान्वये द्वयोरपि समत्वात् , तत्र चतुस्सङ्ख्याश्रयद्रव्यस्य प्रक्रमश्रुतत्वेन प्रबलत्वात् चतुस्सङ्ख्याश्रयानुग्रहेण मुष्टिबाध एव न्याय्यः। नन्वेवमपि मुष्टिद्रव्याभिन्नचतुस्सङ्ख्याश्रयद्रव्यस्यैव निर्वापक्रियाङ्गत्वात् । मुष्टिद्रव्यबाधे तदभिन्नचतुस्सङ्ख्याश्रयद्रव्यस्यैव बाधिततया कथं मुष्टिद्रव्यबाधेन सङ्ख्यानुग्रह इति चेन्न ; चतुस्सङ्ख्याश्रयद्रव्यमङ्गम्. तद्धर्मो मुष्टिद्रव्याभेदः, तत्र मुष्टिद्रव्याभेदस्यासम्भवात्त्यागेपि सम्भवतश्चतुस्सङ्ख्याश्रयद्रव्यस्य धर्मिणस्त्यागायोगात्. अत एव 'गुणलोपे च मुख्यस्य' इति दाशमिकाधिकरणे पवमानेष्टिषु 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति चोदकप्राप्तो निर्वापः कर्तव्यो नवेति संशये यया अग्निहोत्रं हुतं सा अग्निहोत्रहवणीति, पवमानेष्ट्युत्तरभाव्यग्निहोत्रानन्तरभाविन्या अग्निहोत्रहवण्याः पवमानेष्टिवेलायामसम्भवात् तत्साधनको

'देवदत्तः श्यामो युवा लोहिताक्षः दण्डी कुण्डली तिष्ठति ; शुक्लेन वाससा यवनिकां सम्पादयेत् ; नील-मुत्पलमानय ; नीलोत्पलमानय ; गामानय शुक्लां शोभ-नाक्षीम्' [१] "अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्" इति । एवम् [२] 'अरुणयैकहायन्या पिङ्गाक्ष्या

श्रुतप्रकाशिका *

प्रथमान्तबहुविशेषणान्वये उदाहरणमाह ( देवदत्त इति ) देवदत्तः श्याम इत्या-दिकमुदाहरतोऽयं भावः,— रक्तः पट इति पदद्वयमचिद्वाचकम्, अरुणयेतिपदं चेतन-वाचकमिति वैषम्यं यथा न प्रयोजकं तथा प्रथमान्तत्वकारकविभक्त्यन्तत्ववैषम्य-मप्यप्रयोजकमिति, अन्तरङ्गबहिरङ्गविशेषणे अप्येवमित्यभिप्रायेण दण्डी कुण्ड-लीत्युक्तम् । कारकविभक्त्यन्तैकपदान्वयोदाहरणमाह ( शुक्लेन वाससेति ) कर्मकारकमुदाहरति ( नीलमुत्पलमिति ) समस्तोदाहरणमाह ( नीलोत्पलमिति ) कारकविभक्त्यन्तानेकपदान्वयोदाहरणमाह ( गामिति ) सम्प्रदानकारकविषयं वैदिकं चोदाहरणमाह ( अग्नय इति ) पुरोडाशमष्टाकपालमिति कर्मकारक-मपि सिद्धम् । एवमरुणयेत्यादिवाक्येऽपि तुल्यमित्याह ( एवमिति )

भावप्रकाशिका

निर्वापो न कर्तव्य इति पूर्वपक्षं कृत्वा अग्निहोत्रहवण्यास्तदानीमसम्भवात् तत्रा-ङ्गयुक्तनिर्वापस्य कर्तुमशक्यत्वेपि अग्निहोत्रहवणीरूपाङ्गत्यागेन सम्भवतः केवलस्य निर्वापस्य सम्भवादङ्गानुरोधेनाङ्गिनः प्रधानस्य त्यागो न युक्त इति निर्वापः कर्तव्य इति सिद्धान्तितम् । तद्वदेव बार्हस्पत्यचरौ चतुस्सङ्ख्याश्रये मुष्टिद्रव्याभेदस्या-सम्भवतस्त्यागेपि चतुस्सङ्ख्याश्रयस्य त्यागोऽनुचित इति भावः । अन्ये तु, नन्वे-कपदस्था कारकविभक्तिरित्यारभ्य टीकायां क्रियान्वयसङ्ख्यान्वययोरविलम्बित-प्रतीतिकत्वं परम्परान्वयस्य तु पदान्तरपरामर्शसापेक्षत्वेन विलम्बितत्वमिति दर्श-यिष्यमाणतया परम्परान्वयानादरेणैवाध्वरमीमांसकवत् खले कपोतन्यायेन क्रय-सम्बन्ध एवाभ्युपेयते । इयांस्तु विशेषः,— अध्वरमीमांसकमते क्रियान्वयानन्तर-

१ यजुषि. २-काण्डे. २-अनु ॥ | २ यजुषि ६-१-६ ॥

* श्रुतप्रकाशिका *

ननु कारकविभक्तेः क्रियान्वयबोधोपक्षीणत्वान्न परस्परान्वयबोधकत्वम्? । उच्यते, कारकविभक्तिः क्रियान्वयबोधिका स्यात्, किमत्रायोगव्यवच्छेद एव उतान्ययोगव्यवच्छेदश्च? अयोगव्यवच्छेदमात्रं न विरुद्धम्, अन्ययोगव्यवच्छेदश्चेत्तर्हि क्रियान्वयबोधोपक्षीणा कारकविभक्तिः 'पशुना यजेत' इत्यादिषु सङ्ख्यान्वयमपि न बोधयेत्, कारकविभक्तित्वाकारात् क्रियान्वयबोधनम्, एकवचनत्वद्विवचनत्वाकारात्सङ्ख्यान्वयबोधनमित्याकारभेदादविरोध इति चेत्, समानविभक्तित्वाकारविशेषेण तद्वत्परस्परान्वयमपि बोधयेत् । नन्वेकपदस्था कारकविभक्तिर्युगपत्सङ्ख्यान्वयं क्रियान्वयञ्च बोधयतीति तुल्यबलत्वान्नान्योन्यासहत्वम्, परस्परान्वयस्तु पदान्तरपरामर्शसापेक्ष इति विलम्बितत्वात्स बाधित इति चेत्; किं विलम्बितत्वाविलम्बितत्वमात्रमेव प्राबल्यदौर्बल्यहेतुः? तर्हि प्रत्यक्षमेकमेव प्रमाणमन्यद्दुर्बलं स्यात्, तत्सापेक्षत्वेन विलम्बितत्वात्, तस्माद्विजयी लोकायतिकः । किञ्च श्रुतिरेव प्रमाणम्, न स्मृतिः, विलम्बात् । श्रुतिलिङ्गादिष्वपि श्रुतिरेव प्रमाणम्, न लिङ्गादि, विलम्बादेव । प्रथमाविभक्त्यन्तेषु चैकपदस्थैकवचनादिना प्रागेव सङ्ख्यान्वयप्रतीतेः पदान्तरस्थसमानविभक्तिपरामर्शसापेक्षसामानाधिकरण्यासिद्धिः स्यात् इहापि द्रव्यगुणयोः पराभिमत आर्थः परस्परान्वयो न सिध्येत्, शब्दतः प्रथमावगतक्रियान्वयापेक्षया तस्य आर्थत्वेन चरमावगतत्वाभ्युपगमात् । नैवम्; विरोधे सति हि विलम्बिताविलम्बितयोर्बाध्यबाधकभाव इति चेत् । तर्ह्यत्रापि क्रियान्वयसङ्ख्यान्वयवत्परस्परान्वयस्यापि विरोधाभावाद्विलम्बाविलम्बावकिञ्चित्करौ, अत्राविरोधः परैरभ्युपेतः, पश्चादार्थान्वयस्सिध्यतीति सिद्धान्तोक्तेः । न केवलमविरोधमात्रात्परस्परान्वयसिद्धिः, प्रयोगस्य नियामकत्वात् । कारकविभक्त्यन्तपदानां सङ्ख्यान्वयेन सह क्रियान्वयबोधने हि प्रयोगो दृश्यत इति चेत्, तथा परस्परान्वयबोधन-

* भावप्रकाशिका *

गार्थो द्रव्यगुणसम्बन्धः, अस्माकं तु शाब्दः परस्पराभेदान्वय इति । ननु परस्परान्वयप्रतीतेः पदान्तरपरामर्शसापेक्षतया विलम्बप्रतिपादकस्याग्रिमटीकाग्रन्थस्य विशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धमिति भाष्यग्रन्थेन विरोध इति चेन्न; तस्य विरोधस्य टीकाकृतैव समाधास्यमानत्वादिति वदन्ति । ( प्राबल्यदौर्बल्यहेतुरिति ) बाध्यबाधकभावहेतुरित्यर्थः । अयं भावः,

सोमं क्रीणाति" इति। एतदुक्तं भवति–यथा 'काष्ठैः स्थाल्यामोदनं पचेत्' इत्यनेककारकविशिष्टैका क्रिया युगपत्प्रतीयते; तथा समानाधिकरणपदसंघाताभिहितमेकैकं कारकं तत्तत्कारकप्रतिपत्तिवेलायामेवानेक-

* श्रुतप्रकाशिका *

मपि प्रयोगसिद्धमिति चरमयुक्त्यभिप्रायेण प्रथमान्तकारकविभक्त्यन्तबहूदाहरणमुदाहृतं देवदत्तश्श्याम इत्यादिकम्। यथैकवचनादीनामेकत्वादिसङ्ख्यान्वयबोधकत्वं प्रथमान्तेषु कारकविभक्त्यन्तेषु चाविशिष्टमङ्गीक्रियते, उभयत्राविशेषेण प्रयोगदर्शनात्, समानविभक्तेरप्यविरुद्धार्थैक्यबोधकत्वमुभयत्राविशेषेण प्रयोगदर्शनादङ्गीकरणीयमित्यर्थः। एवं कारकविभक्तिप्रयुक्तानुपपत्तिः परिहृता। तथा विशेषणविवक्षायां यदनुपपत्तित्रयम्, तत्र विशेषणभेदे विशेष्यभेदो जन्माद्यधिकरणन्यायेन परिहृत इति नात्र विवक्षितः, विशेषणैक्यपरिहारः प्रागुक्तोऽत्रानुसन्धेयः। अथान्योन्यसमवायः परिहर्तव्यः, विशिष्टत्वमुपस्थाप्य विशिष्टोऽर्थ एक इति ज्ञापयित्वेति ल्यबन्तत्वान्तनिर्देशेन कृत्यत्रयस्य क्रमभावित्वं प्रतीयते, ततश्चान्योन्यसमवायप्रसङ्ग इति तदपनोद्यम्, करणकारकविभक्त्यन्तसामानाधिकरण्यं वदतः सूत्रकारस्य तावन्मात्राभिप्रायत्वशङ्का च निवार्या; अतस्तदर्थमाह (एतदुक्तं भवतीति) 'पदजातं श्रुतं सर्वं स्मारितानन्वितार्थक'मिति न्यायेन युगपद्बोधनात्

* भावप्रकाशिका *

अविलम्बितं प्रबलमित्यप्यस्तु, विलम्बितं दुर्बलमित्यप्यस्तु, अथापि नहि प्रबलं प्रबलमित्येव दुर्बलस्य बाधकम्, अपि तु सति विरोध इति भावः। (अविरुद्धार्थैक्यबोधकमिति) नीलं श्वेतञ्चानयेत्यादावपि समानविभक्तेरैक्याबोधकत्वादविरुद्धार्थैक्यमुक्तमिति द्रष्टव्यम्। (अन्योन्यसमवायप्रसङ्ग इति) ननु विशिष्टमुपस्थाप्य विशिष्टोऽर्थ एक इति ज्ञापयित्वेत्यस्य विशेषणानामन्योन्यैक्यप्रसङ्गोत्थापकत्वमेव नान्योन्यसमवायप्रसङ्गोत्थापकत्वमिति चेन्न। सत्यमैक्यप्रसङ्गस्यैवोत्थापकत्वम्, विशिष्टमुपस्थाप्येत्यत्रैकविशेषणविशिष्टे विशेषणान्तरविशिष्टमुपस्थाप्येत्यपि प्रतीयत इत्यभिप्रेत्यैवमुक्तमिति द्रष्टव्यम्। (तावन्मात्राभिप्रायत्व-

**विशेषणविशिष्टं युगपत्प्रतिपन्नं क्रियायामन्वेतीति न कश्चिद्विरोधः, 'खादिरैश्शुष्कैः काष्ठैः समपरिमाणे भाण्डे पायसं शाल्योदनं समर्थः पाचकः पचेत्' इत्यादिष्विति ।**

* श्रुतप्रकाशिका *

क्रमभावित्वाभावान्न विशेषणान्तरविशिष्टे विशेषणान्तरान्वयविधानेन विशेषणानामन्योन्यसमवायप्रसङ्ग इत्यर्थः । यौगपद्यकथनेन पूर्वं ल्यबन्तनिर्देशः कृत्यत्रयभेदनिर्वाहकपरामर्शक्रमप्रकटनार्थमित्युक्तं भवति । तत्तत्कारकप्रतिपत्तिवेलायामित्यनेनेदं सूत्रं सर्वकारकविभक्त्यन्तपदप्रदर्शनार्थमिति दर्शितम् । इत्यादिषु न कश्चिद्विरोध इत्यन्वयः । विरोधोऽन्योन्यसमवायादिर्विवक्षितः, युगपत्प्रतिपन्नमित्यनेन तत्र परिहारो विवक्षितः । यथा काष्ठैरित्यादिकं वदता समानाधिकरणपदविषयचोद्यपरिहारा व्यधिकरणवाक्येऽपि समाना इति प्रतिबन्द्यभिप्रेता । अयमर्थः, व्यधिकरणानि पदानि तत्तत्कारकविशिष्टां क्रियां किं युगपत्क्रमेण वा प्रतिपादयन्ति ? यौगपद्ये उद्देश्योपादेयविभागाभावप्रसङ्गः अनेककारकविशिष्टक्रियैकत्वे विशेष्यक्रियैक्यवद्विशेषणभूतकारकैक्यमपि स्यात् ? क्रमेण चेत् कारकान्तर-

* भावप्रकाशिका *

शङ्का चेति ) करणकारकविभक्त्यन्तत्वमात्रस्य सामानाधिकरण्याभिप्रायकत्वशङ्केत्यर्थः । ( कृत्यत्रयेति ) विशिष्टत्वप्रतीतिविशिष्टैक्यप्रतीतिक्रियान्वयप्रतीतिरूपकृत्यत्रयस्यापि उक्तरीत्या वाक्यार्थप्रतीतिरूपत्वेन वस्तुत एकत्वेन क्रमाभावाद्विशिष्टार्थकत्वतदैक्यक्रियान्वयानां परामर्शदशायां क्रमेण परामर्शसम्भवात् तदभिप्रायेण ल्यबन्तोक्तिरित्यर्थः । एतेनान्वयबोधस्य युगपद्भावित्वे वाक्याच्छ्रुतेः प्राबल्यम्. तत्राप्येकपदश्रुत्यपेक्षया एकप्रत्ययश्रुतेः प्राबल्यम् , अत एव 'सोमेन यजेत' इत्यादौ लिङर्थभावनायां समानपदोपात्तधात्वर्थस्यैव करणत्वेनान्वयः, न भिन्नपदोपात्तसोमादेः । तथा 'पशुना यजेत' इत्यत्र एकत्वसङ्ख्यया एकप्रत्ययोपात्तकरणकारकशेषत्वमेव न त्वेकपदोपात्तपश्वङ्गत्वमित्यादि व्याकुप्येत, श्रुतिवाक्यबलाबलयोः प्रतीतिविलम्बाविलम्बप्रयुक्तत्वादिति शङ्का पराकृता. परामर्शदशावर्तिविलम्बा-

यत्तूपात्तद्रव्यकवाक्यस्थगुणशब्दः केवलगुणाभिधायीत्यरुणयेतिपदेन केवलगुणस्यैवाऽभिधानमिति । तन्नोपपद्यते ; लोकवेदयोर्द्रव्यवाचिपदसमा-

* श्रुतप्रकाशिका *

विशिष्टक्रियायां कारकान्तरान्वयविधानं स्यात् , तदा काष्ठस्थाल्यादेरन्योन्यसमवायप्रसङ्गेन काष्ठस्य स्थाल्यधिकरणं, स्थाल्याः काष्ठमधिकरणं वा स्यात् , न तदस्ति, विशेष्यभूतक्रियाया एवैकत्वं वाक्यप्रतिपाद्यम् , न तु विशिष्टस्य. अतो न विशेषणभूतकारकैक्यप्रसङ्गः सर्वकारकैः क्रियाया एव विशेष्यत्वेन नान्योन्यसमवायप्रसङ्ग इति चेत्. तथा समानविभक्तेर्विशेष्यांशमात्रैक्यपरत्वान्न विशेषणैक्यम् , प्रत्यक्षमूला व्युत्पत्तिरत्र नियामिका । यथा पट इत्येकपदप्रयोगे तत्स्थमेकवचनं न विशेषणविशेष्यैक्यं प्रतिपादयति, किन्तु विशेष्यैक्यमेव, तत्र नियामिका व्युत्पत्तिः. इहापि तद्वत् । युगपत्सर्वैर्विशेषणैरेकस्यैवार्थस्य विशेष्यत्वेन न विशेषणानामन्योन्यसमवायप्रसङ्गश्चेति । एवं सूत्रकाराभिप्रेतपूर्वपक्षराद्धान्तौ अभिहितौ ॥

अथ परोक्तपूर्वपक्षराद्धान्तयोरनुपायिनमर्थं तत्तदसाधारणार्थं च व्युदस्यति (यत्त्वित्यादिना) 'कृष्णो गच्छति 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदानां गुणिपर्यन्तत्वं तैरभ्युपेतमाकृत्यधिकरणन्यायात् । तत्रोपात्तद्रव्यकवाक्यस्थत्वं गुणवाचिपदानां गुणमात्रपर्यन्तत्वे प्रयोजकमभ्युपेतम् , पटस्य शुक्ल इत्यादिषु तथा दर्शनात् । पटश्शुक्ल इत्यादिषूपात्तद्रव्यकवाक्यस्थत्वेऽपि तदपवादकसामानाधिकरण्यात् गुणिपर्यन्ताभिधानमिति चाभ्युपेतम्, तत्र गुणमात्रपर्यन्तत्वे यत्प्रयोजकमुक्तं तदभ्युपगम्य प्रकृते गुणमात्रपर्यन्तत्वं दूषयति ( तन्नोपपद्यत इति )

ॐ भावप्रकाशिका ॐ

विलम्बावादाय प्राबल्यदौर्बल्योपपत्तेरिति तात्पर्यात् । केचित्तु,—विशिष्टोऽर्थ एक इति ज्ञापयित्वा तस्य क्रियासम्बन्धाभिधानमविरुद्धम् . अनेकविशेषणविशिष्टं प्रतिपन्नं युगपत्क्रियायामन्वेतीत्यादिक्रमप्रतिपादकभाष्यस्वारस्यान्मीमांसाविरोधात् , वाक्यार्थबोधयौगपद्यप्रदर्शकस्यटीकावाक्यस्यैवान्यपरत्वं वर्णनीयमित्याहुः ॥

( असाधारणार्थञ्च व्युदस्यतीति ) यत्पुनः क्रयस्यैकहायन्यवरुद्धतयेत्यादिना वक्ष्यमाणार्थोऽसाधारणार्थ इतिध्येयः । ( तदभ्युपगम्येति ) उपात्तद्रव्यवाक्यस्थत्वस्य

नाधिकरणस्य गुणवाचिनः क्वचिदपि केवलगुणाभिधानादर्शनात्। उपात्तद्रव्यकवाक्यस्थं गुणपदं केवलगुणाभिधायीत्यप्यसङ्गतम्, 'पटः शुक्लः' इत्यादिषूपात्तद्रव्यकेऽपि गुणविशिष्टस्यैवाभिधानात्। 'पटस्य शुक्लः' इत्यत्र शौक्ल्यविशिष्टपटाप्रतिपत्तिरसमानविभक्तिनिर्देशकृता; न पुनरुपात्तद्रव्यकत्वकृता। तत्रैव

* श्रुतप्रकाशिका *

कुत इत्यत्राह (लोकवेदयोरिति) कारकविभक्त्यन्तत्वस्य सामानाधिकरण्याविरोधित्वोपपादनमुपजीव्येदं दूषितम्, गुणिपर्यन्तत्वापवादकमुपात्तद्रव्यकवाक्यस्थगुणवाचिपदत्वं यत्, तस्यापयादरूपसामानाधिकरण्यस्य अरुणयेत्यादिवाक्ये विद्यमानत्वोपपादनात् केवलगुणाभिधायित्वमयुक्तमित्यर्थः। एवं परोक्तप्रयोजकाभ्युपगमेन तत्साध्यप्रयोज्यं गुणमात्रपर्यन्तत्वं दूषितम्। अथ तदुक्तं प्रयोजकं दूषयति (उपात्तद्रव्यकेति) तत्र हेतुमाह (पटश्शुक्ल इत्यादिष्विति) गुणमात्रपर्यन्तत्वे गुणिपर्यन्तत्वेऽपि साधारणमुपात्तद्रव्यकवाक्यस्थगुणवाचित्वं गुणमात्रपर्यन्ततायाः प्रयोजकं न भवतीत्यर्थः। ननु न तस्य प्रयोजकत्वहानिः, अपवादेन हि क्वचित् गुण्यभिधानमित्यत्राह (पटस्येति) असमानविभक्तिनिर्देशः प्रयोजक इत्यर्थः। असमानविभक्तिनिर्देशः– असमानाया विभक्तेर्निर्देशः। न समानविभक्तिनिर्देशाभावः– श्वेतो यातीत्यादिष्वपि गुणमात्रपर्यन्तत्वप्रसङ्गात्। व्यभिचारिणः प्रयोजकत्वकल्पनं व्यभिचारस्थले तदपवादकल्पनं चायुक्तम्। अव्यभिचारिप्रयोजकसद्भावादित्यभिप्रायः। गुणमात्रपर्यन्तत्वे, नेदमपि प्रयोजकमसाधारणम्, पटस्य शुक्लो भाग इत्यसमानविभक्तिनिर्देशेऽपि गुणिपर्यन्तत्वादिति चेदित्यत्राह (तत्रैव पटस्येति) अयमर्थः, पट-

* भावप्रकाशिका *

गुणमात्रपर्यन्तत्वप्रयोजकत्वमभ्युपगम्य तदपवादकतया पराभिमतस्य सामानाधिकरण्यस्य सत्त्वान्न गुणमात्रपर्यन्तत्वमिति दूषयतीत्यर्थः। (असमानाया विभक्तेर्निर्देश इति) असमानायास्सुब्विभक्तेर्निर्देश इत्यर्थः। ततश्च श्वेतो धावती-

'पटस्य शुक्लो भागः' इत्यादिषु समानविभक्तिनिर्देशे शौक्ल्यविशिष्टद्रव्यं प्रतीयते । यत्पुनः क्रयस्यैकहायन्यवरुद्धतयाऽरुणिम्नः क्रयान्वयो न सम्भव-

* श्रुतप्रकाशिका *

शब्देनासमानविभक्तिनिर्देशेऽपि शुक्लशब्दस्य विशेष्यवाचिभागशब्देनासमानविभक्तिनिर्देशाभावान्न तस्य गुणमात्रपर्यन्तत्वे प्रयोजकत्वभङ्गः, यथा त्वत्पक्षे गुणमात्रपरत्वापवादकाभिमतभागशब्दसामानाधिकरण्यान्न तस्य धर्म्मिपर्यन्तत्वात्प्रयोजकत्वहानिरिति । किञ्च न केवलमुपात्तद्रव्यैकवाक्यस्थताया व्यभिचार एव, कल्पनागौरवमप्यस्ति परमते । 'श्वेतमालभेत' इत्यादिषु गुणवाचिपदस्य गुणिपर्यन्तत्वमुक्तम्, पटस्य शुक्ल इत्यादिषु तदपवादकत्वेनोपात्तद्रव्यैकवाक्यस्थत्वमभ्युपेतम्, तस्याप्यपवादकत्वेन पटः शुक्ल इत्यादिषु सामानाधिकरण्यमुक्तमिति प्रयोजकत्रयकल्पनाऽस्ति । अस्मत्पक्षे तु 'श्वेतमालभेत पटः शुक्लः' इत्यादिप्रयोगेष्वपृथक्सिद्धधर्मवाचित्वादेव गुणिपर्यन्तत्वं सिद्धम्, पटस्य शुक्ल इत्यत्र असमानविभक्तिनिर्देशकृतं गुणपर्यन्तत्वमिति प्रयोजकद्वयमेवेति । इदमर्थसिद्धमिति कल्पनागौरवं न कण्ठोक्तम् । एवं परस्य पूर्वपक्षसिद्धान्तानुगतमरुणयेतिपदस्य गुणमात्रपरत्वं निरस्तम् । अथ पूर्वपक्षासाधारणार्थस्य स्वसिद्धान्तयुक्त्या परिहृतत्वं वक्तुमाह ( यत्पुनरिति ) एकहायन्यवरुद्धतया— एकहायन्या निराकाङ्क्ष-

* भावप्रकाशिका *

त्यत्र लिङ्गेऽपि विभक्तितया असमानविभक्तिनिर्देशसत्त्वात्, केवलगुणाभिधायित्वप्रसङ्ग इति चोद्यस्य नावकाश इति ध्येयम् । ( विशेष्यवाचिभागशब्देनेति ) ततश्च विशेष्यवाचिशब्देनासमानविभक्तिनिर्देश एव केवलगुणमात्रवाचित्वे प्रयोजकः, ततश्च पटशब्देनासमानविभक्तिनिर्देशोऽप्रयोजक इति भावः । ( यथा त्वत्पक्ष इति ) गुणमात्रवाचिभागशब्दसामानाधिकरण्यबलेन धर्मिपर्यन्तत्वेप्युपात्तद्रव्यैकवाक्यस्थत्वस्य गुणवाचिमात्रत्वप्रयोजकत्वस्य उत्सृष्टस्य यथा न हानिरित्यर्थः । ननु कल्पनागौरवं भाष्ये कुतो न कण्ठोक्तमित्यत आह ( इदमर्थसिद्धमितीति ) अध्वरमीमांसकैरेवं पूर्वपक्षः कृतः, अरुणाशब्दोऽयमाकृत्यधिकरणन्यायेन गुणवचन एव, न द्रव्यवचनः । तत्रारुणाशब्देन गुणग्रहेऽमूर्तस्य गुणस्य क्रयसाधनत्वं

तीति ; तदपि विरोधिगुणरहितद्रव्यवाचिपदसमाना-धिकरणगुणपदस्य तदाश्रयगुणाभिधानेन क्रिया-पदान्वयाविरोधादसङ्गतम् । राद्धान्ते चोक्तन्यायेना-रुणिम्नः शाब्दे द्रव्यान्वये सिद्धे द्रव्यगुणयोः क्रय-साधनत्वानुपपत्त्या अर्थात् परस्परान्वयः सिध्यतीत्य-प्यसङ्गतम्. अतो यथोक्त एवार्थः ॥

* श्रुतप्रकाशिका *

त्वात् । विभागे साकाङ्क्षत्वे सत्येव ह्येकवाक्यत्वम् , इह तदभावान्न क्रयान्वय इत्यर्थः । तस्य परिहृतत्वं दर्शयति ( तदपीति ) नीलं शुक्लमित्यादिव्यावृत्त्यर्थं विरोधिगुणरहितशब्दप्रयोगः, गुणपदस्यैव गुणिपर्यन्तत्वेन गुणविशिष्टमेकं करणमिति अरुणिम्नो द्रव्यद्वारा क्रयान्वयात् क्रयान्वयासम्भवोऽनुपपन्न इत्यर्थः । राद्धान्तासाधारणमर्थं दूषयति ( राद्धान्ते चेति ) ' सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते" इति न्यायेन वाक्यैक्यत्वे कथञ्चित्सम्भवति वाक्यभेदाश्रयणायोगात् 'गुणे द्रव्यव्यपेक्षे च द्रव्ये च गुणकाङ्क्षिणी'ति न्यायेन द्रव्यगुणयोः परस्परापेक्षत्वान्नष्टाश्वदग्धरथन्यायेनार्थादन्वय इति तद्राद्धान्तः । तदयुक्तम्, शाब्दान्वयसिद्धेरित्यर्थः । स्वोक्ताधिकरणार्थमुपसंहरति ( अतो यथोक्त एवार्थ इति ) किञ्च 'गुणे शुक्लादयः पुंसि' इति गुणपर्यन्तत्वे पुँल्लिङ्गतायाः प्राप्तत्वादरुण-

❀ भावप्रकाशिका ❀

न सम्भवतीति तदनुपपत्त्या लक्षणया द्रव्यपरिग्रहेपि अरुणाशब्देन लक्षणया एकहायनीद्रव्यं विधीयते , द्रव्यान्तरं वा ? । न तावदेकहायनीद्रव्यं लक्षणया विधीयते ' एकहायनीपदेन श्रुत्यैव विहितस्यैकहायनीद्रव्यस्यारुणापदेन पुनर्विधानायोगात् । न तावत्तदतिरिक्तम्, श्रौतैकहायन्यविरुद्धतया लक्षितद्रव्यान्तरविधानायोगादिति । तदेतदनुभाषते भाष्ये— यत्पुनरिति । तदाश्रयगुणाभिधानेनेति । तदाश्रयगुणद्वारा गुण्यभिधायितया गुणिनोपि वाच्यत्वेन श्रुतैकहायन्यवरुद्धेऽरुणापदलक्षितस्य निवेशो न सम्भवतीत्युक्तेरयुक्तत्वादिति भावः । टीकाग्रन्थोप्येवमेव योजनीयः । ( वाक्यैकत्वे कथञ्चित्सम्भवतीति ) अमूर्तस्यापि

तस्मात्तत्त्वमस्यादिसामानाधिकरण्ये पदद्वयाभिहितविशेषणापरित्यागेनैवैक्यप्रतिपादनं वर्णनीयम्, तत्त्वनाद्यविद्योपहितानवधिकदुःखभागिनः शुद्ध्यशुद्ध्यु-

* श्रुतप्रकाशिका *

येति स्यन्तपदस्य गुणमात्रपरत्वं दुर्वचम् । किञ्च पूर्वपक्षश्चात्यन्ताभासः, भिन्नवाक्यमिति हि पूर्वः पक्षः, तथा सत्यरुणयेतिपदं नोपात्तद्रव्यकवाक्यस्थं भवति । उपात्तद्रव्यकवाक्यस्थत्वे सिद्धे हि गुणमात्रपर्यन्तत्वसिद्धिरिति । वाक्यभेदेपि 'अरुणयैकहायन्या' इति प्रत्यासत्त्यतिशयादेकवाक्यतुल्यतया उपात्तद्रव्यकवाक्यस्थत्वमिति चेत्. सन्निधिविशेषादेकवाक्यस्थत्वफलभूतगुणमात्रपर्यन्तत्वेसिद्धिश्चेत्. तत एवैकवाक्यस्थनाफलभूतैकहायन्यन्वयनियमोऽपि स्यादिति वाक्यभेदहेतुकस्य पूर्वपक्षस्यानुदय एव स्यादिति । राद्धान्तोऽपि दुस्स्थः, एकहायन्या आरुण्येन च क्रयस्साध्य इत्येकक्रियायाः करणद्वयसाकाङ्क्षत्वकल्पकस्य च शब्दस्य द्वन्द्वसमासस्य चाश्रवणात् , अत इमौ पूर्वपक्षराद्धान्तावनिदुस्स्थतया सूत्रकाराभिमताविति वक्तुमयुक्तम् । अतोऽस्याधिकरणस्य यथोक्तावेव पूर्वपक्षराद्धान्तौ सूत्रकाराभिमतौ ॥

एवमस्तु , ततः किं प्रस्तुतसामानाधिकरण्यस्येत्यत्राह ( तस्मादिति ) तस्मात् – सामानाधिकरण्यस्य अनेकविशेषणविशिष्टैकार्थपरत्वस्य लोकवेदसिद्धत्वात् । ईदृशं सामानाधिकरण्यं परपक्षे न सम्भवति, पदद्वयावगतगुणहानादित्याह ( तत्त्विति ) जीवब्रह्मभेदमनभ्युपगच्छतो न सम्भवतीति प्रतिज्ञाया उपपादनार्थमनाद्यविद्येत्यादिकम् अशेषहेयप्रत्यनीकेत्यादिकं च विशेषणमुभयत्र प्रवृत्तिनिमित्तफलतयोक्तम् । कर्मवश्यो निग्राह्यो ऽनुग्राह्यश्च जीवो निग्राहको ऽनुग्राहकश्च परमात्मा भवितुं नार्हतीत्येषां विशेषणानामभिप्रायः । मुक्तिदशायामैक्यशङ्काव्युदासार्थं शुद्ध्यशुद्ध्युभयावस्थादित्युक्तम् । न हि निग्राह्यदशायां निग्रहकर्तुर्नरपतेरन्यः पुरुषोऽनुग्रहदशायामनुग्राह्योऽयमनुग्रहकृता तेन नृपेणाभिन्नो भवतीति भावः । स्वेतरवैलक्षण्यं तृणादेरप्यस्तीति तद्व्यावृत्त्यर्थमुभयलिङ्गत्वेन

* भावप्रकाशिका *

गुणस्य द्रव्यपरिच्छेदमुखेन क्रयसाधनत्वसम्भवेन क्रय एव कारणतयान्वयसम्भवने एकवाक्यत्वसम्भवादित्यर्थः ॥

भयावस्थाच्चेतनादर्थान्तरभूतमशेषहेयप्रत्यनीकानवधिककल्याणैकतानं परमात्मानमभ्युपगच्छतो न सम्भवति। अभ्युपगच्छतोऽपि समानाधिकरणपदानां यथावस्थितविशेषणविशिष्टैक्यप्रतिपादनपरत्वाश्रयणे त्वम्पदप्रतिपन्नसकलदोषभागित्वं परस्य प्रसज्येतेति चेत्. नैतदेवम्; त्वम्पदेनापि जीवान्तर्य्यामिणः परस्यैवाभिधानात्। एतदुक्तं भवति-- सच्छब्दाभिहितं निरस्तनिखिलदोषगन्धं सत्यसङ्कल्पत्वमिश्रानवधिकातिशयासङ्ख्येयकल्याणगुणगणं समस्तकारणभूतं परं

* श्रुतप्रकाशिका *

वैषम्यमुक्तम् अशेषेत्यादिना। निर्विशेषवादिन इत्येतावता पर्याप्तत्वेऽपि स्वपक्षमनभ्युपगच्छतो दूषणवचनं कुदृष्टिपक्षत्रयेऽपि दूषणसाम्यज्ञापनार्थम्, तच्छब्दावगतविशेषणाभ्युपगमवत् त्वंशब्दावगतविशेषणमभ्युपगन्तव्यम्, तथा सति ब्रह्मणो दुःखित्वादिप्रसङ्ग इति शङ्कते (अभ्युपगच्छतोऽपीत्यादिना) परिहरति (नैतदिति) कुत इत्यत्राह (त्वमिति) (एवेति) तत्पदप्रतिपन्नस्य जीवविलक्षणस्यैवेति भावः। जीववाचित्वेन व्युत्पन्नस्य पदस्य तदन्तर्यामिपरत्वं लाक्षणिकम्, तत्कथं परस्यैवाभिधानादित्युक्तमित्यत्राह (एतदुक्तमिति) द्वारद्वारिभावविपर्ययशङ्काव्युदासार्थोऽयमारम्भः। वेदव्युत्पत्तिसिद्धं सर्वशब्दानां परमात्मवाचित्वमप्युपपादयति (सच्छब्देत्यादिना) सामानाधिकरण्यबलात्तत्त्वम्पदावगतविशेषाः स्वीकार्याः ब्रह्मणो निर्दोषत्वमङ्गलास्पदत्वादि श्रुत्यन्तरसिद्धञ्च, अतस्त-

* भावप्रकाशिका *

(निर्विशेषवादिन इत्येतावतेति) लघुत्वात्तथैव निर्देष्टुं शक्यत्वेऽपीत्यर्थः। (द्वारद्वारिभावविपर्ययेति) त्वंशब्दस्य जीवद्वारा परमात्माभिधायित्वे तच्छब्दस्य वा परमात्मद्वारा जीववाचित्वं किं न स्यात्? इति शङ्कानिरासार्थश्चायमारम्भइत्यर्थः। ततश्च समर्थितस्य पुनस्समर्थनं व्यर्थमिति चोद्यं निरस्तमिति ज्ञेयम्।

## ब्रह्म 'बहु स्याम्' इति सङ्कल्प्य तेजोऽबन्नप्रमुखं कृत्स्नं जगत्सृष्ट्वा तस्मिन् देवादिविचित्रसंस्थानसंस्थिते जगति

* श्रुतप्रकाशिका *

दविरोधायान्तर्यामिपरत्वं युक्तमिति तत्त्वम्पदसामानाधिकरण्यमुख्यत्वनिर्दोषत्वश्रुत्यन्यथानुपपत्त्यभिप्रायेण निरस्तनिखिलेत्यादिविशेषणमुक्तम् । सच्छब्दाभिहितमिति– कारणवस्तुवाचिसच्छब्दः कारणत्वानुगुणगुणान्वितवस्तुपर इति भावः ।( बहु स्यामितीति ) यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र लिङ्वाच्येन ग्राहकेण परमापूर्वेण सन्निधिसमाम्नातेषु पदार्थेष्वविशेषेण स्वशेषतया गृहीतेषु तत्र प्रोक्षणावघातगोत्वादेः परमापूर्वं प्रति शेषत्वं व्रीहिगवादिद्वारकं, यागादेस्तु तच्छेषत्वमद्वारकं च कैश्चिन्निश्चीयते, तथा 'बहु स्या'मिति ग्राहकग्रहणेन तेजःप्रभृतिसर्वनामरूपेषु सामान्येन परमात्मीयतयाऽवगतेषु तत्रानुप्रवेशपूर्वकनामरूपव्याकरणश्रुत्यादिभिस्सद्वारकमध्यवसीयत इत्यनुसन्धेयम् । यथोपबृंहणेषु "गुणवान्' 'तमेवङ्गुणसम्पन्नम्" इत्यविशेषोक्तेषु भगवद्गुणेषु 'समस्समविभक्ताङ्गस्स्निग्धवर्णः" इत्युक्तानां स्निग्धवर्णादीनां 'धर्मज्ञस्सत्यसन्धश्च' इत्युक्तानां सत्यसन्धत्वादीनाञ्च गुणानां दिव्यविग्रहद्वारकत्वमद्वारकत्वञ्च दृश्यते तथेहापीश्वरशरीरभूतचिदचिद्द्वारकोऽद्वारकश्च गुणान्वयो यथा श्रुति स्वीकार्य इति भावः । बहु स्यामिति । बहुनामरूपभाग्भवेयमित्यर्थः । ( तेजोऽबन्नप्रमुखमिति ) प्रमुखशब्देन तत्त्वान्तरसृष्टिर्विवक्षिता । देवादिविचित्रसंस्थानसंस्थित इति च वक्ष्यमाणचिदचिदंशविभागार्थं जगदाकारकथनम् , न तु जीवानुप्रवेशपूर्वावस्थाकथनम् । परमात्मन एव कृत्स्नजगच्छरीरित्वं चेत् कथं जीवात्मनश्शरीरित्वमिति

ꣳ भावप्रकाशिका ꣳ

( तत्त्वंपदसामानाधिकरण्येति ) सामानाधिकरण्यबलात् तत्त्वंपदावगतविशेषणानां स्वीकार्यत्वात् प्रवृत्तिनिमित्तत्यागे सामानाधिकरण्यभङ्गप्रसङ्गादिति भावः । ( सद्वारकमवसीयत इत्यनुसन्धेयमिति ) नामरूपभाक्त्वमिति शेषः । ( अद्वारकश्च गुणान्वय इति ) किञ्चिज्ज्ञत्वादिगुणानां सद्वारकत्वं सर्वज्ञत्वादिगुणानां त्वद्वारकत्वमिति भावः । ( जगदाकारकथनमिति ) देवादिसंस्थानसंस्थित इति च जगदाकारकथनं वक्ष्यमाणचिदचिदंशविभागार्थमिति योजना, ततश्च विचित्र-

चेतनं जीववर्गं स्वकर्मानुगुणेषु शरीरेष्वात्मतया प्रवेश्य स्वयञ्च स्वेच्छयैव जीवान्तरात्मतयाऽनुप्रविश्य एवम्भूतेषु स्वपर्य्यन्तेषु देवाद्याकारेषु संघातेषु नामरूपे व्याकरोत्। एवं रूपसंघातस्यैव वस्तुत्वं शब्दवाच्य-

* श्रुतप्रकाशिका *

शङ्कापनोद्यते चेतनमितिशब्देन। चेतनत्वं शरीरित्वे प्रयोजकमित्यर्थः। चेतनमित्यनेन 'विज्ञानञ्चाविज्ञानं चे'त्यत्र विज्ञानशब्दस्य ज्ञातृवाचित्वं दर्शितम्। जीववर्गशब्देन'विज्ञानम् 'जीवेन' इति चैकवचनं 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादिभिरैकार्थ्याज्जाताविति व्याख्यातं भवति। 'अनेन जीवेने'त्यत्रानेनेति निर्देशस्याभिप्रायविवरणं स्वकर्मानुगुणेष्विति। जीवविशिष्टपरमात्मविशेषणेदंशब्दस्य जीवद्वारकवैचित्र्यपरत्वाज्जीववैचित्र्यस्य कर्मवैचित्र्याधीनत्वात् जीवकर्तृकप्रवेशव्यावृत्त्यर्थं स्वेच्छयैवेत्युक्तम्। पारतन्त्र्यं स्वातन्त्र्यञ्चानुप्रवेशहेतुवैषम्यमित्यर्थः। एवम्भूतेषु—द्वारद्वारिभावेन व्यवस्थितेष्वित्यर्थः। स्वपर्यन्तेषु देवाद्याकारेषु सङ्घातेषु तत्तद्देवाद्यवस्थास्तत्तद्वाचिशब्दांश्चाकरोदित्यर्थः। 'नामरूपे व्याकरोत्' इत्युक्ते नामरूपव्याकरणस्य परमात्मपर्यन्तत्वस्यास्फुटत्वाद्विशदयति (एवमिति) पूर्वं ल्यबन्तनिर्दिष्टानां क्रियाणां क्रमविवक्षाराहित्यं चानेन प्रदर्श्यते, एवंरूपसङ्घातस्य—चिदचिदीश्वरात्मकस्य सङ्घातस्येत्यर्थः। एवं स्वरूपसङ्घातस्येति पाठे अयमर्थः, स्वं रूपं च स्वरूपं तस्य सङ्घातः, स्वशब्देन शरीरी ईश्वर उच्यते, रूपशब्देन चिदचिद्वस्तुनी, शरीरिशरीररूपसङ्घातस्येत्यर्थः। वस्तुत्वम्—देवादिवस्तुत्वम्। 'जीवेनात्मने'त्यत्र जीववैलक्षण्यस्यास्पष्टत्वादात्मशब्द-

भावप्रकाशिका

संस्थानसंस्थिते जगतीति निमित्तसप्तमी, विचित्रसंस्थानसंस्थितजगन्निर्माणार्थमिति भावः। (जीवकर्तृकप्रवेशव्यावृत्त्यर्थमिति) परतन्त्रजीवकर्तृकप्रवेशाद्वैलक्षण्यसिद्ध्यर्थमित्यर्थः (स्वपर्यन्तेष्विति) देवाद्याकारसङ्घातेषु स्वपर्यन्तेष्वेव नामरूपे व्याकरोत्, ननु सङ्घातमात्र इति भावः। (ल्यबन्तनिर्दिष्टानामिति) सृष्ट्वानुप्रविश्येति प्राङ्निर्दिष्टानामित्यर्थः। स्वं रूपं च स्वरूपमिति पाठः। स्वरूप-

त्वञ्चाकरोदित्यर्थः । अनेन जीवेनात्मना जीवेन मयेति निर्देशो जीवस्य ब्रह्मात्मकत्वं दर्शयति । ब्रह्मात्मकत्वं च जीवस्य जीवान्तरात्मतया ब्रह्मणोऽनुप्रवेशादित्यवगम्यते । [1]"इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्" इत्यत्रेदं सर्वमिति निर्दिष्टं चेतनाचेतनवस्तुद्वयं

* श्रुतप्रकाशिका *

स्यानेकार्थसाधारण्याच्च तद्विवृण्वन् स्वरपक्षसाधारणमन्वयार्थं तावदाह ( अनेनेति ) मयेत्यात्मशब्दव्याख्यानम् । आत्मशब्दस्यासद्वाचित्वे सति हि ब्रह्मात्मकत्वं दर्शितं भवति । स्वरूपैक्यशङ्कां व्युदस्यति ( ब्रह्मात्मकत्वं चेति ) इदं सर्वमिति निर्दिष्ट चेतनाचेतनवस्तुद्वयमित्यत्र सर्वशब्दस्यासङ्कोचोऽभिप्रेतः, । " तदनुप्रविश्य सच्च त्यच्चाभवत्' 'विज्ञानञ्चाविज्ञानञ्च"इत्यनन्तरवाक्येन सर्वशब्दस्य स्वतःप्राप्तत्वमसङ्कुचितत्वं स्थापितमित्याह ( इदं सर्वमिति ) 'अनुप्रविश्य नामरूपे व्याकरवाणि' इत्यत्र नामरूपव्याकरणस्यानुप्रवेशपूर्वकत्वं गम्यते । "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यनुप्रवेशस्य सृष्टिपूर्वकत्वं गम्यते; तस्मान्नात्र पौर्वापर्यविवक्षा, समानकर्तृकत्वमेवात्र विवक्षितम् । "तस्य त्वष्टा विदधद्रूपमेति" इति वाक्ये सृष्ट्यनुप्रवेशयोस्समानकालीनत्वावगमात्; तस्माद्भाष्येऽप्यनुप्रविश्येति ल्यबन्तनिर्देशोऽनुप्रवेश-

* भावप्रकाशिका *

शब्दविग्रहवाक्यस्य तादृशस्यैवोचितत्वात् । स्वशब्देन शरीरी ईश्वर उच्यत इति वक्ष्यमाणत्वाच्च, स्वं रूपं चेतिपाठे विग्रहवाक्यसमानार्थकं वाक्यान्तरमिति द्रष्टव्यम् । ( असद्वाचित्वे सति हीति ) यद्यपि मयेत्येकवचनानुसारात् मद्वाचित्वे सति हीत्येव वक्तुमुचितम् । तथाप्यस्मच्छब्दार्थवाचित्वमस्तीति तथा व्यवहृतमिति द्रष्टव्यम् । नन्विदं सर्वमित्यत्र सर्वशब्दस्यासङ्कोचेन चेतनाचेतनपरत्वे विवदमानं प्रति इदं सर्वमिति निर्दिष्टचेतनाचेतनवस्तुद्वयमिति सिद्धवत्कृत्य भाष्ये निर्देशोऽनुपपन्न इत्याशङ्कयाह ( असङ्कोचोऽभिप्रेत इति ) सर्वशब्दसङ्कोचे हेत्वभावा-

---

1 तै. आन. ३-२ ॥

सत्त्यच्छब्दाभ्यां विज्ञानाविज्ञानशब्दाभ्याञ्च विभज्य निर्दिश्य चिद्वस्तुन्यपि ब्रह्मणोऽनुप्रवेशाभिधानात्; अत एवं नामरूपव्याकरणात् सर्वे वाचकाश्शब्दा अचिज्जीवविशिष्टपरमात्मवाचिन इत्यवगतमिति ॥

किञ्च [1]"एतदात्म्यमिदं सर्वम्" इति चेतनमिश्रं प्रपञ्चम् इदं सर्वमिति निर्दिश्य [2]'तस्यैष आत्मा' इति प्रतिपादितम् । एवञ्च सर्वं चेतनाचेतनं प्रति ब्रह्मण आत्मत्वेन सर्वं सचेतनं जगत् तस्य शरीरं भवति । तथा च श्रुत्यन्तराणि [3]"अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा"; [4]"यः पृथिव्यां तिष्ठन् पृथिव्या

* श्रुतप्रकाशिका *

सृष्टयोर्विविच्य ज्ञापनार्थ इत्यवगन्तव्यम्। सृष्ट्वानुप्राविशदिति स्थित्यर्थानुप्रवेशो वा। एवं नामरूपव्याकरणप्रकार उक्तः । ततः किं प्रस्तुतस्येत्यत्राह (अत एवमिति) अतः– उदाहृतश्रुतिवाक्यात् । एवम्– परमात्मपर्यन्तनामरूपव्याकरणप्रतिपादनात् । सर्वशब्दानां परमात्मपर्यन्तत्वे मानं दर्शितम् ॥

देहवाचिशब्देष्वाकृतिनयसञ्चारणेन परमात्मपर्यन्तत्वमुपपादयिष्यन् शरीरत्वाक्षेपकं वाक्यं दर्शयति (किञ्चेति) ततः किमित्यत्राह (एवञ्चेति) न केवलमात्मशब्देन शरीरत्वं गम्यम्, अपि तु शरीरत्वं शरीरलक्षणेन कण्ठोक्तं चेत्याह (तथा च श्रुत्यन्तराणीति) 'अन्तः प्रविष्टश्शास्ता' इतिसर्वात्म-

७ भावप्रकाशिका ७

दित्ययमर्थोऽभिप्रेत इति भावः । नन्वसङ्कोचस्य स्वतः प्राप्तत्वे 'इदं सर्वमसृजत । यदिदं किञ्च । तत्सृष्ट्वा तदेवानुप्राविशत्' इत्येतावति वक्तव्ये 'तदनुप्रविश्य सच्च त्यच्चाभवत्' इति वाक्यं किमर्थमित्याशङ्क्य सर्वशब्दासङ्कोचदार्ढ्यार्थमित्याह (तदनुप्रविश्येति) ॥ .... .... .... .... ....

१ छां. ३-८-७ ॥ २ तै. आन. ५ ॥ ३ यजु. आरण्यके. ६-११ ॥ ४ बृ. ५-७-३

अन्तरो यं पृथिवी न वेद । यस्य पृथिवी शरीरम् । यः पृथिवीमन्तरो यमयति । स त आत्मान्तर्य्याम्यमृतः" इति प्रारभ्य [1]"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम् । य आत्मानमन्तरो यमयति । स त आत्मान्तर्य्याम्यमृतः' इत्यादि [2]"यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीरम् । योऽपामन्तरे सञ्चरन् यस्यापः शरीरम्" इत्यारभ्य [3]'यो ऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम् । यमक्षरं न वेद । एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादीनि सचेतनं जगत् तस्य शरीरत्वेन निर्दिश्य तस्यात्मत्वेन परमात्मानमुपदिशन्ति, अतश्चेतनवाचिनोऽपि शब्दाश्चेतनस्याप्यात्मभूतं चेतनशरीरकं परमात्मानमेवाभिदधति । यथा अचेतनदेवादिसंस्थानपिण्डवाचिनश्शब्दास्तत्तच्छरीरकजीवात्मन एव वाचकाः [4]"चत्वारः पञ्चदश

* श्रुतप्रकाशिका *

शब्दविवरणम्, विशेषणद्वयेन नृपनभोव्यावृत्तिः । भगवतो नियन्तृत्वकथनात्तदेकनियाम्यत्वं शरीरलक्षणमुक्तं भवति । जगत्परमात्मशरीरमस्तु, ततः किं प्रस्तुतस्य सामानाधिकरण्यस्य ? शरीरात्मभावो हि भेदरूपतया सामानाधिकरण्यस्य विरोधीत्यत्राह ( अतश्चेतनवाचिन इति ) अतः–चिदचिदात्मकजगतः परमात्मशरीरत्वात् । शरीरभूतचेतनवाचिपदानां तच्छरीरिपरमात्मवाचित्वं कथमिति शङ्कायां शरीरिवाचिपदानां शरीरिपर्यन्ताभिधायित्वदर्शनादित्याह ( यथेति ) शरीरिपर्यन्तं वैदिकप्रयोगं दर्शयति ( चत्वार इति ) देवशब्दस्य शरीरि-

१ बृ. ५-७-२२. माध्यन्दिनपाठः ॥ | २–३ सुबाल ॥ ४ × × ×

रात्राद्देवत्वं गच्छन्ति" इत्यादिषु, देवा भवन्तीत्यर्थः। शरीरस्य शरीरिणं प्रति प्रकारत्वात् प्रकारवाचिनां च शब्दानां प्रकारिण्येव पर्यवसानात्, शरीरवाचिनां शब्दानां शरीरिपर्यवसानं न्याय्यम्। प्रकारो हि नाम इदमित्थमिति प्रतीयमाने वस्तुनि इत्थमिति प्रतीयमानोंऽशः। तस्य तद्वस्त्वपेक्षत्वेन तत्प्रतीतेस्तदपेक्षत्वात् तस्मिन्नेव पर्य्यवसानं युक्तमिति तस्य प्रतिपादकोऽपि

* श्रुतप्रकाशिका *

पर्यन्तत्वं स्पष्टयति (देवा भवन्तीति) देवत्वं गच्छन्तीत्युक्तम्। न तु देवं गच्छन्तीति। देवशब्दस्य शरीरमात्रपरत्वे शरीरत्वं गच्छन्तीत्युक्तं स्यात्, ततश्च देहात्मैक्यमुक्तं स्यात्, अतश्शरीरित्वं गच्छन्तीत्यभ्युपगन्तव्यम्, अतो भावप्रत्ययान्तत्वं प्रकृतिभूतदेवशब्दस्य शरीरिपर्यन्तत्वज्ञापकमित्यर्थः। शरीरवाचिपदानां शरीरिपर्यन्तबोधकत्वमपि लाक्षणिकमित्यत्राह (शरीरस्येति) शरीरवाचिनां प्रकारिपर्यन्तत्वं जातिगुणवाचिपदानामिव आकृत्यधिकरणन्यायसिद्धमित्यर्थः। जातिगुणवाचिनां द्रव्यपर्यन्तवाचित्वं कथमित्यपेक्षायामाकृत्यधिकरणन्यायं विवक्षुस्तदर्थं प्रथमं प्रकारप्रकारिणौ विविच्य दर्शयति (प्रकारो हि नामेति) तद्वाचिशब्दस्य प्रकारिपर्यन्तत्वमुपपादयति (तस्येति) तस्य तद्वस्त्वपेक्षत्वेन–प्रकारस्य प्रकार्यपेक्षस्वरूपस्थितित्वेन। तत्प्रतीतेः–प्रकारस्य यथावस्थितस्वरूपप्रतीतेः। तदपेक्षत्वात्–प्रकारिसापेक्षत्वात् (तस्मिन्नेव पर्यवसानं युक्तमिति) प्रकारप्रतीतेः प्रकारिण्येव पर्यवसानं युक्तमिति प्रकारवाचिशब्दः प्रकारिणि पर्यवस्यतीत्यर्थः। शब्दशक्तेर्विशेषणमात्रविषयत्वेऽप्यर्थसामर्थ्याद्विशेष्यांशबोधनम्, अतोऽर्थसामर्थ्यसचिवा शब्दशक्तिर्विशिष्टार्थबोधसामग्री, तच्च बोधनं मुख्यकोटिनिविष्टम्; यथा संस्कारसचिवेन्द्रियजन्यमपि प्रत्यभिज्ञानमिन्द्रियप्रसूतत्वात्प्रत्यक्षमेव, न स्मृतिर्भवति, तथात्र मुख्यत्वम्; अतश्शब्दशक्तिः प्रवृत्तिनिमित्तमात्रे पर्यवस्यति, विशेष्यबोधनमर्थसामर्थ्यादिति केचिदाहुः। तदयुक्तम्; शब्दशक्तेर्विशेष्यपर्यन्तत्वाभावे निष्कर्षकशब्देऽप्यर्थसामर्थ्याद्विशेष्यपर्यन्तधीप्रसङ्गात्। रूप-

शब्दस्तस्मिन्नेव पर्य्यवस्यति । अत एव 'गौरश्वो मनुष्यः' इत्यादिप्रकारभूताकृतिवाचिनश्शब्दाः प्रकारिणि पिण्डे पर्य्यवस्यन्तः पिण्डस्यापि चेतनशरीरत्वेन तत्प्रकारत्वात् पिण्डशरीरकचेतनस्यापि परमात्मप्रकारत्वाच्च परमात्मन्येव पर्य्यस्यन्तीति सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचिशब्देन सामा-

* श्रुतप्रकाशिका *

ग्रहणे नयनशक्तिः, रूपिज्ञानमर्थसामर्थ्यजन्यं स्यात् । तदभ्युपगमे गन्धशब्दादिग्रहणे सत्यर्थसामर्थ्यात् पृथिवीगगनादिप्रतिपत्तिश्च स्यात्, न च तथा प्रतीरस्ति । जात्यादिशब्दशक्तिर्जात्यादिस्वरूपमात्रविषया, गवादिशब्दशक्तिर्द्रव्यपरतन्त्रजात्यादिविषयेति निष्कर्षकानिष्कर्षकशब्दविभाग इति चेत् तर्हि शब्दशक्तेः प्रकारिविषयत्वमभ्युपगतं स्यात्, धर्मिपरतन्त्ररूपतावगतेर्द्धर्मिप्रतिपत्तिसापेक्षत्वाच्छब्दशक्तेस्तत्प्रतिपत्तिहेतुत्वाच्च । किञ्च "वचसां वाच्यमुत्तमम्" नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" इत्यादिवचनस्वारस्यं च शब्दशक्तेरेव विशेष्यपर्यन्तत्वे सिध्यति, ततो विशेष्यपर्यन्ता शब्दशक्तिरित्यत्र तात्पर्यम् । एवं न्यायशिक्षा कृता । इत्थं प्रमाणोपपत्तिसिद्धत्वात्सर्वशब्दानां परमात्मैव वाच्य इति परमात्मवाचितत्पदेन त्वंपदसामानाधिकरण्यं मुख्यवृत्तमित्याह ( अत एवेति ) पर्यवस्यन्तः—पूर्वं क्वचिद्व्यापृतस्य तत्रानुपरम्य तदन्वयिन्यन्यत्र व्यापारः पर्यवसानमिह विवक्षितम्, न तु व्यापारोपरमः, व्यापारोपरमवाचित्वे सत्यपर्यवस्यन्त इति पदच्छेदः । यद्वा, पर्यवस्यन्तः पर्यवस्थातुं प्रवृत्ता इत्यर्थः । परमात्मप्रकारत्वाच्चेत्यन्तेन पूर्वोक्तन्यायस्सञ्चारितः । नामरूपव्याकरणश्रुतिः प्रमाणत्वेन पूर्वोदाहृताऽत्राभिप्रेता । विशेषणवाचिशब्दो विशेष्यपर्यन्तोऽस्तु, न तु विशेषणवाचिशब्दस्य परमविशेष्यवाचिशब्देन सामानाधिकरण्यं दृष्टमिति चेत् ।

% भावप्रकाशिका %

( पूर्वमुदाहृतेत्यत्राभिप्रेतेति ) अत्राभिप्रेतापि नोदाहृतेति भावः । ( परमविशेष्यवाचीति ) विशेष्यविशेष्यवाचीत्यर्थः । गुणवाचिशब्दानां न तद्गतजाति-

नाधिकरण्यं मुख्यमेव ॥ ननु 'खण्डो गौः खण्डः शुक्लः' इति जातिगुणवाचिनामेव पदानां द्रव्यवाचिपदैः सह सामानाधिकरण्यं दृष्टम्, द्रव्याणान्तु द्रव्यान्तरप्रकारत्वे मत्वर्थीयप्रत्ययो दृष्टः, यथा 'दण्डी कुण्डली' इति । नैवम्; जातिर्वा गुणो वा द्रव्यं वा नैतेष्वेकमेव सामानाधिकरण्ये प्रयोजकम्, अन्योऽन्यस्मिन् व्यभिचारात। यस्य पदार्थस्य कस्यचित् प्रकारतयैव सद्भावः, तस्य तदपृथक्सिद्धिस्थितिप्रतीतिभिस्तद्वा-

* श्रुतप्रकाशिका *

उच्यते; यथा नैल्यगुणगतावान्तरजातिवाचिनीलशब्दो नैल्यगुणद्वारा तद्विशिष्टे पर्यवसितः उत्पलशब्देन समानाधिकरणो दृश्यते, यथा गवादिशब्दा गोत्वादिजातिवाचिनस्तद्विशेष्यपिण्डद्वारा तद्विशिष्टचेतने पर्यवसिताः खण्डादिशब्दैस्समानाधिकरणा दृश्यन्ते, तद्वत् । उक्तं प्रयोजकमतिव्याप्त्या दूषयंश्चोदयति ( नन्विति ) परिहरति ( नैवमिति ) प्रयोगदर्शनमविशिष्टमित्यभिप्रायेण द्रव्यं वेत्युक्तम् । सामानाधिकरण्ये— मत्वर्थीयप्रत्ययानपेक्षे इति भावः । हेतुमाह ( अन्योन्यस्मिन्निति ) व्यभिचारात्—साध्यस्य सामानाधिकरण्यस्य जातिवाचिमात्रं गुणवाचिमात्रं चातिलङ्घ्य वृत्तेरित्यर्थः । जातिर्वा गुणो वा मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमिति किमिति नाभ्युपेतम् ? मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यस्य जातिगुणवाचिशब्दयोरविशेषेण प्रयोगदर्शनादिति चेत्. तर्हि शरीरवाचिशब्दानामपि मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्येन प्रयोगदर्शनात्सर्वप्रयोगविषयानुयायि प्रयोजकं वाच्यमिति भावः । जातिगुणयोरन्यतरत्वञ्च अव्याप्तमित्यर्थः । इदमव्याप्तम्, प्रकारत्वञ्चातिव्याप्तम्, तत् किं प्रयोजकमित्यत्राह ( यस्येति ) ( तदपृथक्सिद्धिस्थितिप्रतीतिभिरिति ) सिद्धिः—सत्ता, प्रमाणसम्बन्धयोग्यत्वरूपा । स्थितिः— तदनुवृत्तिः, अपृथक्शब्दः सिद्ध्यादिसाधारणः, प्रतीतिशब्देनापृथक्प्रतीतेः स्वतः प्राप्तत्वं विवक्षितम् । प्रकारैकस्वभाववस्तुवाचिशब्दत्वं मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्ये प्रयोजकमित्यर्थः । निष्कर्ष-

चिनां शब्दानां स्वाभिधेयविशिष्टद्रव्यवाचित्वाद्धर्मान्तरविशिष्टतद्द्रव्यवाचिना शब्देन सामानाधिकरण्यं युक्तमेव। यत्र पुनः पृथक्सिद्धस्य स्वनिष्ठस्यैव द्रव्यस्य कदाचित् क्वचिद्द्रव्यान्तरप्रकारत्वमिष्यते तत्र मत्वर्थीयप्रत्यय इति निरवद्यम्। तदेवं परमात्मनः शरीरतया तत्प्रकारत्वादचिद्विशिष्टजीवस्यापि जीवनिर्देशविशेषरूपा अहं त्वमित्यादिशब्दाः परमात्मानमेवाचक्षत इति 'तत्त्वमसि' इति सामानाधिकरण्येनोपसंहृतम्।

* श्रुतप्रकाशिका *

कशब्दान्यत्वे सतीति विशेषव्यम्। मत्वर्थीयप्रत्ययसापेक्षसामानाधिकरण्ये हेतुं पक्षे तदभावज्ञापनाय दर्शयति (यत्र पुनरिति) (इति निरवद्यमिति) मत्वर्थीयप्रत्ययसापेक्षदण्डकुण्डलादिव्यावृत्तं मत्वर्थीयप्रत्ययनिरपेक्षसर्वप्रयोगविषयानुयायिप्रयोजकं सिद्धमिति नाव्याप्त्यादिदोष इत्यर्थः। इति निरवद्यमित्यनेन सहोपलम्भनियमादेः प्रयोजकत्वशङ्कापरिहारादिः प्रथमसूत्रोक्तोऽभिप्रेतः। परिहृतचोद्येन शिक्षितेन न्यायेन परमसाध्यसिद्धिमाह (तदेवमिति) तत्—चोद्यस्य परिहृतत्वात्। एवम् - पूर्वं शिक्षितप्रकारेण। 'ऐतदात्म्यमिदं सर्व'मिति पूर्वमेव वैयधिकरण्येन ब्रह्मात्मकत्वं सर्वस्य विहितम्, तस्य सामानाधिकरण्येन जीवविशेषे उपसंहारः, 'यथा स त आत्मान्तर्याम्यमृतः' इति जीवविशेषे कृत्स्नस्य ब्रह्मशरीरत्वं वैयधिकरण्येनोपसंहृतं तद्वदित्यर्थः। अनेन उद्देश्योपादेयविभागनिबन्धनचोद्यपरिहारोऽभिप्रेतः। त्वम्पदप्रतिपन्नदोषभाक्त्वप्रसङ्गस्य परिहृतत्वं दर्शयति। यद्वा अपुरुषार्थस्य ब्रह्मण्यस्पर्शाय हि शरीरशरीरिभाव उक्तः। तथापि तत्सं-

ᛃ भावप्रकाशिका ᛃ

वाचित्वमिति शङ्कितुरभिमानः। (स्वतःप्राप्तत्वं विवक्षितमिति) यदपृथक्सिद्धं तदपृथक्प्रतीतिकमित्युत्सर्गसिद्धमिति भावः। ततश्चात्मशरीरयोः परस्परेण विनापि भासमानत्वेपि न दोष इति भावः। (सहोपलम्भनियमादेरिति) मत्वर्थीयप्रत्यय-

एवञ्च सति परमात्मानं प्रति जीवस्य शरीरतया अन्वयाज्जीवगता धर्माः परमात्मानं न स्पृशन्ति, यथा स्वशरीरगता बालत्वयुवत्वादयो धर्माः जीवं न स्पृशन्ति; अतः 'तत्त्वमसि' इति सामानाधिकरण्ये तत्पदं जगत्कारणभूतं सत्यसङ्कल्पं सर्वकल्याणगुणाकरं निरस्तसमस्तहेयगन्धं परमात्मानमाचष्टे, त्वमिति च तमेव सशरीरजीवशरीरकमाचष्ट इति सामानाधिकरण्यं मुख्यवृत्तम्, प्रकरणाविरोधः सर्वश्रुत्यविरोधो ब्रह्मणि निरवद्ये कल्याणैकताने अविद्यादिदोषगन्धाभावश्च; अतो जीवसामानाधिकरण्यमपि विशेषणभूताज्जीवा-

श्रुतप्रकाशिका *

सर्गात्तत्प्रसङ्ग इत्यत्राह (एवञ्च सतीति) जीवशरीरगतधर्मा जीवमिव जीवधर्माः परमात्मानं न स्पृशन्तीत्यर्थः। पूर्वं यानि दूषणानि परमते स्वोक्तानि तानि स्वपक्षे नायान्तीत्याह (अत इत्यादिना) अतः--सामानाधिकरण्यस्य शरीरशरीरिभावनिबन्धनत्वोपपादनात्। अयं हेतुः प्रकरणाविरोधादीनामपि साधारणः। पदद्वयावगतविशेषणापरित्यागेन विशेष्यैक्यात् सामानाधिकरण्यस्य मुख्यत्वसिद्धिः। (प्रकरणाविरोध इति) "तदैक्षत" "ऐतदात्म्यमिदं सर्वम्" "अनुप्रविश्य नामरूपे व्याकरवाणि" त्यादिवाक्याविरोध इत्यर्थः। सर्वश्रुत्यविरोध इति भेदश्रुतिघटकश्रुत्यविरोध उक्तः। अविद्यादिदोषगन्धाभावश्चेति उभयलिङ्गत्वश्रुतिसिद्धार्थविरोधाभाव उक्तः। पूर्वोक्तजीवगतधर्मास्पर्शस्य फलमविद्याद्यभाव इति न पौनरुक्त्यम्। पूर्वपक्षिणा जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य राद्धान्तानुगुणत्वमाह (अत इति) अतः--तत्त्वम्पदयोः प्रवृत्तिनिमित्तस्यावश्याश्रयणीयत्वात् त्वंशब्दावगतधर्माणां ब्रह्मणि साक्षादन्वयविरोधेन जीव-

ꣿ भावप्रकाशिका ꣿ

निरपेक्षसामानाधिकरण्ये सहोपलम्भनियमैकसामग्रीवेद्यत्वादिकमेव प्रयोजकम्।

दन्यत्वमेवापादयतीति विज्ञानमयाज्जीवादन्य एवानन्दमयः परमात्मा ॥

यदुक्तम्–[1]"तस्यैष एव शारीर आत्मा" इत्यानन्दमयस्य शारीरत्वश्रवणाज्जीवादन्यत्वं न सम्भवतीति। तदयुक्तम्; अस्मिन् प्रकरणे सर्वत्र "तस्यैष एव शारीर आत्मा। यः पूर्वस्य" इति परमात्मन एव शारीरात्मत्वाभिधानात्। कथं [2]"तस्माद्वा एतस्मादात्मन आकाशस्स-

* श्रुतप्रकाशिका *

द्वाराऽन्वयात् द्वारभूतजीवाद्द्वारिणो ब्रह्मणो वैलक्षण्यसाधकं सामानाधिकरण्यमित्यर्थः। उक्तमर्थं परमप्रकृतेन सङ्गमयति ( इति विज्ञानमयादिति ) इतिशब्दो हेतौ। पूर्वपक्षे जीवानतिरेकसाधकतयोक्तस्य जीवसामानाधिकरण्यस्य भेदावहत्वादेतदधिकरणसाध्यमानन्दमयस्य जीवादन्यत्वं सुस्थमित्यर्थः ॥

अथ शारीरत्वश्रवणं पूर्वपक्षहेतुमनुवदति ( यदुक्तमिति ) परिहरति ( तदयुक्तमिति ) ननु प्राणमयपर्यायस्थशारीरात्मशब्दो मनोमयपरः, मनोमयपर्यायस्थस्तु विज्ञानमयपरः, तत्तदन्तरसद्भावज्ञापनपरत्वाच्छारीरात्मशब्दस्य; अतस्सर्वत्र शारीरात्मत्वं परमात्मन एवेति कथमवगतमिति पृच्छति ( कथमिति ) प्रतिवक्ति ( तस्माद्वा इत्यादिना ) अन्नमये शारीरात्मत्वकण्ठोक्त्यभावात् प्राणमये 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इत्युक्तत्वाच्च तस्य वाक्यस्यार्थं विवक्षुस्तत्सङ्घटनायाह—तस्माद्वा इति। आकाशादिसृष्टेः पश्चाद्धि जीवस्य करणकले-

* भावप्रकाशिका *

शरीरात्मनोश्चातथात्वाच्च मत्वर्थीयप्रत्ययनिरपेक्षसामानाधिकरण्यमित्यादिचोद्यतत्परिहारक्रमौ तत्रैव द्रष्टव्यावित्यर्थः ॥

( प्राणमयपर्यायस्थशारीरात्मशब्दो मनोमयपर इति ) एष इतिपदं वक्ष्यमाणपरम्। यः पूर्वस्यान्नमयस्य शारीर आत्मा प्राणमयः, तस्य वक्ष्यमाणो मनो-

[1] तै. आन. ५ ॥ | [2] तै. आन. १ ॥

म्भूतः" इत्याकाशादिसृज्यवर्गस्य परमकारणत्वेन प्रतन्ना तज्जीवव्यतिरेकस्यपरस्य ब्रह्मणः आत्मत्वेन व्यपदेशात्तद्व्यतिरिक्ताकाशादीनामन्नमयपर्य्यन्तानां तच्छरीरत्वमवगम्यते "यस्य पृथिवी शरीरम् । यस्यापश्शरीरम् । यस्य तेजश्शरीरम् । यस्य वायुः शरीररम् । यस्याकाशः शरीरम् । यस्याक्षरं शरीरम् । यस्य मृत्युः शरीरम् । एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इति सुबालश्रुत्या सर्वतत्त्वानां परमात्मशरीरत्वं स्पष्टमभिधीयते; अतः 'तस्माद्वा एतस्मादात्मनः' इत्यत्रैवान्नमयस्य परमात्मैव शारीर आत्मेत्यवगतः । प्राणमयं प्रकृत्याह "तस्यैष एव

* श्रुतप्रकाशिका *

वरसृष्टिः, अतस्ततः पूर्वं जीवस्य सृष्ट्यक्षमत्वादाकाशादिस्रष्टृत्वं जीववैलक्षण्यसाधकम् । तस्य जीवविलक्षणस्यात्मशब्देनाभिधानादात्मशब्दस्य पुत्रादिवत् सप्रतियोगिकत्वादन्नमयादीनां परमात्मशरीरत्वमर्थादवगतमित्यर्थः । शरीरत्वं कण्ठोक्तं चेत्याह ( यस्य पृथिवीति ) ( अत इति ) श्रुत्यन्तरेषु शरीरत्वस्य कण्ठोक्तत्वात् 'तस्माद्वा' इत्यादिवाक्ये आत्मशब्दनिर्देशेन अन्नमयादीनां शरीरत्वस्यार्थसिद्धत्वाच्च परमात्मैवान्नमयस्यात्मेत्यवगत इत्यर्थः । एवमात्मशब्दनिर्दिष्टः परमात्मैवान्नमयस्यात्मेति ' यः पूर्वस्ये'त्युत्तरत्र अनुवादस्य पुरोवादनिर्वाहः कृतः। उपादित्सितस्य तस्यैष इति वाक्यस्य प्राणमयपरत्वज्ञापनायाह ( प्राणमयं प्रकृत्येति ) तद्व्याचष्टे ( पूर्वस्येति ) य इति प्रसिद्धवन्निर्देशः श्रुत्यन्तरसिद्धिमेतत्प-

ꖶ भावप्रकाशिका ꖶ

मयश्शारीरात्मेति वाक्यार्थोऽभिप्रेतः । इदमुपलक्षणम् ; योऽयं प्राणमयः एषः तस्य पूर्वस्यान्नमयस्य शारीर आत्मेति परोक्तरीत्यन्तरस्यापीति द्रष्टव्यम् । ( परमात्मशरीरत्वमर्थादवगतमिति ) ननु "आत्मन आकाशसम्भूतः" इत्य-

शारीर आत्मा । यः पूर्वस्य " इति । पूर्वस्यान्नमयस्य यः शारीर आत्मा श्रुत्यन्तरसिद्धः परमकारणभूतः परमात्मा ; स एव तस्य प्राणमयस्यापि शारीर आत्मेत्यर्थः । एवं मनोमयविज्ञानमययोर्द्रष्टव्यम् । आनन्दमये तु 'एष एव' इति निर्देशः तस्यानन्यात्मत्वं दर्श-

* श्रुतप्रकाशिका *

करणसिद्धिश्च ज्ञापयतीत्यभिप्रायेण श्रुत्यन्तरसिद्धः परमकारणभूत इति विशेषणद्वयमुक्तम् । उक्तमर्थं मनोमयादावतिदिशति ( एवमिति ) आनन्दमयस्य परमात्मत्वमयुक्तम्, तस्यात्मान्तरश्रवणादित्यत्राह ( आनन्दमये त्विति ) अनन्यात्मत्वं दर्शयितुम्— "पतिं विश्वस्यात्मेश्वरम्" "न तस्येशे कश्चन' नान्योतोऽस्ति द्रष्टा"

७ भावप्रकाशिका ७

त्रात्मशब्दनिर्देशादेव वक्ष्यमाणान्नमयाद्यात्मत्वावगतौ तथैव रीत्या प्राणमयादीन् प्रत्यप्यात्मत्वमवगम्यत इति प्राणमयपर्याये 'तस्यैष एव शारीर आत्मा' इत्यात्मत्वप्रतिपादनं मुधेति चेन्न; 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा प्राणमयः' इति प्राणमये आत्मशब्दप्रयोगात्प्राणमयेऽन्यशरीरत्वं न प्रतीयत इति प्राणमयस्य 'आत्मन आकाशस्सम्भूतः' इत्याकाशादिकारणत्वेन निर्दिष्टस्यात्मनश्च शरीरात्यन्ताभावप्रतिपत्त्यर्थप्रवृत्तो हि श्रुतिवाक्यसन्दर्भः 'सत्यं ज्ञान'-मिति मन्त्रवर्णप्रतिपाद्यस्य ब्रह्मणः 'आत्मन आकाशस्सम्भूतः' इति निर्दिष्टमात्मत्वमन्नमयादिसर्वान्तरत्वव्यञ्जनद्वारा व्याचष्ट इति सिद्धान्तेऽभ्युपगम्यते. तत्रान्नमयप्राणमयमनोमयविज्ञानमयान्तरत्वं प्रतिपिपादयिषितम् । तत्र विज्ञानमयपर्याये 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' इति यो मनोमयस्यात्मा स एव विज्ञानमयशब्दितजीवान्तर्यामीति अस्यार्थस्य सिद्धत्वेन सर्वान्तरत्वस्य सिद्धतया 'तस्माद्वा एतस्माद्विज्ञानमयादन्योन्तर आत्मानन्दमयः' इत्युपक्षेपो व्यर्थः । प्रत्युत आनन्दमयलक्षणतत्त्वान्तरबुद्धिजनकतया विपरीत एव । न च मन्त्रवर्णादिनिर्दिष्टस्यान्नमयादिजीवपर्यन्तान्तर्यामित्वेऽवगतेपि तस्य प्रियमोदादिमत्त्वबोधनार्थं तात्पर्यारम्भ इति वाच्यम्, तथापि 'तस्यैष एव शारीर

आह— नायमानन्दमयो जीवादन्यः, विकारशब्दस्य मयट्प्रत्ययस्य श्रवणात् । [1]"मयड्वैतयोः" इति प्रकृत्य [2]"नित्यं वृद्धशरादिभ्यः" इति विकारार्थे मयट् स्मर्यते। वृद्धश्चायमानन्दशब्दः । ननु प्राचुर्य्येऽपि मयडस्ति, [3]"तत्प्रकृतवचने मयट्" इति स्मृतेः । यथा 'अन्नमयो यज्ञः' इति ; स एवायं भविष्यति । नैवम् ; अन्नमय इत्युपक्रमे विकारार्थत्वं दृष्टम्, अत औचित्यादस्यापि विकारार्थत्वमेव युक्तम् । किञ्च— प्राचुर्य्यार्थत्वेऽपि जीवादन्यत्वं न सिध्यति । तथा हि ; आनन्दप्रचुर-

* श्रुतप्रकाशिका *

तच्छारीरिकम्" इति हि वृत्तिकारवचः । सूत्रार्थमुपसंहरति ( अस इति ) ॥ ....

मुखान्तरेणानन्दमयशब्दस्य परमात्मपरतामाक्षिप्य प्रतिवक्ति—विकारेत्यादिना सूत्रेण । तत्र पूर्वपक्षमुपन्यस्यति ( आहेत्यादिना ) मयटो विकारवाचित्वमुपपादयति (मयड्वैतयोरित्यादिना) विकारार्थत्वस्य ज्ञापनार्थं मयड्वैतयोरित्युक्तम् । एतयोः—"तस्य विकारः 'अवयवे च प्राण्योषधिवृक्षेभ्यः" इति प्रकृतयोर्विकारावयवयोरिति हि तस्यार्थः । अयमर्थः, 'प्राग्दीव्यतोऽण्' इत्यधिकारसूत्रम् । अस्मिन्नर्थद्वयेपि वृद्धसंज्ञानां शरादिगणान्तर्गतानां च मयडेव, नाण्प्रत्यय इत्यपवदति " नित्यं वृद्धशरादिभ्यः"इति सूत्रम् । " वृद्धिर्यस्याचामादिस्तद्वृद्धम् "इत्यादिसूत्रेणानन्दशब्दस्य वृद्धसंज्ञकत्वाद्विकारार्थे मयट्प्रत्ययो विहित इति । सिद्धान्तच्छायया चोदयति ( नन्विति ) ( स एवायं भविष्यतीति ) विकारार्थत्वेऽपि जीवात्मनि विकारासम्भवात् विकारपरत्वं त्वन्मतेऽप्यनुपपन्नमिति भावः । अग्र्यप्रायन्यायेन परिहरति ( नैवमिति ) अतः—उपक्रमदर्शनात् । औचित्यात्—उपक्रमप्रतिपन्नस्वीकारौचित्यात् । प्राचुर्यार्थत्वेऽप्यभिमतासिद्धिमाह ( प्राचुर्येति ) जीवादनन्यत्वे हेतुमाह ( तथा हीति ) दुःखमिश्रत्वे हेतुमाह

[1] अष्टाध्याय्याम् . ४-३-१४३ ॥ [2] अष्टा० ४-३-१४४ ॥ [3] अष्टाध्याय्याम् . ५-४-२१

इत्युक्ते दुःखमिश्रत्वमवर्जनीयम् । आनन्दस्य हि प्राचुर्यं दुःखस्याल्पत्वमवगमयति । दुःखमिश्रत्वमेव हि जीवत्वम्, अत औचित्यप्राप्तविकारार्थत्वमेव युक्तम् । किञ्च– लोके मृण्मयं हिरण्मयं दारुमयमित्यादिषु, वेदे च [1]"पर्णमयी जुहूः [2]'शमीमय्यः स्रुचः' [3]'दर्भमयी रशना" इत्यादिषु मयटो विकारार्थे प्रयोगबाहुल्यात् स एव प्रथमतरं धियमारोहति । जीवस्य चानन्दविकारत्वमस्त्येव । तस्य स्वत आनन्दरूपस्य सतस्संसारित्वावस्थातद्विकार एवेति, अतो विकारवाचिनो मयट्प्रत्ययस्य श्रवणादानन्दमयो जीवादनतिरिक्त इति ।

* श्रुतप्रकाशिका *

(आनन्दस्येति) प्राचुर्यार्थस्वभावात् । प्रतियोगिन्यपेक्षिते सुखप्रतिसम्बन्धितया साहचर्यप्रसिद्धदुःखगताल्पत्वस्य प्रतियोगित्वमिति भावः । ततः किमित्यत्राह (दुःखेति) उभयथाऽपि जीवत्वसिद्धौ किमिति विकारार्थत्वमाद्रियत इत्यत्राह (अत इति) अतः–प्राचुर्य्येऽपि जीवान्यत्वासिद्धेरौचित्यस्याधिकत्वाच्च, विकारार्थत्वमेव ग्राह्यमित्यर्थः । प्रयोगप्राचुर्यमाह (किञ्चेति) अवयवार्थादपि प्राचुर्यार्थे प्रयोगबाहुल्यात्तद्व्यावृत्त्यर्थं प्रथमतरमिति तरपः प्रयोगः । प्रसिद्धमप्ययोग्यं न ग्राह्यमिति शङ्कायां जीवस्य विकारत्वमुपपादयति (जीवस्य चेति) तर्ह्यस्य नित्यत्वादिविरोध इत्यत्राह (तस्येति) स्वत आनन्दरूपस्य दुःखित्वावस्था-

* भावप्रकाशिका *

(सुखप्रतिसम्बन्धितयेति) दुःखस्य विरोधित्वेन सुखप्रतिसम्बन्धितया सुखस्य प्राचुर्ये तद्विरोधिदुःखाल्पत्वं सहचरिततया शीघ्रमुपस्थितं भवति, अतस्तदेव प्रतियोगीति भावः । (तद्व्यावृत्त्यर्थं प्रथमतरमितीति) प्रथमं धियमारोहतीत्युक्ते प्राचुर्यरूपार्थस्य विकारार्थापेक्षया प्राथम्याभावेपि अवयवरूपार्थापेक्षया प्राथम्यस्य

१ यजुषि. ३-कां. ५-प्र. ७-अनु ॥ २ × × × ॥ ३ यजुषि. ३-अष्टके. ८-प्र-२-अनु ॥

तदेतदनुभाष्य परिहरति—

विकारशब्दान्नेति चेन्न प्राचुर्य्यात् ॥ १४ ॥

नैतद्युक्तम्; कुतः? प्राचुर्य्यात्– परस्मिन् ब्रह्मण्यानन्दप्राचुर्य्यात्; प्राचुर्य्यार्थे च मयटः सम्भवात्। एतदुक्तं भवति; शतगुणितोत्तरक्रमेणाभ्यस्यमानस्यानन्दस्य जीवाश्रयत्वासम्भवाद्ब्रह्माश्रयोऽयमानन्द इति निश्चिते सति तस्मिन् ब्रह्मणि विकारासम्भवात् प्राचुर्य्येऽपि मयड्विधिसम्भवाच्चानन्दमयः परं ब्रह्मेति। औचित्यात्

* श्रुतप्रकाशिका *

योगो जीवत्वम्, अतः आनन्दविकारो जीवः। आनन्दात्मकस्वरूपापेक्षया नित्यत्वादिवाद इत्यर्थः। शङ्कायाम्सूत्रस्थत्वात्तदनुभाष्येत्युक्तम्—

विकारशब्दान्नेति चेन्न प्राचुर्यात् ॥ सूत्रमुपादत्ते ( विकारशब्दान्नेति चेन्न प्राचुर्यादिति ) द्वितीयस्य नञो निषेध्यं पूर्वपक्षिमतस्योपपन्नत्वमित्यभिप्रायेण नैतद्युक्तमित्युक्तम्। प्रतिज्ञां हेतुपदेन घटयितुमाकाङ्क्षां दर्शयति ( कुत इति ) कस्मिन् कस्य प्राचुर्य्यमित्यपेक्षायामाह ( परस्मिन्निति ) न केवलं प्राचुर्यरूपार्थसद्भावेनालम्, शब्दशक्तिश्चापेक्षितेति शङ्कायां सूत्राभिप्रेतार्थमाह ( प्राचुर्यार्थे चेति) मयट्प्रत्ययस्य प्राचुर्यार्थत्वमपि सम्भवतु, तथाऽपि विकारार्थत्वपरित्यागे को हेतुरित्यत्राह ( एतदुक्तमिति ) अभ्यस्यमानानन्दयोग उत्तरसूत्रगतानामन्येषामपि हेतूनां प्रदर्शनार्थः, अयोग्यत्वं त्यागहेतुरित्यर्थः। बाधकसद्भावाद्विकारार्थत्वं त्यज्यते चेत् पूर्वोक्तसाधकसद्भावात्तत्स्वीक्रियतामिति शङ्कायां परेण विकारार्थत्वस्वीकारसाधकतयोक्तमन्यप्रायन्यायं प्रयोगप्राचुर्यं च परिहरति (औचित्यादिति) औचित्यम्–प्रकरणौचित्यम्। तत्–लिङ्गबाध्यम्। प्रयोगप्रसिद्धिरपि गङ्गापदादि-

* भावप्रकाशिका *

सत्त्वात् तद्वैलक्षण्यसिद्ध्यर्थं प्रथमतरमित्युक्तमित्यर्थः। भाष्ये–प्रयोगप्रौढ्या चेति। प्राप्तमितिशेषः ( लिङ्गबाध्यमिति ) अर्थसामर्थ्यरूपलिङ्गबाध्यमित्यर्थः। अर्थविरोध-

प्रयोगप्रौढ्या च मयटो विकारार्थत्वमर्थविरोधान्न सम्भवति। किञ्च औचित्यं प्राणमय एव परित्यक्तम्, तत्र विकारार्थत्वासम्भवात्, अतस्तत्र पञ्चवृत्तेर्वायोः प्राणवृत्तिमत्तामात्रेण प्राणमयत्वम्, प्राणापानादिषु पञ्चसु वृत्तिषु प्राणवृत्तेः प्रचुर्याद्वा । न च प्राचुर्ये मयट्प्रत्ययस्य प्रौढिर्नास्ति, 'अन्नमयो यज्ञः शकटमयी यात्रा' इत्यादिषु दर्शनात् ॥

* श्रुतप्रकाशिका *

त्वर्थविरोधेन बाधिता, अतः उभयमपि प्रमाणान्तराबाधितत्वे सत्येवार्थसाधकम्, अत्र त्वर्थविरोधान्न साधकमित्यर्थः । अर्थविरोधात्– आनन्दमये जीवत्वविकारत्वयोः पूर्वोक्तादसम्भवादित्यर्थः । प्रकरणरूपमौचित्यमेव नास्तीत्याह (किञ्चेति) अर्थान्मयट्प्रत्ययस्य विकारवाचित्वं प्रकरणविवक्षितमिति शङ्कां शमयन् प्राणमयशब्दस्यार्थमाह (अत इति) प्राणशब्दोऽननरूपवृत्तिमात्रपरः, मयट्प्रत्ययः प्राचुर्येण सह सम्बन्धमभिदधाति । तत्र सम्बन्धमात्रपरत्वेन प्रथमयोजनायां प्राणनवृत्तिमानित्यर्थः। कृत्स्नमुख्यार्थत्यागादपि मुख्यार्थैकदेशाङ्गीकारो न्याय इति भावः । यद्वा प्राणाख्यवृत्तिविशेषसम्बन्धित्वमात्रेण प्रत्ययस्यानर्थक्याद्मुख्यार्थत्वं वरमिति भावः। उचिततमयोजनान्तरमाह (प्राणापानादिष्विति) ॥

७ भावप्रकाशिका ७

बाध्यमिति यावत् । (अर्थान्मयट्प्रत्ययस्येति) अस्वार्थिकमयट्प्रत्ययस्येत्यर्थः। (प्राचुर्येण सह सम्बन्धमभिदधातीति) प्राचुर्यं च सम्बन्धं चाहेत्यर्थः। अन्नमयो यज्ञ इत्युक्ते अन्नप्राचुर्यस्यान्नयज्ञयोस्सम्बन्धस्य च प्रतीतेः 'तत्प्रकृतवचने मयट्' इत्यत्र प्रकृतं प्राचुर्येण प्रस्तुतमुच्यते । अत्रेति प्रकृतवचनं सप्तम्यर्थे प्रत्यय इत्युक्तेरिति भावः। (कृत्स्नमुख्यार्थत्यागादपीति) स्वार्थिकत्वपक्षे कृत्स्नमुख्यार्थहानमित्यभिप्रायः। प्राचुर्यविशिष्टाधाराधेयभावसम्बन्धवाचिमयट्प्रत्ययस्य केवलसम्बन्धवाचित्वे लक्षणा अवर्जनीयेत्यङ्गीकृत्याह (यद्वा प्राणाख्येति) स्वार्थि-

यदुक्तमानन्दप्राचुर्यमल्पदुःखसद्भावमवगमयतीति । तदसत्; तत्प्रचुरत्वं हि तत्प्रभूतत्वम्, तच्चेतरस्य सत्तां नावगमयति, अपि तु तस्याल्पत्वं निवर्त्तयति। इतरसद्भावासद्भावौ तु प्रमाणान्तरावसेयौ । इह च प्रमाणान्तरेण तदभावोऽवगम्यते [१]'अपहतपाप्मा' इत्यादिना। तत्रैतावदेव वक्तव्यम्; ब्रह्मानन्दस्य प्रभूतत्व-

* श्रुतप्रकाशिका *

पूर्वपक्षयुक्त्यन्तरमनुवदति ( यदुक्तमिति ) आनन्दप्राचुर्यप्रतियोगितत्समानाश्रयं दुःखाल्पत्वमेव, आश्रयान्तरगतस्यानन्दप्राचुर्यस्याश्रयान्तरगतमानन्दाल्पत्वं न प्रतियोगितामर्हति, स्वाश्रयगतदुःखाल्पत्वस्यैवान्तरङ्गत्वेन ग्राह्यत्वादिति पराभिप्रायः । दूषयति ( तदसदिति ) प्रमाणान्तरविरुद्धप्रतियोग्यपेक्षत्वं न युक्तम्, अपि तु प्रमाणान्तरसिद्धप्रमाणान्तराविरुद्धप्रतियोग्यपेक्षत्वमेव युक्तमिति परिहर्तुं प्रचुरशब्दस्यार्थान्तरसद्भावव्यावृत्त्यर्थमाह ( तत्प्रचुरत्वं हीति ) ततः किमित्यत्राह ( तच्चेति ) तर्हि व्यवच्छेद्याभावे प्रत्ययवैयर्थ्यमित्यत्राह ( अपि त्विति ) यदि प्राचुर्यवाचिमयट्प्रत्ययः स्वयं नार्थान्तरसद्भावे प्रमाणम्, तर्हि तत्सद्भावः केनावगम्यत इत्यत्राह ( इतरेति ) ततः किमत्यपेक्षायां पराभिमतप्रतियोग्यभावो ब्रह्मणि प्रमाणसिद्ध इत्याह ( इह चेति ) तर्हि ब्रह्मणि प्रमाणविरुद्धप्रतियोगिदुःखान्वयद्योतको मयडर्थस्त्यज्जताम्, इतरथा तस्यानन्दप्राचुर्यस्य प्रतियोगि किमित्यत्राह ( तत्रैतावदिति ) प्रमाणान्तरसिद्धार्थान्तरप्रतियोगिकं प्राचुर्यमभिदधतो मयट्प्रत्ययस्य स्वयमर्थान्तरसाधकत्वाभावात् ब्रह्मणि च दुःखसम्बन्धस्य प्रमाणबाधितत्वात् जीवानन्दाल्पत्वस्य लोकसिद्धत्वाच्च ब्रह्मानन्दप्राचुर्यप्रतियोगिजीवानन्दाल्पत्वमित्यर्थात्सिद्धमित्यर्थः । जीवानन्दाल्पत्वस्य प्रतियोगित्वं न केवल-

ॐ भावप्रकाशिका ॐ

कत्वरूपानर्थक्याश्रयणापेक्षया मयट्प्रत्ययस्य सम्बन्धमात्रलक्षणापि ज्यायसीति भावः ॥ .... .... .... .... .... ....

[१] छा. ८-१-५ ॥

मन्यानन्दस्याल्पत्वमपेक्षत इति. उच्यते च तत् "स एको मानुष आनन्दः" इत्यादिना जीवानन्दापेक्षया ब्रह्मानन्दो निरतिशयदशापन्नः प्रभूत इति ॥

* श्रुतप्रकाशिका *

मर्थसिद्धम्, अपि तु कण्ठोक्तं चेत्याह (उच्यते चेति) अयमर्थः—यदि सजातीयाल्पत्वं समानाश्रयं प्रतियोगि, तद्व्याहतम्। यदि विजातीयं सामनाश्रयं तत्प्रमाणान्तराधीनसद्भावासद्भावम्। अन्याश्रयमपि सजातीयं विजातीयं वा प्रतियोगि, मानान्तरावसेयम्। तत्र च यथा तेजःप्रचुरो गभस्तिमानित्युक्ते तेजःप्राचुर्यस्य चन्द्रादिगतं सजातीयतेजोमान्द्यं प्रतियोगि, न तु गभस्तिमद्गततिमिराल्पत्वादि, तद्धि प्रमाणबाधितम्। इतरत्प्रमाणसिद्धम्। तारतम्यवाचिनश्शब्दस्य सजातीयप्रतियोगि-

ଌ भावप्रकाशिका ଌ

(तद्व्याहतमिति) तत्प्राचुर्यतदल्पत्वयोर्विरोधादिति भावः। (यदि विजातीयमिति) यदि विजातीयाल्पत्वमित्यर्थः। एवमुक्तरीत्यापीत्यपि द्रष्टव्यम्। अन्याश्रयमपि सजातीयं विजातीयं वेत्यत्र विजातीयमितिपक्षस्सम्भावनामात्रेण चाशङ्क्य निरस्तः। ब्राह्मणप्रचुरोयं ग्राम इत्यादौ ग्रामान्तरे ब्राह्मणाल्पत्ववत् ग्रामान्तरे शूद्राल्पत्वस्याप्रतीतेरिति द्रष्टव्यम्। एतेन मयटः प्राचुर्यार्थकत्वपक्षे जीवस्यैवानन्दमयत्वं सिध्यति। आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भत्वात्. प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वेपि विशेष्यत्वे समानाधिकरणविजातीयाल्पत्वमेव निरूपकमिति हि व्युत्पत्तिसिद्धम्, अत एव प्रचुरब्राह्मण इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेपि ब्राह्मणप्रचुरो ग्राम इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्षमेव प्राचुर्यं प्रतीयत इति परोक्तं परास्तम्। यतः 'प्रचुरप्रकाशस्सविता' इतिवत्प्रकाशप्रचुरस्सवितेत्यत्रापि व्यधिकरणनक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते, नतु सवितृगततमोल्पत्वापेक्षम्। तत्र तमसो बाधितत्वात्. वस्तुतस्तु सर्वं वाक्यं सावधारणमिति न्यायेन यत्र यत्सम्बन्धो बोध्यते तदितरत्र तद्व्युदासः प्रतीयते, ततश्च यदा ग्रामगतेषु ब्राह्मणेषु प्राचुर्यपरं वाक्यं ग्रामगता ब्राह्मणाः प्रचुराः इति

१ तै. आन. ८ अनु ॥

यच्चोक्तम्- जीवस्यानन्दविकारत्वं सम्भवतीति । तदपि नोपपद्यते, जीवस्य ज्ञानानन्दस्वरूपस्य केनचिदाकारेण मृद इव घटाद्याकारेण परिणामस्सकलश्रुति-

* श्रुतप्रकाशिका *

ज्ञापनपरत्वं स्वारसिकम्, बलवत्तर इत्युक्ते पुरुषान्तरबलं हि प्रतियोगितया प्रतीयते, न तु स्वगतं विजातीयज्ञानम्, अतोऽन्तरङ्गत्वं विफलम् । एवं ब्रह्मणि समानाश्रयमानन्दविजातीयदुःखाल्पत्वस्वरूपं प्रतियोगि श्रुतिनिषिद्धम्, अन्याश्रयसजातीयाल्पत्वलक्षणं प्रतियोगि श्रुत्यैव सिद्धमिति ॥ .... .... .... ....

जीवस्यानन्दविकारत्वमनुवदति ( यच्चोक्तमिति ) आनन्दविकारत्वम्–मयड्वाच्यमित्यर्थः । दूषयति ( तदपीति ) स्वरूपान्यथाभावलक्षणविकारार्थत्वमेव मयटो व्युत्पत्तिसिद्धम्, तच्चात्र नास्तीत्यर्थः । ज्ञानानन्दौ जीवस्य स्वरूपञ्चेत्कथं

छ भावप्रकाशिका छ

तदा तद्गतशूद्राणामल्पत्वं प्रतीयते, यदा च ग्रामे ब्राह्मणप्राचुर्यं विधीयते तदा ग्रामान्तरे ईदृशब्राह्मणप्राचुर्यं नास्तीति ब्राह्मणाल्पत्वं प्रतीयत इति त्वदभिमतव्युत्पत्तिविरुद्धैव व्युत्पत्तिरनुभवसिद्धा, ततश्च प्रचुरब्राह्मण इत्युक्ते व्यधिकरणसजातीयाल्पत्वं प्रतीयते । ब्राह्मणप्रचुर इत्युक्ते समानाधिकरणविजातीयाल्पत्वापेक्षं प्रतीयत इत्येतत्तन्मतश्रद्धालुभ्य एव रोचतामित्यास्तां तावत् । ( बलवत्तर इत्युक्त इति ) यद्यपि ‘ द्विवचनविभज्योपपदे तरबीयसुनौ ’ इति द्विवचनादिविशेषणवशादातिशायनिकप्रत्ययेषु व्युत्पत्त्यन्तरकल्पनेपि मयटि न व्युत्पत्त्यन्तरकल्पकमस्ति, तथा हि सति मयट्प्रत्ययस्थले तरप्प्रत्यय इव समानाधिकरणविजातीयाल्पत्वापेक्षं प्राचुर्यं न प्रतीयेत । तथापि पूर्वोक्तयुक्तौ तात्पर्यात् ॥

( मयटो व्युत्पत्तिसिद्धमिति ) इदमुपलक्षणम्, अत्र “ नित्यं वृद्धशरादिभ्यः” इति सूत्रे ‘ मयड्वैतयोर्भाषायाम्” इत्यतो भाषायामित्यनुवृत्य तस्य सूत्रस्य भाषाविषयत्वेनानन्दमय इत्यादौ न तेन सूत्रेण मयट्प्राप्तिः । एतस्य छन्दोविषयत्वात् नापि ‘ द्व्यचपूर्छन्दसि’ इत्यनेन प्राप्तिः । आनन्दशब्दस्य द्व्यच्त्वाभावात्, तस्मात्तत्प्रकृतवचने मयडिति प्राचुर्यार्थमयडेवोचित इत्यर्थोत्रा-

स्मृतिन्यायविरुद्धः । संसारदशायान्तु कर्मणा ज्ञानानन्दौ सङ्कुचितावित्युपपादयिष्यते, अतश्चानन्दमयो जीवादन्यः परं ब्रह्म ॥ .... .... .... ....

इतश्च जीवादन्य आनन्दमयः परं ब्रह्म—

तद्धेतुव्यपदेशाच्च ॥ १५ ॥

[1]"को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति" इति । एष एव जीवानानन्दयतीति जीवानामानन्दहेतुरयं

* श्रुतप्रकाशिका *

दुःखाज्ञानसम्भव इत्यत्राह ( संसारदशायान्त्विति ) सूत्रार्थं प्रकृतार्थेन सङ्गमयति ( अत इति ) प्रसिद्धतरमुख्यार्थासम्भवे तदनुग्राहकहेत्वननुरोधेन सम्भवदनतिप्रसिद्धमुख्यार्थानुग्राहकहेतूनामनुरोद्धव्यत्वमस्मिन् प्रकरणे व्युत्पाद्यमिति स्फुटम् ॥

हेत्वन्तरञ्चाह सूत्रकारः—

तद्धेतुव्यपदेशाच्च ॥ पूर्वोक्तमानन्दप्राचुर्यमप्यनेनोपपादितं भवति, अनितरसुकरमोक्षप्रदानक्षमत्वं हि नितरामानन्दहेतुर्भवति । किञ्च धनप्रचुरो हि पुरुषोऽन्यस्मै तदभिप्रेतं धनं ददातीति सूत्रानन्तर्यम् । अस्य सूत्रस्य विषयवाक्यमाह ( को ह्येवेति ) श्रुतेरर्थमाह ( एष एवेति ) अन्यात् प्राण्यादिति भोगा-

* भावप्रकाशिका *

भिप्रेत इति द्रष्टव्यम् । ( कथं दुःखाज्ञानेनेति ) अत्र क्रमो न विवक्षितः । ज्ञानानन्दाविति निर्देशानुसारेण तत्प्रतिद्वन्द्वितया कथमज्ञानदुःखसम्भव इत्येव निर्देष्टव्यत्वादिति द्रष्टव्यम् ॥ .... .... .... .... .... .... ....

सूत्रस्य भाष्येणानवतारितत्वात्स्वयमवतारयति ( हेत्वन्तरं चाहेति ) आनन्दयितृत्वस्यानन्दप्रचुरत्वे उत्पादकतया हेतुमुक्त्वा उत्पाद्यतया ज्ञापकत्वलक्षणहेतुमाह ( धनप्रचुरो हीति ) ( इति सूत्रानन्तर्यमिति ) अस्य सूत्रस्य पूर्वसूत्रार्थो-

[1] तै. आन. ७-अनु ॥

व्यपदिश्यते, अतश्चानन्दयितव्याज्जीवादानन्दयिताऽयमन्य आनन्दमयः परमात्मेति विज्ञायते । आनन्दमय एवात्रानन्दशब्देनोच्यत इति चानन्तरमेव वक्ष्यते ॥

इतश्च जीवादन्य आनन्दमयः—

मान्त्रवर्णिकमेव च गीयते ॥ १६ ॥

[1]"सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रवर्णोदितं ब्रह्मैवानन्दमय इति गीयते, तत्तु जीवस्वरूपादन्यत् परं ब्रह्म । तथा हि [2]"ब्रह्मविदाप्नोति परम्" इति जीवस्य

* श्रुतप्रकाशिका *

पवर्गसुखहेतुत्वमुक्तम् । यद्वा सत्ताहेतुत्वं सुखहेतुत्वं चोक्तम् , पूर्वोक्त एव सम्यगर्थः । फलितहेतुमाह ( अतश्चेति ) कर्मकर्त्रैक्यं न सम्भवतीति हेतुः । आनन्दशब्दवाच्यस्य ह्यानन्दयितृत्वमुक्तं न त्वानन्दमयस्येत्यत्राह ( आनन्दमय एवेति ) ॥

एवमानन्दमयपदप्रकृतिप्रत्ययार्थविषयं सूत्रत्रयं प्रवृत्तम् । अथानन्दवल्लीमादिमध्यान्ततोऽनुसन्धायार्थं निष्कष्टुकामः प्रथममुपक्रमस्थहेतुमवतारयति इतश्चेति —

मान्त्रवर्णिकमेव च गीयते ॥ अक्षरार्थमाह ( सत्यमिति ) शाब्द एवार्थः न तूच्छब्दः फलित इति ज्ञापयितुं वर्णशब्दः । ततः किमित्यत्राह ( तत्त्विति ) ब्राह्मणस्थपरशब्दप्रत्यभिज्ञापनाय परं ब्रह्मेत्युक्तम् । मान्त्रवर्णिकस्य जीवादन्यत्वं कथमित्यत्राह ( तथा हीति ) ॥ प्राप्यत्वमस्तु, ततः किं मान्त्रवर्णिकब्रह्मणो जीवादन्यत्व-

ꣳ भावप्रकाशिका ꣳ

पपादकत्वात्तदानन्तर्यमित्यर्थः । ( पूर्वोक्त एव सम्यगर्थ इति ) द्वितीयपक्षवत् अन्यात्प्राणयादित्युभयत्रापि धात्वोरर्थवैरूप्याभावात् पृथक्कीर्तनीयभोगमोक्षयोरपृथक्कीर्तनस्यायुक्तत्वाच्चेत्यर्थः ॥ .... .... .... .... .... .... ....

मन्त्राणां प्राबल्यं केचिद्वदन्तीति कोशेषु दृश्यते, प्रथमसूत्रे मन्त्रापेक्षया

१–२ तै. आन. १-अनु ॥

प्राप्यतया ब्रह्म निर्दिष्टम्॥ "तदेषाऽभ्युक्ता" इति, तत्–ब्रह्माभिमुखीकृत्य--प्रतिपाद्यतया परिगृह्य, ऋगेषा–अध्येतृभिरुक्ता। ब्राह्मणोक्तस्यार्थस्य वैशद्यमनेन मन्त्रेण क्रियत इत्यर्थः। जीवस्योपासकस्य प्राप्यं ब्रह्म तस्माद्विलक्षणमेव। अनन्तरञ्च [1]"तस्माद्वा एतस्मादात्मन

श्रुतप्रकाशिका *

इत्यपेक्षायां ब्राह्मणमन्त्रयोर्घटकं वाक्यमाह (तदेषाभ्युक्तेति) तद्व्याचष्टे (तदिति) तत्पदं ब्रह्मवाचि। अभिमुखीकरणं चेतनधर्म इति तद्व्यावृत्त्यर्थमाह (प्रतिपाद्यतयेति) एषेतिपदस्य विशेष्यमाह (ऋगिति) उक्तेति कथिते पौरुषेयत्वशङ्का स्यादिति तद्व्युदासार्थमाह (अध्येतृभिरिति) किमुक्तं भवतीत्यत्राह (ब्राह्मणेति) श्रुतिषु मन्त्राणां प्राबल्यं केचिद्वदन्ति, तद्व्युदासार्थमाह (ब्राह्मणोक्तेति) ब्राह्मणोक्तार्थविशदीकरणरूपो मन्त्र इति प्रयोजकम्, सङ्ग्रहेणोक्तस्य विस्तरेण कथनं विस्तृतस्य प्रतिपत्तिसौकर्याय सङ्ग्रहेण कथनमपि वैशद्यावहम्, नित्यनिर्दोषत्वाविशेषान्मन्त्रब्राह्मणयोः प्राबल्यदौर्बल्यविभागोऽनुपपन्न इति भावः। एवं मन्त्रवर्णेन जीवब्रह्मभेदसिद्धिं फलितां दर्शयति (जीवस्येति) प्राप्तुरस्योपासकात्मस्वरूपस्य प्राप्तव्यस्य परब्रह्मणश्च कथमैक्यमित्यर्थः। मान्त्रवर्णिकं ब्रह्म जीवादन्यदस्तु, अस्यैवानन्दमयत्वं कथमित्यत्राह (अनन्तरञ्चेति) पूर्व-

छ भावप्रकाशिका छ

ब्राह्मणप्राबल्यवादो ऽनुपपन्न इत्युक्तेस्तदविरोधाय मन्त्राणां प्राबल्यमिति पाठो युक्त इति। केचित्तु मन्त्रप्राबल्यमपि वर्णयन्ति. तदपेन ग्रन्थेनानूद्यत इत्यपि वर्णयन्ति। (तद्व्युदासार्थमाहेति) अत्र तद्व्युदासार्थमप्याहेत्यपिशब्दोऽध्याहर्तव्यः, ततश्च किमुक्तं भवतीत्याहेत्यवतारिते ग्रन्थे पुनरवतारिकादानमनर्थकमिति न चोदनीयम्। (नित्यनिर्दोषत्वाविशेषादिति) यद्यपि नित्यनिर्दोषत्वाविशेषेपि उपसंहारापेक्षयोपक्रमप्राबल्यं पूर्वापच्छेदशास्त्रादुत्तरापच्छेदशास्त्रस्य वाक्याच्छ्रुतेः प्राबल्यमित्यादि दृश्यते, तथा "ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यस्य ऐन्द्रीमन्त्र-

[1]–२ तै. आन. १-अनु॥

आकाशस्सम्भूतः" इत्यारभ्योत्तरोत्तरैर्ब्राह्मणैर्मन्त्रैश्च तदेव विशदीक्रियते, अतो जीवादन्य आनन्दमयः ॥

अत्राह-- यद्यप्युपासकात्प्राप्यस्य भेदेन भवितव्यम् तथापि न वस्त्वन्तरं जीवान्मान्त्रवर्णिकं ब्रह्म, किन्तु तस्यैवोपासकस्य निरस्तसमस्ताविद्यागन्धनिर्विशेषचिन्मात्रैकरसं शुद्धं स्वरूपम्; तदेव [1]"सत्यं ज्ञानमनन्तं ब्रह्म' इति मन्त्रेण विशोध्यते। तदेव च [2]"यतो

* श्रुतप्रकाशिका *

स्मिन्नस्मिन्नपि सूत्रे, चशब्दो हेतुसमुच्चये। 'विकारशब्दा'दितिसूत्रे स्वतन्त्रहेत्वन्तराभावान्न चशब्दः। तद्धि 'आनन्दमयोऽभ्यासात्' इति सूत्रशेषम् ॥.... ....

उत्तरसूत्रस्य शङ्कामाह (अत्राहेति) अत्र-- उपासकप्राप्यभेदेऽभिहिते सतीत्यर्थः। (तस्यैवेति) कारणाविद्या आच्छादिकाऽविद्या कार्याविद्या विक्षेपिकाऽविद्या च विवक्षिता समस्तशब्देन। गन्धशब्देनापारमार्थ्यं फलितम्; अपुनस्सम्बन्धो वाभिप्रेतः। शुद्धम्-- कर्मतत्फलान्वयरहितम्। निर्विशेषत्वमेवोपपादयति (तदेवेति) ज्ञानपदेन निर्विशेषत्वमर्थसिद्धम्। ज्ञानस्य ज्ञानान्तराश्रयत्वाद्ययोगात् वाङ्मनसनिवृत्तिवचनाच्च निर्विशेषत्वसिद्धिमाह (तदेव चेति) तदेव--

* भावप्रकाशिका *

गतेन्द्रपदस्य गार्हपत्यलक्षकत्वम्, न तु ब्राह्मणगतस्य गार्हपत्यपदस्य, अप्राप्तप्रकाशकतया तस्य बलवत्त्वादित्याद्युक्तम्, तथापि उपक्रमत्वाप्राप्तप्रकाशत्वादिकं प्रयोजकम्. मन्त्रत्वब्राह्मणादिकं प्राबल्यदौर्बल्यादावप्रयोजकमिति भावः ॥

(कारणाविद्या आच्छादिकाविद्येति) आच्छादिकाविद्या या कारणाविद्या विक्षेपकाविद्यारूपा या कार्याविद्या सा सर्वापि समस्तशब्देन विवक्षितेत्यर्थः। (गन्धशब्देनापारमार्थिकत्वमिति) सूपगन्धिभोजनमित्यादाविव गन्धशब्दस्याल्पवाचित्वात्, तस्या अल्पत्वञ्च मिथ्यात्वमेवेति भावः। यद्वा गन्धशब्देन वासनो-

१ तै. आन. १-अनु ॥ २ तै. आन. ९-अनु ॥

वाचो निवर्त्तन्ते । अप्राप्य मनसा सह" इति वाङ्मनसागोचरतया निर्विशेषमिति गम्यते, अतस्तदेव मान्त्रवर्णिकमिति तस्मादतिरिक्त आनन्दमय इति । अत उत्तरं पठति—

नेतरोऽनुपपत्तेः ॥ १७ ॥

परमात्मन इतरो जीवशब्दाभिलप्यो मुक्तावस्थोऽपि न भवति मान्त्रवर्णिकः । कुतः ? अनुपपत्तेः । तथाविधस्यात्मनो निरुपाधिकं विपश्चित्त्वं नोपपद्यते । इदमेव हि निरुपाधिकं विपश्चित्त्वं 'सोऽकामयत बहु

* श्रुतप्रकाशिका *

शुद्धस्वरूपमेव । उपासकप्राप्यभेदोऽवस्थाभेदेनाप्युपपन्न इति न जीवविलक्षणत्वसिद्धिरित्यर्थः ।

नेतरोऽनुपपत्तेः ॥ इतरशब्दस्य सप्रतियोगिकत्वात् परमात्मन इत्युक्तम् । अनुपपत्तेरित्यस्मिन् पदे पञ्चम्यर्थं पश्चाद्वक्ष्यन्ननुपपत्तिस्वरूपमाह ( तथेति ) ( निरुपाधिकं विपश्चित्त्वमिति ) कर्मविशेषेन्द्रियाद्यनपेक्षत्वं निरुपाधिकत्वम्, इह चोपाधिरस्ति चेत्स वक्तव्यः, तदभावादेव तदनुक्तिरिति केवलविपश्चिच्छब्दो निरुपाधिकं विपश्चित्त्वमाहेत्यर्थः । न केवलं निरुपपदत्वाद्विपश्चित्त्वस्य निरुपाधिकत्वमर्थसिद्धं श्रुतिसिद्धमपीत्याह ( इदमेवेति ) मुक्तस्य निरुपाधिकविपश्चित्त्वं सम्भवतीति शङ्कायां किं भवदभिमतमुक्तस्य विपश्चित्त्वोपपत्तिः ? उतास्मदभिमतस्य ? इति विकल्पमभिप्रेत्य स्वाभिमतस्य मुक्तस्य तदनुपपत्तिरिदमेवेत्यादिभाष्येणो-

* भावप्रकाशिका *

च्यते, सवासननिवृत्तेः ज्ञानाधीनत्वेन ज्ञाननिवर्त्यत्वलक्षणमिथ्यात्वं सिद्धमिति भावः । ( अपुनस्सम्बन्ध इति ) निश्शेषनिवृत्तिरित्यर्थः ॥

( पञ्चम्यर्थं पश्चाद्वक्ष्यन्निति ) इतिशब्देनेति भावः । इतिशब्दस्सूत्रस्थपञ्चमीव्याख्यानमिति वक्ष्यमाणत्वात् । ( भवदभिमतमुक्तस्येति ) निर्विशेषस्ये-

स्यां प्रजायेय' इति सत्यसङ्कल्पत्वप्रदर्शनेन विवरिष्यते। विविधं पश्यच्चित्त्वं हि विपश्चित्त्वम् । पृषोदरादित्वात् पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दः । यद्यपि मुक्तस्य विपश्चित्त्वं सम्भवति, तथापि तस्यैवात्मनः संसारदशायामविपश्चित्त्वमप्यस्तीति निरुपाधिकं विपश्चित्त्वं नोपपद्यते। निर्विशेषचिन्मात्रतापन्नस्य मुक्तस्य विविधदर्शनाभावात्सुतरां विपश्चित्त्वं न सम्भवतीति ,न केनापि

* श्रुतप्रकाशिका *

च्यते। विपश्चिच्छब्दार्थे ज्ञाते हि जीवे तदनुपपत्तिर्वाच्येत्यत्राह ( विविधमिति ) तर्हि विपश्चिदिति वक्तव्यमित्यत्राह ( पृषोदरादित्वादिति ) "पृषोदरादीनि यथोपदिष्टम्' इति पाणिनिः । पृषच्छब्दावयवतकारलोपवद्यच्छब्दलोपः, पाणिनिवदाप्ततममुनिभिः कृतनिर्वाहत्वादीदृशशब्दानां साधुत्वस्य पाणिन्यभिमतत्वमनेन ज्ञातं भवति ; अतो विविधं पश्यच्चेतनत्वं विपश्चित्त्वमित्यर्थः । चिच्छब्दस्य ज्ञानवाचित्वे विविधं पश्यच्चित्त्वमिति बहुव्रीहिः, स्वपक्षे मुक्तस्य निरुपाधिकविपश्चित्त्वायोग उक्तः । अथ पराभिमतमुक्तस्य विपश्चित्त्वायोगमाह ( निर्विशेषेति ) विपश्चित्त्वमात्रमेव न सम्भवतीत्यभिप्रायेण सुतरामित्युक्तम् । न सम्भवतीत्यत्रेतिशब्दस्सूत्रस्थपञ्चमीव्याख्यानम्। न केवलं विपश्चिच्छब्दमात्रासङ्गतिः, सर्वप्रमाणविरोधश्चेत्याह ( न केनापीति ) आर्थगुणनिषेधपरस्य सत्य-

छ भावप्रकाशिका छ

स्यर्थः । भाष्ये—विविधं पश्यच्चित्त्वं हीति । पश्यच्चित्त्वस्य वैविध्यं नाम नानाविधार्थविषयकत्वमेवेति भावः । ननु विविधमिति द्वितीयान्तं भावप्रत्ययान्तम् . प्रकृत्यर्थैकदेशान्वयदौर्घट्यात् । केचित्तु द्वितीयान्तत्वेपि गमकत्वमस्तीति मन्यन्ते, अन्ये तु विविधमित्येतत्पश्यशब्दार्थक्रियाविशेषणमिति मन्यन्ते । ( विविधं पश्यच्चित्त्वमित्यत्र बहुव्रीहिरिति ) विविधं पश्यच्चित्त्वमितिवाक्ये पश्यन्ती चिद्यस्येति

प्रमाणेन निर्विशेषं वस्तु प्रतिपाद्यत इति च पूर्वमेवोक्तम् । "यतो वाचो निवर्त्तन्ते" इति च वाक्यं यदि वाङ्मनसयोर्ब्रह्मणो निवृत्तिमभिदधीत; न ततो निर्विशेषतां वस्तुनोऽवगमयितुं शक्नुयात्, अपि तु वाङ्मनसयोस्तत्राप्रमाणतां वदेत, तथा च सति तस्य तुच्छत्वमेवापद्यते । 'ब्रह्मविदाप्नोति' इत्यारभ्य ब्रह्मणो

* श्रुतप्रकाशिका *

ज्ञानादिवाक्यस्य परिहारः प्रथमसूत्रोक्तोऽनुसन्धेयः । 'यतो वाच' इत्यस्य वाक्यस्य निर्विशेषपरत्वं व्युदस्यति ( यतो वाच इत्यादिना ) यदीत्यनुज्ञाप्रदर्शनम् , तर्हि किमवगमयेदित्यपेक्षायां न केवलमिष्टाबोधकत्वम् , किन्त्वनिष्टबोधकत्वं चेत्यभिप्रयन्नाह ( अपि त्विति ) कथमस्यानिष्टत्वमित्यत्राह ( तथा च सतीति ) मनसोऽप्यगोचरत्वेन सर्वप्रमाणागोचरत्वं सिद्धं कृत्वा प्रमाणान्तरागोचरत्वमप्युपजीव्य तुच्छत्वमापादितम् , किं सर्वथा वाङ्मनसनिवृत्तिरुच्यते ? उतेयत्तागोचरवाङ्मनसनिवृत्तिः ? । द्वितीयशिरसोऽभ्युपगमो वक्ष्यत इति प्रथमशिरसि तुच्छत्वमुक्तम् । ब्रह्मविदाप्नोति परमिति पूर्वापरवाक्यविरोधात् ब्रह्मणस्तुच्छत्वं व्याहतमित्यत्राह ( ब्रह्मविदिति ) व्याहतार्थं श्रुतिर्न प्रतिपादयतीति चेत् तन्निर्विशेषपरत्वेऽपि तुल्यमित्यभिप्रायेण तत्तद्वाक्यप्रतिपन्नान् गुणा-

* भावप्रकाशिका *

पश्यच्चित्, तस्य भावः पश्यच्चित्त्वमिति बहुव्रीहिरित्यर्थः । न तु विविधं पश्यच्चित्त्वमित्येतावतोप्येकपद्यम्, मुब्लोपप्रसङ्गात् । ( यदीत्यनुज्ञाप्रदर्शनार्थमिति ) यतो वाच इति वाक्यमतिशयेयत्ताया निवृत्तिपरं न भवति । अपितु ब्रह्मस्वरूपानिवृत्तिपरमिति त्वदभ्युपगमो यदीत्यर्थः । ( ब्रह्मणस्तुच्छत्वं व्याहतमित्यत्राहेति ) ततश्चाव्याहतत्वात् ब्रह्मणो निर्विशेषत्वमेव प्रतिपादयतीति भावः । निर्विशेषत्वेपि तुल्यमित्युत्तरग्रन्थानुसारात् । अत्र च निष्प्रमाणकत्वेपि तुल्यमित्यनुक्त्वा निर्विशेषत्वेपीति वदत आचार्यस्य वाङ्मनसयोर्ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितमिति भाष्ये निष्प्रमाणकमित्यस्य निर्विशेषमित्यर्थ

विपश्चित्त्वं जगत्कारणत्वं ज्ञानानन्दैकताननतामितरान् प्रत्यानन्दयितृत्वं कामादेव चिदचिदात्मकस्य कृत्स्नस्य स्रष्टृत्वं सृज्यवर्गानुप्रवेशकृततदात्मत्वं भयाभयहेतुत्वं वाय्वादित्यादीनां प्रशासितृत्वं शतगुणितोत्तरक्रमेण निरतिशयानन्दत्वमन्यच्चानेकं प्रतिपाद्य वाङ्मनसयो· ब्रह्मणि प्रवृत्त्यभावेन निष्प्रमाणकं ब्रह्मेत्युच्यत इति भ्रान्तजल्पितम् । 'यतो वाचो निवर्त्तन्ते' इति यच्छ-ब्दनिर्दिष्टम् 'आनन्दं ब्रह्मणो विद्वान्' इत्यानन्दशब्देन प्रतिनिर्दिश्य तस्य ब्रह्मसम्बन्धित्वं ब्रह्मण इति व्यति-रेकनिर्देशेन प्रतिपाद्य तदेव वाङ्मनसागोचरं 'विद्वान्'

* श्रुतप्रकाशिका *

नाह ( विपश्चित्त्वमित्यादिना ) " ब्रह्मणा विपश्चिता 'आकाशस्सम्भूतः' ' रसो वै सः' ' एष ह्येवानन्दयाति' ' सोऽकामयत बहु स्यां प्रजायेय' 'तदनु प्रविश्य' ' अथ सोऽभयङ्गतो भवति' 'भीषाऽस्माद्वातः पवते' ' स एको मानुष आनन्दः" इत्येतेषां वाक्यानामर्थो विपश्चित्त्वमित्यादिना उक्तः । (शतगुणितोत्तरक्रमेणेति) निर्विशेषत्वं विवक्षितं चेत् गुणापकर्षो वाच्यः, गुणप्रकर्षमुक्त्वा वाङ्मनस-निवृत्त्यभिधानमानन्त्यविवक्षाकृतमित्यभिप्रायः । ( अन्यच्चेति ) आदित्यमण्ड-लान्तर्वर्त्तित्वादिकं विवक्षितम् । एवं पूर्वापरवाक्यव्याहतिपरिहारार्थं स्वरूप-मङ्गीक्रियते चेत् तद्वत् गुणाश्च स्वीकार्या इत्युक्तं भवति, एवं प्रकरणविरोध उक्तः । अथ स्ववाक्यविरोधमाह ( यतो वाच इति ) यच्छब्दनिर्दिष्टमानन्दमि-त्यत्र " कश्चैष मौनः' ' यतो न वेदाः" इति सनत्सुजातोक्तश्लोकद्वयैकार्थ्यमनु-सन्धेयम् । व्यतिरेकनिर्देशेन— भेदनिर्देशेन ; वैयधिकरण्येनेत्यर्थः । यच्छब्देना-

* भावप्रकाशिका *

इत्याशय उन्नीयते । ( कश्चैष मौन इति ) "कश्चैष मौनः कतरं नु मौनं प्रब्रूहि विद्वन्निह मौनभावम् । अनेन विद्याननु याति मौनं कथं मुने मौनमिहाचरन्ति ॥

इति तद्वेदनमभिदधद्वाक्यं जरद्गवादिवाक्यवदन-र्थकं वाच्यानन्तर्गतञ्च स्यात् । अतः शतगुणितोत्तर-

* श्रुतप्रकाशिका *

नन्दनिर्देशः आनन्दशब्देन प्रतिनिर्देशो ब्रह्मसम्बन्धित्वनिर्देशश्च वागविषयत्वे व्याहताः स्युः । विद्वानिति तद्वेदनाभिधानं मनोगोचरत्वाभावे व्याहतं स्यादि-त्यर्थः । ( अनर्थकं वाच्यानन्तर्गतं च स्यादिति ) अनर्थकम् व्याहतार्थं स्यात् । व्याहतिपरिहारोऽभिमतश्चेत्— ब्रह्म न शब्दवाच्यमितीदं समुद्रघोषादिवद्वाक्य-मेव न स्यादित्यर्थः । वाक्यत्वे व्याहतिरनिवार्येति भावः । ब्रह्मणोऽशब्दगो-चरत्वं ब्रह्म न शब्दगोचर इत्यनेनापि शब्देन व्याहतं स्यादिति चाभिप्रायः, सत्यं ज्ञानमिति स्वरूपस्य सत्यत्वं कण्ठोक्तम्, न गुणानाम्, अतस्तन्निषेध इति चेत्. न, तत्र सत्यपदेन ह्यविकारित्वमुक्तम्, न तु मिथ्यात्वव्यावृत्तिः । मिथ्यात्वव्यावृत्ति-रुक्ताऽस्तु, तथापि गुणानां च सत्यत्वं दुरपह्नवम्, प्रमाणसिद्धत्वात् । प्रामाणि-कत्वं हि सत्यत्वम् । किञ्च गुणानां सत्यत्वं कण्ठोक्तं "सत्यकामस्सत्यसङ्कल्पः" "त इमे सत्याः कामाः" 'एतांश्च सत्यान् कामान्" इत्यादिभिः । अतः स्वरूपवत् गुणा अपि स्वीकार्याः, प्रमाणोपपत्तिसाम्यात्, अतो वाङ्मनस-

* भावप्रकाशिका *

यतो न वेदा मनसा सहैनमनुप्रविशन्ति तवाथमौनम् । यत्र स्थितो वेद-शब्दस्तथायं न तन्मयत्वेन विभाति राजन् ॥ इति महाभारतसनत्सुजातश्लोक-द्वयैकार्थ्यमनुसन्धेयमित्यर्थः । ( व्याहतिपरिहारोऽभिमतश्चेदिति ) 'यतो वाच' इति वाक्यं किमपि न प्रतिपादयतीति न व्याहतिरिति चेदित्यर्थः । ( इत्यने-नापिशब्देनेति ) इत्येतत् अनेनापि शब्देन स्वेनापि शब्देनेत्यर्थः । सत्यकामस्सत्य-सङ्कल्प इत्यादौ न कामनासङ्कल्पानां स्वरूपतस्सत्यत्वमुच्यते, किन्तु अमोघत्व-रूपसत्यविषयत्वमेव, इतरथा अस्मदादिष्वपि सत्यकामत्वादिव्यपदेशप्रसङ्गात्. अस्मदादिसङ्कल्पस्यापि पारमार्थिकत्वात्सत्यकामशब्दस्य नित्यविभूतिमत्त्वपरत्वेन सत्यसङ्कल्पपदस्यापि सङ्कल्पमात्रसिद्धसर्वार्थत्वपरतया च दहराधिकरणे व्याख्या-स्यमानत्वात्, वेदार्थसङ्ग्रहेपि तथैव प्रतिपादितत्वाच्चेत्यस्वरसादाह ( त इमे सत्याः कामा इति ) तत्र कामशब्दनिर्दिष्टानामपहतपाप्मत्वादीनां गुणानां सत्यत्वाभि-

क्रमेण ब्रह्मानन्दस्यातिशयेयत्तां वक्तुमुद्यम्य तस्येयत्ताया अभावादेव वाङ्मनसयोस्ततो निवृत्तिः 'यतो वाचो निवर्तन्ते ' इत्युच्यते । एवमियत्तारहितं 'ब्रह्मण आनन्दं विद्वान् कुतश्चन न बिभेति ' इत्युच्यते । किञ्च

* श्रुतप्रकाशिका *

निवृत्तिर्न निर्विशेषत्वनिबन्धना । ननु न शब्देन मुख्यवृत्त्या प्रतिपाद्यते ब्रह्म, अपि तु लक्षणया, अतो यतो वाच इति मुख्यवृत्तिविषयो निषेध इति विषयविभागान्न व्याहतिरिति चेन्न , निवर्तन्त इत्येकस्य वाक्यस्य मुख्यत्वायानेकवाक्यलक्षणाश्रयणायोगात् । " भूयसां स्याद्बलीयस्त्व " मिति न्यायादेकवाक्यस्वारस्यभङ्गेन अनेकवाक्यस्वारस्यं ह्यनुवर्तनीयम् । किञ्च अत्र 'न हिंस्यात्सर्वा भूतानि' 'अग्नीषोमीयं पशुमालभेत' इतिवद्विषयविभागेनोभयमुख्यत्वं सिध्यति चेत् तदेव हि युक्तम्, लोके च गामानय बलीवर्दं विनेति विषयविभागो मुख्यत्वानुरोधी दृश्यते । अविरुद्धार्थः क इत्यपेक्षायां विषयविभागं दर्शयति ( अत इति ) वाङ्मनसनिवृत्तिरस्ति चेत् कथं वेदनवचनमित्यत्राह ( एवमिति ) इयत्तारहितत्वेन वेदनमुच्यत इत्यर्थः । अनुपपत्तेरिति सौत्रपदस्य विपश्चिच्छब्दोक्तसर्वज्ञत्वानुपपत्तिरर्थ उक्तः । अथ सर्वशक्तित्वानुपपत्तिमर्थान्तरमाह ( किञ्चेति )

ᛃ भावप्रकाशिका ᛃ

धानात्सत्यत्वं कण्ठोक्तमिति भावः । ( उभयमुख्यत्वं सिध्यति चेत्तदेव युक्तमिति ) यत्र मुख्यार्थसङ्कोचलक्षणैकदेशबोधनेनैव वाक्ययोरविरोधसम्पादनम् , तत्र सर्वात्मना मुख्यार्थत्यागरूपलक्षणा नाश्रयितुमुचितेत्यर्थः । ( विषयविभागोमुख्यत्वानुरोधी दृश्यत इति ) 'गामानय बलीवर्दमानय' इत्युक्ते गोशब्दस्य सर्वात्मना मुख्यार्थापरित्यागेन बलीवर्दव्यतिरिक्तगोविषयत्वेन सङ्कोच एव कल्प्यते, नतु सर्वात्मना मुख्यार्थबाधेन लक्षणा समाश्रियते. तद्वद्वाच्यत्वप्रतिपादकप्रमाणानां ' यतो वाचो निवर्तन्ते' इत्यादिना विरोधे इयत्तया वाच्यत्वव्यतिरिक्तवाच्यत्वपरतया सङ्कोच एव कार्यः । न तु सर्वात्मना वाच्यत्वरूपार्थपरित्यागेन वाच्यमित्यस्य लक्ष्यमित्याश्रयणमित्यर्थः । .... .... ....

अस्य मान्त्रवर्णिकस्य विपश्चितः [1]'सोऽकामयत' इत्यारभ्य वक्ष्यमाणस्वसङ्कल्पावक्लृप्तजगज्जन्मस्थितिजगदन्तरात्मत्वादेर्मुक्तात्मस्वरूपादन्यत्वं सुस्पष्टमेव। १७।

इतश्चोभयावस्थात्प्रत्यगात्मनोऽन्य आनन्दमयः—

भेदव्यपदेशाच्च ॥ १८ ॥

[2]"तस्माद्वा एतस्मादात्मन आकाशः" इत्यारभ्य मान्त्रवर्णिकं ब्रह्म व्यञ्जयद्वाक्यमन्नप्राणमनोभ्य इव जीवादपि तस्य भेदं व्यपदिशति [3]"तस्माद्वा एतस्माद्विज्ञानमयात्। अन्योऽन्तर आत्माऽऽनन्दमयः"

* श्रुतप्रकाशिका *

इदं सूत्रं मान्त्रवर्णिकसूत्रोक्तहेत्वन्यथासिद्धिपरिहारपरतया तच्छेषमिति स्वतन्त्रहेतुपरत्वाभावात् चशब्दाप्रयोगः ॥ .... .... .... .... .... ....

एवमनेन सूत्रद्वयेनोपक्रमस्थहेतुरनुसंहितः। अथ मध्यगतं स्फुटतरं हेतुमनुसन्धत्तेऽनन्तरसूत्रेण। आनन्दमयस्य जीवादन्यत्वं स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगेन प्रथमसूत्रेणोपपादितम्, अतोऽत्र स्ववाक्यस्थहेतुश्चोक्तो भवति ॥

भेदव्यपदेशाच्च ॥ यदि जीवात्मस्वरूपं शुद्धावस्थं ब्रह्म, तर्हि अन्नमयादेरिवैकावस्थायां भेदव्यपदेशो न सम्भवति; तस्मादन्नमयादिभिरिव जीवेनैक्यं

* भावप्रकाशिका *

( अतोऽत्र स्ववाक्यस्थहेतुश्चोक्तो भवतीति ) ननु स्ववाक्यस्थकथनरूपान्तरङ्गप्रत्यासत्त्या तथा स्ववाक्यैकदेशमयडन्तपदवाच्यनिरतिशयानन्दयोगप्रतिपादकाद्यसूत्रत्रयानन्तर्मयस्य सूत्रस्य कुतो न स्यादिति चेत्. सत्यम्; आदिमध्यान्तगतहेतुपरामर्शक्रमसङ्गतिविशेषाभिप्रायेण इह सङ्गत्युपपत्तेः ॥

( एकावस्थायामिति ) 'एतस्माद्विज्ञानमयादन्योन्तर आत्मा' इति बद्धं

१ तै. आन. ६-अनु ॥ २ तै. आन. १-अनु ॥ ३ तै. आन. ५ ॥

इति । अतो जीवाद्भेदस्य व्यपदेशाच्चायं मान्त्रवर्णिक आनन्दमयोऽन्य एवेति ज्ञायते ॥

इतश्च जीवादन्यः—

कामाच्च नानुमानापेक्षा ॥ १८ ॥

जीवस्याविद्यापरवशस्य जगत्कारणत्वे ह्यवर्जनीया आनुमानिकप्रधानादिशब्दाभिधेयाचिद्वस्तुसंसर्गापेक्षा ; तथैव हि चतुर्मुखादीनां कारणत्वम् । इह च [1]'सोऽकामयत बहु स्यां प्रजायेय' इत्यचित्संसर्गरहितस्य स्वकामादेव विचित्रचिदचिद्वस्तुनः सृष्टिः [2]'इदं सर्वमसृजत । यदिदं किञ्च' इत्याम्नायते। अतोऽस्या-

* श्रुतप्रकाशिका *

ब्रह्मणो न सम्भवतीत्यर्थः । विज्ञानशब्दस्यान्तःकरणपरत्वानुपपत्त्यादिकं पूर्वोक्तमिहानुसन्धेयम् ॥ .... .... .... .... ....

अथोपसंहारस्थहेतुमाह—कामाच्च नानुमानापेक्षा ॥ कैश्चित्प्रधानव्यावृत्तिपरमिदं सूत्रं व्याख्यातम्, तत्पक्षोऽतिदुस्स्थत्वान्नानूद्य दूषितः। पूर्वाधिकरणे अचिद्व्यावृत्तिः कृता, प्रधानशङ्काहेतुश्चास्मिन्ननुवाके नास्ति अपेक्षाशब्दवैयर्थ्यञ्च स्यादिति (जीवस्येति) अत्यन्तमचिदनपेक्षत्वे स्वरूपपरिणामप्रसङ्गः, देहातिरिक्ताचिदनपेक्षत्वं देवादिसृष्टौ चतुर्मुखादीनामप्यस्ति , अतस्तत्परिहारार्थमाह (इह चेति) सङ्कल्पहेतुभूतकरणकलेवरावस्थाचित्संसर्गापेक्षा नास्तीत्यर्थः ॥ ....

 भावप्रकाशिका 

जीवं परामृश्य 'अन्योन्तर आत्मा' इति तस्यामेव दशायामन्तरात्मत्वेनानन्दमयस्य भेदकीर्तनादित्यर्थः ॥ .... .... .... .... .... ....

(स्यादिति जीवस्येति) स्यादित्यभिप्रेत्य जीवस्येत्युक्तमित्यर्थः । केचित्तु जीवस्येति प्रतीकग्रहणं तद्वाक्ये व्याख्यात इति सूचनार्थत्वमिति वदन्ति ॥

---

१ तै. आन. ६ अनु ॥ | २ तै. आन. ६-२ ॥

नन्दमयस्य जगत्सृजतो नानुमानिकाचिद्वस्तुसंसर्गापेक्षा प्रतीयते ॥ ×

इतश्च जीवादन्य आनन्दमयः—

अस्मिन्नस्य च तद्योगं शास्ति ॥ २० ॥

अस्मिन्–आनन्दमये। अस्य– जीवस्य। तद्योगम्–आनन्दयोगम् । शास्ति– शास्त्रम् । [1]"रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति । रसशब्दाभिधेयानन्दमयलाभादयं जीवशब्दाभिलपनीयः आनन्दीभवतीत्युच्यमाने यल्लाभाद्य आनन्दीभवति, स स एवेत्यनुन्मत्तः को ब्रवीतीत्यर्थः ॥

* श्रुतप्रकाशिका *

देहानपेक्षं सत्यसङ्कल्पत्वैकार्यं स्रष्टृत्वमाविर्भूतगुणाष्टकस्य मुक्तस्यापि श्रूयत इति शङ्कां परिहरन् 'सोऽकामयत' इतिवाक्यादुपरितनहेत्वन्तरमाह ॥

अस्मिन्नस्य च तद्योगं शास्ति ॥ कस्मिन् कस्य केन योगं किं शास्तीत्यपेक्षायामक्षरार्थमाह (अस्मिन्–आनन्दमय इति) अस्मिन्निति विषयसप्तमी, ब्रह्मानुभवरूपानन्दस्य व्यवच्छेदकं ब्रह्म। शास्तिशब्दार्थः कः ? शास्त्रं किम् ? एतत्सूत्रार्थस्य हेतुत्वं कथमित्यत्राह (रसो वै स इति) 'रसो वै स' इति शास्त्रमुक्तम् । उच्यमान इति शास्तिशब्दार्थ उक्तः । हेतुत्वमुपपादयति (यल्लाभादिति)

ध्र भावप्रकाशिका ध्र

(अस्मिन्निति विषयसप्तमीति) अस्य जीवस्य अस्मिन्नानन्दमये विषये आनन्दयोगं शास्ति, आनन्दमयविषयकानुभवरूपानन्दयोगं शास्तीत्यर्थः । जीवस्यानन्दरूप आनन्दमयानुभवोऽस्तीति यावत् । एवञ्च 'रसं ह्येवायं लब्ध्वानन्दीभवति' इति श्रुतिवाक्यस्यायमर्थः, रसं लब्ध्वा रसस्वरूपमानन्दमयं लब्ध्वा अनुभूय आनन्दी भवति लाभरूपानन्दीभवतीति । विषयसप्तमीत्येतदुपलक्षणम्.

---

[1] तै. आन. ७-१ ॥ × ततश्च जीवादन्य आनन्दमयः । इतश्च– इतिच पाठान्तरम्.

एवमानन्दमयः परं ब्रह्मेति निश्चिते सति [1]"यदेष आकाश आनन्दः" [2]"विज्ञानमानन्दं ब्रह्म" इत्यादिष्वानन्दशब्देनानन्दमय एव परामृश्यते। यथा विज्ञान-

* श्रुतप्रकाशिका *

हेतुत्वस्य स्फुटतरत्वात्सूत्रे हेतुत्वानिर्देश इत्यभिप्रायेणानुन्मन्तः को ब्रवीतीत्युक्तम्। मान्त्रवर्णिकसूत्रेऽपि हेतुत्वानिर्देशस्यायमेवाभिप्रायः॥

कथमानन्दमये जीवस्यानन्दयोगं वदति शास्त्रम्, आनन्दे ह्यानन्दयोगं वदतीति शङ्कायामानन्दानन्दमयशब्दयोरेकविषयत्वमाह (एवमिति) कथमानन्दशब्दस्यानन्दमयवाचित्वमित्यपेक्षायां विज्ञानशब्दनिर्वाहे पूर्वोक्तन्यायमिहातिदिशति (यथा विज्ञानेति) अत्र पूर्वोक्तहेतवोऽनुसन्धेयाः। स्वरूपस्या-

७ भावप्रकाशिका ७

अस्मिन् परमात्मनि लब्धे सति अस्य जीवस्य आनन्दयोगं 'रसं ह्येवायं लब्ध्वानन्दीभवती' तिशास्त्रं शास्तीत्यर्थाश्रयणेपि न दोष इति द्रष्टव्यम्। ननु जीवस्यानन्दमयानुभवरूपानन्दशालित्वम्. कथं जीवानन्दमययोर्भेदं साधयेत्, अभेदेपि तत्सम्भवात्, परमात्मनोपि स्वानुभवसत्त्वादिति चेत्. उच्यते; आनन्दमयस्य जीवाभिन्नत्वे आनन्दीभवतीतिशास्त्रेण शिष्यमाण आनन्दमययोगो नोपपद्यते. स्वस्य स्वयोगासम्भवात्। सूत्रे तद्योगं शास्तीत्यत्र तच्छब्द आनन्दरूपानन्दमयपर इति न कोपि दोषः॥ .... .... .... ....

(आनन्दे ह्यानन्दयोगं वदतीति) 'रसं ह्येवायं लब्ध्वानन्दी भवति' इत्युक्तेरिति भावः। नन्वेवमानन्दमयः परं ब्रह्मेति निश्चिते सतीत्यादिभाष्यस्यैवमवतारिकायाम् 'अस्मिन्नस्य च तद्योगं शास्ति' इतिसूत्रार्थनिश्चयस्यानन्दमयपरब्रह्मनिश्चयोत्तरभावितया इदं सूत्रमानन्दमयपरब्रह्मत्वनिर्णयाप्रयोजकमेव स्यात् ततश्चानन्दमयस्य परब्रह्मत्वे " यदेष आकाश आनन्दो न स्यात्' 'विज्ञानमानन्दं ब्रह्म' 'आनन्दो ब्रह्मेति व्यजानात्" इत्यादीनामानन्दस्य जगत्कारणत्वब्रह्मत्वप्रतिपादकानां वाक्यानां विरोधमाशङ्क्य परिहरतीत्येवावतारिका युज्यत इति चेत्. उच्यते; अवतारिकान्तरसद्भावेपि अस्यामवतारिकायां दोषाभावात्,

१ तै. आन. ७॥ | २ बृ. ५-९-२८॥

शब्देन विज्ञानमयः । अत एव [1]"आनन्दं ब्रह्मणो विद्वान्' इति व्यतिरेकनिर्देशः, अत एव च [2]'आनन्दमयमात्मानमुपसङ्क्रामति' इति फल-निर्देशश्च । उत्तरे चानुवाके पूर्वानुवाकोक्तानामन्न-

* श्रुतप्रकाशिका *

नुकूलवेदनीयित्वादानन्दशब्दो धर्मिपरः , धर्मपरत्वेऽप्यपर्यवसानाद्धर्मिपर इति भावः । व्यतिरेकनिर्देशं हेतुमाह (अत एवेति) अत एव—आनन्दानन्दमयशब्द-योरेकविषयत्वेनेत्यर्थः । हेत्वन्तरमाह (अत एवेति) स्थानप्रमाणमाह (उत्तरे चेति) पूर्वानुवाके एतदनुवाकोर्ध्वभागे च मयडन्तपदनिर्दिष्टानामत्र मयड्र-हितपदनिर्देशप्रकरणे आनन्दशब्देन प्रतिपादनात् आनन्दमय एवानन्दशब्द-

❀ भावप्रकाशिका ❀

न चोक्तदोष इति वाच्यम् ; अभ्युच्चययुक्तितयोपन्यासे दोषाभावात् । (पूर्वोक्त-हेतव इति) स्वप्रकाशाद्वा ज्ञानपदवाच्यत्वं तद्गुणसारत्वाद्वेत्येवमादय इत्यर्थः । भाष्ये—यथा विज्ञानशब्देन विज्ञानमय इति । ननु विज्ञानशब्देन विज्ञानमयोक्तौ 'तद्गुणसारत्वात्तद्व्यपदेशः प्राज्ञवत्' इति सूत्रकृता 'यदेष आकाश आनन्दो न स्यात्' 'आनन्दो ब्रह्मेति व्यजानात्' इत्यानन्दशब्देन प्राज्ञस्य निर्देशो दृष्टा-न्तीकृतः । इह त्वानन्दशब्देनानन्दमयस्य निर्देशे विज्ञानशब्दो दृष्टान्तीक्रियत इति तदेतदितरेतराश्रयं स्यात् , इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते. यथा नौर्नाविबद्धा नेतरेतरत्राणाय भवतीति. मैवम्; सूत्रकृता तद्गुणसारत्वादिति युक्तिसाम्येनापततिधर्मिपर्यन्तत्वे आनन्दशब्दस्य दृष्टान्तीकरणेपि आनन्दशब्दस्य धर्मिपर्यन्तत्वे विज्ञानशब्दस्य सूत्रकृता दृष्टान्तीकृतत्वाभावात् , एकोनसहस्राधि-करणन्यायेन तत्तद्विप्रतिपत्तिदशायां तस्य तस्य दृष्टान्तीकरणे दोषाभावात् , प्राज्ञव-दित्यत्र 'सत्यं ज्ञान'मिति ज्ञानशब्दस्यैव दृष्टान्तत्वसम्भवाच्च । (आनन्दानन्द-मयशब्दयोरेकविषयत्वेनेत्यर्थ इति) 'आनन्दो ब्रह्म' इत्यादौ ब्रह्मपदसमानाधि-कृतानन्दशब्दस्यानन्दमयपरत्वाभावे 'आनन्दं ब्रह्मणो विद्वान्' इत्यादौ आन-

१ तै. आन. ९-१ ॥ | २ तै. आन. ८-५ ॥

मयादीनाम् [1]"अन्नं ब्रह्मेति व्यजानात्' [2]"प्राणो ब्रह्मेति व्यजानात्' [3]'मनो ब्रह्मेति व्यजानात्' [4]'विज्ञानं ब्रह्मेति व्यजानात्" इति प्रतिपादनात्. [5]'आनन्दो ब्रह्म' इत्यप्यानन्दमयस्यैव प्रतिपादनमिति विज्ञायते, तत एव च तत्रापि [6]'आनन्दमयमात्मानमुपसंक्रम्ये' इत्युपसंहृतम्। अतः प्रधानशब्दाभिलप्यादर्थान्तरभूतस्य परस्य

* श्रुतप्रकाशिका *

वाच्य इत्यर्थः। आनन्दशब्दवाच्यस्य परमात्मत्वं हि पराङ्गीकृतम् "तद्धेतुव्यपदेशाच्च' 'अस्मिन्नस्य च तद्योगं शास्ति' इतिसूत्रयोरियं भिदा, पूर्वत्र सामान्येन समस्तसुखहेतुत्वम्; उत्तरत्र मोक्षहेतुत्वञ्चोक्तमिति। तदा 'को ह्येवान्यात्कः प्राण्यात्' इत्यत्र अन्यात्प्राण्यादितिपदाभ्यां सत्ताहेतुत्वं चोक्तं भवति। यद्वा पूर्वसूत्रमुपायपरम् एतत्तूपेयपरमिति भिदा, "आनन्दयाति' 'रसो वै सः' इति तादृशत्वप्रतीतेः। तदा अन्यात् प्राण्यादितिपदाभ्यां सांसारिकसुखहेतुत्वं मोक्षहेतुत्वं चोक्तं भवति। अथवा अन्यादिति सत्ताहेतुत्वं प्राण्यादित्यविशेषेण त्रैवर्गिकापवर्गिकसकलसुखहेतुत्वम्। अधिकरणार्थमुपसंहरति (अत इति) जीवसामानाधिकरण्यं शरीरसम्बन्धः

ꣳ भावप्रकाशिका ꣳ

न्दस्यानन्दं विद्वानिति पर्यवस्येत्, ततश्चानन्वयस्स्यादिति भावः। ननु 'अन्नं ब्रह्मेति व्यजानात् 'प्राणो ब्रह्मेति व्यजानात्' इत्यादिपर्यायेष्विव आनन्दो ब्रह्मेत्यत्रापि आनन्दशब्दस्य वस्तुतो ब्रह्मपरत्वाभावेन नानयोरेकविषयत्वम्, आनन्दमयशब्दस्य ब्रह्मपरत्वादानन्दशब्दस्याब्रह्मपरत्वादित्याशङ्क्य पुनर्भृगोर्वरुणोपसत्त्यभावेन 'आनन्दो ब्रह्मेति व्यजानात्'. इत्यत्रानन्दशब्दस्य ब्रह्मपरत्वस्य सर्वाभ्युपेतत्वादानन्दमयब्रह्मत्वस्य समर्थितत्वाच्चैकविषयत्वमुपपन्नमित्याह (परमात्मत्वं हि पराङ्गीकृतमिति) ननु 'अन्यात् प्राण्यात्' इतिपदाभ्यां सांसारिकमोक्षसुखहेतुत्वोक्तिरनुपपन्ना एकेनैव, पदेनोभयोक्तिसम्भवादित्यस्वरसादाह (अथवा

१ तै-भृगु. २ ॥ ३ तै-भृगु. ४ ॥ ५ तै-भृगु. १-१ ॥
२ तै-भृगु. ३ ॥ ४ तै-भृगु. ५-१ ॥ ६ तै-भृगु. १०-५ ॥

ब्रह्मणो जीवशब्दाभिलपनीयादपि वस्तुनोऽर्थान्तरत्वं सिद्धम् ॥ २० ॥

* श्रुतप्रकाशिका *

शोध्यत्वं विकारश्रवणं प्राप्यत्वानन्त्यादीनामवस्थाभेदेनोपपत्तिः ज्ञानस्वरूपत्ववाङ्मनसनिवृत्त्यभिधानरूपार्थगुणनिषेधश्चानन्दमयस्य प्रत्यगात्माव्यतिरिक्तत्वे हेतुः, स्वतस्सिद्धनिरतिशयदशाशिरस्कानन्दाभ्यास आनन्दयितृत्वं भयाभयहेतुत्वं समस्तप्रशासितृत्वं प्राप्यत्वं निरुपाधिकविपश्चित्त्वं बद्धमुक्तयोरसम्भावितमाकाशादिसमस्तजगत्कारणत्वं बद्धदशायामेव विज्ञानमयाज्जीवाद्भेदव्यपदेशः करणकलेवराद्यनपेक्षसत्यसङ्कल्पत्वं मुक्तानां निरतिशयभोग्यत्वं च सिद्धान्तहेतुः । शरीरशरीरिभावः तस्य निरुपाधिकत्वं प्रसाद्यत्वं प्राचुर्यसम्भवः बद्धदशायामेव भेदव्यपदेशस्यावस्थाभेदेन निर्वाहानुपपत्तिः, प्रभाप्रभावन्न्यायेन स्वरूपतो धर्मतश्च ज्ञानत्वोपपत्तिर्वाङ्मनसनिवृत्तेरियत्ताराहित्यनिबन्धनत्वं पूर्वपक्षयुक्तिपरिहारहेतवः । 'षष्ठ्याऽन्यत्वमवेदि नैनमवदच्छ्लोको नचाज्ञातता ज्ञातस्यास्य तथापि नावयविता तस्यान्य आत्मा श्रुतः । शोध्यत्वं च विकारवाचकवचस्तद् ब्रह्म पुच्छं भवेत् न त्वानन्दमयः न चान्नमयवत् केशो बहिः कथ्यते ॥ पुँल्लिङ्गान्तप्रधानप्रकृतपरवचो रूपणं चाप्यनन्यैः श्लोकाः पुच्छं न चाहुस्स्वररसमपि हि नस्सूत्रमन्योन्तरो न । षष्ठ्यादिश्चांशभावान्निरतिशयतया रूपणादानुरूप्यात् पर्यायत्वादनन्यात्मकवचन-

७ भावप्रकाशिका ७

अन्यादिति सत्ताहेतुत्वमिति ) ( पुल्लिङ्गान्तेति ) कारणत्वप्रतिपादके 'सोऽकामयत' इत्यनन्तरवाक्ये पुल्लिङ्गशब्देनानन्दमयस्य परामर्शात् । ( रूपणं चाप्यनन्यैरिति ) स्वस्मादनतिरिक्तैरवयवैश्शिरःपक्षपुच्छादिरूपणप्रकरणादित्यर्थः । ( षष्ठ्यादिश्चांशभावादिति ) समुदायावयवविषयतया तस्य पुच्छमिति षष्ठ्युपपत्तेरित्यर्थः । ( निरतिशयतयेति ) निरतिशयानन्दे सदसद्भावशङ्कासम्भवादित्यर्थः । ( रूपणादिति ) अवयवित्वस्यापि पुच्छत्वस्येव रूपणसम्भवादित्यर्थः । ( आनुरूप्यादिति ) शोध्यत्वस्य वस्त्वनुरूपत्वादित्यर्थः । ( पर्यायत्वादिति ) ब्रह्मात्मानन्दमयशब्दानां पर्यायत्वात्, श्लोकगतब्रह्मशब्दस्य तत्परत्वादित्यर्थः । ( अनन्यात्मेति ) 'तस्यैष एव शारीर आत्मेत्यस्येत्यर्थः ॥

* श्रुतप्रकाशिका *

तया पुच्छहेतुः परास्तः॥'' इति पुच्छब्रह्मवादतन्निराससङ्ग्रहः ॥

भास्करीये तु—अभ्यासादितिपदस्यानन्दशब्दाभ्यासादित्यर्थ उक्तः। कथमानन्दशब्दाभ्यासस्य परमात्मत्वसाधकत्वमित्यपेक्षायामानन्दशब्दस्य कारणविषयत्वान्निरतिशयानन्दविषयत्वाच्चेति वक्तव्यम्, तत्र हेत्वन्तरसाकाङ्क्षस्य हेतुत्वोक्तेरपि निराकाङ्क्षस्य हेतुत्वपरत्वं युक्तम्। नेतरोऽनुपपत्तेरित्यत्र च संसारिजीवादन्यत्वोपपादनमयुक्तम्, निरतिशयानन्दयोगिनो मान्त्रवर्णिकस्य ब्रह्मणः संसारित्वशङ्काया अभावात्। भेदव्यपदेशाच्चेतिसूत्रस्यापि 'रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति इति लब्धृलब्धव्यभावेन भेदोपपादकत्वमुक्तम्। ततोऽपि विज्ञानमयादन्य इत्यन्यत्वव्यपदेशस्यैव हेतुत्वोक्तिपरत्वमत्यन्तोचितम्, भेदव्यपदेशशब्दस्वारस्यात्। कामाच्चेत्यादिसूत्रं च न प्रधानव्युदासपरम्, अपेक्षाशब्दवैयर्थ्यात् निरतिशयानन्दयोगिन प्रधानत्वशङ्काया हेत्वभावात्; तृतीयसूत्रचरमसूत्रगतयोस्तच्छब्दयोरानन्दपरतया एकरूपार्थवाचित्वं युक्तम्, 'यदा ह्येवैष' इत्यादिवाक्यविषयतया निर्वाहे तन्न सिध्यति। वक्ष्यमाणमपि दूषणमिहानुसन्धेयम् ॥ .... .... ....

यादवप्रकाशीये च— अभ्यासादितिपदस्य ब्रह्मशब्दभ्यासपरत्वमयुक्तम विज्ञानमयपर्यायेऽपि 'ब्रह्म ज्येष्ठमुपासते विज्ञानं ब्रह्म चेद्वेद'' इति ब्रह्मशब्दस्य अभ्यस्ततया हेत्वनैकान्त्यात्। तद्धेतुव्यपदेशाच्चेत्यस्य प्राचुर्यस्य हेतुव्यपदेशादित्यर्थो न युक्तः, तद्विषयस्य 'एष ह्येवानन्दयाति' इतिवाक्यस्यानन्दहेतुत्वप्रतिपादकस्य प्राचुर्यहेतुवाचित्वाभावात् प्रथमप्रकृतस्य साध्यस्य हेत्वन्तरवाचित्वाभावेन च शब्दानन्वयाच्च। नेतरः भेदव्यपदेशादित्यनयोरनुपपत्तिः पूर्ववत्। कामाच्चेत्यादिसूत्रे च 'अधीहि भगवो ब्रह्म' इति ब्रह्मविषयाया विद्यायाः 'सैषा भार्गवी वारुणी विद्या परमे व्योमन् प्रतिष्ठिता'' इति परमव्योमविषयत्वावगमात् परमाकाशस्य चाचेतनस्य

❀ भावप्रकाशिका ❀

(यदा ह्येवैष इत्यादि वाक्यविषयतयेति) अस्मिन्नानन्दमये प्रतिबोध्यस्य जीवस्य तद्योगमभययोगम्। 'यदा ह्येवैष एतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयं प्रतिष्ठां विन्दते। अथ सोभयं गतो भवति' इति शास्त्रं शास्तीत्येवं तस्य सूत्रस्य तैर्व्याख्यातत्वादिति भावः ॥ .... .... .... ....

* श्रुतप्रकाशिका *

प्रधानाविलक्षणत्वादचेतनस्य स्वकार्यापेक्षया कारणत्वसम्भवाच्च ब्रह्मशब्दवाच्यं प्रधानमित्याशङ्क्य निराक्रियत इति यदुक्तं तदयुक्तम्, परमव्योमप्रतिष्ठितत्वमात्रेण तद्विषयत्वासिद्धेः, न हि ब्राह्मणभूयिष्ठदेशे वेदविद्या प्रतिष्ठितेत्युक्ते तस्यास्तद्देशप्रतिपादकत्वम् 'परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'' इति परमाकाशस्य ब्रह्माधारत्वावगमात्तस्य ब्रह्मत्वशङ्कानिराकरणमस्मिन् सूत्रे क्रियत इत्यप्ययुक्तम्। 'मान्त्रवर्णिकमेव च गीयते' इति मन्त्रवर्णं विषयीकुर्वता सूत्रेणैवास्याश्शङ्कायाः प्रतिहतोदयत्वात्। नापि सत्यत्वज्ञानत्वत्रिविधपरिच्छेदविरहादयः परमाकाशस्य सामस्त्येन सम्भवन्ति। अपेक्षाशब्दवैयर्थ्यं च पूर्ववत्। चरमसूत्रमप्येवं व्याख्यातम्; अस्मिन् ब्रह्मणि प्रतिबुद्धस्याम्य जीवस्य तद्योगं परमात्मप्राप्तिं दर्शयति 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता'' इति, तथा 'यदा ह्येवैष' इत्यादिवाक्यैश्चास्मिन्निष्ठाङ्गतस्यास्य 'अथ सोऽभयङ्गतो भवति' इति ब्रह्मप्राप्तिरुच्यत इति। तदनुपपन्नम्; मन्त्रवर्णोदितायाः परमात्मविदस्तत्प्राप्तेर्मान्त्रवर्णिकमेव च गीयत इति सूत्रेणैव दर्शितत्वादिह तदुक्त्यनपेक्षणात्। 'यदा ह्येवैष' इत्यादिवाक्योक्ताभयप्राप्तिहेतुत्वं च 'तद्धेतुव्यपदेशाच्च' इति सूत्रेणैव दर्शितमिति इह तदुक्तिरनपेक्षिता। तद्विषयभूतवाक्योक्तमानन्दयितृत्वं हि मोक्षानन्दहेतुत्वम्, मोक्षानन्दश्च संसारभयनिवृत्तिपूर्वकः, तस्मादानन्दयितृत्ववाक्यासन्नतरवाक्योक्तमभयप्राप्तिहेतुत्वं मोक्षप्रदत्वान्तर्भूतमिति न पृथग्घेतुः, आनन्दयातीति वाक्ये आनन्दहेतुत्वमुक्तम्, ब्रह्मप्राप्तस्यैव चानन्दः, अतोऽस्मिन् वाक्ये अभयशब्दवाच्यब्रह्मप्राप्तिरुच्यत इति चेन्न, तस्य ब्रह्मशब्दसामानाधिकरण्याभावात् 'अथ तस्य भयं भवति' इत्युक्तभयाभावप्राप्तेरेव 'अथ सोऽभयङ्गतो भवती'त्युच्यमानत्वाच्च; अतो भयनिवृत्तिपूर्वकनिरतिशयानन्दहेतुत्वं तद्धेतुव्यपदेशादित्यन्तर्भूतमिति न पृथग्वक्तव्यम्, अतो मोक्षप्रदत्वेऽभिहिते मुक्तप्राप्यत्वकथनं प्राप्तेर्निरतिशयानन्दत्वरूपविशेषकथनं चात्यन्तापेक्षितमिति तदेव वक्तव्यम्, अतः सूत्राणां यथोक्त एवार्थः॥ इत्यानन्दमयाधिकरणम्॥

ध्र भावप्रकाशिका ध्र

(मन्त्रवर्णं विषयीकुर्वतीति) 'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इत्येतावत्पर्यन्तस्य विषयत्वा-

यद्यपि मन्दपुण्यानां जीवानां कामाज्जगत्सृष्टि-रतिशयितानन्दयोगो भयाभयहेतुत्वमित्यादि न स-

* श्रुतप्रकाशिका *

अथावान्तरसङ्गतिमाह ( यद्यपीति ) कारणवादिवाक्यानां परमात्मपरत्वं हि निरूप्यते, कारणवाक्यत्वाभावेऽपि कथमन्तरादित्यविद्यात्र निरूप्यत इति चेत्. उच्यते, आनन्दमयाधिकरणशेषतयेति कथमुपनिषद्भेदे सत्यपि तच्छेषतया निरूपणम्?। इत्थम्,–आनन्दवल्ल्यां "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यानन्दमयस्यैवादित्यमण्डलवर्तित्वमुक्तम्। छान्दोग्यप्रतिपादितस्य आदित्यान्तर्वर्तिनो देहसम्बन्धेन जीवानतिरेके सत्यानन्दवल्ल्यामपि जीवानतिरिक्त आदित्यान्तर्वर्तिपुरुष उक्तः स्यादित्यानन्दमयो जीव एवेति शङ्कायां तच्छेषत्वेन उत्तराधिकरणारम्भ इति। अधिकरणभेदः उक्तन्यायाविषयभूतोपनिषद्भेदहेतुकः। ननु "तस्यैष एव शारीर आत्मा" इतिवाक्यप्रतिपन्नशरीरसम्बन्धस्य परिहृतत्वाच्छारीरत्वश्रवणहेतुकजीवत्वशङ्का नोपपद्यत इति चेत्. उच्यते, तत्र ह्यन्नमयादीनां शारीरत्वमुक्तम्, न हि ते प्रत्येकं करचरणादिसंस्थानवन्तः तैस्सम्बन्धश्चाधिष्ठात्रधिष्ठेयभावलक्षणशेषशेषिभावलक्षणो वा येन केनापि प्रकारेणोपपद्यते, अत्र तु, हिरण्यश्मश्रुर्हिरण्यकेशः' इत्यादिना करचरणादिसंस्थानकं शरीरं श्रूयते, तस्य च कर्मकृतत्वं लोकप्रसिद्धम्, अतः उपकरणोपकरणित्वलक्षणसम्बन्धश्चार्थसिद्धः । ननु तत्राप्यन्नमयस्यात्मत्वश्रवणादात्मप्रतिसम्बन्धिनः

ॐ भावप्रकाशिका ॐ

दित्यर्थः। ( तदेव वक्तव्यमिति ) 'अस्मिन्नस्ये'तिसूत्रे 'रसं ह्येवायं लब्ध्वानन्दी भवति' इत्येतदेव प्राप्यत्वादानन्दहेतुत्वप्रतिपादकं विषयत्वेन वक्तव्यमित्यर्थः॥ ॐ॥

( आनन्दमयस्यादित्यमण्डलवर्तित्वमुक्तमिति ) ननु 'जीवमुख्यप्राणलिङ्गात्' इति सूत्रे 'यश्चासावादित्ये' इतिवाक्यस्य विग्रहातिदेशकत्वमिति वक्ष्यमाणत्वात् कथमात्मैकत्वपरत्वमिति चेन्न; उभयपरत्वस्य तत्रैव समर्थयिष्यमाणत्वाददोषः। ( कर्मकृतत्वं हि लोकप्रसिद्धमिति ) करचरणादिमत्कमनीयदेहस्य तद्भोगोपकरणभूततया तत्कर्मार्जितत्वस्यैव वक्तव्यत्वादिति भावः। इदमुपलक्ष-

म्भवति ; तथापि विलक्षणपुण्यानामादित्येन्द्रप्रजापतिप्रभृतीनां सम्भवत्येवेतीमामाशङ्कां निराकरोति--

अन्तस्तद्धर्मोपदेशात् ॥ २१ ॥

७ अधिकरणम्

इदमाम्नायते छान्दोग्ये [1]"य एषोऽ-

* श्रुतप्रकाशिका *

शरीरस्य करचरणादिमत्त्वात् तत्कृतत्वजीवशङ्कापि तत्रैव निरस्तेति चेन्न; प्राणमयादीनां करचरणादिमत्त्वाभावात्, अन्नमयस्य तु तथाविधत्वे सत्यपि तं प्रति विज्ञानमयस्यैव शरीरित्वात्. विज्ञानमयं प्रति शरीरिण आनन्दमयस्य करचरणादिमच्छरीरकत्वाभावात् शरीरमात्रेण सम्बन्धमात्रनिबन्धनशङ्कैव तत्र निरस्ता, अत्र त्वानन्दमयस्यैवादित्यान्तर्वर्तिनः करचरणादिमत्त्वं प्रतीयते, अतः पूर्वाधिकरणे शरीरमात्रेण सम्बन्धमात्रश्रवणादुत्थितायां जीवत्वशङ्कायां निरस्तायां पुनः करचरणादिसंस्थानकदेहविशेषणोपकरणोपकरणित्वलक्षणसम्बन्धविशेषावगमेन जीवत्वशङ्का स्यादिति तन्निरासार्थमानन्दमयाधिकरणशेषत्वेनैतदधिकरणारम्भ इति, अयमर्थो यद्यपीत्यादिसङ्गतिग्रन्थेऽभिप्रेतः ॥

अन्तस्तद्धर्मोपदेशात् ॥ विषयं दर्शयति ( इदमिति ) 'य एष' इति प्रसिद्धवन्निर्देशान्नानुवादरूपता शङ्क्या, अस्यार्थस्य प्रमाणान्तराप्राप्तत्वात् ' यदामेये'

* भावप्रकाशिका *

णम् । ' रमणीयचरणा रमणीयां योनिमापद्यन्ते' इतिश्रुत्या कर्मजन्यतावच्छेदकं शरीरत्वमिति युक्त्यनुगृहीतया शरीरमात्रस्य कर्मजन्यत्वावगमादितिद्रष्टव्यम् । ( विज्ञानमयं प्रति शरीरिण आनन्दमयस्येति ) ननु ' तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः' इत्यादिवाक्यपर्यालोचनायामेवं वक्ष्यमाणाकाशादीनन्नमयान्तान् प्रत्यगात्मत्वमवगम्यत इति आनन्दमयाधिकरणे प्रतिपादिततया आनन्दमयस्यापि करचरणादिमच्छरीरकत्वमवगम्यत इति चेत्. सत्यम् ; तत्रैवानन्दमयाधिकरणे करचरणादिमच्छरीरकत्वमवगतम्. तथापि तस्य 'अन्योन्तर आत्मा' इति ततोप्यन्तराणां केषाञ्चिच्छ्रवणे सद्वारकत्वकथनादद्वारककरचरणादिमच्छरीरत्वं

१ छां. १-६-६-७-८ ॥

* श्रुतप्रकाशिका *

ऽष्टाकपालः' इतिवत् । आदित्यशब्दः "दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः" इतिण्यप्रत्ययान्तो मण्डलवाची "य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षि" न्निति बृहदारण्यके, "य एष एतस्मिन्मण्डलेऽर्चिषि पुरुषः" इति तैत्तिरीयके च पुरुषस्य मण्डलवर्तित्वश्रवणात् । हिरण्मयशब्दो रमणीयत्वपरः, 'हिरण्मय' इति रूपसामान्याच्चन्द्रमुखवत्' इति हि वाक्यकारः । दृश्यते— योगिभिरित्यर्थः । "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुत्यैकार्थ्यात् । "य एवं वेद' इत्युत्तरत्रोपासनविधानादुपासनार्थमारोपितरूप. परमिदं वाक्यमिति नाशङ्कनीयम्, "न सन्दृशे तिष्ठति रूपमस्य' इत्युक्त्वा "हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" इति, 'यदा पश्यः पश्यते रुक्मवर्णम्' 'इति प्रकरणे "मनसा तु विशुद्धेन" इति च विशुद्धमनोग्राह्यत्वोक्तेः,

॥ भावप्रकाशिका ॥

कर्मजन्यमेवेति भावः ॥ .... .... .... .... ....

नन्वेतद्वाक्यस्यानुवादरूपस्य पुरोवादिवाक्यानुसारेणैवार्थनिर्णयो भवतीति किमेतद्वाक्यविषयविचारेणेत्यत आह (य एष इति प्रसिद्धवन्निर्देशादिति) एतेन रूपवत्त्वं तु ब्रह्मणोपि सम्भवति. सत्यस्य रूपस्य नीरूपशास्त्र-विरोधित्वेपि मायामयस्य तदविरोधित्वात् . ब्रह्मणि च रूपस्य 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद' इतिवचनानुसारेण मायामयस्याङ्गीकारात् । नच तद्बोधकवचनानामप्रामाण्यप्रसङ्गः, मायाविदर्शितमायादृष्ट्यनुवादवत्प्रामा-ण्योपपत्तेः । इह च 'हिरण्मयः पुरुषो दृश्यते' यन्मां पश्यसी'ति दृष्ट्यनुवादस्य स्पष्टं प्रतीतेरिति परेषां मतमपास्तं वेदितव्यम्, एवं रूपस्य मानान्तराप्राप्तत्वेन श्रुत्येकसमधिगम्यत्वात् । ननु 'य एषोऽन्तरादित्ये' इत्यत्रादित्यशब्दाभिलप्य-जीवत्वरूपपूर्वपक्षोत्थितिरित्याशङ्क्याह (आदित्यशब्द इति) आदित्यशब्दात् 'दित्यदित्यादित्ये'ति तस्येदमित्यर्थे ण्यप्रत्यये अल्लोपे 'हलो यमां यमि लोपः' इति प्रथमयकारस्य लोपे च आदित्यशब्दो निष्पन्नः, अत आदित्यादि. आदित्यबिम्ब-मध्ये वर्तितुमर्हतीति भावः । (हृदा मनीषा चेति) भक्त्या धृत्या चेत्यर्थः । इदञ्च 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्र स्पष्टम् । 'न सन्दृशे तिष्ठति रूपमस्य'

न्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्य-केश आप्रणखात् सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः

* श्रुतप्रकाशिका *

आरोपिताकारो हि दुष्टमनोग्राह्यः । न च 'रूपमस्ये-ति स्वरूपमुच्यते, षष्ठीस्वारस्य-भङ्गप्रसङ्गात्, अतो विग्रहविशिष्टस्य विशुद्धमनोग्राह्यत्वात् विग्रहपारमार्थ्यम् । किञ्च दृश्यत इति वर्तमानव्यपदेशाच्च उपासनाया आरोपितत्वमयुक्तम्, आत्मन्यारोप्यमाणं हि गरुडत्वं न ततः पूर्वं केनाप्यवगम्यते, इह तूपासनविधानात्प्रागेव विद्यमानताऽनेन वर्तमानव्यपदेशेन प्रतीयते, अतो वास्तवत्वम् । दृश्यत इत्यनेन पूर्वपूर्वोपासकप्रवाहैरारोपेणानुसन्धीयमानत्वमुच्यत इति चेत् . न, अशब्दत्वात् । न ह्यारोप्यं दृश्यत इति श्रूयते । दृश्यत्वमेवारोपितत्वमिति चेत् . न, व्युत्पत्तिविरोधात् । "दृश्यते त्वग्र्यया बुद्ध्या" इति दृश्यतयोक्तपरमात्म-स्वरूपस्याप्यवास्तवत्वप्रसङ्गाच्च । तन्मिथ्यात्वं प्रमाणविरुद्धमिति चेत् . तुल्यम् । "आदित्यवर्णं तमसः परस्तात्" इति [ तमसः परस्तात् ] स्थितस्य विग्रहस्य स्वरूपस्येव मिथ्यात्वं हि प्रमाणविरुद्धम्, अतो वास्तवत्वसिद्धिः । अशरीरत्वश्रुतेरव-काशो वक्ष्यते । ( तस्य यथेति ) अस्य वाक्यस्य वाक्यकारेण षडर्थाः पूर्वपक्ष-तया सिद्धान्तत्वेन चोक्ताः । तत्रार्थत्रयस्य पूर्वपक्षत्वं तत्वभावादेवावगतम् । कपिः– आदित्यः । "कपि चलने" इति धातोर्निष्पन्नः कपिशब्दः, कं पिब-तीति च । 'कपिर्विभस्तितेजनम्' इति च वैदिकप्रयोगः । तस्य आसं मण्डलम् । यथा आदित्यमण्डलं हृदयपुण्डरीकं च परमात्मन उपासनस्थानं तथा तस्योपासक-

* भावप्रकाशिका *

इत्यत्र रूपशब्देन विग्रहस्य निर्दिष्टत्वेपि 'न चक्षुषा पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तः' इतिवाक्ये अस्येति षष्ठ्यन्तेन निर्दिष्टस्य परमात्मस्वरूप-स्यैव एनमितिद्वितीयान्तनिर्दिष्टतया तस्यैव मनसाभिक्लृप्तत्वरूपमनोग्राह्यत्वं सिध्येदित्यस्वरसादाह ( यदा पश्यः पश्यत इति ) न ह्यारोपितं दृश्यत इति श्रूयत इति 'ईक्षतिकर्मव्यपदेशात्सः' इत्यत्रेक्षणस्य तत्त्वविषयत्वमेव वक्तव्य-

१ छां १-७-५ ॥

* श्रुतप्रकाशिका *

स्याक्षिणी अप्युपासनस्थानमित्येकोऽर्थः । अयं नोपपद्यते । तथा हि 'अग्निश्चेन्द्रश्च' इतिवदपवादकचशब्दाद्यभावेपि समानविभक्त्यन्तयोः पदयोः स्वतःप्राप्तसामानाधिकरण्यस्वारस्यभङ्गः । पुण्डरीकसदृश हृदये पुण्डरीकशब्दो गौणः स्यात्, हृदयपुण्डरीकमिति प्रयोगस्तु पुरुषव्याघ्र इतिवत्. 'उपमितं व्याघ्रादिभिस्सामान्याप्रयोगे' इति सूत्रविहितसमासत्वादुपमानोपमेयवाचकशब्दसद्भावाच्च मुख्य एव । अत्र तु तदभावाद्गौणत्वमवर्जनीयम् . उपासनस्थानमिति प्रथमान्तपदाध्याहारः उपासकस्येति षष्ठ्यन्तपदाध्याहारश्च । तत्परिहाराय तस्येत्युपासकपरत्वे सत्यप्रकृतपरामर्शित्वमनन्तरवाक्यस्थषष्ठ्यन्तशब्दविरूपार्थता च स्यात् । दिव्याङ्गवर्णनप्रकरणानौचित्यञ्च नामविधिवाक्यात्पूर्वं रूपकथनं ह्युचितम् । 'य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन्' इति दक्षिणस्याक्ष्णः उपासनस्थानत्वश्रवणादक्षिणी इति द्विवचनविरोधश्च । ऊर्ध्वमक्षिविद्याया उक्तस्वादिह तदुक्त्यनपेक्षणादस्य वाक्यस्य पुनरुक्तिश्च , अन्तरादित्यविद्यायां 'य एषोऽन्तरादित्ये' इति स्थानस्योक्तत्वात् अक्षिविद्यायां च ' य एषोन्तरक्षिणी'तिस्थानस्योक्तत्वादुभयत्र स्थानविध्यपेक्षा नास्तीत्यनाकाङ्क्षितत्वादिदं वाक्यमनन्वितं स्यात्, 'अन्तरादित्ये' इत्यादि-

ঌ भावप्रकाशिका ঌ

मिति मृषावादिभिरेव समर्थितत्वादिति द्रष्टव्यम् । ( सूत्रविहितसमासत्वादिति) यद्यपि 'अनेकमन्यपदार्थे षष्ठी'त्यादिसूत्रविहितेषु बहुव्रीहितत्पुरुषादिष्वप्यस्त्येव लक्षणा, तथापि शास्त्रमूललक्षणापेक्षया पुरुषबुद्धिमूललक्षणा दुर्बला, उपपादितं चेदमस्माभिः ' पाराशर्यवचस्सुधाम् ' इतिश्लोकव्याख्यावसरे , तत्रैव द्रष्टव्यम् । ( उपमानोपमेयवाचकशब्दसद्भावाच्चेति ) तत्र समभिव्याहृतपदान्तरसामानाधिकरण्यनिर्वाहाय यथा तथा वास्तु, इह त्वसति बाधके तथाश्रयणमन्याय्यमिति भावः । ( मुख्य एवेति ) मुख्यतुल्य इत्यर्थः । अभ्युपगन्तुमुचित इति यावत् । ( अनन्तरवाक्यस्थेति ) ' तस्योदिति नाम' इत्यनन्तरवाक्ये षष्ठ्यन्ततच्छब्देन परमात्मन एव परामर्शेनोपासकस्य परामर्शासम्भवादिति भावः । ( अक्षिविद्यायां च 'य एषोऽन्तराक्षिणी'ति स्थानस्योक्तत्वादिति ) ननु अन्तरादित्यविद्याप्रकरणाम्नातस्यास्य वाक्यस्याक्षिविद्यायां स्थानविधायकत्वशङ्काया अप्रसक्तेरप्रसक्तप्रतिषेधः । नच प्रकरणे निवेशासम्भवादप्रकृतायामाक्षिविद्यायां निवेशशङ्का

* श्रुतप्रकाशिका *

त्यमण्डलस्य स्थानतया विहितत्वात् 'एवमक्षिणी' इत्यक्ष्णः स्थानत्वे विहिते सति

ꣷ भावप्रकाशिका ꣷ

सम्भवतीति वाच्यम्, तर्ह्यप्रकृतत्वाविशेषाद्विद्यान्तरेपि निवेशशङ्का प्रसज्येतेति चेत्. उच्यते; 'हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' इति हिरण्मय-विग्रहविशिष्टं प्रस्तुत्य तस्य ' यथा कप्यासं पुण्डरीकमेवमक्षिणी' इति स्थानं प्रति-पाद्याक्षिविद्यां प्रस्तुत्य 'तस्यैतस्य तदेव रूपं यदमुष्य रूपम्' इत्यतिदेशात्. अक्षि-विद्यायां रूपवत् तत्समभिव्याहृतस्थानस्यापि विधानमस्त्वित्याक्षेपस्य तत्परिहारस्य च सम्भवादिति द्रष्टव्यम्। ( अक्ष्णः स्थानत्वे विहिते सतीति) ननु द्वेधा हि गुणानां भेदकत्वम्, उत्पत्तिशिष्टगुणावरुद्धे गुणान्तरस्य निवेशासम्भवात्, यथा 'सा वैश्वदे व्यामिक्षा वाजिभ्यो वाजिनम्' इत्यत्रामिक्षावरुद्धे यागे वाजिनस्य निवेशासम्भवात् कर्मभेदे प्राप्ते कर्मण्यनेकगुणविधानासम्भवाद्वा। यथा विद्वद्वाक्यविहितपौर्णमास्यमा-वास्यासंज्ञयोः कर्मणो 'यदाग्नेयोऽष्टाकपाल' इतिवाक्येन द्रव्यदेवतयोर्विधाने कर्मा-न्तरत्वं स्यादित्युक्तं पौर्णमास्यधिकरणे, न चेह तदुभयं सम्भवति. उभयोरपि स्थान-योरुत्पत्तिशिष्टत्वेन वा उत्पन्नशिष्टत्वेन वा विधानसम्भवात् विद्याभेदाप्रसक्तेः, अत एव पूर्वतन्त्रे अष्टाकपालनवकपालादीनां द्रव्याणां युगपदनुपसंहरणीयानामपि एकस्यामपि जातेष्टौ गुणतया विधानमस्तु, ततश्च सर्वेषामपि द्रव्याणामुत्पत्ति-शिष्टत्वमुत्पन्नशिष्टत्वं वा भविष्यतीति पूर्वपक्षः प्रवर्तित इति चेत्। अत्र केचित्; 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इत्येतदेवोत्पत्तिवाक्यं दृश्यते। द्रष्टव्यः—योगिभिरित्यर्थः। ततश्चादित्यमण्डलस्योत्पत्तिशिष्टत्वात्तद्विरुद्ध-स्थानस्य तत्र निवेशासम्भवाद्विद्याभेदोऽवश्यं वक्तव्य इत्यत्र तात्पर्यात्। ननु 'य एषोन्तरादित्य' इति वाक्यस्योत्पत्तिवाक्यत्वे उत्पत्तिशिष्टगुणावरुद्धे तस्य यथा कप्यासमितिवाक्येन सिद्धान्त्यभिमतस्य पुण्डरीकदलामलायताक्षत्वस्य वा उदिति नाम्नो वा कथं निवेश इति चेन्न; उत्पत्तिशिष्टगुणावरुद्धे तद्विरुद्धगुणान्तरस्य निवेशासम्भवेपि तदविरोधिनो गुणस्य विधाने अनुपपत्त्यभावात्। नन्वेवं 'सर्वत्र प्रसिद्धोपदेशात्' इत्यत्रोत्पत्तिशिष्टसार्वात्म्यावरुद्धे मनोमयत्वादिगुणविधानासम्भ-वात् 'सर्वं खल्विदं ब्रह्म' इतिवाक्यं नोत्पत्तिवाक्यमिति ग्रन्थकारोक्तिविरोधः। तत्राप्युत्पत्तिवाक्यत्वेपि विरोधाभावादित्येव परिहारसम्भवादिति चेन्न; तद्ग्रन्थ-

* श्रुतप्रकाशिका *

स्थानभेदाद्रूपभेदेन विद्याभेदादेकवाक्येन विद्याद्वयस्य विधातुमशक्यत्वाच्च वाक्यभेदः स्यात्, स चैकवाक्यत्वे सम्भवति नोपपद्यते । कप्यासं पुण्डरीकञ्च दृष्टान्ततया अनूद्य 'एवमक्षिणी" इत्यक्ष्णः स्थानत्वस्य विधेयत्वं गम्यत इति चेत्, तथा चान्तरादित्य इत्युपक्रमविरोधः, उपक्रमेपि आदित्यमण्डलस्यानुवाद इति चेत्तथा सति इयमक्षिविद्यैव स्यात्, तथा चान्तरादित्यविद्येत्याख्याविरोधः, अक्षिविद्यायाभेतद्विद्योक्तरूपाद्यतिदेशानुपपत्तिश्च । न केवलं कप्यासवाक्यमात्रस्य, अपि तु कृत्स्नाया अन्तरादित्यविद्यायाः पुनरुक्तिश्च स्यात्. उभयोरप्यक्षिविद्यात्वाविशेषात् रूपादिवैषम्याभावाच्च, तस्मादस्य वाक्यस्य उपासनस्थानविधिपरत्वमनुपपन्नम् । कपिः मर्कटः, तस्य आसं जघनप्रदेशः, मर्कटपृष्ठसाम्यमुच्यत इति यावत् । तदप्ययुक्तम् ; मर्कटपृष्ठं पुण्डरीकञ्च किमुपमानद्वयम् , उतैकोपमा ? तत्रोपमाद्वित्वमयुक्तम्, स्वतःप्राप्तसामानाधिकरण्यपरित्यागप्रसङ्गात् श्लाघ्यार्थेन निर्वाहे सम्भवत्यपि हीनोपमाश्रयणायोगाच्च । यद्येकोपमा तथा सति मर्कटपृष्ठसदृशपुण्ड-

७ भावप्रकाशिका ७

स्यापि तदभिप्रायान्न विरोध इति वदन्ति । ( वाक्यभेदस्स्यादिति ) यद्यपि सिद्धान्तेपि गुणविधित्वेन वाक्यभेदोऽस्ति, तथापि ' प्रधानविधिवाक्यं खल्वङ्गवाक्येन संयुतम् । अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥" इति न्यायेनाङ्गप्रधानविध्योर्वाक्यैकवाक्यत्वं सम्भवति । विद्याभेदपक्षे तदपि न सम्भवतीति भावः । ( विधेयत्वं गम्यत इति चेदिति ) ततश्चोत्पत्तिवाक्यश्रुतमन्तरादित्य इत्येतद्विवक्षितमिति भावः । आशयमविद्वानाह ( उपक्रमविरोध इति ) आशयमुद्घाटयति ( *उपक्रमेप्यादित्यमण्डलस्येति* ) ( अनुवाद इति चेदिति ) अविवक्षेति चेदित्यर्थः । ( रूपाद्यतिदेशानुपपत्तिश्चेति ) 'तस्यैतस्य तदेव रूपं यदमुष्य रूप'मित्यतिदेशानुपपत्तिरित्यर्थः । नन्वियमक्षिविद्यैव भवतु, तथापि न रूपातिदेशानुपपत्तिः, अक्षिस्थानकविद्यात्वाविशेषेपि विद्ययोः परस्परभेदसम्भवेनातिदेशसम्भवादित्याशङ्क्य तथा सति परस्पराभेदोपि दुर्वार इत्याह ( न केवलं कप्यासवाक्यमात्रस्येति ) ( हीनोपमाश्रयणायोगाच्चेति ) ननु हीनोपमाया आलङ्कारिकैर्दोषत्वेन परिगणनात् सा त्यज्यते चेत् । सिद्धान्तेप्यमङ्गलस्य कप्यासशब्दस्य प्रयोगादश्लीलत्वं स्यात् । तथा अप्रसिद्धत्वात्, निहतार्थत्वञ्च स्यादिति

पाप्मभ्य उदितः उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्यर्क्च साम च गेष्णौ इत्यधिदैवतम्"

* श्रुतप्रकाशिका *

रीकसदृशे इत्युक्तं स्यात्, तदा कप्यासपदस्य गौणता स्यादिति । कप्यासम्—ईषद्विकसितमित्यपरोऽर्थः । तत्रात्यन्तार्थानौचित्यं नास्त्येव, तथाप्यवयवशक्त्या वा रूढ्या वा ईषद्विकासपरत्वं नास्तीति सोऽप्ययुक्तः, एवं शब्दार्थस्वभावपर्यालोचनायामिदमर्थत्रयं पूर्वपक्षतया वाक्यकाराभिप्रेतमित्यवगतम् । अर्थान्तरत्रयन्तूपपन्नम् । कं पिबतीति कपिः आदित्यः, तेनास्यते क्षिप्यते विकास्यत इति कप्यासम् । तथाह वाक्यकारः "आदित्यक्षिप्तं वा श्रीमत्त्वात्" इति । कं पिबतीति कपिः नालम्, तस्मिन्नस्ति इति कप्यासम् । अपचितादपि पङ्कजात् नालस्थपुण्डरीकस्य शोभातिशयोऽस्तीति सोऽत्र विवक्षितः । कं जलम् 'आस उपवेशने' इति धातुरपिपूर्वकः 'वष्टि वागुरिरल्लोपमवाप्योरुपसर्गयोः' इतिवचनादपेरकारलोपः । कप्यासम्— सलिलस्थमित्युक्तं भवति । एवमस्यार्थत्रयस्योपपन्नतया वाक्यकारेण सिद्धान्ततयोक्तत्वमभिप्रेत्य हि भगवता भाष्यकारेण वेदार्थसङ्ग्रहेऽभिहितम् "गम्भीराम्भस्समुद्भूतसुमृष्टनालरविकरविकसितपुण्डरीकदलामलायतेक्षणः" इति । गेष्णौ—गानविशेषौ ।

ध भावप्रकाशिका ध

दोषद्वयं सिद्धान्तेऽप्यस्तीति चेन्न, अश्लीलत्वस्य सर्वपक्षसाधारणत्वात्. निहतार्थत्वं तु एतादृशजुगुप्सितार्थस्वीकारापेक्षया ज्याय इति तदेव युक्तमिति भावः । ( गानविशेषाविति ) यद्यपि गीतिषु सामाख्येतिसूत्रोक्तरीत्या साम्नो गीतिरूपत्वेन तदाश्रयभूताया ऋचो गानरूपत्वं नास्ति, तथापि गानशब्देन स्तुतिहेतुत्वमुच्यते, स्तुतिश्च गुणिनिष्ठगुणाभिधानम् । तत्र ऋचां साक्षादेव हेतुत्वं साम्नान्तु अक्षराभिव्यक्तिद्वारेति विवेकः । परैस्त्वधिदैवतम् ऋचः पृथिव्यन्तरिक्षद्युनक्षत्रादिगतशुक्लभारूपत्वम्, साम्नश्चाग्निवाय्वाकाशचन्द्रादित्यगतनीलभारूपत्वम् 'इयमेवर्गग्निस्साम' इत्यादिना प्रतिपन्नम्. तथाध्यात्मञ्च 'वागेव ऋक्प्राणस्साम' इत्यादिना वाक्चक्षुश्श्रोत्राक्षिगतशुक्लभारूपत्वमृचः प्राणच्छायात्मनः परः कृष्णरूपत्वं साम्नः प्रतिपन्नम् । एवम्भूतऋक्सामयोः गेष्णत्वरूपं पर्वत्वमुच्यते. गेष्णशब्दो हि पर्ववचनः, ततश्च पर्वस्वेव छन्दोगानां गेष्णशब्दप्रसिद्धेः । ततश्च

[1]"अथाध्यात्मम्.... अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क् तत्साम च तदुक्थ्यं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ यन्नाम तन्नाम" इति ॥

तत्र सन्दिह्यते– किमयमक्ष्यादित्यमण्डलान्तरवर्त्ती पुरुषः पुण्योपचयनिमित्तैश्वर्य आदित्यादिशब्दाभि-

* श्रुतप्रकाशिका *

अधिदैवतम् –देवतायामुपासनम्, अध्यात्मम्– आत्मन्युपासनम् । अध्यात्मशब्दो देहवचनः । अमुष्य–आदित्यस्थस्य । आदित्ये तद्धर्मोपदेशादिति वा अक्षिणि तद्धर्मोपदेशादिति वा न सूत्रितम् , अपि त्वन्तश्शब्दस्सूत्रकारेण प्रयुक्तः, अन्तश्शब्दस्य "अन्तरादित्ये' 'अन्तरक्षिणी"त्युभयत्र श्रवणाद्विद्याद्वितयमपि सङ्गृहीतमित्यभिप्रायेणाक्षिविद्यावाक्यमप्युदाहृतम् ॥

संशयं दर्शयति ( तत्रेति ) शरीरसम्बन्धापहतपाप्मत्वादियोगात्संशयः । ( आदित्यादिशब्दाभिलप्यो जीव एवेति ) यत्र यत्र प्रकरणेषु करणकलेवरावस्थ-

* भावप्रकाशिका *

ऋक्सामात्मकपृथिव्यग्न्यादीनां परमात्मशरीरतया तत्कार्यतया च तत्पर्वत्वमुच्यते, ततश्च यत एवायमुन्नामा ऋक् सामगेष्णश्च, तस्मादुद्गेष्ण इति वक्तव्ये उद्गीथ इत्युच्यते परोक्षेण , परोक्षप्रियत्वाद्देवानामित्यर्थो वर्णितः । तत्र गेष्णशब्दस्य पर्ववचनत्वादपि गास्तुतावित्यतो गादाभ्यां चेष्ण इत्यौणादिकव्युत्पत्त्यनुसारात् गेष्णशब्दस्य गानार्थत्वमेवोचितम् । ऋक्सामशब्दयोरपि प्रसिद्धार्थत्वमेव, न तु पृथिव्यग्न्यादिपरत्वमित्यभिप्रेत्यैवं व्याख्यातमिति द्रष्टव्यम् । ( अधिदैवतं देवतायामुपासनमिति) 'विभक्त्यर्थे यदव्ययम्' इति समासे अधिदैवतमित्यस्य देवतायामित्येवार्थः । उपासनमित्येतत्तु प्रकृताभिप्रायेणेति द्रष्टव्यम् । अमुष्येत्येतच्छ्रुतिगतं व्याख्येयम् । ( विद्याद्वितयमपि सङ्गृहीतमिति ) सम्बन्धादेवमन्यत्रापीत्यधिकरणे उद्गीथे आदित्यमण्डलस्थपुरुषानुचिन्तनस्याक्षिस्थपुरुषानुचिन्तनस्य च

१ छां. १-७-५ ॥

लप्यो जीव एव ; आहोस्वित्तदतिरिक्तः परमा-

* श्रुतप्रकाशिका *

शरीरसम्बन्धेन जीवत्वशङ्का तेषां प्रकरणानां सर्वेषां परमात्मपरत्वस्य प्रदर्शनार्थमयमधिकरणारम्भ इत्यभिप्रायेणादिशब्दः प्रयुक्तः, अत एव हिरण्यगर्भादिजीवेभ्योऽन्य इति अधिकरणोपसंहारे मध्येप्यादित्यादिजीवव्यतिरिक्त इति चोक्तम्। वेदान्तवेद्यं कारणं ब्रह्म किं प्रकृष्टपुण्यो जीवः, उत न ? इति विचारः। तदर्थमानन्दमयः किं जीवः ? उत परमात्मा ? इति। तदर्थमन्तरादित्येऽन्तरक्षिणि च वर्तमानः किं जीवः ? उत परमात्मा ? । तदर्थं सशरीरत्वं जीवस्यैव ? उत परमात्मनोऽपि सम्भवति ? इति। तदर्थं शरीरसम्बन्धस्यैच्छत्वं सम्भवति, न ? इति। तदर्थं पाप्मोदितत्वादिश्रुतिः 'अजायमानः' इत्यादिश्रुतिरादित्यवर्णत्वादिश्रुतिश्च कथमैच्छत्वं ज्ञापयति, न ? इति। तदर्थमिह पाप्मशब्दः किं पापमात्रपरः ? उत पुण्यपापरूपकर्मपरः ? । अपहतशब्दः प्रध्वंसपरः ? उतात्यन्ताभावपरः ? । अजत्वादिश्रुतिः किं कर्मकृतजन्मविषयतया व्यवस्थापयितुं शक्यते ? न ? इति। आदित्यवर्णत्वादिश्रुतिः विग्रहस्य प्रकृतिप्राकृतविलक्षणत्वज्ञापिका, न वा ? इति चतुर्धा संशयः। अत्र पूर्वे कल्पाः पूर्वपक्षाः, अपरे तु सिद्धान्ताः, यदा पाप्मशब्दः पापमात्रपरः अपहतिः प्रध्वंसः, जन्मनिषेधश्च न कर्ममूलजन्मविषयः विग्रहश्च न प्राकृतविलक्षणः,

* भावप्रकाशिका *

एकविद्यात्वस्य परैरभ्युपेतस्य भाष्यकृता निराकरिष्यमाणत्वात् विद्याद्वयमित्युक्तौ नानुपपत्तिरिति द्रष्टव्यम्॥ (चतुर्धा संशय इति) तदर्थमिह पाप्मशब्द इत्यारभ्येत्यर्थः। 'सर्वेभ्यः पाप्मभ्य उदित इति वाक्ये च संशयद्वयम्, अजायमानादित्यवर्णवाक्ययोश्च संशयद्वयमिति त्रिषु वाक्येषु संशयचतुष्टयं द्रष्टव्यम्। (जन्मनिषेधश्च न कर्ममूलजन्मविषय इति) नन्वजत्वश्रुतेर्जन्मसामान्याभावविषयत्वं वदतः पूर्वपक्षिणः तस्याः श्रुतेः किं परमात्मविषय इत्यभिप्रायः, उत जीव ? इति। नाद्यः, तस्यैवानभ्युपगमात्। न द्वितीयः; जीवस्य जन्ममात्रशून्यत्वाभावात्, तस्मादेतच्छ्रुतिविचारस्य तदर्थचिन्ताकोटावन्वयोऽनुपपन्नः। किञ्च सर्वपाप्मोदितत्वस्य सर्वकर्मात्यन्ताभावरूपत्वे सिद्धे तादृशे चात्मनि प्रतिपन्नस्य शरीरस्य 'सम्भवाम्यात्ममायया' इति प्रमाणानुसारेण कर्मातिरिक्त-

त्मा ? इति । किं युक्तम् ? उपचितपुण्यो जीव एवेति । कुतः ? सशरीरत्वश्रवणात् । शरीरसम्बन्धो हि जीवानामेव सम्भवति । कर्मानुगुणप्रियाप्रिययोगाय हि शरीरसम्बन्धः । अत एव हि कर्मसम्बन्धरहितस्य

* श्रुतप्रकाशिका *

तदानीं विग्रहसम्बन्धस्येच्छामात्रमूलत्वासम्भवेन कर्मनिबन्धनतया परस्मिन्नसम्भवेन जीवासाधारण्यादादित्यादिवर्ती पुरुषो जीव इत्यन्तरादित्यवाक्यैकार्थ्यादानन्दवल्लीवाक्येऽपि जीवस्य प्रतिपाद्यत्वात्सर्वाणि कारणवाक्यानि प्रकृष्टपुण्योपचयजीवपराणीति पूर्वः पक्षः । यदा पाप्मशब्दः कर्ममात्रपरः अपहतशब्दोऽत्यन्ताभावपरः, जन्मनिषेधश्च कर्ममूलजन्मविषयः, विग्रहश्च न प्राकृतविलक्षणः तदानीं विग्रहस्यैच्छिकतया तस्य जीवात्परस्मिन् सम्भवाच्चान्त्यादित्यान्तर्वर्तिपुरुषः पर इति तदैकार्थ्यादानन्दवल्लीप्रतिपाद्यस्य परमात्मत्वमविचाल्यमिति तदैककण्ठ्यात्सर्वाणि कारणवाक्यानि परमात्मपराणीति राद्धान्तफलफलिभावः । पूर्वपक्षमाह ( उपचितेति ) जीवानामेव शरीरसम्बन्धमुपपादयति ( कर्मानुगुणेति ) कर्मकृतप्रियाप्रिययोगार्थत्वं व्यतिरेकेणोपपादयति ( अत एव हीति ) अत एव शरीरसम्बन्धस्य कर्ममूलप्रियाप्रिययोगार्थत्वादेव हि कर्मसम्बन्धरहितो मोक्षोऽशरीरतया प्राप्यत्वेनोच्यत इत्यर्थः । ज्ञानशक्त्यादिकं लोककामेशितृत्वादिकञ्च कथं

* भावप्रकाशिका *

हेतुकत्वं सिध्यति, ततश्चाजायमानत्वश्रुतीनां कर्मकृतशरीराभावपरत्वं सिध्यतीति तस्य फलकोटिपर्यवसन्नस्याजत्वादिश्रुत्यर्थस्य प्रथमोपपादककोटौ निवेशमभ्युपेत्य चतुर्धा संशयवर्णनमहृद्यमिति चेन्न; अजायमानत्वश्रुतेः जीवस्वरूपानादित्वपरत्वमिति पूर्वपक्षिणोऽभिप्रायसम्भवात् , अत एवास्यापि वाक्यस्य विचार्यत्वात्, तदर्थचिन्ताकोटौ निवेशोपि युज्यत इति न पूर्वोक्त दोष इति ध्येयम् । भाष्ये—कर्मसम्बन्धरहितस्य मोक्षस्येति । अत्र कर्मसम्बन्धशब्दः कर्मफलभूतप्रियाप्रियसम्बन्धपरो द्रष्टव्यः । "न ह वै स शरीरस्य सतः प्रियाप्रिययोः" इत्युदाहरिष्यमाणश्रुत्यनुगुण्यात् । (अशरीरतया प्राप्यत्वेनोच्यत इत्यर्थ इति) शरीर-

मोक्षस्य प्राप्यत्वमशरीरत्वेनोच्यते [1]"न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति। सम्भवति च पुण्यातिशयात् ज्ञानाधिक्यं शक्त्याधिक्यञ्च; अत एव लोककामेशत्वादि तस्यैवोपपद्यते। तत एव चोपास्यत्वं फलदायित्वं पापक्षपणकरत्वेन मोक्षोपयोगित्वञ्च। मनुष्येष्वप्युपचितपुण्याः केचित्ज्ञानशक्त्यादिभिरधिकतरा दृश्यन्ते; ततश्च सिद्धगन्धर्वादयः, ततश्च देवाः, ततश्चेन्द्रादयः, अतो ब्रह्मादिष्वन्यतम एवैकैकस्मिन् कल्पे पुण्यविशेषेणैवम्भूतमैश्वर्यं प्राप्तो जगत्सृष्ट्याद्यपि करोतीति जगत्कारणत्वजगदन्तरात्मत्वा-

* श्रुतप्रकाशिका *

जीवस्य स्यादित्यत्राह (सम्भवति चेति) तथा दर्शयति (मनुष्येष्वपीति) अत्र 'स एको मानुष आनन्दः' इत्याद्यभिप्रेतम्। आदित्येन्द्रप्रजापतिप्रभृतीनां सर्वेषां कारणत्वश्रवणाद्व्याहतिः स्यात्, पुण्यहेतुत्वात् क्षयित्वञ्च स्यादित्यत्राह (अतो ब्रह्मादिष्विति) सर्वविधिवाक्यानां जीवपरत्वमाह (जगदित्यादिना) अपहतपाप्मत्वादिश्रुतयो नाकर्मवश्यतां वदन्ति, अपि तु केवलपुण्यहेतुकशरीरवतः पापराहित्यम् 'पापहेतुकं, पुण्यहेतुकं मिश्रहेतुकञ्चेति' त्रिविधं शरीरमित्यभिप्रायेण उपचितपुण्यविशेष इत्युक्तम्, मोक्षशास्त्राणि- उपायपराण्युपेयपराणि चेत्यर्थः॥ .... .... .... .... .... .... .... .... ....

@ भावप्रकाशिका @

राहित्यरूपकारणेन प्रसाध्य इत्यर्थः। (ज्ञानशक्त्यादिकं लोककामेशितृत्वादिकं चेति) 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानाञ्चेति ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाञ्च' इतिवाक्यप्रतिपन्नं सर्वलोककामेशत्वं तदा-

---

[1] छां ८-१२-१॥

दिवाक्यमस्मिन्नेवोपचितपुण्यविशेषे सर्वज्ञे सर्वशक्तौ वर्तते; अतो न जीवादतिरिक्तः परमात्मा नाम कश्चिदस्ति। एवञ्च सति "'अस्थूलमनण्वह्रस्वम्' इत्यादयो जीवात्मनः स्वरूपाभिप्राया भवन्ति । मोक्षशास्त्राण्यपि तत्स्वरूपतत्प्राप्त्युपायोपदेशपराणीति ॥

—:( सिद्धान्तः ):—

एवं प्राप्तेऽभिधीयते—अन्तस्तद्धर्मोपदेशात्। अन्तरादित्ये अन्तरक्षिणि च यः पुरुषः प्रतीयते, स जीवादन्यः परमात्मैव । कुतः ? तद्धर्मोपदेशात् जीवेष्वसम्भवँस्तदतिरिक्तस्यैव परमात्मनो धर्मोऽयमपहतपाप्मत्वादिः

* श्रुतप्रकाशिका *

राद्धान्ते—सौत्रं प्रतिज्ञापरमन्तश्शब्दं व्याचष्टे ( अन्तरादित्य इति ) द्वितीयसूत्रस्थान्यशब्दान्वयलब्धं साध्यधर्ममाह ( स जीवादन्य इति ) तेन फलितमाह ( परमात्मेति ) हेत्वंशमवतार्य व्याचष्टे ( कुत इत्यादिना ) 'तद्धर्मोपदेशादि'ति तच्छब्दः परमात्मपरः। परमात्मनि सिद्धे तद्धर्मोपदेशः, तद्धर्मोपदेशात्परमात्मत्वसिद्धिरिति परस्पराश्रयशङ्कायामाह ( जीवेष्वसम्भवन्निति ) जीवेष्वसम्भवन्नयं धर्मो जीवातिरिक्तस्वाश्रयप्रतिपादकत्वं श्रुतेर्निश्चाययति . योग्यतापरामर्शसहकृतेयं श्रुतिः परमात्मानमभिधत्त इत्यर्थः । अपहतपाप्मत्वं पापहेतुकमिश्रहेतुकशरीरवत्त्वव्यावर्तकमित्यत्राह ( अपहतेति ) यद्यपि 'सर्वेभ्यः पाप्मभ्य उदितः' इति विषय-

ॐ भावप्रकाशिका ॐ

न्विषं ज्ञानशक्त्यादिकञ्चेत्यर्थः ॥ ( जीवेष्वसम्भवन्नयं धर्म इति ) अनेन सर्वपापोदितत्वरूपं ब्रह्मलिङ्गं सशरीरत्वरूपजीवलिङ्गापेक्षया चरमश्रुतमप्यनन्यथासिद्धत्वात् प्रबलमिति न्याय उपन्यस्तो भवति । अत्र सर्वपापोदितत्वस्य 'उदेति ह वै सर्वेभ्यः पापेभ्यो य एवं वेद' इति सर्वपापोदितत्वलक्षणफलरूपतात्पर्य-

१ बृ. ५-८-८ ॥

[1]"स एष सर्वेभ्यः पाप्मभ्य उदितः" इत्यादिनोपदिश्यते । अपहतपाप्मत्वं ह्यपहतकर्मत्वम्, कर्मवश्य-

* श्रुतप्रकाशिका *

वाक्यम्, तथाप्यपहतपाप्मशब्दप्रयोगः श्रुत्यन्तरस्मारणार्थः । (अपहतकर्मत्वमिति) पाप्मभ्य इति पाप्मशब्दः पुण्यपापरूपोभयविधकर्मपर इत्यर्थः । हिशब्दः परमात्मप्रकरणेषु पापशब्दस्य पुण्यपापपरत्वप्रसिद्धिं सूचयति "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते" इति "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्" "न कर्मणा वर्धते नो कनीयान्" इत्यादिश्रुतयोऽस्मिन्नर्थे प्रमाणं स्युः । 'पाप्मानः कालजरामृत्युशोकादयस्सङ्ख्यातत्वात्' इतिवाक्यकारवचः । अलौकिकत्वे सत्यनिष्टफलसाधनत्वरूपप्रवृत्तिनिमित्तयोगादुपपन्नं च पुण्यस्यापि पापशब्दाभिधेयत्वम् । मुमुक्ष्वपेक्षया स्वर्गादीनामनिष्टफलत्वम् 'अमूनि यानि स्थानानि देवानां परमात्मनः' इत्यारभ्य 'एते वै निरयास्तात स्थानस्य परमात्मनः' इति । "क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क्व जपो वासुदेवेति मुक्तिबीजमनुत्तमम्" ॥ इति च । पाप्मशब्दव्याख्यानमुखेन बद्धव्यावृत्तिरुक्ता । अथापहतशब्दव्याख्यानमुखेन मुक्तव्यावृत्तिमाह (कर्मेति)

* भावप्रकाशिका *

लिङ्गोपेतत्वात् अनादृशात् सशरीरस्वरूपजीवलिङ्गादाधिक्यं द्रष्टव्यम । (वाक्यकारवच इति) ननु 'न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' इति प्रयोगानुसारेण जन्मजरादीनामपि पापशब्दवाच्यत्वं स्यात् । ततश्च 'अपहतपाप्मा' इत्यनेनैव जरादीनां व्युदस्तत्वात् 'विजरो विमृत्युः' इत्यादिना पुनर्व्युदासवैफल्यं स्यादिति चेन्न; 'अपहतपाप्मा' इतिवाक्ये पाप्मशब्दस्य गोबलीवर्दन्यायेन जरादिव्यतिरिक्तपापपरत्वात् । न च शोकादिषु पाप्मशब्दस्यामुख्यत्वेपि सुकृतदुष्कृतयोः प्रवृत्तिनिवृत्तिसम्भवान्न मुख्यत्वं त्याज्यमिति लघुसिद्धान्तटीकाविरोध इति वाच्यम्, तस्याभ्युपेत्यवादत्वेनादोषात् । केचित्तु तद्विरोधादिदमेवान्यपरतया व्याख्येयमिति वदन्ति । ननु पाप्मशब्दस्य सुकृतसाधारणपरत्वसमर्थनं मुधा । पाप्मशब्दस्य लोकप्रसिद्ध्यनुरोधेन दुष्कृतमात्र-

१ छां १-६-७ ॥

तागन्धरहितत्वमित्यर्थः । कर्माधीनसुखदुःखभागित्वेन कर्मवश्या हि जीवाः । अतोऽपहतपाप्मत्वं जीवादन्यस्य परमात्मन एव धर्मः ॥

* श्रुतप्रकाशिका *

जीवव्यावृत्तिं स्फुटयति ( कर्माधीनेति ) अपहतपाप्मशब्दोऽसङ्कोचात्स्वस्मिन् परत्र च पाप्मनामबाधकत्वं स्वतस्सिद्धं वदतीति हेयप्रत्यनीकत्वसिद्धिः । नन्वपहतशब्दः प्रध्वंसपरः उत्पन्नस्यैव प्रध्वंसः, अतः प्रध्वस्तपाप्मत्वश्रवणात्परमात्मनः कर्मसम्बन्धस्य प्रागविद्यमानत्वङ्गम्यते, अतश्च [परस्य] प्रध्वस्तपाप्मनः परमात्मनो मुक्तादवैलक्षण्यं स्यात् । यदि नित्यासंस्पृष्टपाप्मत्वं विवक्षितं तदत्यन्तमशाब्दम् . परस्य कुर्वतोऽकुर्वतो वा पाप्मासंस्पृष्टत्वम् ? प्रथमे व्याघातः, कर्तृसमवेतत्वात्क्रियायाः । द्वितीये त्वस्मदादेरवैलक्षण्यम्, न ह्यकृतेन कर्मणा कश्चिल्लिप्यत इति । उच्यते, परस्य तावत्पाप्माभावपराणि वाक्यानि विविधानि श्रूयन्ते "सर्वेभ्यः पाप्मभ्य उदितः" इति पाप्मभ्य उदयः श्रूयते। 'अपहतपाप्मे'ति पाप्मनामपहतिः श्रुता। " नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्त्तन्ते" इति तरतेः प्राप्तिवाचित्वादप्राप्तिर्निवृत्तिश्च श्रूयते " स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्" इति कर्मफलास्पर्श उच्यते, तत्र प्रथममुदितशब्दस्य मुख्यार्थोऽनुपपन्नः, विभोःपरस्य पाप्मान्वितदेशादूर्द्ध्वगमनायोगात्तस्मादश्लेपलक्षणा युक्ता । तत्राकृतकर्माश्लेषस्य सर्वसाधारणस्य प्रतिपादनवैयर्थ्यं स्यात्, अतः कृतानामपि कर्मणामश्लेषपरत्वं तस्य

७ भावप्रकाशिका ७

परत्वे पापवश्यतागन्धराहित्यरूपस्य तस्य जीवे असत्त्वेन जीवव्यावृत्तिस्सिध्यतीति चेत्, सत्यम्; अथापि वस्तुस्थित्यनुसारात् सुकृतसाधारण्यमुपपादितम् । ( अपहतपाप्मशब्दोऽसङ्कोचादिति ) "सर्वे पाप्मानोऽतो निवर्तन्ते, अपहतपाप्मा ह्येष ब्रह्मलोकः" इति पापनिवर्तकत्वस्यापहतपाप्मशब्दप्रवृत्तिनिमित्ततया श्रुतावेवाविष्करणादिति द्रष्टव्यम् । नन्वपहतपाप्मशब्दो यथा तथा वास्तु, प्रकृतस्तु पाप्मोदितशब्दो न तादृशार्थकः । प्रमाणाभावादिति चेन्न; अत्रापि 'उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद' इति परपापनिवर्तकत्वप्रतीत्यविशेषादितिध्येयम् । केचित्तु

* श्रुतप्रकाशिका *

वाक्यस्याभ्युपगन्तव्यम्। क्रियायाः कर्तृसमवेतत्वेन स्वरूपासंश्लेषस्य व्याघातादेव फलासंश्लेषपरत्वमाश्रयणीयम्। तत्र हेत्वकथनात्तिरोधानाविर्भावयोः निष्प्रमाणकत्वाच्च तस्य स्वाभाविकत्वं नित्याविर्भूतत्वञ्च सिद्धम्। अपहतशब्दश्च हिंसारूपधात्वर्थासम्भवाद्विनाशं लक्षयन् क्रियास्वरूपस्य नश्वरतया स्वरूपनाशप्रतिपादनवैयर्थ्यात् फलजननशक्तिविशिष्टरूपेण नाशं प्रतिपादयति, यथा "सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा" इति नाशशब्दो दानस्य फलजननशक्तिहानिं प्रतिपादयति तद्वत्। अत ईश्वरेण कृतानि पुण्यपापसजातीयानि कर्माणि न शुभाशुभफलजननशक्तानि स्युः। ईदृशमपहतपाप्मत्वञ्च पूर्वोक्तन्यायान्निरुपाधिकं नित्याविर्भूतञ्चाभ्युपगन्तव्यम्, 'स न साधुना कर्मणा' इत्यत्राप्यसाधुकर्मफलास्पर्शस्त्वप्रायश्चित्तरूपसाधुकर्मनिबन्धन इति शङ्का च साधुकर्मप्रतिषेधेनैव निरस्ता। न च साधुकर्महतिस्तस्यापि निवर्तकविद्याबलादितिशङ्कनीयम्, ध्यानकर्तृत्वानुक्तेः। उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेति तस्य ध्येयत्वश्रवणाच्च. साधुकर्मनिषेधादेव ध्यानकर्तृत्वमपि निषिद्धम्भवति, यज्ञादिकमुपासनात्मकञ्च कर्म हि साधुकर्मशब्दाभिलापार्हम्. अतः प्रायश्चित्तादिभिर्विनैव कर्मफलाश्लेष इत्यपहतपाप्मशब्दस्यो हन्तिधातुश्च हानिपरः, न च प्रध्वंसपरः। नेत्रं मेतृमित्यत्रापि कृतानामेव कर्मणां फलजननशक्तिमत्त्ववेषेण प्राप्त्यभाव उच्यते, अतो निरुपाधिकमपहतपाप्मत्वं नाम कर्मवश्यतागन्धरहितत्वम्, न च परमात्मनि फलजननासमर्थस्य तत्कृतकर्मणस्तं प्रति न पाप्मत्वमिति श्रुतिवाक्यस्यपाप्मशब्दस्यामुख्यत्वमिति वाच्यम्. "अनन्तस्यातिनिर्वीर्यं जरयामास तद्विषम्" 'जगन्विषधरो हरः" इत्यादिषु

* भावप्रकाशिका *

अपहतपाप्मशब्दोऽसङ्कोचेन स्वस्मिन् परत्र च पापघातकत्वं वदतीतिचेत्. जीवस्य कदापीदृक्त्वाभावेन परिशुद्धात्मविषयस्यापहतपाप्मशब्दस्याप्ययमेवार्थ इत्युत्तरग्रन्थविरोधप्रसङ्गात, कर्मवश्यतागन्धरहितत्वमित्यर्थ इति भाष्यविरोधाच्चेदमतिवादमात्रमिति वदन्ति। नन्वेवं नित्याविर्भूतापहतपाप्मत्वादिगुणानां नित्यमुक्तानामपि अन्तरादित्यविद्याविषयत्वप्रसङ्ग इति चेन्न; अनन्याधीनमपहतपाप्मत्वमिह विवक्षितम्। तच्च न नित्येषु सम्भवति, तेषामपहतपाप्मत्वस्य भगवत्सङ्कल्पाधीनत्वादिति भावः। (हिंसारूपधात्वर्थासम्भवादिति) मरणोद्देश्यकमर-

तत्पूर्वकं स्वरूपोपाधिकं लोककामेशत्वम् सत्यसङ्कल्पत्वादिकम् सर्वभूतान्तरात्मत्वञ्च तस्यैव धर्मः । यथाह [1]"एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको ऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" इति ।

* श्रुतप्रकाशिका *

निगीर्णजीर्णविषानीश्वरादीन् प्रति विषशब्दस्यैव मुख्यत्वोपपत्तेः । क्षेत्रज्ञेषु प्रत्यवायकरपापसजातीयानां कर्मणां स्वलीलाकृतानामपि फलजननशक्तिप्रतिभटत्वं नाम कश्चिदयमीश्वरस्य स्वभावविशेषः, परिशुद्धात्मस्वरूपविषयस्याप्यपहतपाप्मशब्दस्यायमेवार्थः । स तु तस्य तिरोधानार्हः प्रतिबन्धनिवृत्तावाविर्भवति, ईश्वरस्य तु तिरोधानार्हो नित्याविर्भूत इति विशेषः, अतोऽपहतपाप्मत्वविषयश्रुतीनां यथोक्त एवार्थ इति तेन धर्मेणान्तरादित्येऽवस्थितस्य भगवतो जीववैलक्षण्यसिद्धिः ॥

गुणान्तराणामपि जीवेष्वसम्भवं दर्शयति ( तत्पूर्वकं स्वरूपोपाधिकमिति ) अपहतपाप्मत्वपूर्वकत्वात्स्वरूपोपाधिकम्, स्वाभाविकमित्यर्थः । एवं प्रसिद्धाप्रसिद्धयोरर्थयोरेकनिमित्तसम्भवे प्रसिद्धवाचिनैकेनैव शब्देनोपादानार्हत्वमिह व्युत्पादितम् । आदित्यान्तर्वर्तिनोऽपहतपाप्मत्वगुणयोगेनानन्दवल्लीदहरविद्यासुबालोपनिषत्प्रतिपाद्यस्येह प्रत्यभिज्ञानात्तत्र तत्रोक्ता गुणा अप्यस्यैव हिरण्मयपुरुषस्य धर्मा इत्यभिप्रायेण सत्यसङ्कल्पत्वादिकं सर्वभूतान्तरात्मत्वञ्चेत्युक्तम् । अपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वादौ श्रुतिं दर्शयति ( एष आत्मेति ) तत्पूर्वकसर्वभूता-

ᛃ भावप्रकाशिका ᛃ

णानुकूलव्यापारस्यैव हिंसात्वादिति भावः । ( विषशब्दस्यैवेति ) यद्यपि विषशब्दो विषत्वजातिवचनो न सप्रतियोगिकः । न हि गौः किञ्चित्प्रत्यगौरितिन्यायेन कस्यचिद्वस्तुनः कञ्चित्प्रति विषत्वं कञ्चित्प्रति न विषत्वमिति हि न सुवचम्, तथापि यस्य यन्मरणसाधनं तस्य तद्विषमिति कृत्वेदमुक्तमिति द्रष्टव्यम् ॥

तत्पूर्वकं स्वरूपोपाधिकमित्यत्र तत्पूर्वकमित्येतद्धेतुगर्भविशेषणमित्यभिप्रयन्नाह (अपहतपाप्मत्वपूर्वकत्वादिति) (तत्पूर्वकसर्वभूतेति) यद्यपि 'सर्वभूतान्तरात्मापहत-

१ छां. ८.१-५ ॥

तथा [1]"एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति। [2]"सोऽकामयत। बहु स्यां प्रजायेयेति" इत्यादि सत्यसङ्कल्पत्वपूर्वकसमस्तचिदचिद्वस्तुसृष्टियोगो निरुपाधिकभयाभयहेतुत्वम् वाङ्मनसपरिमितिकृतपरिच्छेदरहितानवधिकातिशयानन्दयोग इत्यादयोऽकर्मसम्पाद्याः स्वाभाविका धर्माः जीवस्य न सम्भवन्ति॥ यत्तु शरीरसम्बन्धान्न जीवातिरिक्त इत्युक्तम्। तदसत्; न हि सशरीरत्वं कर्मवश्यतां

* श्रुतप्रकाशिका *

न्तरात्मत्वे श्रुतिमुदाहरति (एष सर्वभूतान्तरात्मेति) तत्तदन्तरत्वेन आत्मत्वव्याख्यानपरस्यानन्दवल्लीवाक्यस्य नारायणपरत्वज्ञापनार्थं च एष सर्वभूतान्तरात्मेतिवाक्योपादानम्। केषुचिद्वाक्येषु अपहतपाप्मत्वपूर्वकगुणविधानात्सर्वशाखाप्रत्ययन्यायेन वाक्यान्तरेष्वपि तत्पूर्वकत्वं विवक्षितमित्यभिप्रायेणाह (सोऽकामयतेति) जगत्कारणत्वमेव वेदान्तवेद्यस्य ब्रह्मणो लक्षणम्, कारणश्चेत् सत्यसङ्कल्पम्, सत्यसङ्कल्पत्वं चेदपहतपाप्मत्वपूर्वकम् तच्च नारायणप्रत्याभिज्ञापकं सुबालोपनिषदैकार्थ्यादिति भावः। वाङ्मनसेति परिच्छेदकासिद्धिमाह। पूर्वपक्षमनुवदति (यत्त्विति) परिहरति (तदसदिति) शास्त्रैकप्रमाणके वस्तुनि लोकदृष्टव्याप्तिमूलस्तर्को न कर्मवश्यत्वसाधक इत्यभिप्रायेणाह (न हीति)

* भावप्रकाशिका *

पाप्मा' इत्यपहतपाप्मत्वमेव सर्वभूतान्तरात्मत्वपूर्वकं निर्दिष्टं नत्वपहतपाप्मत्वपूर्वकं सर्वभूतान्तरात्मत्वम्, तथापि अपहतपाप्मत्वसहपठितमित्यत्र तात्पर्यात्। ननु परभाष्ये—ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" इत्यादित्यान्तर्वर्तिनः परिच्छिन्नैश्वर्यश्रवणम्। 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाञ्च' इति अक्ष्यन्तर्वर्तिनः परिच्छिन्नैश्वर्यश्रवणं पूर्वपक्षहेतुतया परेराशङ्क्य

१ सुबा. ७॥ | २ तै. आन. ६॥

साधयति, सत्यसङ्कल्पस्येच्छयापि शरीरसम्बन्धसम्भवात् । अथोच्येत–शरीरं नाम त्रिगुणात्मकप्रकृतिपरिणामरूपभूतसंघातः, तत्सम्बन्धश्चापहतपाप्मनः सत्यसङ्कल्पस्य पुरुषस्येच्छया न सम्भवति, अपुरुषार्थत्वात्। कर्मवश्यस्य तु स्वस्वरूपानभिज्ञस्य कर्मानुगुणफलोपभोगायानिच्छतोऽपि तत्सम्बन्धोऽवर्जनीय

* श्रुतप्रकाशिका *

कल्पकस्यान्यथासिद्धिमाह (सत्यसङ्कल्पस्येति) सत्यसङ्कल्पस्य कर्मनैरपेक्ष्यमपहतपाप्मत्वपूर्वकसत्यसङ्कल्पत्वश्रुत्युपपादनेन समर्थितम् । अत एव "स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च" स एष ये चैतस्मादर्वाञ्चो लोकास्तेषाञ्चेष्टे मनुष्यकामानाञ्च' इत्यादित्याक्षिपुरुषविषयवाक्यद्वयेन प्रतिपन्नमैश्वर्यम् अनवच्छिन्नम्, तदवच्छेदे शङ्कयमानेऽपि सोऽवच्छेदोऽप्यैच्छतयाऽन्यथासिद्ध इति फलितत्वान्न कण्ठोक्तम्। विग्रहविषयाया इच्छाया असम्भवं शङ्कते (अथोच्येतेति) हेयत्वसूचकस्त्रिगुणात्मकशब्दः "सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः गुरुवरणकमेव तमः" इत्युक्तेः। इच्छाया अभावेऽपि कर्मपारवश्याज्जीवस्य तत्सम्बन्धसम्भवमभिप्रेत्याह (कर्मेति) कर्माचरणहेतुस्वस्वरू-

* भावप्रकाशिका *

परिहृतम्. तद्भगवता भाष्यकृता किमिति नाहृतमित्याशङ्क्य तत्पुनिरसनतया नोपन्यस्तमित्यभिप्रयन्नाह (अत एवेति) निरुपाधिकसत्यसङ्कल्पत्वादेवेत्यर्थः । नन्वादित्यपुरुषः केषाञ्चिदीष्टे अक्षिपुरुषः केषाञ्चिदितिनिर्देशभेदादैश्वर्यमर्यादासिद्धिरित्याशङ्क्याह (तदवच्छेद इति) (ऐच्छतयाऽन्यथासिद्ध इति) ऊर्ध्वलोकदेवकामेशितृत्वेच्छायामूर्ध्वलोकदेवकामेशितृतयोपासनं कर्तव्यतया चोद्यते, नैतावता लोकान्तरकामान्तरेशितृत्वं परिसङ्कुच्यत इति भावः । 'सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः। गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः, इति श्लोकस्यायमर्थः,- सत्त्वं गुणः लघुवस्तुन उद्गमनहेतुर्धर्मो लाघवं गौरवप्रतिद्वन्द्वी धर्मः, येन ह्यग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनं प्रकाशकं चेष्टम्। साङ्ख्या-

इति । स्यादेतदेवम् ; यदि गुणत्रयमयः प्राकृतोऽस्य देहस्स्यात्, स तु स्वाभिमतः स्वानुरूपोऽप्राकृत एवेति सर्वमुपपन्नम् ॥ एतदुक्तं भवति— परस्यैव ब्रह्मणो निखिलहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपतया सक-

* श्रुतप्रकाशिका *

पानभिज्ञस्येतिविशेषणम् । परिहरति ( स्यादिति ) स्वाभिमतेत्युक्तेऽभिमतत्वमयोग्येऽपि सम्भवतीति तद्व्यावृत्त्यर्थमाह ( अनुरूपेति ) कुत इत्यत्राह ( अप्राकृत इति ) परमात्मस्वरूपं हि निरतिशयानन्दरूपम्, सर्वज्ञत्वात् तच्च जानात्येवेति स्वस्वरूपादन्यत्र भोग्यत्वज्ञानं न वक्तुं युक्तम्, अतस्सर्वज्ञस्य तस्य विग्रहे स्पृहणीये स्वरूपस्य भोग्यतावैकल्यं स्यादित्यत्राह ( सर्वमुपपन्नमिति ) कथमुपपन्नमित्यत्राह ( एतदुक्तमिति ) स्वतस्सर्वज्ञस्य सर्वशक्तेर्ज्ञानार्थं प्रवृत्त्यर्थञ्च करणानपेक्षत्वात् न देहापेक्षा, रूपादिमत्त्वे च प्राकृतत्वं स्यात्, नित्यत्वे चानित्यबहुवचनासम्भवः, तिर्यगादिरूपपरिग्रहे "वाचिकैः पक्षिमृगताम्" इत्यादिप्रकारेण तन्मूलकर्मसम्बन्धः स्यादिति शङ्कापरिहारार्थञ्चैतदुक्तमित्यारम्भः । यथा परस्य ब्रह्मणो धर्मिस्वरूपं स्वाभाविका गुणाश्च प्रामाणिकत्वादङ्गीक्रियन्ते, तथा विलक्षणशरीरमभ्युपगन्तव्यमित्यभिप्रायेणाह ( परस्यैवेति ) ( स्वाभिमतेति ) करणान-

⁂ भावप्रकाशिका ⁂

चार्थैरितिशेषः । रजस्तु चलं त्रैगुण्यद्रव्यं चलयति प्रवर्तकमुपष्टम्भकं सत्त्वस्येति शेषः । सत्त्वं हि स्वयमक्रियत्वात् स्वकार्यं प्रत्यवसीदत्, तद्रजसा उपष्टभ्यते. प्रवृत्त्युन्मुखतया क्रियते, ततश्च रजसोपष्टम्भात् सर्वत्र प्रवृत्तौ गुरुणा आवृणवता च तमसा प्रतिबन्धात् क्वचिदेव प्रवृत्तिः, न सर्वत्र . एवं परस्परविरुद्धकार्याणामपि सत्त्वरजस्तमसामेकप्रयोजने प्रवृत्तिरुपपद्यते. यथा वर्तितैलानलानां परस्परविरुद्धानामपि प्रकाशलक्षणकार्यकरत्वं तथेत्यर्थः । ततश्च परस्परविरोधिस्वभावतया ज्ञानावारकतया च हेतुत्वं प्रतीयत इति भावः । केचित्तु प्रीत्यप्रीतिविषादात्मका गुणाः प्रकाशप्रवृत्तिनियमार्था इति सत्त्वरजस्तमसां सुखदुःखमोहात्मकत्वप्रतिपादकपूर्वश्लोकसहितस्यास्य श्लोकस्य हेयतासूचकत्वमित्याहुः । ( तच

लेतरविलक्षणस्य स्वाभाविकानवधिकातिशयासङ्ख्येय-कल्याणगुणगणाश्च सन्ति। तद्वदेव स्वाभिमतानुरूपैकरूपाचिन्त्यदिव्याद्भुतनित्यनिरवद्यनिरतिशयौज्ज्वल्यसौन्दर्यसौगन्ध्यसौकुमार्य्यलावण्ययौवनाद्यनन्तगुणगणनिधिदिव्यरूपमपि स्वाभाविकमस्ति। तदेवो-

* श्रुतप्रकाशिका *

पेक्षज्ञानक्रियस्यापि परस्य भोगार्थो विग्रहः। निरतिशयानन्दस्यापि तस्य प्रीतिविशेषापेक्षा घटते, प्रभूतानन्दानामप्यानन्दान्तरापेक्षादर्शनादिति भावः। ( एकरूपेति ) हेयप्रतिभटत्वमङ्गलाकारत्वाद्याकारैरैकरूप्यम्। शरीरत्वादस्मदादिशरीरवत् दुःखावहमित्यादितर्कागोचरत्वमभिप्रयन्नाह ( अचिन्त्येति ) अचिन्त्यत्वे हेतुमाह ( दिव्येति ) अनेन दिव्यशब्देन विलक्षणद्रव्यत्वमुक्तम्। रूपादिमत्त्वात् प्राकृतत्वं धर्मिग्राहकमानबाधितमिति भावः। द्वितीयेन दिव्यशब्देन विलक्षणसन्निवेशत्वम्। यथा "तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्" इति। अद्भुतत्वम्। प्रतिक्षणमभिनवत्वम्। (नित्येति) सावयवत्वादनित्यमित्याद्यनुमानं धर्मिग्राहकप्रमाणबाधितमिति भावः। कल्याणकरत्वेऽपि हेयमिश्रत्वशङ्काव्युदासार्थो निरवद्यशब्दः। निरतिशयाः—वक्ष्यमाणसर्वगुणाः। आदिशब्देन पराक्रमादयो विवक्षिताः। नित्यत्वे कथमनित्यबह्ववतारसम्भवः ? कथञ्च निकृष्टदेवादिसाजात्यमित्यत्राह ( तदेवेति ) तदेव—अप्रच्युतसन्निवेशमेवेत्यर्थः। संस्थानाशैथिल्येऽपि देवाद्यनेकदेहोत्पादकत्वं चतुर्मुखदेहे दृष्टं परमात्मविग्रहे युज्यत इति भावः। 'नित्यालिङ्ग्यास्वभावसंसिद्धिरिन्द्रियाकाराङ्गप्रत्यङ्गव्यञ्जनवती' 'उज्जहारात्मनः केशौ सितकृष्णौ' 'अंशांशेनावतीर्योर्व्याम्' 'समस्तशक्तिरूपाणि तत्करोति जनेश्वर' 'कल्पे कल्पे जायमानः स्वमूर्त्या' 'सोंऽशो विष्णुमयं स्थानम्" इत्याद्यत्रानुसन्धे-

७ भावप्रकाशिका ७

जानात्येवेतीति ) निरतिशयानन्दस्वरूपं सर्वज्ञत्वाज्जानात्येवेत्यर्थः। ( अलिङ्ग्येति ) अप्रतर्क्येत्यर्थः। ( स्वभावसिद्धिरिति ) स्वप्रकाशेत्यर्थः। इन्द्रियाकारा नयनगोलकादियुक्ता अङ्गप्रत्यङ्गव्यञ्जनवती हस्तपादतदवयवपुंस्त्वादिव्यञ्जकश्मश्रादि-

पासकानुग्रहेण तत्तत्प्रतिपत्त्यनुरूपसंस्थानं करोति अपारकारुण्यसौशील्यवात्सल्यौदार्यैश्वर्यजलनिधि-र्निरस्तनिखिलहेयगन्धोऽपहतपाप्मा परमात्मा परं ब्रह्म पुरुषोत्तमो नारायण इति ॥ [1] "यतो वा इमानि

* श्रुतप्रकाशिका *

यम् । उपासकानुग्रहोपयुक्ता गुणा उच्यन्ते (अपारेति) कारुण्यम्—परदुःखा-सहिष्णुत्वम्, सौशील्यम् महतो मन्दैस्सह नीरन्ध्रेण संश्लेषस्वभावत्वम्, वात्सल्यम् दोषानादरहेतुस्स्नेहः, यथा मातुः पुत्रे । औदार्यम् दातृप्रतिगृहीतृविभाग-बुद्धिरहितं दातृत्वम्, एते सौलभ्योपयुक्ता गुणाः । अथ परत्वमुच्यते (निरस्तेति) परत्वसौलभ्ये अप्युपास्यत्वोपयोगिनी । मनुष्यादिसाजात्येऽपि तत्प्रयुक्तशोकमो-हाद्यस्पृष्टत्वमभिप्रयन्नाह – निरस्तेति । जीवानुप्रवेशेषु शोकादयो जीवांशगताः, साक्षादवतारेष्वभिनयमात्रम्, निखिलशब्देन चिदचिद्गता दोषा विवक्षिताः । शोकाद्यस्पर्शहेतुमाह (अपहतेति) अर्वाचीनात्मव्यावृत्त्यर्थः परमात्मशब्दः । प्रधानव्यावृत्त्यर्थस्तत्समानाधिकृतः परब्रह्मशब्दः । पुरुषोत्तमशब्दो वैलक्षण्य-परः । नारायणशब्दो घटकः । यथा परमात्मपरब्रह्मशब्दौ सामान्यशब्दावेक-विषयौ यथा पुरुषोत्तमनारायणशब्दौ विशेषशब्दावेकविषयौ, तथा सामान्य-विशेषशब्दाः एकविषया इति भावः । अत्र स्वरूपस्य भोग्यत्ववैकल्यशङ्का च परिहृता भवति, स्वसम्बन्धिभोग्यत्वं स्वस्य न भोग्यताविरोधि, अपि तु स्वभोग्य-त्वातिशयावहम्, यथा स्वसम्बन्धिगुणगणभोग्यत्वम् । न हि स्वसम्बन्धिनामप्यामोद-

* भावप्रकाशिका *

मतीत्यर्थः । (मोहाद्यस्पृष्टत्वमभिप्रयन्नाहेति) इयञ्च पादावतारिका, पूर्वोक्ता तु वाक्यावतारिकेति भेदः । (जीवानुप्रवेशेष्विति) आवेशावतारभूतेषु परशुरामा-दिष्वित्यर्थः । (प्रधानव्यावृत्त्यर्थ इति) ब्रह्मशब्दस्य प्रधानादिसाधारण्याद्ब्रह्म-शब्दसमानाधिकृतः परशब्दः प्रधानव्यावृत्त्यर्थ इत्यर्थः । (परशब्द इति) पर-ब्रह्मशब्दानुप्रविष्टः परशब्द इत्यर्थः । (नारायणशब्दो घटक इति) सामान्य-

1 तै-भृगु. १ ॥

भूतानि जायन्ते"[१] "सदेव सोम्येदमग्र आसीत्" [२]"आत्मा वा इदमेक एवाग्र आसीत्" [३]"एको ह वै नारायण आसीन्न ब्रह्मा नेशानः" इत्यादिषु निखिलजगदेककारणतयाऽवगतस्य परस्य ब्रह्मणः [४]"सत्यं ज्ञानमनन्तं ब्रह्म" [५]"विज्ञानमानन्दं ब्रह्म" इत्यादिष्वेवम्भूतं स्वरूपमित्यवगम्यते। [६]'निर्गुणम्' [७]'निरञ्जनम्' [८]'अपहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सो

* श्रुतप्रकाशिका *

करस्य कस्तुरिकादेरामोदवैकल्यम्, अपि तु तत्पौष्कल्यमेव, तथा स्वसम्बन्धाद्विग्रहभोग्यत्वमपि स्वभोग्यत्वातिशयावहमिति। अथोक्तार्थे प्रमाणान्याह (यतो वा इमानीत्यादि) जगत्कारणत्वधर्म्मिस्वरूपविषयप्रमाणोपन्यासो दृष्टान्तार्थः। गुणविभागकथनं वादिविवादशमनार्थं दृष्टान्तार्थञ्च। विद्युतः—विद्युद्वर्णात्। 'आदित्यवर्णम्' 'रुक्मवर्णम्' इति वाक्यसरूपार्थस्वीकारस्योचितत्वात्, आदित्यवर्णो विग्रहश्च न प्राकृतः 'तमसः परस्ता'दिति श्रुतेः। अतिसूक्ष्मप्रकृतिर्हि तमः, अतस्तत्कार्यवैलक्षण्यसिद्धिः, अन्यथा स्वरूपस्य तमसोऽन्यत्वकथनं स्यात्, तदानीं परस्तादित्यस्यातिप्रत्ययस्यादित्यवर्णतोक्तेश्च वैयर्थ्यं स्यात्, अतो विग्रहविशिष्ट-

ஜ भावप्रकाशिका ஜ

विशेषयोरेकविषयत्वघटक इत्यर्थः। ननु प्रकृतहेयसम्बन्धं प्रतिषिध्य कल्याणरूपं वदतीत्यस्यैव प्रकृतोपयुक्ततया हेयगुणान् प्रतिषिध्य कल्याणगुणान् वदतीत्युक्तिः प्रकृतानुपयुक्तेत्याशङ्क्याह (गुणविभागकथनमिति) (वादिविवादशमनार्थमिति) गुणसामान्यनिषेध इति वादिविवादशान्तय इत्यर्थः। ननु तमःपरावर्तित्वात् कथमप्राकृतत्वसिद्धिरित्यत्राह (अतिसूक्ष्मप्रकृतिर्हीति) (अस्तातिप्रत्ययस्येति)

१ छां ६-२-१ ॥
२ ऐतरेय. १-१-१ ॥
३ महोप. १-अ. १ ॥
४ तै. आन. १ ॥
५ बृ. ५-९-२८ ॥
६ आत्मोप. ॥
७ श्वेता. ६-१९ ॥
८ छां. ७-५-१ ॥

ऽपिपासस्सत्यकामस्सत्यसङ्कल्पः" [1]" न तस्य कार्य्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' [2]" तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम्' [3]'स कारणं कारणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" [4]'सर्वाणि रूपाणि विचित्य धीरः। नामानि कृत्वाऽभिवदन् यदास्ते' [5]'वेदाहमेतं पुरुषं महान्तम्। आदित्यवर्णं तमसः परस्तात्' [6]'सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" इत्यादिषु परस्य ब्रह्मणः प्राकृतहेयगुणान् प्राकृतहेयदेहसम्बन्धं तन्मूलकर्मवश्यतासम्बन्धं च प्रतिषिध्य कल्याणगुणान्

* श्रुतप्रकाशिका *

स्यैव तमःस्पर्शाभावोक्तिरिति विग्रहवैलक्षण्यसिद्धिः। (प्राकृतहेयेति) क्वचित् सतो हि क्वचिन्निषेधः, अतो निषेध्यहेयगुणानां प्रकृतितत्संश्लिष्टजीवेषु विद्यमानत्वं प्राकृतेत्यादिना शब्देन दर्शितम्, विग्रहविशेषविधानदर्शनाद्विग्रहसामान्यनिषेधस्तद्व्यतिरिक्तविषयः, न हिंस्यादितिवत्, निर्गुणमितिवच्च। विशेषनिषेधदर्शनाद्देहसामान्यनिषेधो विशेषे पर्यवस्यति 'पशुना यजेत' इति पशुशब्दवन्निर्गुणशब्दवच्चेति तात्पर्य्यम्। पूर्वोक्तमर्थं वक्ष्यमाणवचनस्यैतदर्थविषयताज्ञापनार्थमनुवदन् पूर्वोक्त-

* भावप्रकाशिका *

यद्यपि "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" इति अस्तातिप्रत्ययस्य प्रथमान्तादपि विधानमस्ति, तथापि प्रातिपदिकानधिकार्थतया वैयर्थ्यं स्यादिति भावः। (आदित्यवर्णतोक्तेश्चेति) न च स्वप्रकाशत्वं तदर्थ

१ श्वे ३ ८ ॥
२ श्वे. ६-७ ॥
३ श्वे. ६-९ ॥
४–५ यजु. आरण. ३-१२ पुरुषसूक्तम् ॥
६ तै नारायणीये. १-अनु. ८ ॥

कल्याणरूपञ्च वदन्ति । तदिदं स्वाभाविकमेव रूप-मुपासकानुग्रहेण तत्प्रतिपत्त्यनुगुणाकारं देवमनुष्यादि-संस्थानं करोति स्वेच्छयैव परमकारुणिको भगवान्। तदिदमाह श्रुतिः [1]"अजायमानो वहुधा विजायते"

* श्रुतप्रकाशिका *

संस्थानशब्दं विवृणोति ( तदिदमिति ) ( परमकारुणिक इति ) देवादि-साजात्यं न कर्मनिबन्धनम्, उपासकानुग्रहार्थत्वादित्यर्थः। श्रुतिं दर्शयति ( तदिद-मिति ) अजायमान इति कर्महेतुकसुखाद्यर्थप्राकृतदेहसङ्गतिरूपजन्मनिषेधः । विजायत इति चेच्छाहेतुकजगद्रक्षणार्थाप्राकृतविग्रहाधिष्ठानरूपजन्मविधिः । ननु अजायमान इति परमार्थजन्मनिषेधः। बहुधा विजायत इत्यपरमार्थजन्मविधिः स्यात्। न कृत्स्नमिथ्यात्ववादिपक्षे प्रयोजनाभावात्। प्रपञ्चमिथ्यात्ववचनेनैवे-श्वररूपमिथ्यात्वमपि हि सिद्धम्, किं विशेषतोऽभिधानेन ? विहितस्य निषेधा-योगाच्चायुक्तम्, मानान्तरागोचरं जन्माभिधाय तदेव कथं निषिध्यते, स्वरूपस्या-जत्वं शरीरद्वारा बहुभवनं चोच्यत इति चेत्. न, स्वरूपनित्यत्वदेहद्वारकजन्मनोः जीवानामपि समानतया " तस्य धीराः परिजानन्ति योनिम्" इति अनन्तर-वाक्यप्रतिपन्नवैलक्षण्यानुपपत्तेः। सर्वसाधारणलोकविदितजन्मप्रकारवैजात्ये सत्येव ह्येवं वक्तुं युक्तम्। न हि देवदत्तस्य जन्म धीरैरेव परिज्ञायत इति वक्तव्यम्; यज्ञदत्त-जन्मनो वैलक्षण्याभावात्, स्वरूपेणाजस्य विचित्रसमस्तजगद्रूपेण बहुभवनमुच्यते तद्धि जीवेषु न सम्भवतीति चेन्न, " सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इति पूर्वानुवाकेऽभिधाय 'तस्य त्वष्टा विदधद्रूपमेति' इत्यस्मिन्न-प्यनुवाके जगद्रूपेण बहुभवनस्योक्तत्वात्. एवमर्थान्तरपरत्वे सत्यानर्थक्यप्रसङ्गात्तत्प-रिहारायास्याः श्रुतेरवतारपरत्वमभ्युपगन्तव्यम्। तथाऽस्याः श्रुतेरवतारविषयत्वे सत्ये-व 'अजोऽपि स'न्नित्याद्युपबृंहणैकार्थ्यं सिध्येत्, अतोऽस्य वाक्यस्य यथोक्त एवार्थः ।

७ भावप्रकाशिका ७

इति वाच्यम्। तत्र तस्य शब्दस्यास्वरसत्वादिति भावः । ( संस्थानशब्दं विवृ-

१ पुरुषसूक्तम् .

इति। स्मृतिश्च [1]"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया। परित्राणाय साधूनां विनाशाय च दुष्कृताम्" इति। साधवो ह्युपासकाः, तत्परित्राणमेवोद्देश्यम्, आनुषङ्गिकस्तु दुष्कृतां विनाशः, सङ्कल्पमात्रेणापि तदुपपत्तेः। 'प्रकृतिं स्वाम्' इति प्रकृतिः स्वभावः। स्वमेव स्वभावमास्थाय, न संसारिणां स्वभावमित्यर्थः। आत्ममाययेति स्वसङ्कल्परूपेण ज्ञानेनेत्यर्थः। [2]'माया वयुनं ज्ञानम्' इति ज्ञानपर्य्यायमपि मायाशब्दं नैघण्टुका अधीयते। आह च भगवान् पराशरः [3]"समस्ताश्शक्तयश्चैता नृप! यत्र प्रतिष्ठिताः। तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत्॥

* श्रुतप्रकाशिका *

उपबृंहणैकार्थ्यं दर्शयति (स्मृतिश्चेति) अजोऽपि सन् सम्भवामीति विधिनिषेधयोरपि यथोक्त एवार्थः। उपासकानुग्रहार्थत्वं कथमत्रावगम्यत इत्यत्राह (साधव इति) (आनुषङ्गिक इति) 'विनाशाय च दुष्कृता'मिति चशब्दोऽन्वाचयपर इति भावः। समुच्चयस्समप्रधानयोः, अन्वाचयः प्रधानानुषङ्गिकयोः। दुष्कृद्विनाशस्यानुषङ्गिकत्वमुपपादयति (सङ्कल्पेति) प्रकृतिसम्बन्धभ्रमनिवृत्त्यर्थं व्याचष्टे (प्रकृतिं स्वामितीति) स्वभावः- निरुपाधिकधर्मः। अनेन विग्रहश्च स्वाभाविक इत्युक्तं भवति। अपारमार्थिकत्वभ्रमनिवृत्त्यर्थं व्याचष्टे (आत्ममाययेति) नैघण्टुकाः—वेदनिघण्टुकाराः। तन्मूलभूतप्रयोगश्च "यावन्तः पांसवो भूमेः सङ्ख्याता देवमायया" इति। स्वोक्तार्थवैशद्यार्थमाह (आह चेति) अयमपि तस्यैव धर्मः,

卐 भावप्रकाशिका 卐

णोतीति) देवमनुष्यादिसंस्थानशब्देनेति भावः। (स्वाभाविक इत्युक्तमिति)

---

१ गीता. ४-६. यजु आरण. ८॥ २ वेदनिघण्टौ. धर्मवर्ग. १२-श्लो.॥ ३ वि पु. ६-७-७०

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ! । देवतिर्यङ्मनुष्याख्या चेष्टावन्ति स्वलीलया । जगतामुपकाराय न सा कर्मनिमित्तजा' इति। महाभारते चावताररूपस्याप्यप्राकृतत्वमुच्यते– [1]''न भूतसंघसंस्थानो देहोऽस्य परमात्मनः' इति । अतः परस्यैव ब्रह्मणः एवंरूपरूपवत्त्वादयमपि तस्यैव धर्मः । अत आदित्यमण्डलाद्यधिकरणः आदित्यादिजीवव्यतिरिक्तः परमात्मैव । २१ ।

भेदव्यपदेशाच्चान्यः ॥ २२ ॥

आदित्यादिजीवेभ्यो भेदो व्यपदिश्यतेऽस्य परमात्मनः [2]''य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति' [3]'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा

* श्रुतप्रकाशिका *

एवंरूपरूपमपि जीवादन्यत्वसाधकमित्यर्थः । तद्धर्मोपदेशादिति सौत्रधर्मशब्दं- नैवंरूपरूपवत्त्वमपि विवक्षितमिति भावः। सूत्रार्थमुपसंहरति ( अत इति )॥

हेत्वन्तरमाह–भेदव्यपदेशाच्चान्यः॥ अयमन्यशब्दः पूर्वापरसूत्रेष्वप्यन्वेतव्यः। आदित्याख्यजीवाद्भेदव्यपदेशे श्रुतिमाह ( य आदित्य इति ) आदित्यपर्यायोपादानं प्रकरणस्थजीवान्तरविषयपर्यायाणां प्रदर्शनार्थम् । आदित्यादीत्यत्रादिशब्दोपात्तदेवताविशेषेभ्यो भेदव्यपदेशश्चात एव दर्शितो भवति, तत्र हि प्रकरणे 'यस्सर्वेषु देवेषु तिष्ठ'न्निति पर्याये सर्वदेवताभ्यो भेदो व्यपदिश्यते। आसां देवतानां मुक्तावस्थायामपि ताभ्यः परमात्मनो भेदज्ञापनार्थं निष्कृष्टात्मनः परमात्मनियाम्यत्वादिप्रतिपादकं पर्यायमुदाहरति ( य आत्मनीति ) कारणावस्थायामपि

ध भावप्रकाशिका ध

अकर्मोपाधिकमित्यर्थः ॥ .... .... .... .... ....

१ महाभारते-उद्योगपर्वणि ॥ २ बृ. ५-७-९ ॥ ३ बृ. ५-७-२२ ॥

न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" 'योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरं यमक्षरं न वेद यो मृत्युमन्तरे सञ्चरन् यस्य मृत्युश्शरीरं यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इतिचास्यापहतपाप्मनः परमात्मनः सर्वान् जीवान् शरीरत्वेन व्यपदिश्य तेषामन्त-

* श्रुतप्रकाशिका *

भेदज्ञापनार्थमाह ( यस्याक्षरमिति ) अक्षरम्—अचित्समष्टिसंसृष्टा पुरुषसमष्टिः । मृत्युः—चित्समष्टिसंसृष्टाचित्समष्टिः ॥ देवकामानां चेष्ट इतिवाक्यमस्य सूत्रस्य विषयतयोपात्तं यादवप्रकाशैः । तन्नात्यन्तोचितम् ; इन्द्रादीनामपि स्वावरदेवकामनिष्पादकत्वसम्भवेन क्षेत्रज्ञवैलक्षण्यसाधकत्वाभावाद्देवकामेशनस्य, आदित्यपुरस्कारेणोत्थिते पूर्वपक्षे तमादित्यं कण्ठोक्त्या निर्दिश्य तदितरदेवतानां तस्य च नियाम्यत्वं व्याप्यत्वमज्ञत्वं चोक्त्वा नियन्तृत्वव्याप्तित्वसार्वज्ञ्यैः परमात्मनस्तेभ्यः स्फुटतरभेदव्यपदेशपरप्रकरणस्य विषयतयोदाहरणं त्वन्तोचितम् ॥ शरीरसम्बन्धावच्छिन्नैश्वर्यश्रवणसिद्धकर्मवश्यत्वाल्लोककामेशत्वादीनां सुकृतप्रकर्षेणोपपत्तेः पाप्मोदयश्रवणस्य पापसम्बन्धनिवर्तकत्वेन पुण्यसम्बन्धनिवर्तकत्वाभावाच्च पूर्वः पक्षः । मोक्षप्रकरणेषूभयकर्मविषयपाप्मशब्दप्रयोगश्रुत्यन्तरैकार्थ्यप्रवृत्तिनिमित्तयोगैः पाप्मशब्दस्योभयपरत्वेन कर्मवश्यत्वनिषेधात्तत्पूर्वकगुणान्तराणामपि जीवेष्वसम्भवात् हेतुतः फलतो द्रव्यतश्च विलक्षणविग्रहयोगस्य जीववैलक्षण्यसाधकत्वादादित्यादि-

* भावप्रकाशिका *

( शरीरसम्बन्धावच्छिन्नैश्वर्येति ) शरीरसम्बन्धावच्छिन्नैश्वर्यस्य च श्रवणेन कर्मवश्यत्वस्य सिद्धत्वादित्यर्थः । ( श्रुत्यन्तरैकार्थ्येति ) 'स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान्' 'न कर्मणा वर्द्धते नो कनीयान्' इत्यादिश्रुत्यन्तरैकार्थ्यं विवक्षितम् । ( हेतुतः फलतो द्रव्यतश्चेति ) भगवतो हि विग्रहस्वीकारे भगवदिच्छैव हेतुः, उपासकानुग्रहः फलम्, शुद्धसत्त्वं

१ सुबाल. ७-ख ॥

रात्मत्वेनैनं व्यपदिशति, अतस्सर्वेभ्यो हिरण्यगर्भादि- जीवेभ्यो ऽन्य एव परमात्मेति सिद्धम् ॥ २२ ॥

॥ इत्यन्तरधिकरणम् ॥

"यतो वा इमानि भूतानि जायन्ते' इति जगत्कारणं ब्रह्मेत्यवगम्यते। किं तज्जगत्कारणमित्यपेक्षायां 'सदेव सोम्येदमग्र आसीत्' तत्तेजोऽसृजत'[1]'आत्मा वा इदमेक एवाग्र आसीत्' [2]'स इमाँल्लोकानसृजत' 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति साधारणैः शब्दैर्जगत्कारणे निर्दिष्टे ईक्षणविशेषानन्दविशेषरूप- विशेषार्थस्वभावात्प्रधानक्षेत्रज्ञादिव्यतिरिक्तं ब्रह्मेत्यु-

* श्रुतप्रकाशिका *

जीवेभ्यो भेदव्यपदेशाच्च परमात्मेति राद्धान्तः। अधिकरणार्थमुपसंहरति (अत इति)॥

॥ इत्यन्तरधिकरणम् ॥

अथ चिदचिद्विलक्षणस्य वस्तुनो वेदान्तवेद्यत्वनिर्णयात्तदुत्तराधिकरणमना- रम्भणीयमिति शङ्कां परिहरन् पेटिकाभेदतत्सङ्गतिमाह ( यतो वा इमानीत्या- दिना ) सद्ब्रह्मात्मादिसाधारणशब्दानां जगत्कारणवाचिनामर्थस्वभावादभिमत- विशेषपर्यवसानं कृतम्, वस्त्वन्तरविशेषासाधारणत्वेन व्युत्पन्नैरपि शब्दैर्जगत्कारणे निर्दिष्टे तेषामप्यर्थस्वभावादभिमतविशेषपर्यवसानं क्रियत इत्यर्थः। पूर्वं संशयव्यु- दासः कृतः, अथ विपर्ययव्युदासः क्रियत इति यावत्। लिङ्गाच्छ्रुतेर्बलीयस्त्वात् कारणविशेषे आकाशादिपदश्रुत्या निश्चिते सति लिङ्गात्तद्विरुद्धविशेषनिश्चयो-

७ भावप्रकाशिका ७

द्रव्यमिति भावः॥ ॥ इत्यन्तरधिकरणम् ॥

(पेटिकाभेदेति) साधारणासाधारणशब्दविषयतया पेटिकाभेद इत्यभिप्रायः॥

1 ऐतरेय. १-१-१ | 1 ऐतरेय १-१-२ ॥

क्रम्। इदानीमाकाशादिविशेषशब्दैर्निर्दिश्य जगत्कारणत्वजगदैश्वर्यादिवादेऽप्याकाशादिशब्दाभिधेयतया प्रसिद्धचिदचिद्वस्तुनोऽर्थान्तरमुक्तलक्षणमेव ब्रह्मेति प्रतिपाद्यते-आकाशस्तल्लिङ्गादित्यादिना पादशेषेण—

आकाशस्तल्लिङ्गात् ॥ २३ ॥

८ अधिकरणम्

इदमाम्नायते छान्दोग्ये [१]"अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो भूतेभ्यो ज्यायानाकाशः परायणम्" इति। तत्र सन्देहः; किं प्रसि-

* श्रुतप्रकाशिका *

ऽनुपपन्न इति पूर्वपक्षोत्थानादधिकरणस्यारम्भणीयत्वं सिद्धमिति भावः। (पादशेषेणेति) पादशेषोऽधिकरणचतुष्टयात्मकः, तत्र प्रथमे वस्त्वन्तरप्रसिद्धशब्दविशेषेण प्रत्यवस्थानम्, अर्थविरोधेन परिहारः। अर्थाविरोधशङ्कया प्रत्यवस्थानं द्वितीये, विरोधोद्घाटनमुखेन परिहारः। विरोधिलिङ्गाभावेनाल्पानुकूलालिङ्गसद्भावेन च प्रत्यवस्थानं तृतीये, स्ववाक्ये विरोधिलिङ्गाभावेऽप्युपक्रमवाक्यस्थविरोधिलिङ्गप्रदर्शनेन सिद्धान्तः। उपक्रम एवानुकूललिङ्गभूयस्त्वेन प्रत्यवस्थानं चतुर्थे तन्निरासेन सिद्धान्त इति भिदा, अनेनाधिकरणसङ्गतिश्च फलिता॥

आकाशस्तल्लिङ्गात्। सिद्धान्ते कारणत्वानुवादस्य वक्ष्यमाणत्वाद्विधेयं किमित्यपेक्षायां विधेयार्थज्ञापनार्थम् 'अस्य लोकस्य का गति' रित्यादिकमुपात्तम्। गतिः—प्राप्यम्। संशयमाह (तत्रेति) भूताकाशे प्रसिद्ध्यतिशयपरायणत्वाद्यनुपपत्तिभ्यां

* भावप्रकाशिका *

(गतिरित्यादिकमुपात्तमिति) ततश्च गतित्वमेव विधेयमिति भावः। (गतिः-प्राप्यमिति) 'आकाशः परायणम्' इत्युत्तरत्र वक्ष्यमाणत्वादितिभावः।

१ छां १-९-१ ॥

द्धाकाश एवात्राकाशशब्देनाभिधीयते, उतोक्तलक्षण-मेव ब्रह्म? इति । किं प्राप्तम् ? प्रसिद्धाकाश इति ।

* श्रुतप्रकाशिका *

संशयः। भूताकाशे परमात्मनि च आकाशशब्दप्रयोगात्संशय इत्युक्तं परैः। तदयुक्तम् ; अश्रुतवेदान्तस्य 'सर्वाणि ह वा इमानि भूतानि' इति वाक्यस्थाकाश-शब्दवत् " अकाशो ह वै नामरूपयोर्निर्वहिता' इत्यादिवाक्यस्थाकाशशब्दस्य च परमात्मविषयत्वाप्रतिपत्तेः श्रुतवेदान्तस्य संशयाभावाच्च । चिदचिद्विलक्षणकारणा-स्तित्वायोगव्यवच्छेदो हि प्रथमपादसाध्यः, न त्वन्ययोगव्यवच्छेदः। स त्रिपादी-साध्य एव। इतः पूर्वैरधिकरणैरेवायोगव्यवच्छेदस्सिद्ध इति चेन्न, 'सदेव' 'ब्रह्म-विदाप्नोति' 'आत्मन आकाशस्सम्भूतः" इत्यादिषु कारणविषयाणां सद्ब्रह्मादि-शब्दानां साधारणानामाकाशप्राणेन्द्रादिविशेषपर्यवसाने सति चिदचिद्विलक्षण-कारणास्तित्वासिद्धेराकाशादिपदानामीक्षणानन्दविशेषयोगानुगुणतया नेयत्वे सत्येव तत्सिद्धेश्च, अतो यथोक्तहेतुनिबन्धनस्संशयः ॥ जगत्कारणवादिवाक्यप्रतिपाद्यं वस्तु किमाकाशः, उत परमात्मा ? इति विचारः। तदर्थम् " अस्य लोकस्य का गतिराकाशः" इत्यत्राकाशः किं प्रसिद्धः, उत परः ?। तदर्थं किमत्राकाश-शब्दो रूढ्या वर्त्तते उतावयवशक्त्या ? । तदर्थं ज्यायस्त्वादिगुणाः किं मुख्यतया नेयाः, उत न ?। तदर्थम् 'आत्मन आकाशस्सम्भूतः" इत्यात्मशब्दः किं कारणाकाशपरः, उत परमात्मपरः ?। तदर्थं किमयमात्मशब्दः स्वरूपपरः, उत देहप्रतिसम्बन्धिपरः ? इति विचारः। यदा स्वरूपपरः तदा 'आत्मन आकाशः' इत्यत्रात्मशब्दस्य कारणाकाशपरतया ज्यायस्त्वादिगुणानामपि कथञ्चिन्नेयत्वेन

ध भावप्रकाशिका ध

( परमात्मविषयत्वासम्प्रतिपत्तेरिति ) यद्यप्येकोनसहस्राधिकरणन्यायेन परमात्म-विषयत्वसम्प्रतिपत्तिस्सुवचा । किञ्च 'यदेष आकाश आनन्दो न स्यात्' इत्यादौ पूर्वाधिकरण एव प्रतिपादितपरब्रह्मप्रतिपादकानन्दवल्लीगताकाशशब्दस्य ब्रह्मणि प्रयोगस्सिद्धः, तथापि क्वचिद्बाधकवशादमुख्यवृत्त्या प्रयोगदर्शन-मात्रस्य संशयहेतुतयोपन्यासो न युक्त इत्यत्र तात्पर्यात् । ( कथञ्चिन्नेयत्वेनेति ) इदमुपलक्षणम् । आकाशस्य जगत्कारणत्वज्यायस्त्वादिकं मुख्यमपि सम्भवती-

कुतः ? शब्दैकसमधिगम्ये वस्तुनि य एवार्थो व्युत्पत्तिसिद्धः शब्देन प्रतीयते स एव ग्रहीतव्यः। अतः प्रसिद्धाकाश एव चराचरभूतजातस्य कृत्स्नस्य

* श्रुतप्रकाशिका *

रूढिशक्तेः स्थितत्वाद्विषयवाक्यस्थाकाशशब्दः प्रसिद्धाकाशपर इति वेदान्तवेद्यं वस्तु प्रसिद्धाकाश इति पूर्वपक्षे फलफलिभावः। यदा आत्मशब्दः शरीरप्रतिसम्बन्धिपरः तदा 'आत्मन आकाशः' इत्यत्रात्मशब्दस्य परमात्मपरतया ज्यायस्त्वादिगुणानामपि मुख्यत्वाद्यौगिकवृत्त्या विषयवाक्यस्थाकाशशब्दः परात्मपर इति कारणवाक्यप्रतिपाद्यः परमात्मेति राद्धान्ते फलफलिभावः। पूर्वपक्षसमर्थनौपयिकं प्रयोजकं शिक्षयति (शब्देति) प्रमाणान्तरसिद्धार्थानुवादे सति हि तदनुरोधाय क्लिष्टगत्याऽर्थस्य वर्णनीयत्वं स्यात्। 'आदित्यो यूपः' इत्यादिषु यूपादेः प्रमाणान्तरगोचरतया हि तदनुरोधादैक्यहानम्, मानान्तरागोचरे वस्तुनि प्रतिपाद्ये न तथा व्युत्पत्तिसिद्धार्थस्त्याज्यः, अनुरोद्धव्यान्तराभावेन शब्दस्वातन्त्र्यस्याकुण्ठितत्वादिति भावः। ततः किमित्यत्राह (अत इति) (प्रसिद्धाकाश एवेति) अर्थान्तरपरत्वे हि यौगिकवृत्तिराश्रयणीया, न तद्युक्तम्; रूढिर्हि योगात्प्रबलेति भावः। अर्थविरोधाद्व्युत्पत्तिसि-

७ भावप्रकाशिका ७

त्यपि पूर्वपक्षतात्पर्यं द्रष्टव्यम्। (रूढिशक्तेः स्थितत्वादिति) ननु रूढिशक्तेरेव 'आत्मन आकाशस्सम्भूतः' इत्यत्रात्मशब्दस्य स्वरूपपरत्वसम्पादकतया तस्या एव प्रथमोपपादककोटौ निवेशनीयतया तस्याः कथमुपपाद्यकोटौ निवेश इति चेत्. सत्यम्; रूढिशक्तिरेव मूलयुक्तिः, अथापि तस्या निरपवादत्वे 'आत्मन आकाशः' इत्यत्रात्मशब्दस्य स्वरूपपरत्वं ज्यायस्त्वादिगुणानां कथञ्चिन्नेयत्वं चोपजीव्यम्, अत एव स्थितत्वादित्युक्तम्। निरपवादतया स्थितत्वादिति हि तदर्थः। न चैवं रूढिशक्तौ स्थितायां ज्यायस्त्वादीनामन्यथानयनम्, तदन्यथानयने च रूढिशक्तिस्थितिरित्यन्योन्याश्रय इति शङ्क्यम्। आत्मशब्दस्य ज्यायस्त्वादीनां सम्भवदन्यथासिद्धिकतया रूढिशक्तेः स्थितत्वादाकाशशब्दः प्रसिद्धाकाशपर इति फलफलिभावकथने विरोधाभावात्। (तदनुरोधादैक्यहानमिति) धर्मिग्राहकप्रमाणविरोधादिति भावः। ननु विशेषप्रतीतेराकाश इति निश्चीयत इति

कारणम्, अतस्तस्मादनतिरिक्तं ब्रह्म। नन्वीक्षापूर्वकसृष्ट्यादिभिरचेतनाज्जीवाच्च व्यतिरिक्तं ब्रह्मेत्युक्तम्। सत्यमुक्तम्, अयुक्तं तु तत्। तथा हि; [1]"यतो वा इमानि भूतानि जायन्ते.... तद्ब्रह्म' इत्युक्ते कुत इमानि भूतानि जायन्त इत्यादिविशेषापेक्षायां [2]"सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिना विशेषप्रतीतेर्जगज्जन्मादिकारणमाकाश एवेति निश्चिते सति [3]'सदेव सोम्येदमग्र आसीत्' इत्यादिष्वपि सदादिशब्दास्साधारणाकारास्तमेव विशेषमाकाशम-

* श्रुतप्रकाशिका *

द्धार्थस्त्यज्यत इति चोदयति (नन्विति) परिहरति (सत्यमिति) इत्यादीत्यादिशब्देन किं प्रयन्ति? केन जीवन्ति? इत्यपेक्षा विवक्षिता। विशेषप्रतीतेरिति एतद्वाक्यविशेषेण वस्तुविशेषप्रतीतिर्हेतुतयोक्ता। (जगज्जन्मादिकारणमाकाश एवेति निश्चिते इति) सद्विद्यादिप्रतिपन्नकारणानुवादिलक्षणवाक्योक्तं ब्रह्म आकाश एवेति निश्चित इत्यर्थः। यद्वा आपातप्रतीतिः पूर्वमुक्ता, निश्चित इति युक्तितो निर्णय उक्तः। ननु 'यतो वा इमानी' त्यादिवाक्यप्रकरण एव 'आनन्दो ब्रह्मे'त्यानन्दशब्देन विशेषनिर्णयोऽस्ति। नैवम्; 'यदेष आकाश आनन्दो न स्या' दित्याकाशशब्दसामानाधिकरण्यादानन्दशब्दः किमाकाशपरः? आकाशशब्दः किमानन्दपरः? इति संशयस्स्यात्, तस्मादानन्दशब्दसामानाधिकरण्यरहितात् 'आकाशादेव समुत्पद्यन्ते' इतिवाक्यादेव विशेषनिर्णय इत्यभिप्रायेणाकाश एवेति निश्चित इत्युक्तम्। साधारणाकाराः—साधारणरूपाः। "छागो वा मन्त्रवर्णा'दितिन्यायोऽभिप्रेतः, आत्म-

ए भावप्रकाशिका ए

भाष्यमनुपपन्नम्, विशेषप्रतीतिनिश्चययोरभेदेन हेतुहेतुमद्भावाभावादित्याशङ्क्याह (एतद्वाक्यविशेषेणेति) (आकाश एवेति निश्चित इत्यर्थ इति) सर्वकारण-

१ तै. आन. १ ॥ २ छां. १-९-१ ॥ ३ छां ६-२-१

भिदधति । 'आत्मा वा इदमेक एवाग्र आसीत्'इत्यादिष्वात्मशब्दोऽपि तत्रैव वर्त्तते । तस्यापि हि चेतनैकान्तत्वं न सम्भवति ; यथा 'मृदात्मको घटः' इति । आप्नोतीत्यात्मेति व्युत्पत्त्या सुतरामाकाशेऽप्यात्मशब्दो वर्तते । अत एवमाकाश एव कारणं ब्रह्मेति निश्चिते सतीक्षणादयस्तदनुगुणा गौणा वर्णनीयाः । यदि हि साधारणशब्दैरेव सदादिभिः कारणमभ्यधायिष्यत; ईक्षणाद्यर्थानुरोधेन चेतनविशेष एव कारणमिति निरचेष्यत । आकाशशब्देन तु विशेष एव निश्चित

---

* श्रुतप्रकाशिका *

शब्देन विशेषनिर्णयशङ्कां निरस्यति ( आत्मा वा इत्यादिना ) तत्रैव—आकाशे । आकाशशब्दापेक्षया आत्मशब्दोऽपि साधारण इत्यर्थः । आत्मशब्दस्यावयवशक्त्याप्याकाशपरत्वं दर्शयति ( आप्नोतीति ) व्यवस्थितरूढिशक्तेराकाशशब्दस्य रूढिभङ्गादपि नानार्थसाधारणरूढिशक्तेरात्मशब्दस्य रूढिभङ्ग उचित इति भावः । ईक्षणादीनां गौणत्वेन निर्वाह्यत्वमाह ( अत एवमिति ) श्रुतिप्राबल्याल्लिङ्गं तदनुगुणं नेयमित्यर्थः । ईक्षणादिमुख्यत्वानुरोधी सदादिशब्दैरेव विशेषनिर्णय इति शङ्कायां सदादिशब्देभ्यः आकाशादिपदश्रुतेः प्राबल्यमुपपादयति (यदि हीति) ( साधारणशब्दैरेवेति ) न तु विशेषशब्दान्तरे सतीति भावः । यदीत्यभिप्रेतं विपर्ययेण विशेषनिश्चायकसद्भावं दर्शयति ( आकाशशब्देन त्विति ) रूढिर्हि योगमपहरतीतिन्यायाद्विलम्बितप्रतिपत्त्याद्यौगिकादपि शीघ्रधीविषये रूढ्यर्थ एवाकाशशब्दस्य परिग्राह्ये , सदादिशब्दानामीक्षणादिलिङ्गपरामर्शसापेक्षत्वेन विलम्बितप्रवृत्तितया अतिशीघ्रप्रवृत्तित्वात्प्रबलतराकाशपदश्रुत्याऽपेक्षिते विशेषे लब्धे अर्थस्वभावनिर्णेतव्यविशेषाभावादीक्षणादयस्तदनुरोधेन वर्णनीयाः, अतो

ए भावप्रकाशिका ए

वाक्योपसंहारेणेति शेषः । ( नानार्थसाधारणरूढिशक्तेरिति ) यत्र नानारूढिसमावेशस्तत्र रूढीनां परस्परकलहे योग्यस्य लब्धात्मकत्वादिति भावः । इदञ्च

इति नार्थस्वाभाव्यान्निर्णेतव्यमस्ति। ननु 'आत्मन आकाशस्सम्भूतः" इत्याकाशस्यापि कार्य्यत्वं प्रतीयते। सत्यम्, सर्वेषामेवाकाशवाय्वादीनां सूक्ष्मावस्था स्थूलावस्था चेत्यवस्थाद्वयमस्ति। तत्राकाशस्य सूक्ष्मावस्था कारणम्। स्थूलावस्था तु कार्यम्। 'आत्मन आकाशस्सम्भूतः' इति स्वस्मादेव सूक्ष्मरूपात्स्वयं स्थूलरूपः सम्भूत इत्यर्थः। 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इति सर्वस्य जगतः आकाशादेव प्रभवाप्ययादिश्रवणात्तदेव हि कारणं ब्रह्मेति निश्चितम्। यत एवं प्रसिद्धाकाशादनतिरिक्तं ब्रह्म, अत एव च 'यदेष आकाश आनन्दो न स्यात्' 'आकाशो ह वै नामरूपयोर्निर्वहिता' इत्येवमादिनिर्देशोऽप्युपपन्नतरः, अतः प्रसिद्धाकाशादनतिरिक्तं ब्रह्मेति ॥

* श्रुतप्रकाशिका *

न चेतनविशेषकारणत्वसिद्धिरित्यर्थः। कार्यतयाऽवगतस्य परमकारणत्वानुपपत्तिमुखेन चोदयति ( नन्विति ) परिहरति ( सत्यमिति ) कार्यत्वेऽभिमतिः, तस्य कारणत्वभञ्जकत्वेऽनङ्गीकारः। वाय्वाद्युपादानं निदर्शनतया. सूक्ष्मावस्थाशब्देन तन्मात्रावस्था कथ्यते। 'आत्मन आकाश' इतिवाक्ये आत्मशब्दः स्ववाचीत्यर्थः। कुत इत्थमस्वारस्येनार्थो वर्ण्यत इत्यत्राह ( सर्वाणीति ) प्रभवाप्ययादीत्यादिशब्देनावकाशप्रदानेन स्थितिहेतुत्वमुच्यते। परायणमिति ह्यत्रोक्तम्। नामरूपयोर्निर्वहितेत्येवमादीत्यादिशब्देन "कं ब्रह्म खं ब्रह्म 'प्राणं चास्मै तदाकाशं चोचुः' 'परमे व्योमन् प्रतिष्ठिता" इति वाक्यान्यभिप्रेतानि। पूर्वपक्षमुपसंहरति ( अत इति )....

ɣ भावप्रकाशिका ɣ

जगद्वाचित्वादित्यधिकरणे स्पष्टयिष्यते॥ इति पूर्वः पक्षः ॥ .... ....

—:( सिद्धान्तः ):—

एवं प्राप्ते ब्रूमः— आकाशस्तल्लिङ्गात् । आकाशशब्दाभिधेयः प्रसिद्धाकाशादचेतनादर्थान्तरभूतो यथोक्तलक्षणः परमात्मैव । कुतः ? तल्लिङ्गात् । निखिलजग-

* श्रुतप्रकाशिका *

राद्धान्तमारभते । ( एवमिति ) पूर्वाधिकरण इव नात्र तद्धर्मोपदेशादित्युक्तम्, अपि तु तल्लिङ्गादित्युक्तम्, वाक्यान्तरप्रसिद्धार्थस्यानूदितस्य हेतुतया विवक्षितत्वात् । लिङ्गिसम्बन्धित्वेन प्रमाणान्तरोपलब्धं हि लिङ्गं भवति । लिङ्गं च किमित्यत्राह ( निखिलजगदिति ) 'सर्वाणि ह वा इमानि भूतानि' इत्यस्मिन् विषयवाक्ये सर्वशब्दस्यासङ्कोचमभिप्रेत्य निखिलेत्युक्तम् । भूतशब्दस्य वाय्वादिचतुष्टयमात्रपरत्वव्युदासाय जगच्छब्दः, महच्छब्दपञ्चशब्दपृथिव्यादिशब्दसमभिव्याहाराभावे भूतशब्दस्याचित्संसृष्टचेतनपरत्वं स्वतःप्राप्तम् . 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति " न हिंस्यात्सर्वा भूतानि" "भूतानां प्राणिनः श्रेष्ठाः" इत्यादिप्रयोगस्वारस्यात्, अतस्सर्वभूतकारणत्वोक्त्या चिदचिदात्मकसमस्तप्रपञ्चकारणत्वमुक्तं भवतीत्यभिप्रायेण निखिल-

‹ भावप्रकाशिका ›

( अनूदितस्य हेतुतया विवक्षितत्वादिति ) 'स एष सर्वेभ्यः पाप्मभ्यः उदितः' इति पूर्वाधिकरणविषयवाक्ये सर्वपाप्मोदितत्वस्य मानान्तराप्राप्तत्वेनोपदेशत्वमेव युज्यते, न तु लिङ्गत्वम् . मानान्तरप्राप्तसाध्यसम्बन्धत्वाभावात्, न च धर्मोपदेशादितिहेतुत्वोपन्यासबलादेव मानान्तराप्रसिद्धस्यापि व्याप्तिराक्षेप्तुं शक्या । यथा 'चतुर्गृहीतान्याज्यानि भवन्ति न ह्यत्रानुयाजा इज्यन्ते' इत्यत्रानुयाजाभावस्य चतुर्गृहीताभावव्याप्तेः पूर्वाप्रसिद्धत्वेपि हि शब्दश्रुतिसमर्पितहेतुत्वबलात् व्याप्तिपरिकल्पनं दृष्टमिति वाच्यम्, श्रुतौ तथा सम्भवेपि न्यायनिबन्धनात्मकेऽस्मिन् शास्त्रे लिङ्गिसम्बन्धित्वेन प्रमाणान्तरोपलब्धमेव लिङ्गतयोपन्यासार्हमिति भावः । वस्तुतस्तु 'अपहतपाप्मा दिव्यो देव एको नारायणः' इति अपहतपाप्मत्वस्यापि वाक्यान्तरे ब्रह्मलिङ्गत्वेनावगमात् अन्तस्तल्लिङ्गोपदेशात् इति सूत्रणेपि न दोषः । तथापि ' स्थितस्य गतिश्चिन्तनीया ' इति तथोक्तमिति

देककारणत्वं सर्वस्माज्ज्यायस्त्वं परायणत्वमित्यादीनि परमात्मलिङ्गान्युपलभ्यन्ते । निखिलकारणत्वं ह्यचिद्वस्तुनः प्रसिद्धाकाशशब्दाभिधेयस्य नोपपद्यते, चेतनवस्तुनस्तत्कार्य्यत्वासम्भवात् । परायणत्वं च चेतनानां परमप्राप्यत्वम् । तच्चाचेतनस्य हेयस्य सकलपुरुषार्थ-

* श्रुतप्रकाशिका *

जगदित्युक्तम्, तत्र निमित्तान्तराश्रवणाद्वाक्यान्तरैकार्थ्याच्च निमित्तोपादानादिरूप-सर्वविधकारणत्वाभिप्रायेणैककारणत्वमित्युक्तम् । आकाशस्य तल्लिङ्गा-नुपपत्तिमाह ( निखिलकारणत्वमिति ) अनेनैककारणत्वानुपपत्तिश्चाभिप्रेता, न ह्याकाशो निमित्तकारणं भवितुमर्हति । हेयत्वात्पुरुषार्थविरोधित्वाच्च प्राप्यत्वं च न सम्भवतीत्याह ( परायणत्वं चेति ) अचेतनस्य–अचेतनत्वेन स्वरूपानन्त-र्भूतत्वाद्धेयत्वमित्यर्थः । सकलपुरुषार्थविरोधिनः–सकलानां पुरुषाणां साक्षात्पुरु-षार्थो मोक्षः, बन्धहेतुतया तस्य विरोधिन इत्यर्थः । यद्वा मोक्षविरोधितया हेयस्य, शब्दादिनिषिद्धविषयप्रावण्यजननाद्धर्मादिसकलपुरुषार्थविरोधिनः । सर्व-विधसुखस्य मोक्षान्तर्भावात्सकलपुरुषार्थरूपो मोक्षः, तद्विरोधिन इति वार्थः । यद्वा

ꣳ भावप्रकाशिका ꣳ

द्रष्टव्यम् । ( निमित्तान्तराश्रवणादिति ) इदमुपलक्षणम् । 'आकाशादेव समु-त्पद्यन्ते' इत्यवधारणश्रवणादित्यपि द्रष्टव्यम् ( वाक्यान्तरैकार्थ्याच्चेति ) 'ब्रह्म वनं ब्रह्म सवृक्ष आसीत्' 'ब्रह्माध्यतिष्ठद्भुवनानि धारयन्' इत्यादिनिमित्तोपादानैक्य-प्रतिपादकवाक्यान्तरैकार्थ्यादिति भावः । ( स्वरूपबहिर्भूतत्वादिति ) आनन्द-स्वरूपबहिर्भूतत्वादित्यर्थः । स्वयमानन्दत्वादितियावत् । सकलपुरुषार्थपदं साक्षा-त्पदाध्याहारेण षष्ठीतत्पुरुषतया व्याचष्टे ( सकलानां पुरुषाणामिति ) निषादस्थ-पत्यधिकरणन्यायेन कर्मधारयस्याभ्यर्हितत्वमभिप्रेत्याह ( यस्येति ) अनेनैव प्रति-पिपादयिषितमोक्षविरोधित्वस्य सिद्धत्वात् , सकलपुरुषार्थविरोधिन इत्येतत्तदितर-पुरुषार्थत्रयविरोधित्वपरतया व्याचष्टे ( यद्वा मोक्षेति ) निषिद्धविषयप्रावण्य-जननेनार्थकामरूपपुरुषार्थविरोधित्वाभावादन्यथा व्याचष्टे ( सर्वविधसुखस्य मोक्षा-

विरोधिनो न सम्भवति । सर्वस्माज्ज्यायस्त्वं च निरुपाधिकं सर्वैः कल्याणगुणैः सर्वेभ्यो निरतिशयोत्कर्षः। तदप्यचितो नोपपद्यते ॥ यदुक्तं जगत्कारणविशेषाकाङ्क्षायामाकाशशब्देन विशेषसमर्पणादन्यत्सर्वं तदनुरूपमेव वर्णनीयमिति। तदयुक्तम्; " सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इति प्रसिद्धवन्निर्देशात् । प्रसिद्धवन्निर्देशो हि प्रमाणान्तरप्राप्तिमपेक्षते । प्रमाणान्तराणि च " सदेव सोम्येदमग्र आसीत्" इत्येवमादीन्येव वाक्यानि । तानि च यथोदितप्रकारेणैव ब्रह्म प्रतिपादयन्तीति तत्प्रतिपादितं ब्रह्म आकाशशब्देन प्रसिद्धवन्निर्दिश्यते । सम्भवति च परस्य ब्रह्मणः प्रकाशकत्वादाकाशशब्दाभि-

* श्रुतप्रकाशिका *

कारणावस्थायामत्यन्तज्ञानसङ्कोचहेतुतया चतुर्णामपि पुरुषार्थानां विरोधिन इत्यर्थः । ज्यायस्त्वानुपपत्तिमाह ( सर्वस्मादिति ) अत्र पूर्वपक्षयुक्तेः कः परिहार उक्तो भवतीत्यपेक्षायां सूत्राभिप्रेतार्थं वक्ष्यन् परोक्तमनुवदति ( यदुक्तमिति ) परिहरति ( तदयुक्तमिति ) प्रथमं पुरोवादसापेक्षेण अनुवादेन पुरोवादिवाक्यविरुद्धार्थप्रतिपादनायोगं वक्तुमनुवादलिङ्गवत्त्वमाह ( सर्वाणीति ) प्रसिद्धवन्निर्देशोऽस्तु, ततः किमित्यत्राह ( प्रसिद्धवदिति ) सापेक्षत्वमस्तु, ततः किमित्यत्राह ( प्रमाणान्तराणि चेति ) कथमाकाशशब्दस्य परब्रह्मवाचित्वमित्यत्राह ( सम्भवति चेति ) प्रकाशकत्वात्—अन्येषां सर्वार्थप्रकाशकत्वात् । आकाशते—

ॐ भावप्रकाशिका ॐ

न्तर्भावादिति ) सकलपुरुषार्थशब्दस्यौपचारिकत्वादन्यथा व्याचष्टे ( यद्वा कारणावस्थायामिति ) प्रकाशकत्वादाकाशते आकाशयतीति त्रीण्यपि पदानि व्याख्येयपदानि. आकाशते आकाशयतीत्येतद्भाष्यं प्रवृत्तिनिमित्तान्तरकथनपरतया

* श्रुतप्रकाशिका *

स्वस्मै प्रकाशते । आकाशयति–अन्यं प्रकाशयति स्वात्मने इत्यर्थः । यद्वा प्रकाशकत्वादिति णिजन्तत्वेन चाणिजन्तत्वेन च व्युत्पत्तिद्वयस्य तन्त्रोक्तिः । तस्यैव विवरणमाकाशत इत्यादि, रूढिप्राबल्यमर्थाविरोधे सतीत्यपशूद्राधिकरणनयोपजीवनेनात्रावयवशक्त्या निर्वाहः कृतः, रूढ्यपरित्यागेनापर्यवसानवृत्त्या आकाशशब्दस्य आकाशशरीरकपरमात्मपरतया निर्वाहोऽप्यभिमतः, वैश्वानराधिकरणे वैश्वानरशब्दस्योभयथाऽपि परमात्मपरत्वस्य वक्ष्यमाणत्वादाकाशादिशब्दानां तच्छरीरकपरमात्मवाचित्वस्यानन्तरपादेऽनुवदिष्यमाणत्वाच्च आकाशशब्दस्याव्याकृतशरीरकपरमात्मपरत्वं तु यादवप्रकाशोक्तं विलम्बद्वयवत्त्वादुपेक्षितम् । न केवलं प्रसिद्धवन्निर्देशमात्रमनुवादकत्वसाधकम्, 'यदाग्नेयोष्टाकपालः, उपरि हि देवेभ्यो धारयति' इत्यादावदर्शनादिति शङ्कायामयोग्यत्वे निश्चिते सति प्रसिद्धवन्निर्देशोऽनुवादत्वसाधक-

* भावप्रकाशिका *

व्याख्याय प्रकाशकत्वादितिभाष्यविवरणतया व्याचष्टे ( यद्वा प्रकाशकत्वादिति णिजन्तत्वेनेति ) परस्मै प्रकाशकत्वं वा, स्वस्मै प्रकाशमानत्वं वा, स्वस्मै इतरप्रकाशकत्वं वा अन्यतममाकाशशब्दप्रतिपाद्यमिति प्रथमपक्षः । द्वितीये तु 'ण्यन्तादण्यन्ताच्चाङ्पूर्वात् काशतेस्सर्वधातुभ्योऽज्वक्तव्यः' इत्युत्सृष्टेऽच्प्रत्यये तन्त्रावृत्त्येकशेषाणामन्यतमेन रूपसिद्धिरितिभावः । ( रूढ्यपरित्यागेनेति ) यद्यपि " परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया। तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥ " इति जीवमुख्यप्राणलिङ्गादितिसूत्रोक्तन्यायेनानन्यथासिद्धलिङ्गस्थले आकाशादिशब्दस्य तच्छरीरकपरमात्मार्थकत्वाश्रयणेपि अस्मिन् विषयवाक्ये भूताकाशानन्यथासिद्धलिङ्गानुपलम्भेन तदर्थकत्वाश्रयणमन्याय्यम् . किञ्च भूताकाशशरीरकाद्ब्रह्मणस्सकलभूतोत्पत्त्यभावेन 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते' इत्यपि नोपपद्यते. तथापि मार्गान्तरसम्भावनाप्रदर्शनमात्रमिति द्रष्टव्यम् । ( अनुवदिष्यमाणत्वाच्चेति ) सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे आकाशात्मपदव्याख्यानावसरे आकाशस्यात्मभूत इति वा आकाशात्मा स्वयं प्रकाशते अन्यांश्च प्रकाशयतीति वा आकाशात्मेति वक्ष्यमाणत्वादितिभावः । ( विलम्बद्वयवत्त्वादपेक्षितमिति ) आकाशशब्देन तत्कारणाव्याकृतलक्षणायामेको विलम्बः । तेनाव्याकृतशरीरकपरमात्मनो लक्षणा-

धेयत्वम् आकाशते आकाशयति चेति । किञ्च अनेनाकाशशब्देन विशेषसमर्पणक्षमेणापि चेतनांशं प्रत्यसम्भावितकारणभावमचेतनविशेषमभिदधानेन "तदैक्षत बहु स्यां प्रजायेय" "सोऽकामयत । बहु स्यां प्रजायेय" इत्यादिवाक्यशेषावधारितसार्वज्ञ्यसत्यसङ्कल्पत्वादिविशिष्टापूर्वार्थप्रतिपादनसमर्थवाक्यार्थान्यथाक-

* श्रुतप्रकाशिका *

इत्यभिप्रायेणाह ( किञ्चेति ) ( विशेषसमर्पणक्षमेणापीति ) एकपदश्रवणवेलायां विशेषसमर्पणक्षमेणापि, परामर्शदशायामयोग्यतया निश्चितोऽर्थो न प्रतिपादयितुं शक्यत इत्यभिप्रेत्यासम्भावितकारणभावमित्युक्तम् । तदैक्षतेति सद्विद्यावाक्यशेषः । सोऽकामयतेति ब्रह्मविदाप्नोतीत्यनुवाकवाक्यशेषः । ब्रह्मणो योग्या-

छ भावप्रकाशिका छ

यामेको विलम्ब इति विलम्बद्वयवत्त्वमिति भावः । विशेषसमर्पणक्षमेणापीति च्छेदः । नन्वनुवादसारूप्यमात्रम् 'उपरि हि देवेभ्यः' एको ह वै नारायणः' इत्यादिवाक्यसाधारणम्. अतस्तद्रूप्यमप्रयोजकम्. अयोग्यार्थत्वं परमवशिष्यते. तदपि न सम्भवति, अचेतनस्य चेतनमिश्रसकलजगत्कारणत्वासम्भववत् परमात्मनोप्यपरिणामिनश्चेतनस्याचेतनमिश्रचेतनोपादानत्वासम्भवात् 'न विलक्षणत्वा'दितिन्यायेन परिहारस्योभयत्र समत्वाच. श्रुत्येकसमधिगम्ये वस्तुनि यथाश्रुतिप्रतिपत्तव्यत्वात्, सन्मूला इत्यादिना सर्वेषां चेतनाचेतनानां तदाधेयविशेषत्वेन तच्छरीरत्वप्रतिपादनात् ब्रह्मकारणवादे विशेषणद्वारा परिणामवदाकाशकारणत्ववादेपि चेतनाचेतनानां भूताकाशापृथक्सिद्धविशेषणत्वेनेक्षणादीनामपि चेतनरूपविशेषणद्वारा भूताकाशेपि सम्भवात् इतरासम्भावितसकलजगत्कारणत्वानन्याधीनसार्वज्ञ्यादीनां क्वचिदपि चेतनान्तरे अदृष्टचराणां कस्मिंश्चिन्नारायणशब्दिते चेतनविशेषे श्रुतिवशादभ्युपगमवत् भूताकाशेप्यचेतनान्तरादृष्टसकलजगत्कारणत्वाभ्युपगमे बाधकाभावादिति चेन्न ; अचेतनस्य चेतनशरीरत्वसम्भवेनाचेतनद्वारा चेतनस्य परिणामोपपत्त्या उपादानत्वसम्भवेपि चेतनस्याचेतनशरीर-

रणं न प्रमाणपदवीमधिरोहति । एवमपूर्वानन्तविशेषणविशिष्टापूर्वार्थप्रतिपादनसमर्थानेकवाक्यगतिसामान्यं चैकेनानुवादस्वरूपेणान्यथा कर्त्तुं न शक्यते । यत्त्वात्मशब्दश्चेतनैकान्तो न भवति; 'मृदात्मको

* श्रुतप्रकाशिका *

र्थत्वज्ञापनाय सार्वज्ञ्यादिकमुक्तम्। (न प्रमाणपदवीमधिरोहतीति) अयोग्यार्थेनानुवादरूपेण वाक्येन योग्यापूर्वार्थवाक्यानामन्यथाकरणमयुक्तमित्यर्थः। उक्तवैषम्यद्वयानुवादेनानेकवाक्यान्येकेन वाक्येन बाधयितुमशक्यानीत्याह (एवमिति) गतिसामान्यम्—प्रवृत्तिसामान्यम्। 'अस्य लोकस्य का गतिः' इत्युपक्रमवशादन्यपरत्वं स्फुटम्, एवमाकाशकारणपक्षे अन्यपरत्वमेकवाक्यत्वमयोग्यार्थत्वमनुवाद-

ᛌ भावप्रकाशिका ᛌ

त्वासम्भवेन चेतनद्वारा ईक्षणादेरचेतने उपपादयितुमशक्यतया अचेतनस्य 'आकाशादेव समुत्पद्यन्ते' इति प्रतिपादितस्याभिन्ननिमित्तोपादानत्वस्यासम्भवेनायोग्यत्वादिति भावः । (उपक्रमवशादन्यपरत्वं स्फुटमिति) गतिशब्दस्य प्राप्यवचनत्वेनापुरुषार्थस्याचेतनस्य प्राप्यत्वासम्भवेन चेतनपरत्वं स्फुटमिति भावः । केचित्तु स्वर्गादीनामचेतनानां सामादिगतित्वस्य प्रागुपन्यस्ततया गतित्वस्य चेतनैकान्तत्वाभावं मन्यमानाः अस्य लोकस्य का गतिरिति सर्वलोकगतेरेव पृष्टतया सर्वलोकगतित्वरूपलिङ्गस्य प्रक्रमस्थतया आकाशश्रुत्यपेक्षया प्राबल्यमिति भाव इति वदन्ति । ननु अस्य लोकस्य का गतिरिति पृथिवीलोकविषयत्वे प्रतीयमाने कथमस्य सर्वकारणप्रश्नरूपत्वम्? येनोपक्रम एव ब्रह्मपरस्यादिति चेन्न; 'त्रयो होद्गीथे कुशला बभूवुश्शिलकश्शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलास्स्मो हन्तोद्गीथे कथां वदाम' इति दाल्भ्यशालावत्यजैवलिभिरुपक्षिप्तायां कथायां सामगतिपरम्पराविश्रान्तिभूमित्वेन दाल्भ्येनोपक्षिप्तम्। स्वर्गलोकं ज्योतिश्चक्रलग्नत्वेन बम्भ्रम्यमाणतया अप्रतिष्ठितत्वेन 'अप्रतिष्ठितं वै किल ते दाल्भ्य साम' इति दूषयित्वा सामगतिपरम्पराविश्रान्तिभूमित्वेन निश्चलं पृथिवीलोकमुपक्षिप्तवतः 'अन्तवद्वै किल ते

घटः' इत्यादिदर्शनादित्युक्तम् । तत्रोच्यते— यद्यपि चेतनादन्यत्रापि क्वचिदात्मशब्दः प्रयुज्यते; तथापि शरीरप्रतिसम्बन्धिन्यात्मशब्दस्य प्रयोगप्राचुर्यात् 'आत्मा वा इदमेक एवाग्र आसीत्' 'आत्मन आकाशः सम्भूतः' इत्यादिषु शरीरप्रतिसम्बन्धिचेतन एव प्रतीयते । यथा गोशब्दस्यानेकार्थवाचित्वेऽपि प्रयोग-

* श्रुतप्रकाशिका *

रूपत्वम्, स्वपक्षे अनन्यपरत्वं वाक्यबहुत्वं योग्यार्थत्वमपूर्वत्वञ्चेति वैषम्यचतुष्टयमुक्तम्। एवं योग्यार्थश्रुतिमूलं लिङ्गम् अयोग्यार्थश्रुतितः प्रबलमिति सिद्धान्तन्याय उक्तो भवति, यथा गङ्गाशब्दः स्वार्थसमर्पणक्षमो भूतलधर्मतया प्रत्यक्षसिद्धघोषाधिकरणत्वलिङ्गविरोधेनान्वयायोग्यः स्वार्थप्रतिपादनक्षमत्वाभावात् श्रुत्याभासः, एवं योग्यार्थश्रुतिमूललिङ्गापेक्षया आकाशश्रुतिः श्रुत्याभास इति । आत्मशब्दानैकान्त्यं यत्त्वित्यादिनाऽनूद्य परिहरति (तत्रेति)

७ भावप्रकाशिका ७

शालावत्य साम' इति अन्तवत्या पृथिव्यास्सामगतिविश्रान्तिभूमित्वे सम्नोऽन्तवत्त्वं स्यादिति जैवलिना दूषितस्वपक्षतया शिष्यभावं प्राप्तस्य शालावत्यस्य जैवलिं प्रति प्रश्नोऽयम्. अत्र हि प्रष्टुश्शालावत्यस्यायमाशयः,- मदुपक्षिप्तं पृथिवीलोकमन्तवत्त्वेन दूषितवता जैवलिनाऽनन्तं वस्तु प्रतिपिपादयिषितम्. तस्य चानन्त्यं सकलजगत्कारणत्व एव सिध्यति. अतस्सर्वजगत्कारणमेव प्रष्टव्यम् इति। ततश्च तदभिप्रायेणैवास्य लोकस्य का गतिरिति पप्रच्छेति वक्तुमुचितम्. ततश्चोपक्रम एव सर्वकारणत्वस्य ब्रह्मलिङ्गस्य प्रतिपादनात् सर्वविषयत्वं सिद्धम्। न च पूर्वतन्त्रे लिङ्गाच्छ्रुतिबाधः क्वापि नोक्त इति वाच्यम्; 'हस्तेनावद्यति स्रुवेणावद्यति स्वधितिनावद्यति' इत्यादौ हस्तस्रुवस्वधितीनामवदानसामान्यसाधनत्वश्रवणेपि हस्तादिसामर्थ्यरूपानन्यथासिद्धलिङ्गबलेन सङ्कोचसहिष्णूनामवद्यतिश्रुतीनां पुरोडाशादिकठिनद्रव्याज्यादिद्रवद्रव्यमांसावदानविषयतया सङ्कोचरूपबाधस्याङ्गीकृतत्वात् 'कृष्णलं श्रपयेत्' इत्यत्र कृष्णलेषु विक्लेदफलकव्यापारासम्भवेनाधिश्रयणादीनामुष्णी-

प्राचुर्य्यात्सास्नादिमानेव स्वतः प्रतीयते, अर्थान्तरप्रतीतिस्तु तत्तदसाधारणनिर्देशापेक्षा, तथा स्वतःप्राप्तं शरीरप्रतिसम्बन्धिचेतनाभिधानमेव "स ईक्षत लोकान्नु सृजा इति' 'सोऽकामयत। बहु स्यां प्रजायेय" इत्यादितत्तद्वाक्यविशेषा एव स्थिरीकुर्वन्ति ॥ एवं वाक्यशेषावधारितानन्यसाधारणानेकापूर्वार्थविशिष्टं निखिलजगदेककारणं 'सदेव सोम्य" इत्यादिवाक्यसिद्धं ब्रह्मैवाकाशशब्देन प्रसिद्धवत् 'सर्वाणि ह वा इमानि भूतानि' इत्यादिवाक्येन निर्दिश्यत इति सिद्धम् ॥ २३॥

॥ इत्याकाशाधिकरणम् ॥

* श्रुतप्रकाशिका *

स्वतःप्राप्त्या आत्मशब्दो विशेषवाचीत्यर्थः। प्रकृतब्रह्मवाचितच्छब्दसामानाधिकरण्याच्च न स्वरूपपरत्वमित्यर्थसिद्धम् । न केवलमर्थान्तरसाधकनिर्देशाभावः, स्वतः प्राप्तार्थसाधकनिर्देशोऽप्यस्तीत्याह (स ईक्षतेति) ॥ अधिकरणार्थमुपसंहरति (एवमिति) योगाद्रूढेः प्राबल्यात् प्रसिद्धार्थपरत्वे सति श्रुतिविरोधाद्दुर्बलं लिङ्गादि तदनुरोधेन नेयमिति पूर्वपक्षयुक्तिः । योग्यार्थश्रुतिमूललिङ्गादयोग्यार्थस्य पदस्य श्रुत्याभासत्वाद्योग्यार्थः स्वीकार्य इति राद्धान्तयुक्तिः ॥ .... ....

ॐ भावप्रकाशिका ॐ

करणसामर्थ्यदर्शनेन मुख्यार्थबाधेनोष्णीकरणलक्षणा समाश्रिता । लोकेपि 'अग्निरधीते· गङ्गायां घोषः' इत्यादौ अध्येतृत्वघोषाधिकरणत्वरूपलिङ्गेनाग्निगङ्गापदश्रुत्योर्बाध आश्रितः , तस्मादनन्यथासिद्धप्रतिपिपादयिषितसकलकारणत्वानन्तत्वपरायणत्वादिलिङ्गविरोधेऽभ्यस्ताया अपि श्रुतेर्बाधो युक्त एव. न चैषां धर्माणां प्रतिपिपादयिषितत्वे किं मानमिति वाच्यम्; परपक्षमन्तवत्त्वेन दूषितवतो जैवलेरनन्तत्वे तात्पर्यावश्यम्भावात् तदुपपादकत्वेन जगत्कारणत्वादिष्वपि तात्पर्यकल्पनस्यावश्यम्भावादिति भावः ॥ .... .... .... .... ....

# अत एव प्राणः ॥ २४ ॥

९ अधिकरणम्

इदमाम्नायते छान्दोग्ये [1]"प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता" इति प्रस्तुत्य [2]"कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्" इति ॥

* श्रुतप्रकाशिका *

उक्ताधिकरणन्यायमतिदिशति—॥ अत एव प्राणः ॥ विषयमाह ( इदमिति ) मूर्द्धा ते व्यपतिष्यत्—आत्मसत्ता न लभ्येतेत्यर्थः । किं वेदान्तवेद्यः प्रसिद्धः प्राणः, उत परमात्मा ? । तदर्थं 'प्राण इति होवाच 'प्राणमेवाभिसंविशन्ती'त्युक्तः प्राणः किं प्रसिद्धः, उत परः ? । तदर्थं किं प्राणशब्दो रूढः, उत यौगिकः ? । तदर्थं भूतजातस्य प्रसिद्धप्राणायत्तस्थितिप्रवृत्तित्वमस्ति, उत न ? इति विचारः । यदाऽस्ति तदा रूढत्वात् विषयवाक्यस्थप्राणशब्दः प्रसिद्धप्राण पर इति सर्ववेदान्तवेद्यः प्रसिद्धः प्राण इति पूर्वपक्षे फलितम् । राद्धान्ते तु यदा प्राणायत्तस्थितिप्रवृत्तित्वं नास्ति तदाऽवयवशक्त्या विषयवाक्यस्थप्राणशब्दः परमात्मपर

॥ भावप्रकाशिका ॥

( प्राणमेवाभिसंविशन्तीति ) प्राणे लीयन्त इत्यर्थः । प्राणमभ्युज्जिहते—प्राणा उद्गच्छन्तीत्यर्थः । प्रस्तावमन्वायत्ता—प्रस्तावभक्तिमनुगतेत्यर्थः । ( आत्मसत्ता न लभ्येतेत्यर्थ इति ) अन्धत्वबधिरत्वादौ हि सति आत्मसत्ता लभ्येतापि, मूर्द्धपाते तु आत्मसत्तालाभोपि नास्तीति फलितार्थकथनमिदम्, न तु शब्दार्थकथनम्, शब्दस्यातदर्थकत्वात् यथाश्रुतेऽनुपपत्त्यभावाच्च. नच देवतापरिज्ञानमन्तरेण प्रस्तावादिषु प्रवर्तमानानामपि मूर्द्धपातासम्भवात् । यथाश्रुतार्थग्रहणासम्भवेन तथा व्याख्यातमिति वाच्यम्; तथोक्तस्य मयेत्युत्तरवाक्ये 'मूर्द्धा ते व्यपति-

१-२ छां १-११-४,५ ॥

अत्र प्राणशब्दोऽप्याकाशशब्दवत्प्रसिद्धप्राणव्यतिरिक्ते परस्मिन्नेव ब्रह्मणि वर्त्तते, तदसाधारणनिखिलजगत्प्रवेशनिष्क्रमणादिलिङ्गात्प्रसिद्धवन्निर्दिष्टात् । अधिकाशङ्का तु कृत्स्नस्य भूतजातस्य प्राणाधीनस्थिति-

* श्रुतप्रकाशिका *

इति सर्ववेदान्तवेद्यः परमात्मेति फलफलिभावः ॥ अक्षरार्थमाह ( अत्रेति ) आकाशशब्दवदित्यत्र रूढिप्राबल्यतत्परिहारादिकं पूर्वोक्तं सर्वमनुसन्धेयम् । न हि प्रत्युदाहरणं न्यायोऽतिदेष्टव्यः , अतिदेशस्य हि प्रयोजनम् अधिकाशङ्कापरिहारः, अतस्सूत्रकाराभिमतामधिकाशङ्कां दर्शयति ( कृत्स्नस्येति ) अत्र अविरोधशङ्कया प्रत्यवस्थानं विरोधस्फुटीकरणं चानुसन्धेयम् । स्थितिप्रवृत्त्यादीत्यादिशब्देन निवृत्तिरुच्यते, प्रवृत्तिहेतुभूतज्ञानचिकीर्षे च । स्थितिप्रवृत्तिहेतुत्वेनोत्पत्तिकारणत्वमर्थसिद्धमिति भावः । यद्वा " यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः यदा प्रबुध्यते प्राणादेवाधिपुनर्जायन्ते" इति प्रसिद्धवन्निर्देशरहितया श्रुत्या प्राणस्य अप्ययोद्गमनहेतुत्वावगमश्च आदिशब्देन विवक्षितः । अस्मिन् प्रकरणे उद्गीथप्रतिहारयोर्देवतात्वेन अन्नादित्यावुक्तौ, तयोश्चाब्रह्मत्वात् प्राणोऽपि ब्रह्मव्यतिरिक्तः प्रसिद्ध एव ग्राह्य इतीदं भाष्येऽनादृतम् , प्रकरणोक्तानामन्नमयादीनामब्रह्मत्वेऽपि कारणस्य परब्रह्मत्वमानन्दवल्ल्यां समर्थितमिति प्रकरणमात्रस्य पूर्वपक्षावलम्बनत्वेन

* भावप्रकाशिका *

प्यति' इत्युक्त्यनन्तरमपरिज्ञानेन प्रस्ताव एव मूर्द्धपातस्य प्रदर्श्यमानतया तत्र बाधकानुपलम्भादिति द्रष्टव्यम् । ( प्रत्युदाहरणमिति ) प्रतिवाक्यमित्यर्थः । प्रवृत्तिहेतुभूतज्ञानचिकीर्षे चेत्यस्यानन्तरमुच्येते इति विपरिणामेनानुषङ्गः । श्रौतस्याप्यादिशब्दग्राह्यत्वे सम्भवति तत्त्यागोऽनुचित इत्यभिप्रेत्याह ( यद्वा यदा वै पुरुष इति ) । ( प्रकरणमात्रस्य पक्षावलम्बनत्वेनेति ) सन्निधिलक्षणा ब्रह्मप्रायपाठमात्रेणेत्यर्थः । ततश्च भाष्योक्तरीत्या ब्रह्मलिङ्गान्यथासिद्धिरेव पूर्वपक्षहेतुः, तत्र परोक्तः प्रायपाठोप्यनुग्राहकोऽस्त्विति भावः । बुद्ध्यवनारोहादितिच्छेदः । ननु

प्रवृत्त्यादिदर्शनात् प्रसिद्ध एव प्राणो जगत्कारणतया निर्देशमर्हतीति ॥

परिहारस्तु—शिलाकाष्ठादिषु चेतनस्वरूपे च तदभावात् "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इति नोपपद्यत इति ।

* श्रुतप्रकाशिका *

बुद्धावनारोहात्। (जगत्कारणतयेति) संसृष्टं प्रति कारणत्वं सम्भवतीति भावः ॥

अधिकं परिहारं दर्शयति (परिहारस्त्विति) आदिशब्दोक्त आकाशादिः। 'प्राणं तर्हि वागप्येति' इतिश्रुतिरिन्द्रियव्यापारविषया । प्राणशब्दस्य परब्रह्मवा-

* भावप्रकाशिका *

'प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता। आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ति सैषा देवता उद्गीथमन्वायत्ता। अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता' इति प्रस्तावोद्गीथप्रतिहारभक्त्यनुगतत्वेन देवतात्वेन च निर्दिष्टेषु प्राणादित्यान्नेषु प्राणस्यैव परमात्मत्वम्, आदित्यान्नयोस्तु न तथात्वमित्यत्र किं विनिगमकम्? चेतनवाचिदेवताशब्दस्त्रिष्वपि समानः । प्राणवाक्यशेषप्रसिद्धप्राणासम्भावितासङ्कुचितसर्वभूतप्रवेशनोद्गमनाधारत्वस्य श्रवणवदादित्यान्नवाक्यशेषयोरप्यसङ्कुचितसर्वभूतगेयत्वस्य सर्वभूतोपजीव्यत्वस्य च प्रसिद्धान्नादित्ययोरसम्भावितस्य श्रवणमविशिष्टम् । यदि आदित्यवाक्ये सर्वभूतशब्द आदित्यगानयोग्यचेतनविशेषपरतया अन्नवाक्यशेषे चान्नोपजीवनयोग्यचेतनविशेषपरतया च सङ्कोच्यते. देवताशब्दश्च 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' इति न विलक्षणत्वादित्यधिकरणगुणसूत्रोक्तन्यायेनाभिमानिदेवतापरतया च योज्यते, तर्हि प्राणेपि तथास्तु, विशेषाभावादिति चेत्। उच्यते; प्राणशब्दस्य 'प्राणबन्धनं हि सोम्य मनः' 'प्राणस्य प्राणम्' इत्यादिषु परमात्मन्यपि निरूढलक्षणास्ति. वाक्यशेषस्वारस्यमप्यस्तीति परमात्मपरत्वम्, नैवमादित्यान्नशब्दयोः,

अतः प्राणयति सर्वाणि भूतानीति कृत्वा परं ब्रह्मैव प्राणशब्देनाभिधीयते । अतः प्रसिद्धाकाशप्राणादेरन्यदेव निखिलजगदेककारणमपहतपाप्मत्वसार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनन्तकल्याणगुणगणं परं ब्रह्मैवाकाशप्राणादिशब्दाभिधेयमिति सिद्धम् ॥ २४ ॥

॥ इति प्राणाधिकरणम् ॥

अतः परं जगत्कारणत्वव्याप्तेन येन केनापि निरति-

* श्रुतप्रकाशिका *

चित्वं कथमिति शङ्कां परिहरन् अधिकरणार्थमुपसंहरति ( अत इति ) वृत्ताधिकरणद्वयस्य अवान्तरपेटिकात्वं दर्शयति ( अतः प्रसिद्धेति ) ॥ .... ....

———o———

वर्तिष्यमाणाधिकरणद्वयस्य पेटिकान्तरत्वमाह ( अतः परमिति ) वस्त्वन्तरासाधारणैश्शब्दैर्जगत्कारणे निर्दिश्यमानेऽपि कारणत्वाभिधायिनां वाक्यानां

ॐ भावप्रकाशिका ॐ

ततश्चादित्यान्नशब्दौ तदधिष्ठातृदेवतापरौ. चेतनवाचिदेवताशब्दस्य प्रश्नप्रतिवचनगतस्याचेतने अन्नेऽसम्भवात् । अन्नशब्दस्तदभिमानिदेवतापरः । देवतायाश्च भूतोपजीव्यत्वं तदधिष्ठेयान्नेनाभेदारोपेणोपपद्यते । 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ति' इति प्रतिपादितं सर्वभूतगेयत्वं परमात्मनोपि न सम्भवति, भूतशब्दो हि प्राणिकाये महाभूते च रूढः । महाभूतस्य गातृत्वप्रसक्तेरेवाभावात्प्राणिकायपरत्वं वक्तव्यम् । तदपि न सम्भवति ; न सर्वे प्राणिनः परमात्मानं गायन्ति. स्थावरेषु पश्वादिषु चाभावात, तस्माद्गानयोग्यप्राणिविशेषपरत्वे न सङ्कोचः परमात्मपरत्वेप्यावश्यक इत्यादित्यशब्दस्य लोकव्युत्पत्तिविरुद्धपरत्वं नाश्रयणीयम् , एवमन्नवाक्यशेषेपि 'प्रतिहरमाणानि' इति भक्ष्यमाणत्वं न परमात्मनो मुख्यम् । अत आदित्यान्नशब्दितस्याब्रह्मत्वेपि प्राणशब्दितस्य ब्रह्मत्वं सिद्धमिति भावः ॥ ॥७॥ इति प्राणाधिकरणम् ॥ ७ ॥

शयोत्कृष्टगुणेन जुष्टं ज्योतिरिन्द्रादिशब्दैरर्थान्तरप्रसिद्धैरप्यभिधीयमानं परं ब्रह्मैवेत्यभिधीयते ज्योतिश्चरणाभिधानादित्यादिना —

ज्योतिश्चरणाभिधानात् ॥ २५ ॥

१० अधिकरणम्

इदमाम्नायते छान्दोग्ये– [१] " अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः

* श्रुतप्रकाशिका *

विशेषपर्यवसानं कृतम् । अथ कारणत्वाक्षेपकलिङ्गवाचिनां वाक्यानामभिमतविशेषपर्यवसानमुच्यत इत्यवान्तरपेटिकाभेदस्तत्सङ्गतिश्चेत्यर्थः । ज्योतिश्शब्देनावान्तरसङ्गतिश्च द्योतिता । प्राणः वायुविशेषः, आदित्यादिज्योतिस्तेजोविशेषः, अतः आकाशप्राणज्योतिषां क्रमो युक्त इति । नन्वाकाशादिशब्दत्रयं परमात्मपरमिति सिद्धान्तितम् । सत्यम् ; तथापि प्रसिद्ध्यनुसारिण्या पूर्वपक्षदृष्ट्या सङ्गत्युपपत्तिः, येन केनापीति न लिङ्गाल्पत्वं विवक्षितम् । किन्तु उदाहृतविषयवाक्यप्रतिपन्नोऽयमेव गुणः कारणत्वाक्षेपक इति गुणविशेषानियम इति भावः । उभयोः पेटिकयोरनुयायिनमाकारं दर्शयति ( अर्थान्तरप्रसिद्धैरपीति )

॥ ज्योतिश्चरणाभिधानात् ॥ ( इदमित्यादि ) पृष्ठेपु–उपरितनेपु । 'त्रिपादूर्ध्वः' तमसोपरिष्टा'दित्यादिश्रुतिभ्यः । व्यष्टिसमष्टिविवक्षया विश्वतस्सर्वत इत्युक्तम् । अनुत्तमेपु–स्वस्मादन्य उत्तमो नास्तीत्यनुत्तमः । विश्वतः– कृत्स्नभूमिप्रदे-

* भावप्रकाशिका *

( आकाशादिशब्दत्रयं परमात्मपरमिति सिद्धान्तितमिति ) सिद्धान्त्यभिमतमित्यर्थः । ततश्च शब्दत्रयस्यापि सिद्धान्तरीत्या परमात्मवाचित्वेन कार्यकारणभावापन्नाकाशवायुतेजोरूपभूतत्रयवाचित्वाभावात् तत्प्रयुक्ता सङ्गतिः कथं सिध्येदिति भावः । ( न लिङ्गाल्पत्वं विवक्षितमिति ) एकवचनादेकत्वं न विवक्षितम् 'अध्यात्मसम्बन्धभूमा ह्यस्मिन्' इति सूत्रकृतैव भूयसां लिङ्गानामुपन्यासादिति भावः ॥

नन्वेवं सति पूर्वपक्षोत्थितिः कथमित्याशङ्क्याह ( विश्वतः–कृत्स्नभूमिप्रदेशा-

१ छां. ३-१३-७ ॥

पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः" इति। तत्र संशयः, किमयं ज्योतिश्शब्देन निर्दिष्टो निरतिशयदीप्तियुक्तोऽर्थः प्रसिद्धमादित्यादिज्योतिरेव कारणभूतं ब्रह्म, उत समस्तचिदचिद्वस्तुजातविसजातीयः परमकारणभूतोऽमितभास्सर्वज्ञः सत्यसङ्कल्पः पुरुषोत्तमः? इति। किं

* श्रुतप्रकाशिका *

शात्। सर्वतः– कृत्स्नान्तरिक्षप्रवेशात्। पृष्ठेषु– बहिर्भूतेषु, इति योजनासम्भवात् पूर्वपक्षोत्थानम्। आदित्यो ह्यूर्ध्वलोकेष्वपि रश्मिद्वारा दीप्यते। (तत्रेति) लोकप्रसिद्धिभूतचरणत्वाभ्यां संशयः। निरतिशयदीप्तियुक्तोऽर्थ इति पूर्वपक्षसिद्धान्तसाधारणनिर्देशः। निरतिशयदीप्तिरेव कारणत्वाक्षेपकं लिङ्गम् "न तत्र सूर्यो भाति 'तस्य भासा सर्वमिदं विभाति" इतिप्रकरणे "तथाऽक्षरात्सम्भवतीह विश्वम्" इति निरतिशयदीप्तियुक्तस्य वस्तुनः कारणत्वश्रवणात् तत्प्रकरणस्य कारणविषयत्वं ह्यविगीतम्, परमात्मविषयत्वे हि विमतिः। निरतिशयदीप्तियोगात्कारणभूतं ब्रह्म भवन् ज्योतिश्शब्दनिर्दिष्टोऽर्थः किं प्रसिद्धमादित्यादिज्योतिरेवेत्यन्वयार्थः। सावान्तरभेदसमष्टिव्यष्ट्यादिविवक्षया समस्तचिदचिद्वस्तुजातशब्दः। व्याप्तिग्रहणस्थानोपनिषत्प्रसिद्धं विशेषणमाह (सर्वज्ञस्सत्यसङ्कल्प इति) "यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः" इति हि श्रूयते। अस्यामुपनिषदि पुरुषसूक्तप्रत्यभिज्ञानात् पुरुषोत्तम इत्युक्तम्। "अथ यदतः परो दिवो ज्योतिर्दीप्यते"

ꣳ भावप्रकाशिका ꣳ

दिति) भाष्ये–निरतिशयदीप्तियुक्तोर्थः किमादित्यादिज्योतिरेव, उत पुरुषोत्तमः? इति कोटिद्वये प्रदर्शनीये आदित्यादिज्योतिरेव कारणभूतं ब्रह्मेति प्रदर्श्यते। न च तद्युज्यते; निरतिशयदीप्तियुक्तस्य कारणभूतस्य ब्रह्मत्वे पूर्वपक्षिसिद्धान्तिनोर्विवादादर्शनादिति यथा श्रुतेऽनुपपत्त्युद्घाटनपूर्वकं कारणं ब्रह्मेत्ययमंशोपि पक्षप्रदर्शक इति स्वाभिमतयोजनां दर्शयति (निरतिशयदीप्तिरेव कारणत्वाक्षेपकं लिङ्गमित्यादिना) (व्याप्तिग्रहणस्थानोपनिषदिति) जगत्कारणत्वनिरतिशय-

युक्तम् ? प्रसिद्धमेव ज्योतिरिति । कुतः ? प्रसिद्धवन्नि- र्देशेऽप्याकाशप्राणादिवत्स्ववाक्योपात्तपरमात्मव्याप्त-

* श्रुतप्रकाशिका *

इत्यत्र ज्योतिश्शब्दः किं प्रसिद्धादित्यादिज्योतिर्विषयः, उत परमात्मपरः ? इति । तदर्थं पूर्ववाक्ये द्युसम्बन्धितया निर्दिष्टस्य परमात्मनः किमत्र प्रत्यभिज्ञानं नास्ति ? उतास्ति ? । तदर्थं कौक्षेयज्योतिषैक्योपदेशः उपदेशभेदश्च किं प्रत्यभिज्ञाविरोधिनौ, उताविरोधिनौ ? । पूर्वस्मिन् ब्राह्मणवाक्ये गायत्रीशब्दः किं प्रसिद्धगायत्रीपरः, उत न ; इति विचारः । यदा विरोधिनौ गायत्रीशब्दार्थश्च प्रसिद्धः तदाऽस्मिन्वाक्ये परमात्मप्रत्यभिज्ञाऽभावात् द्युसम्बन्धि ज्योतिः प्रसिद्धादित्यादिज्योतिरेवेति पूर्वपक्षे फलफलिभावः । यदा कौक्षेयज्योतिषैक्योपदेशो विभक्तिभेदश्च न परप्रत्यभिज्ञाविरोधिनौ गायत्रीशब्दश्च ब्रह्मपरः तदा पूर्ववाक्योक्तद्युसम्बन्धिपरमात्मन इह प्रत्यभिज्ञानाद्दिवःपरत्वेनोक्तज्योतिः परमात्मैवेति राद्धान्ते फलफलिभावः । ननु कथं स्ववाक्ये परमात्मलिङ्गाभावः ? निरतिशय-

७ भावप्रकाशिका ७

दीप्त्योर्व्याप्तिग्रहणस्थानभूतमुण्डकोपनिषदि प्रसिद्धमित्यर्थः । भाष्ये—परमात्मत्वव्याप्तलिङ्गविशेषादर्शनादिति । नन्वेवं कारणत्वव्याप्तनिरतिशयदीप्तियोगादित्युत्तरग्रन्थो विरुद्ध्यते. निरतिशयदीप्तियोगस्य परमात्मत्वव्याप्तकारणत्वव्याप्तत्वेन व्याप्यव्याप्यस्य सुतरां व्याप्यत्वमितिन्यायेन निरतिशयदीप्तियोगस्यापि परमात्मत्वव्याप्यत्वात् । न च दीप्तेर्जगत्कारणत्वव्याप्त्यनभ्युपगमेन पूर्वपक्षः । तथा सति कारणत्वव्याप्तनिरतिशयदीप्तियोगादितिग्रन्थविरोधापत्तेः । न च समस्तचेतनाचेतनं प्रत्यभिन्ननिमित्तोपादानत्वलक्षणं कारणत्वं ब्रह्मलिङ्गम् । तच्च न स्ववाक्योपात्तमिति वाच्यम्; जगत्कारणं ब्रह्म भवन्नित्युक्त्यनुपपत्तेः । जन्मादिसूत्रप्रतिपाद्यजगत्कारणत्वमभ्युपेत्यैव पूर्वपक्षप्रवृत्तिदर्शनादिति चेत्, उच्यते; आकाशप्राणादाविव जगत्कारणत्वादिरूपब्रह्मलिङ्गानुपलम्भान्न परमात्मपरत्वमिति पूर्वपक्षिणस्संरम्भः । न च निरतिशयदीप्तिरूपं जगत्कारणत्वव्याप्तमुपलभ्यत इति शङ्क्यम् । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इत्यत्र दीप्तिमात्रप्रतीतावपि निरतिशयदीप्त्यप्रतीतेः, दीप्यत इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवती-

लिङ्गविशेषादर्शनात् परमपुरुषप्रत्यभिज्ञानासम्भवात् । कौक्षेयज्योतिषैक्योपदेशाच्च प्रसिद्धमेव ज्योतिः कारणत्वव्याप्तनिरतिशयदीप्तियोगाज्जगत्कारणं ब्रह्मेति ॥

* श्रुतप्रकाशिका *

दीप्तियोगाक्षिप्तं कारणत्वं हि परमात्मलिङ्गम्। नैवम्, न हि जगत्कारणत्वमात्रं परमात्मलिङ्गम्, अपि तु कारणत्वविशेष एव तल्लिङ्गम्, कृत्स्नचेतनाचेतनं प्रति सर्वविधकारणं हि परमात्मा। पूर्वाधिकरणद्वयविषयवाक्येऽपि 'सर्वाणि ह वा इमानि भूतानी'ति समस्तचेतनाचेतनं प्रति कारणत्वरूपं परमात्मलिङ्गं स्ववाक्यस्थम्, न तथाऽत्र परमात्मलिङ्गभूतकारणत्वविशेषः स्ववाक्ये दृश्यत इत्यभिप्रायेणोक्तं परमात्मव्याप्तलिङ्गविशेषादर्शनादिति । ततः किमित्यत्राह ( परमपुरुषेति ) हेत्वन्तरमाह(कौक्षेयेति) प्राकृततेजस्तत्त्वकार्यतया आदित्यादेः कौक्षेयज्योतिषश्च एकजातीयतया सामानाधिकरण्यनिर्देश ऐक्योपदेशः, कौक्षेयज्योतिषश्च भौतिकत्वम् उष्णत्वघोषगुणकत्वामननात्सिद्धं "तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुमिवाग्नेरिव

७ भावप्रकाशिका ७

त्यभिप्रेतमिति दीप्तेरपहतपाप्मत्वहेतुतयैवोपन्यासेन कारणत्वाक्षेपकतयाऽनुपन्यासात् प्रसिद्धमादित्यादिज्योतिरेव ज्योतिश्शब्दितमिति वदतः पूर्वपक्षिणो 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति' इतिवाक्यप्रतिपाद्यादित्याद्यभिभावकतेजसो ऐक्याभ्युपगमायोगात् । तदैक्याभ्युपगमे च अदृश्यत्वादिगुणकः 'द्युभ्वाद्यायतनम्' इत्यादौ तस्य परमात्मत्वप्रतिपादनादेव 'अथ यदतः परः' इतिवाक्यार्थनिर्णयस्यापि सम्भवेनैतदधिकरणविचारवैफल्यात्, तस्मात् परमात्मत्वव्याप्तस्य व्याप्तव्याप्तस्य वा लिङ्गस्यानुपलम्भात् 'इदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इतिज्योतिरात्मकतयोपास्यं ज्योतिः प्रसिद्धमादित्यादिज्योतिरेवेत्येव पूर्वपक्षिहृदयम् । कारणवाक्यसमन्वयाध्यायसङ्गतिलोभादयोगव्यवच्छेदार्थप्रथमपादसङ्गतिलोभाच्च परमात्मकारणत्वाक्षेपपर्यवसाय्येव प्रसजेदिति भाष्यटीकयोस्सूचितमिति न तत्राभिनिवेष्टव्यमिति युक्तमुत्पश्यामः । (प्राकृततेजस्तत्त्वकार्यतयेति ) ब्रह्ममुखप्रसूतत्वादग्निब्राह्मणयोः 'अग्निर्वै ब्राह्मणः 'इत्यादि-

## एवं प्राप्ते प्रचक्ष्महे— ज्योतिश्चरणाभिधानात् ।

* श्रुतप्रकाशिका *

वलतः उपशृणोति" इति हि श्रूयते । ( प्रसिद्धमेव ज्योतिरिति ) आदित्यादौ ज्योतिश्शब्दस्य प्रसिद्धत्वादिति भावः । एवं स्ववाक्येत्यादिना कौक्षेयेत्यादिना च स्ववाक्ये विरोधिलिङ्गाभावात्पानुकूललिङ्गसद्भावौ दर्शितौ भवतः । दीप्यत इति श्रूयमाणा दीप्तिश्च रूपवत्पदार्थनिष्ठा भवतीत्यभिप्रेतम्, अस्यापि हेतोः परिहरिष्यमाणत्वात् । सर्वगतस्य ब्रह्मणो द्युमर्यादत्वासम्भवस्तु परैः पूर्वपक्षहेतुतयोक्तो भाष्ये नादृतः, भौतिकज्योतिषोऽपि द्युमर्यादत्वासम्भवात् । सर्वत्र भौतिकानि ज्योतींषि हि विद्यन्ते, उपासनार्थप्रदेशविशेषपरिग्रहस्तु ब्रह्मणोऽप्युपपद्यते । लोकेष्वित्यधिकरणबहुत्वप्रतीतिश्च सर्वत्र सतो ब्रह्मण उपपन्ना । 'तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद'इत्यल्पफलत्वश्रवणन्तु ब्रह्मविदामपि विद्यानुकूलसकलप्रदत्वात्परमात्मन उपपद्यते । एवमेतेषां हेतूनामधिकरणान्तरपरिहार्यत्वादमी पूर्वपक्षेऽनादृताः ॥ .... .... .... .... ....

( एवं प्राप्त इति ) चरणत्वेन सर्वभूताभिधानं कारणस्य जीववैलक्षण्य-

* भावप्रकाशिका *

निर्देशवदिति भावः । तस्यैषा दृष्टिः— तस्य कौक्षेयज्योतिषः, अयं दर्शनोपायः, यत्र यस्मिन् काले अस्मिन् शरीरे हस्ते नोपलब्धे संस्पर्शेनोष्णिमानं विजानाति, तस्यैषा श्रुतिः— श्रवणोपायः, कर्णावपिगृह्य— कर्णौ पिधाय निनदमिव रथध्वनिमिव. नदथुमिव— ऋषभकूजितमिव. ज्वलतोऽग्नेरिव शब्दं शृणोति सशब्द आभ्यन्तरस्य जाठराग्नेश्शब्द इत्यर्थः । पिहितकर्णपुटेनोपलभ्यमानस्य शब्दस्य बाह्यत्वासम्भवादान्तरत्वमुपेयमिति भावः । ( ब्रह्मणोप्युपपद्यत इति ) यद्यपि सौर्यादेस्तेजसस्सावयवत्वेन तदेकदेशस्य मर्यादासम्भवात् तस्य चोपास्यत्वेन विधानं सम्भवेत्, ब्रह्मणस्त्वनवयवस्यावयवोपासनानुपपत्तेः, अवयवकल्पनायाश्च सत्याङ्गतावयुक्तत्वादिति तयोर्वैषम्यं शङ्करभाष्यवाचस्पत्ययोरेव दर्शितम् । तथापि ' अन्तस्तद्धर्मोपदेशात् ' इत्यत्रैव मर्यादारूपवत्त्वादीनां ब्रह्मणि सम्भवस्य प्रदर्शिततया न पूर्वपक्षसाधकत्वमित्यभिप्रेत्य भाष्येऽनुदाहृतमित्यभिप्रायः । ( विद्यानुकूलसकलफलप्रदत्वादिति ) 'अन्नादो वसुदानः' इत्यादिश्रुतेरिति भावः ॥

## द्युसम्बन्धितया निर्दिष्टं निरतिशयदीप्तियुक्तं ज्योतिः

* श्रुतप्रकाशिका *

निश्चायकम्, जीवमात्रस्य सर्वभूतपादवत्त्वानुपपत्तेः । तत एव पुरुषसूक्तप्रत्यभिज्ञापकतया देवताविशेषनिश्चयः । तद्द्वारा दीप्तियोगस्य भौतिकज्योतिष्ट्वे हेतुतापरिहारश्च भवति । पुरुषसूक्तं कस्मात्सूत्रकारेण न निरूपितम्? संशयहेत्वभावादिति ब्रूमः, सन्दिग्धे हि न्यायः प्रवर्त्तते, पुरुषसूक्ते च ज्योतिश्शब्दः छन्दोऽभिधानादिकं प्रधानक्षेत्रज्ञासाधारणलिङ्गान्तरं वा क्वचिन्न दृश्यते; सर्वभूतपादवत्त्वादिधर्माश्च तयोरसम्भाविताः । तर्हि चिदचिद्विलक्षणकारणास्तित्वविषयस्य प्रथमपादस्यानारम्भः स्यादिति चेन्न, बहूनां वेदान्तवाक्यानां प्रकृतिपुरुषकारणमात्रवादित्वे तद्विरोधेनात्रापि संशयप्रसङ्गात्, तेषां भूयसां बलीयस्तया विपरीतनिश्चयप्रसङ्गाच्च तद्व्युदासायारम्भणीयत्वात् । तेषु च प्रकृतिपुरुषविलक्षणविषयतया न्यायतो निश्चितेषु संशयविपर्ययाभावात्पुरुषसूक्तस्य चिदचिद्विलक्षणे परे ब्रह्मणि प्रामाण्यमप्रतिभटमवतिष्ठते; अतो न तत्र निरूपणीयम्. तस्य च तत्त्वपरत्वं [पुरुषसूक्तस्य भगवत्परत्वम्] तत्रापि महापुरुषसंज्ञदेवताविशेषविषयत्वमप्यविगीतम्, अनेकोपपत्तिसिद्धञ्च । तथा हि; इदं तावत् "अग्निमीडे पुरोहितम्" "अभि त्वा शूर नो नुमः' 'स्तौमिन्द्रं नाधितो जोहवीमि' 'स्तौम्यग्निं नाधितो जोहवीमि" इत्यादिवदस्य स्ववाक्यं न स्तुतिपरत्वमवगमयति "अर्हन् बिभर्षि सायकानि धन्वेत्याह स्तौम्येवैनमेतत् ' ततो देवा ऊर्द्ध्वबाहवो रुद्रमस्तुवन् " इत्यादेरिव वाक्यान्तरेणास्य स्तुतिपरत्वं नावगम्यते, नापि स्तुतिपरत्वे लिङ्गमुपलभ्यते । न हि 'नमस्ते अस्तु मा मा हिंसीः' 'देहि मे ददामि ते" इतिवत् नमस्कारोऽनिष्टनिवृत्तीष्टलाभप्रार्थना वा दृश्यते । 'विश्वस्मादिन्द्र उत्तरः' 'तस्य वज्रमादाय शीर्षाण्यच्छिनत् तं भूतान्यभ्यक्रोशन् ब्रह्महन्निति' "अग्निस्सर्वा देवताः' 'अग्निं वै जातं पाप्मा जग्राह" इत्यादिभिरग्नीन्द्रादीनामिव प्रतिपन्नस्य प्रकर्षस्य बाधकश्च न दृश्यते, न हि परम-

ꣳ भावप्रकाशिका ꣳ

(क्वचिन्न दृश्यत इति) क्वचिदपि न दृश्यत इत्यर्थः । 'विश्वस्मादिन्द्र उत्तरः' अग्निस्सर्वा देवताः' इत्यादिवाक्यद्वयं प्रकर्षप्रतिपादकम् । 'तस्य वज्रमादायाग्निं वै जातम्" इत्यादि तद्बाधकं द्रष्टव्यम् । 'जनितेन्द्रस्य जनितोत विष्णोः'

* श्रुतप्रकाशिका *

पुरुषस्य कार्यत्वकर्मवश्यत्वादिकं क्वचिदनन्यपरवाक्येनावगम्यते "आकाशो ह वै नाम" "यतो वा इमानी'त्यादिवाक्यानामिवानुवादरूपतया नास्य साकाङ्क्षत्वं प्रतीयते। तदेषाभ्युक्ता 'तदेतदृचाभ्यनूक्तम्' इतिवत् स्वोपदिष्टार्थसाक्षित्वेन प्रमाणान्तरानुपस्थानाच्च नैरपेक्ष्यमवगम्यते । 'तदेतदृचाऽभ्यनूक्तम्' 'तावानस्य महिमा" इत्यादिभिस्साक्षित्वेनोदाहृतत्वाच्च स्वयमन्यानपेक्षस्य प्रमाणान्तरोपजीव्यत्वं च प्रतीयते "इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते । ऋतं सत्यं च विख्यातम् ऋषिसिंहेन चिन्तितम्" इति मोक्षधर्मे तत्त्वनिष्कर्षकतया व्यासेनोदाहृतम् । अत्र च सर्वेषु वेदेषु पठिततया सन्निहितत्वात्तच्छाखागतानां तत्त्वपरवाक्यानामाकाङ्क्षितयोग्यविशेषसमर्पकतयाऽनुरोद्धव्यमिदमित्यवगम्यते, एवं तत्त्वपरस्यास्य सूक्तस्य देवताविशेषपरत्वं दुरपह्नवम्। "पुरुषो ह वै नारायणोऽकामयत' इति बृहदारण्यक पुरुषशब्दस्य नारायणपरत्वदर्शनात् । किञ्च छान्दोग्ये "एषा वैष्णवी नाम संहिता एतां प्रयुञ्जन् विष्णुं प्रीणाति" इत्युक्तम् । अथर्वणे अष्टादशमहाशान्तिप्रकरणे तत्तद्दैवत्यशान्तिषु तत्तद्दैवत्यमन्त्रविनियोगावसरे "वैष्णव्यां पुरुषसूक्तम्" इति वैष्णव्यां शान्तौ पुरुषसूक्तं विनियुज्यते । तथा "आद्ययावाहयेद्देवमृचा तु पुरुषोत्तमाम्"इत्यादिना शौनकेन भगवत्समाराधने "जितं ते" इत्यादिमन्त्रतुल्यं विनियुज्यते । महापुरुषशब्दश्च कल्पसूत्रकारैर्देवताविशेष एव प्रयुक्तः "महादेवं वा महापुरुषं वाऽर्चयेत्"इति । इह च "वेदाहमेतं पुरुषं महान्तम्" इत्युच्यते, अतश्च भगवदसाधारण्यम् । तथा "पुरुषस्य हरेस्सूक्तं स्वर्ग्यं धन्यं यशस्करम्" इति च स्मर्यते। तथा "योऽनूचानं द्विजं मर्त्यो हतवानर्थलोभतः। स पठेत्पौरुषं सूक्तं स्मरन् विष्णुं जले सकृत्" इति यमस्मृतौ रहस्यप्रायश्चित्तेपूक्तम्।

ॐ भावप्रकाशिका ॐ

'तद्धैतद्घोर आङ्गीरसः' कृष्णाय देवकीपुत्रायोक्त्वा वाचः' अपिपास एव स बभूव' इत्यादिभिर्मन्त्रार्थवादैः परमात्मनोपि कार्यत्वं कर्मवश्यत्वमस्तीत्यत आह ( अनन्यपरवाक्येनेति ) ( एषा वैष्णवीति ) ' इदं विष्णुः प्रत्नस्य विष्णुः प्रकाव्यमुशने बभ्रुवाणो वाराहमन्त्यं पुरुषव्रते च' इति पुरुषसूक्तं प्रस्तुत्य 'एषा वैष्णवी नाम संहिता' इति संहितायां वैष्णवत्वश्रवणादितिभावः । ( ऋचा तु पुरुषोत्तममित्यादिनेति ) पुरुषसूक्तगतानां षोडशानामृचां षोडशेमूपचारेषु विनि-

परमपुरुष एव । कुतः ? "पादोऽस्य सर्वा भूतानि

* श्रुतप्रकाशिका *

तथा योगवासिष्ठे "आसीनः प्राङ्मुखः शुद्धः चिन्तयन्मनसा हरिम् । पौरुषेणैव सूक्तेन जुहुयाद्धव्यवाहनम्" इत्युक्तम् । लक्ष्मीपतिप्रतिपादकोत्तरनारायणसमानप्रकरणं चेदम् । 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्व'मिति नारायणानुवाकैकार्थ्यञ्च प्रतीयते । 'पुरुष एवेदं सर्व'मितिवाक्येन सुबालोपनिषदैकार्थ्यञ्च प्रतीयते । तत्र हि "दिव्यो देव एको नारायणः" इति नारायणपरत्वमवगम्यते । तत्र च 'पुरुष एवेदं सर्व'मित्युपसंहृतम् । तथा पाद्मे पुराणे "ब्रह्महत्यादिपापानां सर्वेषामपनुत्तये । पठेत्तु पौरुषं सूक्तमेकान्ते संस्मरन् हरिम्" इत्युच्यते । तथा स्कान्दे "यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति । यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः ॥ यथा पुरुषशब्दोऽयं वासुदेवे प्रतिष्ठते । तथा शङ्करशब्दोऽयं महादेवे व्यवस्थितः" इति शङ्करशब्ददृष्टान्तत्वेन पुरुषशब्दस्य भगवदसाधारणत्वकथनाच्च पुरुषसूक्तस्य तदसाधारण्यं प्रतीयते । पाद्मे पुराणे नामनिर्वचनाध्याये "पूस्सञ्ज्ञे तु शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्यासेन प्रयुज्यते ॥ यद्वा पुरे शरीरेऽस्मिन्नास्ते स पुरुषो हरिः । यदि वा पुरि वासीति पुरुषः प्रोच्यते हरिः । यदि वा पूर्वमेवासमिहेति पुरुषं विदुः । यदि वा बहुदानाद्वै विष्णुः पुरुष उच्यते । पूर्णत्वात्पुरुषो विष्णुः पुराणत्वाच्च शार्ङ्गिणः । पुराणभजनाच्चापि विष्णुः पुरुष उच्यते । यद्वा पुरुषशब्दोऽयं रूढ्या वक्ति जनार्दनम्" इति च योगरूढत्वमवगम्यते, अतः पुरुषप्रतिपादकं सूक्तं भगवदसाधारणमिति 'चरणाभिधानात्' इति वदता सूत्रकारेण देवताविशेषनिष्कर्षः कृतः । सारे चैवं विशदतममुक्तं भगवता भाष्यकारेण, अतो यथोक्तार्थ उपपन्नः ॥ अत्र 'पादोऽस्ये'तिमन्त्रे 'त्रिपादस्यामृतं दिवि' इतिद्युशब्देन द्योतमानसंविदात्मस्वरूपमुच्यत इति केचिदाहुः । तदानी-

* भावप्रकाशिका *

योगादिति भावः । ( नारायणानुवाकैकार्थ्यञ्चेति ) नारायणानुवाके 'विश्वमेवेदं पुरुषः' इति श्रुतत्वेन तस्य 'पुरुष एवेदं सर्वम्' इति पुरुषसूक्तगतवाक्येन प्रत्यभिज्ञानादिति भावः । ( केचिदिति ) मृषावादिन इत्यर्थः । ते ह्येवमाहुः,— सर्वाणि भूतानि स्थावरजङ्गमात्मकानि अस्य परमात्मनः एकः पादः, अस्य

त्रिपादस्यामृतं दिवि" इत्यस्यैव द्युसम्बन्धिनश्चरणत्वेन सर्वभूताभिधानात्॥ .... .... .... ....

* श्रुतप्रकाशिका *

मस्य दिवीति व्यतिरेकनिर्देशस्य क्लिष्टता स्पष्टा। किञ्च द्युसम्बन्धिप्रत्यभिज्ञापकतया तदेकार्थत्वेन सूत्रकारोदाहृते "अथ यदतः परो दिवो ज्योतिर्दीप्यते" इतिवाक्ये पञ्चम्यन्ततया श्रूयमाणेन द्युशब्देन विरोधश्च स्यात्, न हि द्योतमानमात्मस्वरूपं स्वस्वरूपात्परं भवति। दिवि हृदयाकाशे स्थितमिति भास्करः। तदयुक्तम्; 'अतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु" इति श्रुतिविरोधात्। न हि हृदयाकाशो दिव उपरितनेषु लोकेषु वर्त्तते। परमात्मन आदित्यमण्डलेऽप्यवस्थानात् तद्विषयं तद्वाक्यमिति चेन्न; रविमण्डलस्य भूमेर्योजनलक्षेऽवस्थितस्य विश्वप्रपञ्चबहिर्भावाभावात् विश्वसर्वशब्दयोर्भूम्यन्तरिक्षमात्रपरत्वे स्वारस्यभङ्गाच्च। किञ्च सप्तम्यन्तपञ्चम्यन्तयोर्द्युशब्दयोरविरोधेनार्थैकत्वं चतुर्थसूत्रे समर्थितम्; तच्च तयोर्हृदयाकाशरविमण्डलपरत्वेऽनुपपन्नम्। विश्वसर्वशब्दस्वारस्यभङ्गप्रसङ्गादेव द्युशब्दस्य प्रसिद्धद्युपरत्वं चायुक्तम्। जाग्रत्स्वप्नसुषुप्त्यवस्थासु जीवसञ्चारभूमितया त्रेधा विभक्ताः कार्याकाशप्रदेशविशेषास्त्रयः पादाः, तदुपलक्षणं कारणब्रह्मस्वरूपं त्रिपादमृतमुच्यते

* भावप्रकाशिका *

त्रिपादमृतं दिवि द्योतमाने स्वात्मन्यवस्थितं यथा कार्षापणश्चतुर्धा विभक्तः एकस्मात्पादात्पादत्रयीकृतो महान्, एवमल्पं प्रपञ्चं पादमपेक्ष्य परिच्छिन्नमात्मस्वरूपं त्रयः पादा उच्यन्त इत्यर्थः। ततश्च 'ततो ज्यायांश्च पुरुषः' इतिपुरुषज्यायस्त्वमुपपद्यत इति। (क्लिष्टता स्पष्टेति) 'स्वे महिम्नि प्रतिष्ठितः' इतिवदनन्याधारकत्वकथनस्य क्लिष्टत्वादिति भावः। (नहि हृदयाकाशो दिव उपरितनेषु लोकेष्विति) येन हृदयाकाशस्थितस्य 'विश्वतः पृष्ठेषु' इति श्रुतिप्रतिपाद्यत्वं स्यादिति भावः। (तद्विषयं तद्वाक्यमिति चेदिति) ततश्च वाक्यद्वयस्यापि भिन्नविषयत्वमस्तीति भावः। दिवीत्यस्य द्योतमानात्मस्वरूपपरत्वे सप्तम्यस्वारस्यात् वाचस्पतिना व्याख्यान्तरं कृतम्, तदनूद्य दूषयति (जाग्रत्स्वप्नसुषुप्त्यवस्थास्विति) (त्रेधा विभक्ताः कार्याकाशप्रदेशविशेषास्त्रयः पादा इति) 'योऽयं बहिर्द्धा पुरुषादा-

* श्रुतप्रकाशिका *

इति चायुक्तम्, अस्य त्रिपादिति व्यतिरेकनिर्देशस्यामुख्यत्वात् । जीवस्य जाग्रदवस्थायां बाह्याकाशस्सञ्चारभूमिरिति चायुक्तम्, तदानीमपि शरीरान्तर्वर्तित्वात् । स्वप्ने शरीराकाशवर्तित्वमप्ययुक्तम्, ईश्वरसृष्टशरीरैर्बहिरप्यवस्थानात् तदनभ्युपगमेऽपि पूर्वसंस्कारसहकृतमनोव्यापारमात्रेण हृदयावस्थानेऽपि जीवस्य स्वाप्नभ्रमोपपत्तेः स्वप्ने जीवस्य हृदयान्निष्क्रमणस्य निष्प्रमाणकत्वाच्च । 'हृदि ह्ययमात्मा' इति जीवस्य स्वतो हृद्यवस्थानं श्रूयमाणं स्वप्नावस्थायां कथं वचनेन विनाऽपोद्यते । तस्मादृचोऽयमर्थः,— सर्वा भूतानीति कार्यजगदन्तर्गताचित्संसृष्टचेतना उच्यन्ते । द्युशब्दस्तु समस्तव्यष्टिसमष्टितत्त्वबहिर्भूतस्थानविशेषपरः, "विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु" इति श्रवणात् । विश्वशब्दविवरणं सर्वशब्द इति गत्यभावलिङ्गम् । 'तथाऽन्तरात्सम्भवतीह विश्व'मिति जगदन्तर्वर्तिव्यष्टिजाते विश्वशब्दप्रयोगात् विश्वशब्दो व्यष्टिपरः, सर्वशब्दः परिशेषात्समष्टितत्त्वपरः, अत एव गद्येऽपि गदितं भाष्यकारैः "समस्तं कार्यकारणजातमतीत्य वर्तमाने" इति । पुरुषसूक्ते "ते ह नाकं महिमानस्सचन्ते" इति मुक्तप्राप्यदेशस्य नाकशब्देनोक्तत्वात्, मुक्तस्य च दुःखमिश्रकार्यलोकानां हेयत्वात् नास्मा अकं भवतीत्यवयवार्थपौष्कल्योपपत्तेः, तत्रैव 'तमसः परस्ता' दिति विशेषितत्वात्, "स्वं

ॐ भावप्रकाशिका ॐ

काशः अयं वा व स योयमन्तःपुरुष आकाशः यो वै सोऽन्तःपुरुष आकाशः अयं वा स योऽयमन्तर्हृदय आकाशः' इति श्रुतेर्बाह्याकाशशरीरान्तर्वर्त्याकाशहृदयाकाशभेदेन त्रेधा विभक्तकार्याकाशप्रदेशविशेषास्त्रयः पादा इत्यर्थः । ननु पश्यते ज्ञायते एभिस्तुरीयमितिविश्वतैजसप्राज्ञास्त्रयः पादा एते यस्य तत् त्रिपात्, तुरीयं तद्विश्वतैजसप्राज्ञस्वरूपपादद्वारा बाह्याकाशशरीराकाशहृदयाकाशेष्ववस्थितमिति मन्त्रस्यार्थो वर्णितः । ततश्च त्रेधा विभक्तकार्याकाशवर्तिनां विश्वादीनामेव पादत्वेन वक्तव्ये कथं कार्याकाशप्रदेशविशेषाणां पादत्वमुच्यत इति चेत् । अत्र केचित्,— आधुनिकेन कल्पतरुकारेण तथोक्तत्वेपि वाचस्पत्ये तथा अप्रतीतेरनुवादो न दोषायेति वदन्ति । अन्येतु— त्रेधा विभक्तः कार्याकाशप्रदेशविशेषः आधारविशेषो येषां त इति कार्याकाशप्रदेशशब्देनापि विश्वादय एवोक्ता इति वदन्ति । ( मुक्तप्राप्यदेशस्य नाकशब्देनोक्तत्वादिति ) आत्मस्वरूपमात्रे नाक-

एतदुक्तं भवति– यद्यपि "अथ यदतः परो दिवो ज्योतिः" इत्यस्मिन् वाक्ये परमपुरुषासाधारणलिङ्गं नोपलभ्यते ; तथापि पूर्ववाक्ये द्युसम्बन्धितया परम-

* श्रुतप्रकाशिका *

तमस्य रजसः पराके" इति निवासशब्दात् "तदक्षरे परमे व्योमन्' 'विश्वं पुराणं तमसः परस्तात्" इति तमसः परस्य स्थानस्य स्थानिनो ब्रह्मणश्च व्यतिरेकनिर्देशात्, तस्य तमसः परत्वविशेषणेन पुरुषसूक्तप्रत्यभिज्ञानाच्च दिवीत्यप्राकृतं स्थानमुच्यते । त्रिपात्त्वञ्च अप्राकृतैर्भोग्यभोगोपकरणभोगस्थानविशेषैर्वा भूषणास्त्रादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरैश्च नित्यसिद्धैर्मुक्तैश्चात्मभिर्वा सम्भवति । एवञ्चास्य दिवीति व्यतिरेकनिर्देशोऽमृतत्वं च मुख्यं भवतीति ॥ .... .... .... .... .... ....

एवं पूर्ववाक्ये द्युसम्बन्धिनश्चरणाभिधाने सति कथमस्य वाक्यस्य परमात्मपरत्वम् ? । एकविषयत्वादिति चेत् ; कथमेकविषयत्वमित्यत्राह ( एतदुक्तमिति ) ज्योतिश्शब्दश्रुत्यपेक्षया स्ववाक्यस्थं पूर्ववाक्यप्रत्यभिज्ञापकं द्युसम्बन्धित्वलिङ्गं प्रकरणञ्च दुर्बलमिति चेन्न, अनुवादलक्षणयच्छब्दसमभिव्याहारेण

* भावप्रकाशिका *

शब्दप्रयोगाभावेन स्थानविशेषवाचित्वं स्पष्टमिति भावः । ( निवासशब्दादिति ) 'क्षि निवासगत्योः' इति धातोस्तौदादिकाच्छतरि छान्दसे गुणे निष्पन्नत्वात् क्षयन्तमित्यस्य तदर्थलाभः । ( व्यतिरेकनिर्देशादिति ) सप्तम्या सप्त्यन्तविहितास्तातिप्रत्ययेन चेत्यर्थः ॥ .... .... .... .... .... ....

( लिङ्गं प्रकरणञ्च दुर्बलमिति चेदिति ) यद्यपि 'आकाशस्तल्लिङ्गात्' इत्यादौ अभ्यस्ताकाशश्रुत्यपेक्षया लिङ्गप्राबल्यमुक्तम् । तथापि नेदं द्युसम्बन्धित्वं तादृशमनन्यथासिद्धं ब्रह्मत्वसाधकं लिङ्गम्, अपितु प्रकृतसर्वभूतचरणभेदसम्भावकमात्रम्, अत एव प्रत्यभिज्ञापकमित्युक्तमिति ध्येयम् । ( अनुवादलक्षणयच्छब्दसमभिव्याहारेणेति ) यच्छब्दसम्बन्धेन द्युसम्बन्धिज्योतिषोऽयमनुवादः प्रतीयते, स च प्राप्तिमपेक्षते; प्राप्तिश्च द्युसम्बन्धित्वेन, तच्च सर्वभूतपादस्य ब्रह्मण इति.

१ छां. ३-१३-७ ॥

**पुरुषस्य निर्देशादिदमपि द्युसम्बन्धिज्योतिस्स एवेति प्रत्यभिज्ञायत इति । कौक्षेयज्योतिषैक्योपदेशश्च फलाय तदात्मकत्वानुसन्धानविधिरिति न कश्चिद्दोषः ।**

* श्रुतप्रकाशिका *

अन्यसापेक्षताज्ञापकेन ज्योतिश्शब्दस्य दुर्बलत्वावगमात् प्रथमप्रतिपन्नयच्छब्द-श्रुत्या सहकृतस्य द्युसम्बन्धित्वलिङ्गस्य प्रबलत्वाच्च । इदं ज्योतिश्शब्दस्यादित्या-द्यसाधारण्याभ्युपगमेनोक्तम् । तच्च न, अवभासकत्वनिमित्तकत्वाज्ज्योतिश्शब्दस्य, 'नारायणपरो ज्योति' रित्यादिप्रयोगाच्च । उक्तं पूर्वपक्षहेतुं परिहरति (कौक्षेयेति) (फलायेति) चक्षुष्यः श्रुतो भवतीत्युक्तफलायेत्यर्थः । (तदात्मकत्वेति) "तदेत-द्दृष्टञ्च श्रुतं चेत्युपासीत" इत्यत्र तदेतच्छब्दौ तदात्मकज्योतिर्विषयौ, तदात्मक-त्वेन प्रकृतत्वादिति भावः । "अन्नादो वसुदानः" "चतुर्विधा भजन्ते माम्" "सकलफलप्रदो हि विष्णुः" इत्यादिश्रुतिस्मृतिवशात्सकलफलप्रदस्य परमात्मन-श्चक्षुष्यत्वादिविद्यानुगुणफलहेतुत्वमत्र युक्तमित्यभिप्रायेणाह (न कश्चिद्दोष

ॐ भावप्रकाशिका ॐ

तदेव बुद्धौ विपरिवर्तमानं यच्छब्देन ग्रहणार्हं न प्रसिद्धं ज्योतिः, तस्य द्युस-म्बन्धितया बुद्धावपि परिवृत्तेरिति भावः (प्रथमप्रतिपन्नयच्छब्दश्रुत्येति) न च यच्छब्द एव ज्योतिश्शब्दस्वारस्याबाधाय प्रकृतपरामर्शित्वं परित्यज्य ज्योतिश्शब्दोपस्थापितप्रसिद्धज्योतिःपरामर्शी स्यादिति वाच्यम्; सर्वनाम्नां समानाधिकृतशब्दस्वारस्यमतिलङ्घ्यापि प्रकृतपरामर्शित्वस्य व्युत्पत्तिसिद्धतया यच्छब्दानुसारेणैव ज्योतिश्शब्दस्य नेयत्वात्. अत एव प्रयुक्तिलक्षणे 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इतिश्रुतावामिक्षापद-वाच्यं पयसोऽर्थान्तरं दधिपयस्संसर्गजन्यद्रव्यमभ्युपेयम् । पय आमिक्षेति व्यप-देशभेदादिति तस्यैव द्रव्यान्तरस्य कठिनस्य मधुराम्लरसस्य वैश्वदेवयागद्रव्यत्वे आमिक्षापदसमानाधिकृततत्पदस्यापि द्रव्यपरत्वे च प्राप्ते सर्वनाम्नः प्रकृतपरामर्शि-त्वस्वाभाव्यात्, तत्पदमानयनक्रियां प्रति प्रधानकर्मतया दध्यानयनाधिकरणत्वेन निर्दिष्टं पयः परामृशतीति पय एव यागद्रव्यम्. तत्पदे स्त्रीलिङ्गमामिक्षापदसा-मानाधिकरण्यकृतम्, आमिक्षापदन्तु न संसृष्टद्रव्यान्तरविधायकम्; किन्तु

कौन्तेयज्योतिषश्च तदात्मकत्वं भगवता स्वयमेवोक्तम् [1]"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः" इति ॥

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पण-निगमात्तथा हि दर्शनम् ॥ २६ ॥**

पूर्वस्मिन्वाक्ये [2]"गायत्री वा इदं सर्वम्" इति गायत्र्याख्यं छन्दोऽभिधाय [3]" तदेतदृचाभ्यनूक्तम्'

* श्रुतप्रकाशिका *

इति ) तदात्मकत्वे प्रमाणं दर्शयति ( कौन्तेयज्योतिषश्चेति ) वेदनस्य यथार्थ-विषयत्वे सम्भवति अतस्मिंस्तद्दृष्टिरूपताश्रयणं परोक्तमयुक्तमिति भावः ॥ ....

द्युसम्बन्धिविषयस्य पूर्ववाक्यस्य परमात्मपरत्वमाक्षिप्य समाधत्ते— ॥ छन्दोऽभिधानान्नेति चेन्न तथा चेतोर्पणनिगमात्तथा हि दर्शनम् ॥ सूत्रे शङ्को-पन्यासपरमंशं व्याचष्टे ( पूर्वस्मिन्निति ) परिहारखण्डस्थं नेतिपदं सपूरकमादत्ते

ꣳ भावप्रकाशिका ꣳ

अस्मादेव वैदिकव्यवहारात् घनीभूतपयोमात्रवाचकम् । न तज्जन्यद्रव्यान्तरवाच-कम् । अम्लरसोपि न यागद्रव्यगतः, किन्तु तत्संस्कारकद्रव्यगत इति पयोरूपा-मिक्षाप्रयुक्तमेवेदं दध्यानयनम्, न वाजिनप्रयुक्तमपीति निर्णीतम् । चतुर्थे 'दधि-मधुघृतं धानाः करम्भा उदकं तण्डुलाः तत्संसृष्टं प्राजापत्यम्' इति चित्रायागविधौ दध्यादिसप्तद्रव्यमेलनरूपसंसृष्टद्रव्यक एको यागः तत्पदञ्च संसृष्टपरमिति प्राप्ते तत्पदं प्रकृतपरामर्शित्वस्वाभाव्यादसंसृष्टसप्तद्रव्यादिपरम्, नतु संसृष्टैकद्रव्यपरमिति दध्या-दिसप्तद्रव्यकास्सप्तयागाः सप्तस्वपि द्रव्येषु , तदितिनपुंसकैकवचननिर्देशो 'नपुं-सकमनपुंसकेन' इत्यनुशासनादुपपादनीयम् । संसृष्टपदन्तु यागभेदेपि एकदेवत्यतया सान्नाय्यवद्दध्यादीनां सहप्रक्षेपे संसर्गसत्त्वात्तदनुवादकं योज्यमिति निर्णीतं टुप्टीकायामष्टमद्वादशाध्याययोः ॥ .... .... .... ....

"गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै सा गायत्री वाग्वा इदं सर्वं भूतं गायति च त्रायते च या वै सा गायत्री यं वा व सा येयं पृथिवी अस्यां

१ गीता. १५-१-४ ॥ २ छां. ३-१२-१ ॥ ३ छां. ३-१२ ५ ॥

इत्युदाहृतायाः "तावानस्य महिमा' इत्यस्या ऋचोऽपि छन्दोविषयत्वान्नात्र परमपुरुषाभिधानमिति चेत्—तन्न ; तथा चेतोऽर्पणनिगमात्—न गायत्रीशब्देन छन्दोमात्रमिहाभिधीयते , छन्दोमात्रस्य सर्वात्मकत्वा·

* श्रुतप्रकाशिका *

(तन्नेति) छन्दोऽभिधानं नेत्यर्थः । तथा चेतोऽर्पणनिगमादिति स्वाभिमतनिर्वाहं वदता सूत्रकारेणाभिप्रेतां छन्दोमात्रपरत्वानुपपत्तिमाह ( न गायत्रीति ) कुत इत्यत्राह ( छन्दोमात्रस्येति ) पूर्वसूत्रे 'चरणाभिधाना' दिति स्वपक्षसाधकतया कण्ठोक्तस्य हेतोः पूर्वपक्षेऽनुपपत्तिस्सूत्रकाराभिप्रेतेति भावः । ननु गायत्र्यां ब्रह्मदृष्टिरिति दृष्टिविशेषणभूतब्रह्मणश्चरणाभिधानोपपत्तिरिति चेन्न, ' मनो ब्रह्मे' तिवद्दृष्टिविशेषणभूतब्रह्मवाचिपदसामानाधिकरण्याभावात् दृष्टिविधानाभ्युपगमेऽपि ' तावान् '

* भावप्रकाशिका *

हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते । या वै सा पृथिवी इयं वा व सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । यद्वै व तत्पुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिताः । एतदेव नातिशीयन्ते । सैषा चतुष्पदा षड्विधा गायत्री । तदेतदृचाभ्यनूक्तम् । तावानस्य महिमा । ततो ज्यायांश्च पुरुषः । पादोस्य विश्वाभूतानि । त्रिपादस्यामृतं दिवीति । यद्वैतद्ब्रह्मेति इदं वा व तद्योऽयं बहिर्धा पुरुषादाकाशः । यो वै स बहिर्धा पुरुषादाकाशोऽयं वा व सः योऽयमन्तःपुरुष आकाशः । यो वै सोऽन्तःपुरुष आकाशोऽयं वा व सः योऽयमन्तर्हृदय आकाशः, तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते । य एवं वेद य एवं वेद" । अनन्तरम् "तस्य ह वा एतस्य पञ्च देवसुषयः" इत्यादिना " य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद " इत्यन्तेन द्वारपोपासनविधानानन्तरं श्रूयते "अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु अनुत्तमेषूत्तमेषु लोकेष्विदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतच्छरीरे संस्पर्शेनोष्णिमानं विजानाति । तस्यैषा श्रुतिः । यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुमिवाग्नेरिव ज्वलत उपशृणोति

१ छां ३-१२-६ ॥

नुपपत्तेः, अपि तु ब्रह्मण्येव गायत्रीचेतोऽर्पणमिह निगम्यते। ब्रह्मणि गायत्रीसादृश्यानुसन्धानं फलायो-

* श्रुतप्रकाशिका *

इतिमन्त्रस्य दृष्टिविशेषणब्रह्मपरत्वेनोत्तरवाक्ये ब्रह्मप्रत्यभिज्ञानोपपत्तेस्तदभ्युपगमवैयर्थ्यात्, अतो गायत्र्यां ब्रह्मदृष्टिश्चोदयितुरनभिमता । यादवप्रकाशैस्तु "गायत्री वा' इत्यादिब्राह्मणोक्तसर्वभूतवाक्पृथिवीशरीरहृदयप्राणात्मकत्वाभिधानान्न छन्दोमात्रमिति व्याख्यातम्. ततोऽपीदमुचितम्, अश्रुतं हेतुं कल्पयित्वा तदनुपपत्त्यां छन्दःपरत्वप्रतिक्षेपादपि पूर्वसूत्रश्रुतहेतोरेवानुपपत्त्या तत्प्रतिक्षेपोपपत्तेः। स्ववाक्यस्थहेतुविवक्षा न्याय्येति चेत्, सत्यम्, स तु हेतुरनन्तरसूत्रे विवक्षितः। मन्त्रवर्णोक्तपादवत्त्वं तत्र विवक्षितमिति चेन्न, स्वपक्षसाधनाय तस्याद्यसूत्रे कण्ठोक्तत्वाच्छङ्कापरिहाराय तन्नेत्यत्र तस्यैवाभिप्रेतत्वाश्रयणोपपत्तेः। क्वचिदुक्तस्य ह्यन्यत्रोपजीव्यत्वं न्याय्यम्, अन्यत्रानुक्तस्य च क्वचिदुक्तिरपेक्षिता, सा चेत्सिध्यति, तदनुगुणो निर्वाहो न्याय्यः ॥ एवं छन्दःपरत्वेऽनुपपन्ने सति तस्य वाक्यस्य कोऽर्थ इत्यत्राह (अपि त्विति) चेतोऽर्पणशब्दं निगमशब्दं च विवृण्वन् कस्मिन् किमर्थमित्याकाङ्क्षां च पूरयति (ब्रह्मणीति) अनु-

❀ भावप्रकाशिका ❀

तदेतद्दृष्टं च श्रुतञ्चेत्युपासीत चक्षुष्यश्श्रुतो भवति। य एवं वेद य एवं वेदेति" इति श्रुतिक्रमः। (उत्तरवाक्य इति) 'अथ यदतः परो दिवो ज्योतिर्दीप्यते' इति वाक्येपि द्युसम्बन्धित्वेन दृष्टिविशेषणीभूतब्रह्मण एव प्रत्यभिज्ञोपपद्यत इति भावः। (अश्रुतं हेतुमिति) 'तावानस्य' इतिमन्त्रप्रतिपाद्यसर्वभूतचरणत्वस्यैव ब्राह्मणोक्तस्य सर्वभूतवागात्मकत्वस्य पूर्वसूत्रे अश्रुतत्वादिति भावः। (स्ववाक्यस्थहेतुविवक्षा न्याय्येति चेदिति) मन्त्रवर्णोक्तहेतुस्तु न गायत्रीवाक्योक्तः। अतो 'गायत्री वा इदं सर्वम्' इति गायत्रीस्वरूपनिर्देशकब्राह्मणवाक्योक्तभूतादिव्यपदेशविवक्षा आवश्यकीति भावः। (क्वचिदुक्तस्य ह्यन्यत्रेति) ज्योतिर्व्यावर्तनायोक्तस्य सर्वभूतचरणत्वस्य प्रसिद्धगायत्रीनिरासेपि तस्यैव हेतुतया 'छन्दोभिधानात्' इति सूत्रखण्डाभिप्रेतत्वमुचितम्। तथा पूर्वसूत्रानुक्तस्य ब्राह्मणोक्तसर्वभूताद्यात्मकत्वस्य 'भूतादिपादव्यपदेशोपपत्तेश्च' इत्यनेन कण्ठतः प्रतिपादनं मुचितम्, न तु

पदिश्यत इत्यर्थः । सम्भवति च ''पादोऽस्य सर्वा-भूतानि । त्रिपादस्यामृतं दिवि' इति चतुष्पदो ब्रह्मणः

* श्रुतप्रकाशिका *

सन्धानोपदेशशब्दाभ्यां चेतोऽर्पणनिगमशब्दौ विवृतौ। केनाकारेण सादृश्यमित्यत्राह ( सम्भवति चेति ) गायत्रीसादृश्यं चतुष्पात्त्वलक्षणम् . चतुष्पात्त्वमेवानुसन्धेयम् । नन्विह नानुसन्धेयत्वं फलं च श्रूयते न; 'पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद'' इति श्रवणात् । पूर्णत्वम् अपरिच्छिन्नत्वम् । अप्रवर्तित्वम् अचलत्वं स्थिरत्वम्. अनन्तस्थिरा च श्रीः मुक्तैश्वर्यम् । ननु हार्दाकाशविशिष्टपरमात्मोपासनफलं हि तच्छ्रूयते ''यद्वैतद्ब्रह्मेति इदं वा व तद्योऽयं बहिर्धा पुरुषादाकाशः। यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव सः योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशोऽयं वाव सः योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति''इति हि श्रूयते, अतो न गायत्रीसादृश्यानुसन्धानफलमिदमिति। उच्यते; स्वतोऽपरिच्छिन्नत्वेऽपि ब्रह्मणः परिच्छिन्नैः पदार्थैः चतुष्पात्त्वोपदेशस्योपासनार्थ-

* भावप्रकाशिका *

'ज्योतिश्चरणाभिधानात्' इतिसूत्रोक्तसर्वभूतचरणत्वस्यैव भूतादिपादव्यपदेशोपपत्तेश्चैवम्' इतिसूत्रेण कण्ठतः प्रतिपादनमुचितम् । पूर्वसूत्रकण्ठोक्तस्य पुनरुत्तरसूत्रे कण्ठोक्तेरनुचितत्वादिति भावः । ( सा चेत्सिध्यतीति ) अनुक्तस्योक्तिस्सिध्यति चेदित्यर्थः । ( चेतोर्पणनिगमशब्दौ विवृताविति ) एवं हि वदता चेतोर्पणनिगमादिति सूत्रपाठो नास्मत्सम्प्रदायसिद्ध इति सूचितम् । न च निगमशब्दस्य गोचरादिसूत्रेण करणाधिकरणयोस्संज्ञायां घजन्ततया निपातितत्वात् , तस्य च करणार्थत्वे वेदे रूढत्वादधिकरणार्थत्वे च 'स्थानीयं निगम' इति स्थानीये रूढत्वात् कथं निगमशब्दस्योपदेशार्थकत्वम् ? रूढ्यर्थत्वान्निपातनस्य रूढेर्योगापहारादिति वाच्यम्; रूढ्यर्थत्वस्यात्र बाधितत्वेन योगार्थोपस्थितेस्सम्भवात् 'गृहवृदृनिश्चिगमश्चे'ति गमेरकर्तरि कारके भावे च अपोविहितत्वेन भावसाधनाप्प्रत्ययान्तनिगमशब्दस्योपदेशार्थकत्वसम्भवात् । ( चतुष्पात्त्वलक्षणमिति ) चतुष्पात्त्वरूपमित्यर्थः । ( य एवं वेदेति श्रवणादिति ) ततश्च पूर्णत्वाप्रवर्तितत्वयो-

१ छां ३-१२-६ ॥

**चतुष्पदा गायत्र्या च सादृश्यम्। चतुष्पदा च गायत्री क्वचिद्दृश्यते। तद्यथा "इन्द्रश्शचीपतिः। वलेन पीडितः।**

* श्रुतप्रकाशिका *

त्वाभावे वैयर्थ्यात् प्रकरणे तस्य फलान्तराविधानाच्च गायत्रीसादृश्यरूपस्य चतुष्पात्त्वस्यानुसन्धेयता प्रतीयते, तत्र भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वेऽभिहिते ब्रह्मणोऽपूर्णत्वास्थिरत्वशङ्काव्यावृत्त्यर्थं पूर्णत्वाप्रवर्तित्वगुणकतयैव चतुष्पाद्ब्रह्म उपासनं विधीयत इति। " त्रिपदा गायत्री" इति हि श्रुतिः, तत्कथं चतुष्पात्त्वमित्यत्राह ( चतुष्पदा चेति ) गायत्रीशब्दस्य मुख्यार्थाविवक्षा कथमिति

७ भावप्रकाशिका ७

रेवानुसन्धेयत्वं फलत्वं चेत्यर्थः ( प्रकरणे तस्य फलान्तराविधानाच्चेति ) चतुष्पात्त्वोपदेशस्योपासनव्यतिरिक्तफलाभावादित्यर्थः । ( चतुष्पाद्ब्रह्म उपासनं विधीयत इति ) ननु पूर्णत्वचतुष्पात्त्वयोर्विरुद्धत्वात् कथं तयोरेकविद्यासमावेशः, अत एव 'सम्भृतिद्युव्याप्त्यपि चातः' इत्यधिकरणे द्युव्याप्तत्वादीनामल्पायतनविद्यासु न समावेश इत्युक्तमिति चेत्. सत्यम्; चतुष्पात्त्वावच्छिन्नब्रह्मणि पूर्णत्वासम्भवेपि तदुपलक्षितस्वरूपे तत्सम्भवात्। अत एवाल्पायतनविद्यास्वपि स्वरूपतोऽनन्तत्वमुपसंहर्तव्यमित्युक्तमिति द्रष्टव्यम्। भाष्ये—चतुष्पदा गायत्री क्वचिद्दृश्यत इति । न च सर्वत्र गायत्रीप्रसिद्धं रूपं विहाय काचित्केन रूपेण सादृश्यग्रहणं न युक्तम्। नहि सर्वत्र गवां चतुष्पात्त्वेपि क्वचिदौत्पत्तिकी गौर्द्विपादुत्पन्ना दृष्टेति वराहं गावोऽनुधावन्तीत्यत्र वायसे द्विपात्त्वेनौत्पत्तिकं गोसादृश्यं भवतीति वाच्यम्; सम्भवति प्रसिद्धार्थग्रहणे अप्रसिद्धार्थग्रहणमयुक्तम्, इह तु प्रसिद्धगायत्रीसादृश्यग्रहणे चतुष्पात्त्वासम्भवादगत्या अप्रसिद्धाया एव गायत्र्याः ग्राह्यत्वात्। न च परभाष्यरीत्या यथा गायत्री षडक्षरैः पादैश्चतुष्पदा एवं ब्रह्मापि मन्त्रवर्णोक्तरीत्या चतुष्पादिति सादृश्याद्ब्रह्मणि गायत्रीशब्दो गौणोऽस्त्विति वाच्यम्; 'तेषामृग्यत्रार्थवशेन पादव्यवस्था' इत्यर्थवशेन नियमितां पादव्यवस्थामपहाय केवलमक्षरगणनया पादकल्पनायोगात्. अन्यथा बृहस्पतिसवे प्राकृतेष्वेव नानाच्छन्दस्सु अक्षरगणनया अक्षरलोपेन वा गायत्रीत्वसम्पादनसम्भवेन प्राकृतानामृचामबाधस्सम्भवतीति पूर्वपक्षं कृत्वा अष्टाक्षरैस्त्रिभिः पादैर्युक्ताया एव

दुश्च्यवनो वृषा। समित्सुसासहिः" इति । तथा ह्यन्यत्रापि सादृश्याच्छन्दोऽभिधायी शब्दोऽर्थान्तरे प्रयुज्यमानो दृश्यते । यथा संवर्गविद्यायाम् [1] "ते वा

* श्रुतप्रकाशिका *

शङ्कायां 'तथा हि दर्शनम्' इतिसूत्रखण्डं व्याचष्टे (तथा ह्यन्यत्रापीत्यादिना) वाय्वग्निसूर्यचन्द्रसलिलानि प्राणवाक्चक्षुःश्रोत्रमनांसि च दशसङ्ख्यत्वाद्विराट्, सदृशे सदृशान्तरवाचिशब्दप्रयोगः श्रुतिसमाधिरित्यर्थः । अन्नात्-अन्नञ्च तदत्ति चेत्यन्नात् । ननु ज्योतिर्वाक्ये परमात्मलिङ्गाभावादाद्यं सूत्रं तस्य परमात्मपरत्व-समर्थनार्थमिति सप्रयोजनम्, द्वितीयन्तु किमर्थम्? छन्दोमात्रप्रसिद्धस्यापि गायत्री-

* भावप्रकाशिका *

गायत्रीत्वात् 'गायत्रमेतदहर्भवति' इतिवचनबलान्नानाच्छन्दांस्यपहाय मुख्यगा-यत्र्यैव ग्राह्या इति पूर्वतन्त्रे नावमिकाधिकरणे निर्णीतम्, तद्विरोधापत्तेः । न च गायत्रीशब्दो गायत्र्यनुगतब्रह्मलक्षक इति मार्गान्तरस्यापि परभाष्ये उप-न्यस्तत्वात्स एव मार्गस्समाश्रियतामिति वाच्यम्, तथा हि, सति गायत्रीशब्देन गायत्र्यवच्छिन्नब्रह्मण एव लक्ष्यत्वापातात् । न चेष्टापत्तिः, तत्र भूतादिपादव्यप-देशस्यानुपपत्तेरिति द्रष्टव्यम् । भाष्ये--ते वा एते इति । "ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्षु चान्नमेव दशकृतं सैषा विराडन्नात्" इति श्रुतिः । अस्याः श्रुतेरयमर्थः— संवर्गविद्यायामधिदैवतम् अग्निसूर्यचन्द्रसलि-लानि वायौ लीयन्ते । अध्यात्मञ्च— वाक्चक्षुःश्रोत्रमनांसि प्राणे संश्रियन्ते इत्युक्तं 'यदा वाग्निरुद्वायती'त्यादिना। तत्राधिदैवतं वायुना सह पञ्चान्ये अध्यात्मं तेभ्योऽन्ये प्राणेन सह पञ्चदशसन्तस्तत्कृतम्. मिलितानां दशसङ्ख्याश्रयत्वात् कृतं भवति. कृतनामा कश्चिदयो द्यूतशास्त्रे प्रसिद्धः । स च चतुरङ्को दशा-त्मकः । कथं चतुरङ्कस्य दशात्मकत्वम्? इत्थम्; चतुरङ्के अये त्रिद्व्येकाङ्कानां त्रयाणामप्यन्तर्भावात् । ततश्च शतं सहस्रेषु सम्भवतीति न्यायेन एकस्मिन्नेव चतुर-ङ्काये चतुरङ्कव्यङ्कत्र्यङ्कैकाङ्कायानामन्तर्भावादङ्कानां दशत्वसङ्ख्या सम्पद्यते. ततश्च संवर्गविद्यान्तर्गतपदार्थानां दशसङ्ख्याश्रयत्वेन कृतनामकायसादृश्यात्तत्कृतमित्यु-

१ छां ३-१८ ॥

**एते पञ्चान्ये पञ्चान्ये दश सम्पद्यन्ते' इत्यारभ्य 'सैषा विराडन्नात्' इत्युच्यते ॥ २६ ॥**

**इतश्च गायत्रीशब्देन ब्रह्मैवाभिधीयते—**

* श्रुतप्रकाशिका *

शब्दस्य परमात्मासाधारणसर्वात्मकत्वलिङ्गबलात् परमात्मविषयत्वं ह्याकाशाधिकरणनयेन सिद्धम् । उच्यते; गायत्रीशब्दस्य स्वार्थप्रहाणेन ब्रह्मपरत्वे चतुष्पात्त्वमविवक्षितं स्यात्, तच्चोपदिश्यते । गायत्र्यवच्छिन्नब्रह्मपरत्वे सर्वात्मकत्वमनुपपन्नम्, गायत्र्यवच्छिन्नब्रह्मणस्सर्वात्मत्वोक्तिः स्तुतिरिति चेत् ततोऽपि गायत्र्या एव स्तुतिः सर्वात्मकत्वोक्तिरिति वरमित्यधिकशङ्कापरिहारपरं सूत्रम् । गायत्रीशब्दस्य तत्सदृशब्रह्मपरत्वाच्चतुष्पात्त्वसर्वात्मकत्वोपपत्तिरिति परिहारः ॥ ....

उपक्रमस्थगायत्रीशब्दानुरोधेन मन्त्रगतसर्वात्मकत्वमस्वारस्येन निर्वाह्यम्, न तु सर्वात्मकत्वानुरोधेनोपक्रमस्थगायत्रीपदास्वारस्यं न्याय्यमिति शङ्कायामुपक्रमएव

ы भावप्रकाशिका ы

च्यते, तस्मात्सर्वासु दिक्षु चान्नमेव दशकृतम्, उक्ताद्धेतोस्सर्वासु दिक्षु वर्तमानमग्निवाय्वादिदशकं कृतनामकायस्थानीयमन्नमेव भवति। तस्यान्नत्वे हेतुमाह—सैषा विराडिति । दशाक्षरा विराट् 'विराडन्न'मिति श्रुतेः । दशसङ्ख्यया विराट्त्वं विराट्त्वादन्नमित्यर्थः । विधेयाभिप्रायः स्त्रीलिङ्गनिर्देशः, विराट्त्वेनान्नभूतानामेवैषां कृतनामकायत्वेनान्नादिकमप्यस्ति । कृतसंज्ञके ह्यये दशत्वसङ्ख्याया अन्तर्भूतत्वात् दशसङ्ख्याया विराट्त्वेनान्नत्वादन्नं कृतेऽन्तर्भूतम्, अत उपचारात् कृतमन्नादीत्युच्यते, अत अन्नादित्वेन वाय्वादय उपास्या इति परैर्वर्णितः । आचार्यैस्तु— अन्नादीतिपाठमनादृत्य अन्नादितिपाठमाश्रित्यानेनैव पदेन विराट्त्वकृतत्वायत्तान्नत्वान्नादित्वयोर्लाभमभिप्रेत्य अन्नं च तदत्ति चेति व्याख्यातम् । ततोपि गायत्र्या एवेति लक्ष्यार्थस्तुतिपरत्वकल्पनापेक्षया मुख्यार्थस्तुतिपरत्वस्यैव युक्तत्वादिति भावः । ( तत्सदृशब्रह्मपरत्वादिति ) ततश्च गायत्रीपदप्रतिपन्नसादृश्यसिद्ध्यर्थतया सैषा चतुष्पदेति ब्राह्मणप्रतिपाद्यचतुष्पात्त्वं विवक्षितमित्यर्थः ॥ .... .... .... .... ....

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २७ ॥

भूतपृथिवीशरीरहृदयानि निर्दिश्य "सैषा चतुष्पदा' इति व्यपदेशो ब्रह्मण्येव गायत्रीशब्दाभिधेये उपपद्यते ॥ २७ ॥

* श्रुतप्रकाशिका *

गायत्रीपरत्वे स्वारस्यहानिरुच्यते—॥ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ पूर्वस्मिन्सूत्रे 'पादोऽस्ये' तिमन्त्रोक्तसर्वात्मकत्वानुपपत्तिरुक्ता, अत्र तु 'गायत्री वा' इत्यादिब्राह्मणोक्तचतुष्पात्त्वानुपपत्तिरुच्यते। भूतम् प्राणिवर्गः। पृथिवी अयं लोकः, कर्मार्जनभोगस्थानम्, तदुपकरणं शरीरम्. हृदयम् आत्मनः स्थित्यनुगुणः प्रदेशविशेषः, एवमुपक्रमस्यैव परमात्मपरत्वं दर्शितम्।— यादवप्रकाशैस्त्विदं सूत्रं पादोऽस्येतिमन्त्रवर्णोक्तभूतादिपादानुपपत्त्या ब्रह्मप्रतिपादनसमर्थनपरं व्याख्यातम्। 'गायत्री वा इदं सर्वं' मित्यादिब्राह्मणं न चतुष्पात्त्वपरम्, किन्तु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणरूपविधाषट्कपरम्। 'सैषा चतुष्पदा षड्विधा' इतिवाक्यञ्च षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरम्। चतुष्पात्त्वं च पादोऽस्येतिमन्त्रवर्णप्रतिपाद्यम्, तत्र चेतनाचेतनरूपनिखिलविकारात्मा प्रथमः पादः। त्रिपादस्यामृतं दिवीति वाङ्मयप्राणमयमनोमयात्मानस्त्रयः पादा उच्यन्ते इति प्रतिपादितम्। तदनुपपन्नम्. कथम्? उच्यते; तत्र मन्त्रवर्णोक्तचतुष्पात्त्वपरत्वादपि ब्राह्मणोक्तार्थविषयत्वोपपत्तिः पूर्वमेव दर्शिता। किञ्च प्राथमिकगायत्रीवाक्यानुरोधेन पश्चादुदाहृतमन्त्रवर्णो नेय इति शङ्का तावदवतरति, सा च मन्त्रवर्णोक्तार्थस्य हेतुतयोपन्यासेऽप्यवतिष्ठते। उपक्रमस्थगायत्रीवाक्य एव परमात्मसाधकहेतुप्रदर्शनेन तु निवर्त्तते, स तु हेतुस्सूत्रे नेत्यनेनाभिप्रेत इति चेत्. न शङ्कायाः परिहारस्य च उत्सूत्रत्वादपि शङ्कामात्रस्य

* भावप्रकाशिका *

( यादवप्रकाशैस्त्वित्यादि ) ननु 'गायत्री वा इदं सर्वं भूतम्' इत्यादिब्राह्मणस्य चतुष्पात्त्वपरत्वाभावे 'सैषा चतुष्पदा षड्विधा' इति चतुष्पात्त्वषाड्विध्ययोरपि निगमनं नोपपद्यतेत्याशङ्क्य षाड्विध्यांश एव निगमनम्, चतुष्पात्त्वांशे तु विधानमित्याह ( सैषा चतुष्पदा षड्विधेतिवाक्यञ्चेति ) ( मन्त्रवर्णप्रतिपाद्यमिति )

---

१ छां. ३-१२-५ ॥

* श्रुतप्रकाशिका *

उत्सूत्रस्य शब्दादेव परिहारसिद्ध्यनुगुणनिर्वाहस्य न्याय्यत्वात् 'गायत्री वा इदं सर्व'मित्यादिवाक्यस्य षाड्विध्यपरत्वमप्ययुक्तम्, 'सैषा चतुष्पदा षड्विधा'इति निगमनवाक्यस्य स्वरसतश्चतुष्पात्त्वषाड्विध्यनिगमनपरत्वप्रतीतेः। ननु सर्वभूतवाक्पृथिवीशरीरहृदयप्राणाख्यपदार्थषट्कप्रतिपादनात्स्वारस्यभङ्गेनापि षाड्विध्यनिगमनपरत्वमास्थेयमिति चेन्न, वाक्प्राणयोर्गानत्राणादिवदन्यार्थमुक्ततया भूतपृथिव्यादिवत् प्राधान्यतः प्रतिपाद्यत्वाभावेन पदार्थषट्कासिद्धेः । ब्रह्मणो गानत्राणाभ्यां गायत्रीशब्दवाच्यत्वोपपादनाय वाक् प्रस्तुता, शरीरस्य प्राणप्रतिष्ठात्वोपपादनाय प्राणप्रसङ्गः । तथा हि ' गायत्री वा इदं सर्वं भूतम्' इति गायत्रीशब्दः चतुष्पाद्ब्रह्मपरः । सर्वभूतशब्द आत्मपरः । आत्मवर्गस्य तत्पादत्वं सामानाधिकरण्येनोक्तम् . तस्यैव ब्रह्मणो गानत्राणादिभिः षाड्विध्यञ्च विवक्षुः श्रुतिर्गानत्राणोपपादनाय वाग्रूपत्वमाह– वाग्वै गायत्रीति । गायत्रीशब्दवाच्यं चतुष्पाद्ब्रह्म वाग्रूपविशिष्टमित्यर्थः । " रसोऽहमप्सु कौन्तेय" इत्यारभ्योच्यते "शब्दः खे पौरुषं नृषु" इति, तथा भगवत्पराशरवचनं " शब्दमूर्तिधरस्यैतद्रूपं विष्णोर्महात्मनः" इति । ततः किं विवक्षितषाड्विध्यस्येत्यत्राह– वाग्वा इदं सर्वं भूतं गायति च त्रायते चेति । वाग्विशिष्टं परं ब्रह्म सर्वं भूतं गायति, अभिधत्ते हिताहितविधिनिषेधमुखेन त्रायते चेत्यर्थः । एवमेकः पादो गानत्राणरूपविधाद्वयञ्चोक्तम् । तदनुवादपूर्वकं द्वितीयं पादं सामानाधिकरण्येनाह

ध भावप्रकाशिका ध

मन्त्रवर्णस्तद्विवरणरूप इत्यर्थः । ( वाक्प्राणयोर्गानत्राणादिवदिति ) अस्मन्मते विधात्वेनाभिमतानां गानत्राणसर्वभूतप्रतिष्ठात्वतदनतिवर्त्यत्वप्राणप्रतिष्ठात्वतदनतिवर्त्यत्वानां षण्णां प्राधान्यतः प्रतिपाद्यत्वाभावेन विधात्वमनभ्युपगच्छतः तव मते 'गायत्री वा इदं सर्वं भूतं या वै सा गायत्री इयं वा व सा येयं पृथिवी या वै सा पृथिवी इदं वा व तद्यदिदमस्मिन् पुरुषे शरीरं यद्वै तत्पुरुषे शरीरमिदं वा व तद्यदिदमन्तःपुरुषे हृदयम्' इति भूतपृथिवीशरीरहृदयनां गायत्र्यादिभेदेनानन्यार्थतया प्राधान्येन निर्देशवद्वाक्प्राणयोरपि प्राधान्येन निर्देशाभावान्न विधात्वं सम्भवतीति भावः । अन्यार्थत्वमेवोपपादयति ( ब्रह्मणो गानत्राणाभ्यामिति ) (षाड्विध्यञ्च विवक्षुरिति) चकाराद्गायत्रीशब्दवाच्यत्वञ्च समुच्चीयते।

* श्रुतप्रकाशिका *

या वै सा गायत्री इयं वा व सा येयं पृथिवीति । उक्ताकारविशिष्टप्रकृतधर्मिपरौ यत्तच्छब्दौ । या-सर्वभूतरूपैकपादा गायत्री, गायत्र्याख्यं ब्रह्म तदेव पृथिवीत्यर्थः । कथं पृथिव्या ब्रह्मात्मकत्वमित्यत्राह---अस्यां हीति । ब्रह्मात्मकत्वादेव हि सर्वभूतप्रतिष्ठात्वम्, न हि केवलपृथिव्याः सर्वभूतधारणे शक्तिरित्यर्थः। प्रतिष्ठात्वञ्च नियतमित्याह- एतामेव नातिशीयत इति । पृथिवीं भूतजातं नातिवर्त्तते, कर्मवश्यात्मनां नियमेन प्रतिष्ठात्वादशक्यातिक्रमणेत्यर्थः । पृथिवीमयब्रह्माण्डोदरे हि कर्तृभोक्तृवर्गः परिवर्तते, एवं द्वितीयः पादो भूतप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयं चोक्तम् । अथ तृतीयपादमाह- या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमिति । पुरुषशब्दः शरीरविशिष्टजीवपरः, पृथिवीरूपपादविशिष्टा या सा गायत्री, गायत्र्याख्यं ब्रह्म सा शरीरम्, शरीराख्यपादविशिष्टेत्यर्थः । भूतपृथिव्योर्गायत्रीसामानाधिकरण्येन निर्दिष्टतया पृथिवीशब्दस्य ब्रह्मपर्यन्तत्वेन तदुपस्थापनक्षमत्वादग्र्यप्रायन्यायेन अत्रापि पादान्तरस्य तत्सामानाधिकरण्येन निर्देष्टुं युक्तत्वाच्च । शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वाभ्याम् उपपादयति- अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति । चतुर्थं पादमाह- यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमिति । शरीराख्यपादविशिष्टं यद्गायत्र्याख्यं ब्रह्म तदेव हृदयमित्यर्थः । पूर्ववद्ब्रह्मात्मकत्वमुपपादयति---अस्मिन् हीमे प्राणाः प्रतिष्ठिताः एतदेव नातिशीयन्त इति । प्राणाः-प्राणापानादयः, इन्द्रियाणि वा । तेषां हृदयसम्बन्धिनाडीद्वारा हृदयप्रतिष्ठितत्त्वम् । प्राणशब्दस्य जीवपरत्वं केचिदाहुः । तदयुक्तम्, भूतप्राणशब्दयोरर्थवैषम्याभावेन तदभिमतषाड्विध्यासिद्धेः । भूतपृथिवीशरीरहृदयवाक्प्राणैर्हि ते षाड्विध्यं वदन्ति । एवं

छ भावप्रकाशिका छ

ननु शरीरशब्दस्य निष्कर्षकशब्दतया कथं गायत्रीसामानाधिकरण्येन निर्देश इत्याह ( भूतपृथिव्योर्गायत्रीसामानाधिकरण्येनेति ) ( प्राणशब्दस्य जीवपरत्वं केचिदाहुरिति ) भूतप्राणशब्दौ एकार्थौ. ततश्च पृथिवीशरीरहृदयानां भूतप्रतिष्ठात्वसाम्यादन्योन्याभेदव्यपदेश उपपद्यत इति मृषावादिन आहुरित्यर्थः । ( भूतप्राणशब्दयोरिति ) "अस्यां हीदं सर्वं भूतं प्रतिष्ठितम्' 'अस्मिन् हीमे

* श्रुतप्रकाशिका *

तृतीयचतुर्थौ पादौ प्राणप्रतिष्ठात्वतदनतिवर्त्यत्वरूपं विधाद्वयञ्चोक्तम् । एवमुक्तं चतुष्पात्त्वं षाड्विध्यं च निगमयति— सैषा चतुष्पदा षड्विधा गायत्रीति । नन्वेवं तर्हि ब्रह्मणः परिच्छिन्नत्वं स्यादिति शङ्कायामुक्तस्य महिम्न एतावत्त्व-प्रतिक्षेपिकामृचमुदाहरति—तदेतदिति । ब्रह्माभिप्रायेण नपुंसकत्वम् । तदेतत् चतुष्पात् षड्विधं च ब्रह्मेत्यर्थः । " स भूमिं विश्वतो वृत्वा" इत्युक्त्वा "एतावानस्य महिमा अतो ज्यायांश्च पुरुषः" इति पुरुषसूक्ते श्रूयते। इह च पृथिव्यां भूतशरीर-हृदयान्यतर्गतानि, अतस्तावानस्य महिमेत्यनेन पृथिवीतदन्तर्गतपदार्थैश्चतुष्पात्त्व-रूपमहिमानुवादः । तावत्त्वं प्रतिषेधति—अतो ज्यायानिति । पादोऽस्येति इहोक्तं पादचतुष्टयमेकपादस्थानीयम् अतोऽतिरिक्ता त्रिपाद्विभूतिः, तस्मादतो ज्यायानित्युपपन्नमित्यर्थः । एवमस्या ऋचः परिच्छिन्नत्वशङ्काव्युदासार्थत्वं युक्तम्, अनन्तरमपि 'तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद' इति पूर्णत्वादिगुणकतयोपासनविधानात् । नन्वेवं सति ब्राह्मणोक्तचतुष्पात्त्व-विषयत्वाभावेन ब्राह्मणस्य ऋचश्चैकार्थ्यं न सिध्येत्. न, उभयोर्ब्रह्मविषयत्वात्। यदीयमृगुक्तचतुष्पात्त्वविषया न भवति तर्हि किमर्थं तदुदाहरणम् ? परिच्छिन्नत्व-शङ्काव्युदासार्थमित्युक्तम्. तथा सत्येवार्थवत्त्वम्, न ह्युक्तमात्रज्ञापने प्रयोजनम्। न चेयमृक् पूर्वोक्तविवरणरूपा दृश्यते । किञ्च ऋचश्चतुष्पात्त्वान्तरपरत्वं परेषा-मप्यवर्जनीयम् , जाग्रदाद्यवस्थात्रयोपलक्षितं बाह्यशारीरहार्दरूपेण त्रेधा विभक्त-

❁ भावप्रकाशिका ❁

प्राणाः प्रतिष्ठिताः" इत्यनयोरित्यर्थः । ( षाड्विध्यं च निगमयतीति ) ननु 'सैषा चतुष्पदा' इति ब्रह्मणः प्रतिपादनं न सम्भवति 'टावृचि' इति ऋचि वाच्यायामेव पादान्ताट्टापो विधानादिति चेन्न ; ब्रह्मणि ऋगभेदारोपेण टाप्प्रत्य-योपपत्तेरिति भावः। ननु 'तावानस्य महिमा' इति सान्निततयोदाहृतो मन्त्रः पुरुष-सूक्तगतः । तत्रैतावच्छब्दः 'स भूमिं विश्वतो वृत्वा' इति प्रकृतभूमिमात्रपरः, स कथं मन्त्रश्चतुष्पात्वरूपमहिमानुवादी स्यादित्याशङ्क्याह ( स भूमिं विश्वतो वृत्वेति )। ( अन्तर्गतानीति ) ततश्च 'स भूमिं विश्वतो वृत्वा' इत्यनेनैव चतुष्पा-त्त्वमहिम्नः प्रतिपादनसम्भवात् , तत्रत्येन 'एतावानस्य' इत्यनेन तदनुवादस्सम्भव-तीति भावः । ( जाग्रदाद्यवस्थात्रयोपलक्षितं बाह्यशारीरहार्दरूपेणेति ) जाग्रदा-

* श्रुतप्रकाशिका *

कार्याकाशोपलक्षितं वा कारणस्वरूपं त्रिपादुच्यत इति तत्कृतयोजना, तत्र कथं सर्वभूतैर्जाग्रदाद्यवस्थात्रयत्रिविधाकाशोपलक्षितरूपेण चतुष्पात्त्वं भूतपृथिवीशरीरहृदयैश्चतुष्पात्त्वं चैकरूपं भवति। चतुष्पात्त्वं हि बहुविधं श्रूयते "चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः" इति। तथा "अग्निः पादो वायुः पाद आदित्यः पादः दिशः पादः" इति च। एवं ज्ञातमात्रज्ञापने प्रयोजनाभावात् पुरुषसूक्तप्रक्रियानुगुण्यादनन्तरवाक्यानुगुण्यात् ब्रह्मणो विविधचतुष्पात्त्वसम्भवाच्चतुष्पात्त्वभेदस्य परपक्षेऽप्यवर्जनीयत्वाच्च यथोक्त एवास्या ऋचोऽर्थः। अथ चतुर्थपादत्वेनोक्तहृदयस्थाकाशस्य महत्त्वं वक्तुं बाह्याकाशस्य ब्रह्मतुल्यत्वं सामानाधिकरण्येनाह— यद्वैतद्ब्रह्मेतीदं वाव तद्योयं बहिर्धा पुरुषादाकाशः" इति। आकाशः स्वकार्यव्यापित्वामूर्त्तत्वाचलत्वादिभिर्ब्रह्मतुल्य इत्यर्थः। "अयं वाव सः योऽयमन्तः पुरुष आकाशः अयं वाव स योऽयमन्तर्हृदय आकाशः" इति निर्देशो धर्मैक्याभिप्रायः, एवं हार्दाकाशमाहा-

❀ भावप्रकाशिका ❀

द्यवस्थसञ्चारभूमिबाह्यशरीरहार्दाकाशस्थितविश्वतैजसप्राज्ञरूपपादत्रयोपलक्षितमित्यर्थः। (कारणस्वरूपमिति) द्योतमाने आत्मस्वरूपेऽवस्थितमपरिच्छिन्नं परमार्थभूतमात्मस्वरूपं वेत्यर्थः। एवं हि वाचस्पतिना व्याख्यातम्; तत्प्रकारश्चास्माभिः पूर्वमेव प्रदर्शितः। (तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पाद इत्यादि) यद्यत्र 'वाक् पादः प्राणः पादः' इत्यादिना ब्रह्मप्रतीकस्य मनस एव पादाः कथ्यन्ते। 'अग्निः पादो वायुः पाद' इत्यादिना च ब्रह्मप्रतीकस्याकाशस्य पादाः कथ्यन्त इति मतम् तदा 'प्राचीदिक्कला प्रतीची दिक्कला दक्षिणा दिक्कला उदीची दिक्कला एष वै सोम्य चतुष्कलः पादो ब्रह्मणः' इतिसम्प्रतिपन्नमुदाहरणान्तरं द्रष्टव्यम्। अत्र च वक्तव्यं सर्वं बुद्ध्यर्थः पादवदित्यत्र स्पष्टयिष्यते (पुरुषसूक्तप्रक्रियानुगुण्यादिति) तावानितिमन्त्रस्य तत्र परिच्छेदकव्युदासकत्वदर्शनादिति भावः। (अनन्तरवाक्यानुगुण्यादिति) तदेतत्पूर्णमप्रवर्त्तीत्यनन्तरवाक्ये परिच्छिन्नत्वशङ्काव्युदासकत्वदर्शनेन तदानुगुण्याच्चेत्यर्थः। (हृदयस्थाकाशस्येति) हृदयस्य स्तुत्यर्थं हार्दाकाशस्य महत्त्वं वक्तुमित्यर्थः। ननु तदेतत्पूर्णमितिवाक्येऽव्यवहितत्वाद्धृदयमात्रमेव ब्रह्मोपासनं विधीयते, न तु गायत्र्याख्यस्य चतुष्पाद्ब्रह्मणस्तस्य

* श्रुतप्रकाशिका *

स्त्वेन हृदयं स्तुतं भवति. एवं चतुष्पदः षड्विधस्य ब्रह्मणः प्रपञ्चान्तर्वर्तित्वेन परिच्छिन्नासिरस्वरसज्ञान्यावृत्त्यर्थं पूर्वत्वाप्रवर्तितगुणकतयोपासनं मोक्षफलकं विधत्ते — तदेतदिति । तदेतत् चतुष्पात् षड्विधमित्यर्थः । नात्र हृदयमात्रे ब्रह्मोपासनविधिः, ससम्बन्धश्रवणात् । अथ ब्रह्मोपासनाङ्गत्वेन द्वारपोपासनं विधीयते — तस्य ह वा एतस्य हृदयस्येत्यादिना । तत्र च प्राणवृत्तिविशेषाप्यायितचक्षुराद्यनुग्राहका आदित्यादय उपास्याः । न च हृदयस्येत्युक्तत्वात् द्वारपोपासनं हृदयोपासनाङ्गमिति वाच्यम्, किन्तु प्रकृतचतुष्पाद्ब्रह्मोपासनाङ्गम् । हृदयस्येति निर्देशस्तु चतुर्थपादत्वेन हृदयस्याव्यवहितप्रकृतत्वान्नाडीद्वारा चक्षुरादीनां तत्सम्बन्धित्वाच्च कृतः, एवं गायत्रीविद्याप्रकृतस्य सकलफलप्रदस्य द्युसम्बन्धिनः परस्य ज्योतिष आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थं कौक्षेयज्योतीरूपत्वेनोपासनविधानाय "अथ यदतः परो दिवो ज्योतिः" इत्याद्यारभ्यते, एवं वाक्प्राणयोरन्यार्थमुदाहृतत्वान्निगमनवाक्यस्वारस्याच्च भूतपृथिवीशरीरहृदयान्येव पादाः, गानत्राणभूतप्रतिष्ठात्वतदनतिशयप्राणप्रतिष्ठात्वतदनतिशयाः षड्विधाः ननु 'सैषा' इत्यादिवाक्यस्य षाड्विध्यानुवादेन चतुष्पात्त्वविधानपरत्वे सति अस्य चतुष्पात्त्वोपदेशपरत्वं सिध्यति, ततश्च 'तदेतदृचाऽभ्यनूक्त' मिति घटकवाक्यस्वारस्यं भवेदिति चेत् । तदयुक्तम्; प्रथमश्रुतस्य ब्राह्मणवाक्यनिगमनस्य स्वारस्यभङ्गेन पाश्चात्यसन्दंशकवाक्यानुरोधानुपपत्तेः अन्यार्थतया प्रस्तुतयोर्वाक्प्राणयोर्भूतपृथिव्यादितुल्यतापरिकल्पनस्योपक्रमस्वारस्यविरुद्धत्वाच्च । ऋगुपन्यासस्य प्रयोजनं तन्त्रोपपत्तयश्च दर्शिताः । न चैकरूपमेव ब्रह्मणश्चतुष्पात्त्वमिति नियन्तुं शक्यम्, चतुष्पात्त्ववैविध्यस्यान्यत्रापि श्रुतत्वात् । किञ्च त्रिपाच्छब्दस्य निर्वाहश्च

* भावप्रकाशिका *

विच्छिन्नत्वात्, ज्योतिर्वाक्येन तस्य ब्रह्मत्वमित्याशयेनाह (नात्र हृदयमात्रे इति) (ससम्बन्धश्रवणादिति) हृदि ब्रह्मोपासीतेति हृदयान्तर्वर्तिब्रह्मोपासनाश्रवणादित्यर्थः । ननु 'तस्य ह वा एतस्य' इत्यादिविहितद्वारपोपासनेन ब्रह्मोपासनप्रकरणं विच्छिन्नमित्याशङ्क्य तस्याङ्गतया न व्यवधायकत्वमित्याह (अथ ब्रह्मोपासनाङ्गत्वेनेति) 'चक्षुष्यः श्रुतो भवति' इत्यस्यार्थमभिप्रयन्नाह (आभिरूप्यकीर्तिमत्त्वेति) (ज्योतीरूपत्वेनोपासनेति) ज्योतिश्शरीरकतयोपासनेत्यर्थः ।

* श्रुतप्रकाशिका *

रूपणीयः। तथा हि, मनोमयवाङ्मयप्राणमयास्त्रय ईश्वरव्यूहाः, तैस्त्रिप्रकार-वस्थितं ब्रह्म त्रिपादमृतं विवक्षितमित्युच्यते; तत्र तावत्प्रसिद्धमनोवाक्प्राणा-मचिद्विकारत्वान्नेश्वरव्यूहत्वममृतत्वं च सम्भवति। सप्तान्नब्राह्मणोक्तानां मनो-वाक्प्राणानुग्राहकानामग्न्यादित्यचन्द्राणां च कर्मवश्यत्वात् सृज्यत्वाच्च नेश्वरव्यू-हत्वममृतत्वं च युज्यते, "चन्द्रमा मनसो जातः। चक्षोस्सूर्योऽजायत। मुखादि-न्द्रश्चाग्निश्च" "भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च" "असौ योऽपक्षीयति असौ य आपूर्य" इति तेषां सृज्यत्वकर्मवश्यत्वे हि श्रूयेते। मनोवाक्प्राणशब्दवाच्यतयाऽभिमतानां सत्त्वतमोरजसां शक्तिरूपाणां प्रज्ञाशक्ति-वाक्च्छक्तिक्रियाशक्तिशब्दवाच्यानां द्युपृथिव्यप्छब्दवाच्यतयाऽभिमतानां स्थूलानां विकाराणां सत्त्वतमोरजसां चाधिष्ठातार ईश्वरांशास्त्रय ईश्वरव्यूहा इति चेत्. तैरपि त्रिपात्त्वं दुर्वचम्, वाङ्मयप्राणमययोर्मनोमयादुत्पत्त्यभ्युपगमेन तयाणां नित्यत्वायोगेन त्रिपादमृतमितिनिर्देशानुपपत्तेः। तेषां शक्तिरूपेणामृत-त्वमिति चेत्. शक्तिरूपेणामृतत्वं 'पादोऽस्य सर्वाभूतानि' इति पादत्वेनोक्तानां सर्वभूतानां सप्रकृतिकानामप्यस्तीति 'त्रिपादस्यामृतं दिवि' इतिवचनवैयर्थ्यं स्यात्। किञ्च 'ईश्वरः पर आत्मा तपो ब्रह्म मनोमयः' इत्यारभ्य "तस्य द्वौ व्यूहावाकाश-शरीरः प्राणशरीरश्च तयोरन्ये प्रत्येकमसंख्याताः प्रतिजीवमवस्थिता व्यूहाः इत्युपनिषत्कल्पे भवद्भिरुच्यते. किमसङ्ख्येयानामीश्वरव्यूहानां जीवानामिव स्वत एव स्वरूपगतो भेदः? उताधिष्ठेयगतभेद एवेश्वरव्यूहभेद इत्युपचारादुच्यते?। प्रथमे जीवबहुत्वेश्वरैकत्वश्रुतीनां वैयर्थ्यम् समष्टयैक्यस्य व्यष्टिभेदस्य च जीवे-श्वरयोस्तुल्यत्वात्, श्रूयते हि "त्वमेकोऽसि बहूननुप्रविष्टः' 'अन्तः प्रविष्टः शास्ता जनानाम्, 'एकस्सन् बहुधा विचचार, 'एको देवः सर्वभूतेषु गूढः' 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति एको बहूनां यो विदधाति कामान्' 'यः पृथिवीमन्तरे सञ्चरन्" इत्यारभ्य बहुष्ववस्थानमुक्त्वा "एष सर्वभूता-न्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्यादि। द्वितीये च पक्षे किमीश्वरव्यूहाधिष्ठेया गुणाः, उत गुणशक्तयः?। प्रथमे सत्त्वतमोरजसामुत्पत्तेः पूर्वं निर्गुणानां तेषामवस्थानवादो न घटते। उक्तं हि तत्त्वविचारणायां भवद्भिः 'यस्मादेषां प्रलयकाले व्यवस्थानमाम्नायते तस्माद्गुणोत्पत्तेः प्रागप्येषामवस्थाना-

* श्रुतप्रकाशिका *

निर्गुणा एते' इति । द्वितीये च गुणप्रलयात्पश्चाद्गुणशक्तीनामीश्वराधिष्ठेयत्वं नोपपद्यते तासामधिष्ठानं हि कार्याभिमुखीकरणलक्षणं प्रेरणम्, तत्तदानीमस्ति चेदासर्गकालाद्गुणानुत्पत्तिरनुपपन्ना । कार्यानुत्पादनमपि ईश्वराधिष्ठानाधीनमिति चेत् तर्हि परमात्मनः स्वापे गुणशक्तीनां तदधिष्ठितत्वाभावात्कार्योत्पत्तिप्रसङ्गः स्वापप्रबोधौ हीश्वरस्य त्वदभ्युपगतौ, अतः कार्यानुत्पादनस्येश्वराधिष्ठानानपेक्ष-त्वेन गुणशक्तीनामधिष्ठातृत्वाभावेन व्यूहभेदाभावात् गुणोत्पत्तेः प्राक् निर्गुण-त्वेन त्रयाणां व्यूहानां कश्चित्कालमवस्थानमयुक्तम् । अधिष्ठेयभेदमनपेक्ष्य स्वत एव भेदश्चेत् त्रित्वस्यानादित्वान्मनोमयादितरयोरुत्पत्तिरनुपपन्ना । किञ्च तिसृ-ष्वपि ईश्वरव्यष्टिषु किं प्रमाणम्? । "एतन्मयो वा अरेऽयमात्मा वाङ्मयो मनोमयः प्राणमयः" इति श्रुतिरिति चेत्. न; जीवस्य मनोवाक्प्राणोपकरणित्वप्रतिपादन-परत्वात्तस्याः । तथा हि, "यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता' इति

* भावप्रकाशिका *

( कार्योत्पत्तिप्रसङ्ग इति ) न चानुत्पादवदुत्पादनस्यापीश्वराधिष्ठानसापेक्षत्वात्तो-त्पादनापादनं युक्तमिति वाच्यम्; तर्हि स्वापे उभयोरपि विरहप्रसङ्ग इति तात्प-र्यम्। (यत्सप्तान्नानि मेधया तपसाऽजनयत्पितेति) अत्र बुद्धिसौकर्यार्थं व्याख्यास्य-माना श्रुतिर्लिख्यते— 'यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता । एकमस्य साधार-णम् । द्वे देवानभाजयत् त्रीण्यात्मने कुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन् सर्वं प्रतिष्ठितम् । यच्च प्राणिति यच्च न कस्मात्तानि न क्षीयन्ते । अद्यमानानि सर्वदा । यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन । स देवानपि गच्छति । स ऊर्जमुपजीवतीति श्लोकाः ॥१॥ यत्सप्तान्नानि मेधया तपसा जनयत्पितेति । मेधया हि तपसा जनयत्पितैकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नम् । यदिदमद्यते । स य एनदुपास्ते । न स पाप्मनो व्यावर्तते मिश्रं ह्येतत् द्वे देवा-नभाजयदिति । हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्रजुह्वति । अथो आहुः दर्शपूर्णमासाविति । तस्मान्नेष्टि याजुकस्स्यात्पशुभ्य एकं प्रायच्छदिति तत्पयः पयो ह्येव अग्रे मनुष्याश्च पशवश्चोपजीवन्ति । तस्मात्कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति । अथ वत्सं जातमाहुरतृणाद इति । तस्मिन् सर्वं प्रतिष्ठितम् । यच्च प्राणिति यच्च नेति पयसि हीदं सर्वं प्रतिष्ठितम् । अथ

❁ भावप्रकाशिका ❁

प्राश्नाति यच्च नेति तद्यदिदमाहुः। संवत्सरं पयसा जुह्वदपपुनर्मृत्युं जयतीति। न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान् सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति। कस्मात्तानि न क्षीयन्ते। अद्यमानानि सर्वदेति पुरुषो वा अक्षितिस्सहीदमन्नं पुनः पुनर्जनयते। यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिस्सहीदमन्नं धिया धिया जनयते। कर्मभिर्यद्ध्येतन्न कुर्यात्। क्षीयेत ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकम्। मुखेनेत्येतत्स देवानपि गच्छति। स ऊर्जमुपजीवतीति प्रशंसा ॥ २ ॥ त्रीण्यात्मने कुरुतेति मनो वाचं प्राणं तान्यात्मने कुरुत। अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव। तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्चन शब्दो वागेव सैषा ह्यन्तमाय-त्तैषा हि न प्राणोऽपानो व्यान उदानस्समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥ त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥ त्रयो वेदा एत एव वागेव ऋग्वेदो मनो यजुर्वेदः प्राणस्सामवेदः। ५। देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥ पिता माता प्रजा एत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥ विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किञ्चिद्विज्ञातं वाचस्तद्रूपं वाग्विज्ञाता वागेवैनं तद्भूत्वाऽवति ॥ ८ ॥ यत्किञ्च विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यम्। मन एनं तद्भूत्वावति ॥९॥ यत्किञ्चाविज्ञातम् प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति ॥ १० ॥ तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः ॥ ११ ॥ अथैतस्य मनसो द्यौश्शरीरं ज्योतीरूपम्। असावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनौ समैतां ततः प्राणोऽजायत स इन्द्रस्स एषोऽसपत्नोऽद्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥ अथैतस्य प्राणस्यापश्शरीरं ज्योतीरूपमसौ चन्द्रस्तद्या-वानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समास्सर्वेऽनन्तास्स यो हैतानन्तवत उपास्तेऽन्तवन्तं स लोकं जयति। अथ यो हैताननन्तानुपास्ते अ-नन्तं स लोकं जयति ॥ १३ ॥ एष संवत्सरः प्रजापतिष्षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला स रात्रिभिरेवाऽऽच पूर्यते, अप च क्षीयते

* श्रुतप्रकाशिका *

परमात्मनः सङ्कल्पाद्देहिनामुपजीव्यत्वादन्नशब्दवाच्यानां सप्तानामुत्पत्तिमुक्त्वा तत्र प्रसिद्धान्नं दर्शपूर्णमासौ पयश्चेत्यन्नचतुष्टयस्य मानुषदेवतिर्यक्षु विनियोगमुक्त्वा 'त्रीण्यात्मनेऽकुरुत' इत्यवशिष्टान्नत्रयस्य सर्वविधप्रवृत्तिहेतुत्वात् सामान्येन सर्वभोक्तृवर्गशेषमकरोदित्युक्त्वा 'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं

७ भावप्रकाशिका ७

सोऽमावास्यां रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेतां रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥ यो स वै संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला स वित्तेनैवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्येवाहुः ।१५। अथ त्रयो वा व लोका मनुष्यलोकः पितृलोको देवलोक इति सोयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति ॥१६॥ अथातस्सम्प्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञास्तेषां सर्वेषां यज्ञ इत्येकता ये वै के च लोकास्तेषां सर्वेषां लोक इत्येकता एतावद्वा इदं सर्वमेतन्मा सर्वं सन्नयमितोऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैस्सह पुत्रमाविशति स यद्यनेन किञ्चिदक्ष्णया कृतं भवति तस्मादेनं सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिंल्लोके प्रतितिष्ठत्यथैनमेते देवाः प्राणा अमृता आविशन्ति ॥१७॥ पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ॥ १८ ॥ दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ॥१९॥ अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यस्सञ्चरंश्चासञ्चरंश्च न व्यथतेऽथो न रिष्यति स एवंवित्सर्वेषां भूतानामात्मा भवति यथैषा देवतैवं स यथैतां देवतां सर्वाणि भूतान्यवन्त्येवं हैवं विदं सर्वाणि भूतान्यवन्ति यदु किञ्चेमाः प्रजाश्शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ॥ २० ॥ (परमात्मनस्सङ्क-

* श्रुतप्रकाशिका *

नाश्रौषं कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति प्रसिद्धं मन एव प्रतिपादितम् । कामादीनां मनःकार्यत्वात् सामानाधिकरण्यम् । 'यः कश्चन शब्दो वागेव' इति सामानाधिकरण्यमपि शब्दस्य वागिन्द्रियाधीनोच्चारणत्वनिबन्धनम्, अतः शब्दोच्चारणकारणं प्रसिद्धवागिन्द्रियमेवोक्तम् । 'प्राणोऽपानो व्यान उदानस्समानः' इत्येतत्सर्वं प्राण एवेति पञ्चवृत्तिप्राण एव स्पष्टमभिहितः । 'एतन्मयः' इत्येतच्छब्दश्च प्रकृतमनोवाक्प्राणपरः । 'अयमात्मा' इत्ययंशब्दविशेषित आत्मा च प्रसिद्धो जीवः, न तु परमप्रकृतः परमात्मा । तस्य जीवस्य त्रिविधोपकरणवत्त्वमेतन्मय इति प्रतिपादितम् । पश्चात् 'त्रयो लोका एत एव' इत्यादिना तेषां प्रशंसा कृता । यत्किञ्च विज्ञातं वाचस्तद्रूपं वाग्विज्ञाता वागेवैनं तद्भूत्वाऽवतीति । यद्वाग्व्यवहाराद्विज्ञातं तत्सर्वं वाचोरूपम्, अवच्छेदकम् । वाग्विज्ञाता— विज्ञायमानं सर्वं वागधीनम् । उपचारात् सामानाधिकरण्यम् । वागेवैनं तद्भूत्वावति— यद्वाचा विज्ञातं वस्तु पुरुषस्योपकरोति तद्भूत्वा तद्रूपेण वागेवोपकरोतीत्यर्थः । विजिज्ञास्यमिति— चिन्तनीयम्. पूर्ववद्योजना, यच्चिन्तितं देवतादिकम् उपकरोति तद्भूत्वा मन एवोपकरोतीत्यर्थः । अविज्ञातमिति— पूर्ववद्योजना । पूर्वसुकृतवशादचिन्तितं यदुपकरोति, तद्भूत्वा प्राण उपकरोतीत्यर्थः । एवं प्रशस्य त्रयाणाम् अधिष्ठानानि अधिष्ठातॄंश्च दर्शयति–तस्यै वाच इत्यादिना । वाचः वागिन्द्रियस्य पृथिवी शरीरमायतनम् । जिह्वा गोलकस्थं पार्थिवांशमाश्रित्य वागिन्द्रियं तिष्ठतीत्यर्थः । ज्योतीरूपमयमग्निः- ज्योतिर्मयमधिष्ठातृदेवतास्वरूपमग्निरित्यर्थः । यावती वाक् तावती पृथिवी तावानयमग्निरिति । यत्र यत्र वागिन्द्रियं तत्र तत्र तदधिष्ठानतया पृथिव्यस्ति, अधिष्ठातृतया अग्निरप्यस्तीत्यर्थः । अथैतस्य मनसो द्यौः शरीरमिति । इह द्युशब्द आकाशमात्रपरः, न तु लोकविशेषपरः, अनुपपत्तेः । न हि स्वर्गलोक एव मनसोऽधिष्ठानम्, मनुष्याणाममनस्कत्वप्रसङ्गात् । द्युशब्दो हि लोकविशेषे नभोमात्रे च

ॐ भावप्रकाशिका ॐ

ल्पादिति ) सङ्कल्पादुत्पत्तिमुक्त्वेत्यन्वयः । ( प्रसिद्धं मन एवेति ) न भवदभिमतेश्वरव्यूहप्रत्याशेति भावः । ( अवच्छेदकमिति ) विषयमित्यर्थः । ( पूर्ववद्योजनेति ) मनस्तद्रूपमित्यादीनां वाचोरूपमित्यादिवदर्थ इति भावः । ( तस्यै वाच

* श्रुतप्रकाशिका *

वर्त्तते "सुरलोको द्योदिवौ द्वे स्त्रियाम्' 'द्योदिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बर"मिति हि नामानुशासनम्, अतः आकाशमात्रविवक्षा। तत्रापि सामर्थ्यात् हृदयाकाशे पर्यवस्यति। हृदयच्छिद्ररूपाकाशः आयतनमित्यर्थः। ज्योतीरूपमित्यादेः पूर्ववत्। तौ—अग्न्यादित्यौ। मिथुनं समैताम्-मिथुनीभावमगच्छताम्। ततः प्राणोऽजायत। अयमस्याभिप्रायः,– आदित्याधिष्ठेयमनःपूर्विका अग्न्यधिष्ठेयवाक्प्रवृत्तिः, तदुभयपूर्विका पञ्चवृत्तिप्राणाधीना शरीरप्रवृत्तिरिति। प्राणस्यासपत्नत्वम् चक्षुरादिषु स्वसदृशस्वप्रतिस्पर्धिविरहितत्वम्। अथैतस्य प्राणस्यापश्शरीरमिति। 'प्राणा वा आपः' इति हि श्रुतिः। "पानीयं प्राणिनां प्राणा विश्वमेव च तन्मयम्" इत्यायुर्वेदविदः, अतः प्राणस्य आप आयतनम्। ज्योतीरूपमित्यादि पूर्ववत्। मनःप्राणयोरभिमानिदेवतान्तरश्रवणेऽपि श्रुतित्वाविशेषादेवमपि सम्भवतीत्यभ्युपगन्तव्यम्। आनन्त्यं प्रति शरीरं मनआदिव्यष्टिभेदात्। स एष सम्वत्सर इत्यादिना, चन्द्रमाः षड्ढोता स ऋतून् कल्पयति' इति प्रकारेण सर्वर्तुप्रवर्त्तकतया सम्वत्सरसंज्ञस्य रात्र्यधीनोपचयापचयान्वितकलामयस्य प्राणाधिदैवस्य चन्द्रस्य प्रजारक्षकत्वम् "सौम्यो वै देवतया पुरुषः" इति प्रक्रियया पुरुषस्य चन्द्राधीनत्वं तद्वेदनफलञ्चोक्तम्। पश्चान्मनोवाक्प्राणानां व्यापारस्य परलोकेऽभ्यधिकत्वं वक्तुम् 'अथ त्रयो लोकाः' इत्यादिना लोकत्रयं प्रस्तुत्य पुत्रे विन्यस्तभारस्य तन्मुखेनैहलौकिकार्थप्राप्तिं केवलकर्मणाऽन्तरिक्षप्राप्तिं काम्यविद्याविशेषेण देवलोकप्राप्तिञ्चाभिधाय प्रैष्यतो मनुष्यस्याध्ययनयज्ञादिकं श्रेयस्सर्वं पुत्रेण सम्पाद्यमिति तस्मिन्निहितभरत्वमुक्त्वा "अयं यदेवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैस्सह पुत्रमाविशति" इत्युक्तम्, पुत्रो भूत्वा यज्ञादिकम् अयमेव करोति, पुत्रकृतं सर्वं परलोकगतस्य पितुः स्वानुष्ठितसुकृतवदुपकारकं भवतीत्यर्थः। अथैनमेते देवाः प्राणा अमृता आविशन्तीति। एवं पुत्रे निक्षिप्तभरं परलोकगतं पुण्यकर्माणं पुरुषं देवाः प्राणशब्दवाच्याः मनआदयः आविश-

卐 भावप्रकाशिका 卐

इति) तस्या वाच इत्यर्थः। (प्रतिस्पर्द्धिविरहितत्वमिति) तस्यैव प्राणसंवादे ज्यैष्ठ्यस्य निर्द्धारितत्वादिति भावः। ननु मनःप्राणयोः प्रद्युम्नवाय्वाद्याधिष्ठेयत्वश्रवणात्कथमादित्यचन्द्राधिष्ठेयत्वमित्याशङ्क्याह (मनःप्राणयोरिति) ननु तत्त्व-

* श्रुतप्रकाशिका *

न्तीत्यर्थः । तदेव प्रपञ्चयति— पृथिव्यै चैनमित्यादिना । शापानुग्रहसमर्था वाक् दैवी वाक् . अमोघसङ्कल्पमानन्दैककारणं मनो दैवं मनः । अप्रतिहतगगनगमनादिव्यापारहेतुः । प्राणो दैवः प्राणः, एते पृथिवीद्युसलिलरूपाधिष्ठानेभ्योऽग्न्यादित्यचन्द्ररूपाधिष्ठातृदेवताभ्यश्चास्य सम्भवन्ति, देवताप्रसाददेवास्य मनोवाक्प्राणा एवंविधा भवन्तीत्यर्थः । एवं जीवोपकरणानां तेषां परलोके शक्त्यतिशयमुक्त्वा "स एवंवित्सर्वेषां भूतानामात्मा भवति"इति वागिन्द्रयादिदेवताविज्ञानप्रकर्षेणास्य सर्वभूतान्तर्वर्तिज्ञानसामर्थ्यं तस्य दुःखासंस्पर्शश्चाभिधायोपसंहृतम् । अत्र द्युपृथिव्यप्शब्दानां मनोवाक्प्राणशब्दानाञ्च सत्त्वतमोरजोवाचित्वाभावात् प्रज्ञाशक्तिवाक्च्छक्तिक्रियाशक्तिवाचित्वाभावाच्च तदधिष्ठात्रीश्वरव्यूहप्रतिपादनमनुपपन्नम् । शब्दस्वारस्याभावेऽप्यर्थानुपपत्त्या तादृगर्थपरत्वमाश्रयणीयमिति चेत्. का पुनरत्रानुपपत्तिः? । यावती वाक् तावती पृथिवी'इत्यादिवाक्यैः पृथिव्यादीनां व्याप्त्यवगमात् प्रसिद्धपृथिव्यादिपरत्वमनुपपन्नमिति चेन्न, वागिन्द्रियादिभिस्तदधिष्ठानभूतानां पृथिव्यादीनां तुल्यदेशत्वमात्रप्रतिपादनात् । इन्द्रियसमष्टेरपि हि न व्याप्तिमत्त्वम्, कार्याणां तत्त्वानां दशगुणकारणपरिच्छिन्नत्वेनेन्द्रियसमष्टेरहङ्कारतत्त्वपरिच्छिन्नत्वात् । ननु तलवकारिणां श्रुतौ " नासदासीन्नो सदसीत्तदानीं नासीद्रजो नो व्योमापारो यत् किमावरीवः कुहकस्य शर्मन् अम्भः किमासीद्गहनं गभीरम् इति तस्मिन्नसति सति न कस्मिंश्चन सत्यृतं ज्योतिष्मदुदप्लवत सत्यं ज्योतिष्मदुदप्लवत तपो ज्योतिष्मदुदप्लवत तद्यदृतमिति वाक् सा यत्सत्यमिति प्राणः स यत्तप इति मनस्तत्तेषामन्नमेव ज्योतिरासीत्तान्येकमभवंस्तदेकं भूत्वाऽन्नेन ज्योतिषाऽप्यायत तद्यथा मध्वष्ठीला वा स्वासक्तास्यावृत्तिर्वै व तदैक्षत हन्त प्राणं करवा" इत्यादिना तेषामृतसत्यतपश्शब्दवाच्यानां वाक्प्राणमनसां प्रलयेऽप्यवस्थानात् सत्त्वाद्यधिष्ठातार ईश्वरव्यूहा एव

❁ भावप्रकाशिका ❁

कारिणां छन्दसि "ऋतं ज्योतिष्मदुदप्लवत सत्यं ज्योतिष्मदुदप्लवत तपोज्योतिष्मदुदप्लवत" इति ऋतसत्यतपश्शब्दितानां वाङ्मनःप्राणशब्दितानां प्रलयावस्थिततया श्रूयमाणानामीश्वरव्यूहरूपत्वात् । तलवकारिश्रुतिरेव व्यूहत्रये प्रमाणमित्याशङ्क्य निराकरोति ( तलवकारिणां श्रुतावित्यादिना ) व्यूहत्रयस्य प्रमाण-

* श्रुतप्रकाशिका *

मनआदिशब्दवाच्या इति चेन्न , अस्यां श्रुतौ प्रलयेऽप्यवस्थानाप्रतीतेः । उदप्लवतेति हि श्रूयते. उत्प्लवचनश्च न स्थितिः, किन्तु उद्गमनम्; तेनोत्पत्तिरेवावगम्यते यथा अब्धेस्तरङ्गोद्गम इति कारणात्कार्योदय इति च । न ह्युद्गमनादिशब्दैः क्वचिदप्यवस्थानं प्रतीयते. अत्र प्रसिद्धवागाद्युत्पत्तौ प्रतिपाद्यमानायामाख्यातपदानां कारकपदानां च स्वरसता स्यात् , इतरथा अस्वारस्यमेव । "तेषामन्नमेव ज्योतिरासीत्" इत्यत्र ज्योतिश्शब्दः ओजश्शब्दवत् प्रवृत्तिसामर्थ्यपरः , त्रिविधकरणानामप्यन्नमेव प्रवृत्तिसामर्थ्यहेतुरित्यर्थः । तान्येकमभवन्निति । एककार्योत्पत्तिं प्रत्येकसामग्रीत्वमभजन्नित्यर्थः । करणत्रयेणापि हि यज्ञादिकर्मनिष्पत्तिः । अनन्तरं ' तदैक्षत'इति तच्छब्दश्च सृष्टिप्रतिपादनाक्षिप्तकारणब्रह्मपरः, एवं प्रलयदशायामप्यवस्थानश्रवणरूपापवादाभावात् मनआदिशब्दो नेश्वरव्यूहपरः । यत एवं तस्मात् सप्तान्नसृष्टौ 'तौ मिथुनं समेतां ततः प्राणोऽजायत इन्द्रः स एषोऽसपत्नः' इति वाङ्मयव्यूहपत्नीकान्मनोमयादीश्वरात्प्राणमयव्यूहोत्पत्तिरुच्यत इति चानुपपन्नम् । ननु बृहदारण्यक एव षष्ठेऽध्याये "इन्धो - ह वै नामैष योऽयं दक्षिणेऽक्षिन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः । अथैतद्वामेऽक्षिणि पुरुषस्य रूपमेषाऽस्य पत्नी विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः" इत्यत्र दक्षिणाक्षिप्रतिष्ठितस्य पुरुषस्य वामाक्षिगतं पुरुषरूपं पत्नीत्वेनोच्यते , अतोऽत्र वाङ्मयपत्नीको मनोमयः प्रतिपादित इति । न, 'ततः प्राणोऽजायत स इन्द्रः' इति मिथुनोत्पन्नस्येन्द्रशब्दवाच्यत्वावगमात् , इह च पत्नीवतः पुरुषस्येन्द्रशब्दवाच्यत्वावगमाच्च, ततश्चेन्द्रशब्दवाच्यप्राणमयस्य वाङ्मयः पत्नी प्रसजेत् , न तु मनोमयस्य । मनोमयस्य वाङ्मयपत्नीकत्वं प्राणमयस्य तदुत्पन्नत्वमपि हि भवदभिमतम् . तस्मादत्रायमर्थः,–दक्षिणाक्षिस्थः पुरुषोत्तमः, 'य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षिन् 'इति दक्षिणाक्षिस्थस्य आदित्यान्तरवस्थितत्वश्रवणात्तस्य च पुण्डरीकाक्षत्वात् " इन्द्रं निचिक्युः परमे

५ भावप्रकाशिका ५

शून्यत्वादेव वाङ्मयपत्नीकान्मनोमयात्प्राणमयोत्पत्तिरिति चानुपपन्नमित्याह ( यत एवमिति ) बृहदारण्यके वाङ्मयपत्नीको मनोमयः प्रतिपाद्यत इति शङ्कते ( ननु बृहदारण्यक एव षष्ठेऽध्याय इति ) ( पत्नीवतः पुरुषस्येति ) ततश्च पुत्रस्य प्राण-

* श्रुतप्रकाशिका *

व्योमन् " इन्द्रो मायाभिः"इत्यादिषु परमपुरुषस्य इन्द्रशब्दवाच्यत्वं च सिद्धम्। वामाक्षिस्था तत्पत्नी साक्षाल्लक्ष्मीरेव, इन्द्रशब्दवाच्यस्य पत्नीत्वेन प्रतीतेः, तैत्तरीयके च राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नीतीन्द्रपत्न्याः श्रीशब्दवाच्यत्वावगमात्। किञ्च हृदयगुहायामवस्थानमनयोरिह श्रूयते " तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः' इति। संस्तावः— अधिकरणे घञ्। संस्तावः स्थानम्. संस्तवः परिचयः, सहवासः। 'पद्मकोशप्रतीकाश' मित्यारभ्य 'तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः' इति नारायणस्य हृदयस्थितिश्रवणादत्रापि श्रियः पतिर्नारायण एव प्रतिपादित इति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम्। तलवकारिश्रुतावपि ईश्वरव्यूहत्रयप्रतिपादनाभावात् अघमर्षणसूक्तेऽपि न तत्प्रतिपादनमिति वाङ्मयपत्नीकपुरुषप्रतिपादनमसङ्गतम्, अपि तु तपश्शब्दः परमात्मपरः, 'यस्य ज्ञानमयं तपः' इति तपश्शब्दस्य ज्ञानवाचित्वात्, परस्य ज्ञानगुणसारत्वेन ज्ञानशब्दस्येव धर्मिपर्यन्ताभिधानोपपत्तेः, तस्मात् ऋतशब्दसत्यशब्दवाच्ययोर्यज्ञादिकर्मतद्भोक्तृचेतनवर्गयोरुत्पत्तिः, वाक्प्राणयोर्वा " तद्यदृतमिति वाक् सा यत्सत्यमिति प्राणस्सः' इति श्रुतेः। यद्वा ऋतं यथार्थशब्दः, सत्यमबाध्योऽर्थः, नामरूपे उत्पन्ने इत्यर्थः। अतो मिथः कार्यकारणभावेनावस्थितं वाङ्मयादिव्यूहत्रयं निष्प्रमाणकम्। किञ्च वाङ्मयपत्नीकान्मयोमयात् प्राणमयोत्पत्तिः किं प्रलयदशायां महदादिसर्गात्पूर्वभाविनी ? उत महदादिसर्गानन्तरभाविनी ?। तत्र प्रथमशिरो निष्प्रमाणकत्वान्निरस्तम्। द्वितीये तु ब्रूमः—'वाङ्मयः पृथिवी शरीरो लयपरिणामशक्तिमधितिष्ठति तमः पृथिवीत्युच्यते लयपरिणामशक्ति-

७ भावप्रकाशिका ७

मयस्येन्द्रत्वप्रतिपादकसप्तान्नब्राह्मणेन दक्षिणाक्षिस्थस्य मनोमयस्य पितुरिन्द्रत्वप्रतिपादकस्यास्य वचनस्य विरोध इत्यर्थः। ( अधिकरणे घञिति ) यद्यपि 'यज्ञे समिस्तुवः' इति यज्ञविषय एव घञ्, तथापि छान्दसत्वाद्वा यज्ञत्वारोपाद्वा भविष्यतीति भावः। नन्वघमर्षणसूक्ते 'ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत' इति तपश्शब्दवाच्यमनोमयादृतसत्यशब्दवाच्यवाङ्मयप्राणमययोरुत्पत्तिप्रतीतेरीश्वरव्यूहप्रतिपादनं दृश्यत इत्याशङ्क्याह ( तलवकारिश्रुतावपीति ) प्रसङ्गादन्यदपि यादवप्रकाशोक्तं दूषयति ( किञ्च वाङ्मयपत्नीकादिति )। ( चतुर्मुखोत्पत्तेः पूर्व-

* श्रुतप्रकाशिका *

वागिति मोक्षस्थानम्' इति चेत्युक्तमुपनिषत्कल्पे । तत्रैव 'प्राणमयोऽप्च्छरीरः क्रियाशक्तिमधितिष्ठति रज आप उच्यन्ते, क्रियाशक्तिः प्राण इति चोक्तम् । यदि तमोरजश्शक्त्यधिष्ठातारौ वाङ्मयप्राणमयौ तदा वाङ्मयपत्नीकात् मनोमयात् प्राणमयोत्पत्तिं वदता चतुर्मुखोत्पत्तेः पूर्वमेव रुद्रोत्पत्तिरुक्ता स्यात्, तच्छ्रुतिविरुद्धम् । महोपनिषदि "तत्र ब्रह्मा चतुर्मुखोऽजायत' इति ब्रह्मसृष्टिमुक्त्वा 'अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तस्स्थस्य ललाटात् त्र्यक्षश्शूलपाणिः पुरुषोऽजायत' इति रुद्रसृष्टेः पश्चात्तनत्वश्रवणात्, सुबालोपनिषदि 'ललाटात्क्रोधजो रुद्रोऽजायत' इति रुद्रस्य चतुर्मुखललाटोत्पन्नत्वश्रवणात्, शैलालिब्राह्मणे रुद्रस्य चतुर्मुखसृष्टाग्न्यादिजीववदुत्पन्नत्वश्रवणात्, शतपथे चाष्टमूर्तिब्राह्मणे संवत्सरशब्दवाच्येन प्रजापतिना रुद्रसृष्टेः श्रुतत्वात्तद्रोदनपरिहाराय तेन तस्य नाममूर्त्यष्टकप्रदानप्रतिपादनाच्च । ननु श्वेताश्वतरे "विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वम्" इति श्रूयत इति चेत्. तदपि भवत्पक्षे विरुद्धम्, अनन्तरमेव "वेदाहमेतं पुरुषं महान्तम् आदित्यवर्णं तमसः परस्तात्' 'महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः' 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' सहस्रशीर्षा पुरुषः" इत्यादिषु 'एतं महान्तं पुरुषम्' 'महान् प्रभुर्वै पुरुषः" इति प्रकृतरुद्रपरामर्शिनैतच्छब्देन महापुरुषशब्दसामानाधिकरण्यात् "यदेष आकाश आनन्दो न स्यात्" इत्यानन्दशब्दसमानाधिकरणाकाशशब्दस्य प्रसिद्धाकाशप्रहाणेन परमात्मपरत्ववत् रुद्रशब्दस्यापि प्रसिद्धार्थप्रहाणेन महापुरुषपरताया न्याय्यत्वात्, सत्त्वप्रवर्तकविषयस्य वाक्यस्य तमोऽधिष्ठातृवाङ्मयपरत्वाभावात्, पुरुषसूक्तवाक्योपादानेन पुरुषोत्तमविषयत्वस्य स्फुटत्वाच्च परमपुरुषादेव हिरण्यगर्भोत्पत्तेस्तत्र प्रतिपाद्यमानतया वाङ्मयपत्नीकत्वप्रसङ्गाभावात् । यथा "मृत्युनैवेदमावृतमासीत् अशनायया अशनाया हि मृत्युस्तन्मनोकुरुतात्मन्वी स्यामिति सोऽर्चन्नचरत् तस्यार्चत आपोऽजायन्त' इत्यारभ्य

ϧ भावप्रकाशिका ϧ

मेवेति) वाङ्मयस्तमोगुणोपाधिकतया रुद्रः, प्राणमयो रजोगुणोपाधिकतया चतुर्मुखः । मनोमयस्तु सत्त्वोपाधिकतया विष्णुरितिसिद्धत्वात् रुद्रपत्नीकाद्विष्णोश्चतुर्मुखजनिरुक्ता स्यादिति भावः । शैलालिब्राह्मणशतपथब्राह्मणादिकं समन्व-

* श्रुतप्रकाशिका *

अशनाया लक्षणान्मृत्योरम्बुपृथिव्यग्नीनां सृष्टिप्रतीतावपि न प्रसिद्धमृत्योः क्षुधो वा पृथिव्यादिप्रपञ्चकारणत्वमभ्युपगम्यते। 'भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः' 'मृत्युर्यस्योपसेचनम्' 'तच्छ्रेयो रूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणीन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति परमात्मसृज्यत्वसंहार्यत्वनियाम्यत्वश्रवणात्, एवं ब्रह्मसृष्टस्य रुद्रस्य न ब्रह्माणं प्रति स्रष्टृत्वमिहोच्यत इत्यभ्युपगन्तव्यम्, शैलालिब्राह्मणशतपथसुबालोपनिषदां तु नैवमर्थान्तरपरत्वं वक्तुं शक्यम्। नन्वेवमपि कल्पभेदेन सृष्टिप्रकार इत्यास्थेयम्। नैवम्; त्वदभिमतसृष्टिप्रकारस्य स्फुटश्रवणाभावात् आकाशादीनामपि कल्पभेदेन परमकारणत्वकल्पनाप्रसङ्गात् श्रुतिविरोधेन कल्पनानुपपत्तेश्च; अतो वाङ्मयरुद्रपत्नीकान्मनोमयात् प्राणमयहिरण्यगर्भोत्पत्तिः श्रुतिविरुद्धा। किञ्च 'वाङ्मयो लयपरिणामशक्तिमधितिष्ठति लयपरिणामशक्तिश्च वागिति कथ्यते मोक्षस्थानमिति च मोक्षस्थानं परमाकाशः स च प्रकृतेस्तमश्शब्दवाच्याया आद्यावस्था' इति च भवद्भिरुच्यते, तथा तत्त्वविचारणायामुक्तम् 'परमाकाशो नाम प्रकृतेराद्यावस्था' इत्युपक्रम्य 'सा च तमोऽवस्थापन्ना प्रकृतिः परस्मादात्मनो विभागरूपं विकारं प्रतिपद्यते स एव परमाकाशः स एव मुक्तानामीश्वरस्य च स्थानं शब्दपरिणामशक्तियुक्तत्वाद्वागिति चोच्यते अक्षरमिति च' इति यदव्यक्ततमसोर्मध्यपठितमक्षरं परमाकाशः, स तावन्नाद्यो विभागः, 'तम एकीभवति' 'मृत्युर्वै परे देव एकीभवति' 'तस्मात्तमस्सञ्जायत" इति तमस एव विभागश्रवणात्। विभक्तात्तमसो ह्यक्षरविभागः तमस्तस्मादक्षररूपेण जायत इति योजना त्वस्वरसा। 'अक्षरं तमसि लीयते' इति लयश्रवणविरुद्धा च। तच्चाक्षरं न मुक्तानामीश्वरस्य च स्थानम्, तस्याव्यक्ताद्यपेक्षया अक्षरत्वेऽपि तमसि लयश्रवणेन क्षरत्वात् 'तदक्षरे परमे व्योमन्' इति परमव्योम्नः क्षरणाभावाच्च। तत्राप्यापेक्षिकमक्षरत्वमिति चेन्न, तत्र स्वारस्यभञ्जकप्रलयश्रवणाभावात्। तमसो विभक्तमक्षर-

ꣳ भावप्रकाशिका ꣳ

सूत्रे द्रष्टव्यम्। (योजना त्वस्वरसेति) न च सिद्धान्तेपि तमस्त्वावस्थाया अनादित्वाद्विभागस्य च जननरूपत्वाभावात्तमस्सञ्जायत इति वाक्यस्वारस्यं नास्तीति वाच्यम्। विभागरूपावस्थान्तरसम्बन्धमादाय सञ्जायत इति प्रयोगोपपत्तिरिति भावः। (अक्षरं तमसि लीयत इति लयश्रवणविरुद्धा चेति) अक्षरत्वावस्थायाः

* श्रुतप्रकाशिका *

मेव तत्राक्षरशब्देन प्रत्यभिज्ञाप्यत इति चेन्न, वर्णानुपूर्वीसादृश्येऽप्यन्यविशेषणतया प्रयुक्तेनाक्षरशब्देन विशेष्यसमर्पकाक्षरशब्दार्थस्य प्रत्यभिज्ञानाभावात् । न ह्यरुणः पट इति वाक्यस्थोऽरुणशब्दो रविरथस्थमरुणं प्रत्यभिज्ञापयति । किञ्च स्वप्रकरणे "विश्वं पुराणं तमसः परस्तात्" इति, समानप्रकरणे च "आदित्यवर्णं तमसः परस्तात्' 'ते ह नाकं महिमानस्सचन्ते' 'आदित्यवर्णं तमसस्तु पारे" इति मुक्तात्मेश्वरस्थानस्य तमसःपरत्वश्रवणात्तमसोऽर्वाचीनस्याक्षरस्य न तत्र प्रत्यभिज्ञा । 'तमसः परस्ता'दिति परस्वरूपस्य तमोवैलक्षण्यमुच्यत इति चेत्. न, दिग्देशकालेष्वस्तातिप्रत्ययस्य विहितत्वेन वैलक्षण्यमात्रपरत्वस्य क्लिष्टत्वात् स्थानविशेषस्य सन्निहितत्वाच्च तमसः परत्वस्य देशविशेषवर्तिपरमात्मविशेषणत्वोपपत्तेः । 'तमसस्तु पारे'इति पारशब्दश्चावधिवाचकः, न तु वैलक्षण्यवाचकः, अतस्तमसः परस्य स्थानस्येह प्रत्यभिज्ञानाभावात्तमोविभागरूपमक्षरं न मुक्तात्मपरमात्मस्थानम् । तमोविभागरूपं चाक्षरं न वाय्वयाधिष्ठेयम्, तस्याक्षरस्य ब्रह्मरुद्रसृष्टेः पूर्वभावित्वात् 'यः पृथिवीमन्तरे सञ्चरन्' इत्यारभ्य "योऽक्षरमन्तरे सञ्चरन् यस्याक्षरं शरीरम्' 'यस्य मृत्युश्शरीरम्"इत्युक्त्वा "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति तस्याक्षरतत्कारणभूतमृत्युशरीरकस्य नारायणत्वप्रतिपादनाच्च, तस्यैवान्तरात्मत्वश्रवणात् वाय्वयोऽन्तरात्मेति चानुपपन्नम्, अत एव हिरण्यगर्भस्य प्राणस्यान्तर्यामित्वं च निरस्तम्, नारायणस्यैव ह्यन्तर्यामित्वं श्रुतम् । हिरण्यगर्भस्य महत्तत्त्वाभिमानित्वं तु ब्रह्माण्डान्तर्गतव्यष्टिशरीरविषयं क्वचिदुक्तमिति मन्तव्यम् परमकारणत्वाभावात् अग्नीन्द्रादीनां वाक्पाण्याद्यभिमानित्ववत् । 'सर्वभूतान्तरात्मा' इत्यत्र सर्वभूतशब्देन

❀ भावप्रकाशिका ❀

आद्यावस्थात्वोक्तिरितिशेषः । ( किञ्च स्वप्रकरणे इति ) 'तदक्षरे परमे व्योमन्' इतिप्रकरण इत्यर्थः । ( स्थानविशेषस्य सन्निहितत्वाच्चेति ) 'तेह नाकं महिमानः सचन्ते' इतिस्थानविशेषस्य सन्निहितत्वादित्यर्थः । ननु तमसः परस्तादित्यस्य परस्वरूपगततमोवैलक्षण्यप्रतिपादकत्वाभावे परमात्मस्वरूपस्य सर्वगततया परस्तादित्युक्त्यनुपपत्तिरित्याशङ्क्याह ( देशविशेषवर्तिपरमात्मविशेषणत्वोपपत्तेरिति ) विग्रहविशेषविशिष्टपरमात्मस्वरूपस्य तमः परावर्तित्वं सम्भवतीति भावः । ( अत-

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ २८ ॥

पूर्ववाक्ये [1] "त्रिपादस्यामृतं दिवि" इति दिवोऽधिकरणत्वेन निर्देशादिह च दिवः पर इत्यवधित्वेन निर्देशादुपदेशस्य भिन्नरूपत्वेन पूर्ववाक्योक्तं ब्रह्म परस्मिन्न प्रत्यभिज्ञायत इति चेत्— तन्न, उभयस्मिन्नप्युपदेशे

* श्रुतप्रकाशिका *

ब्रह्मरुद्रयोरपि जीवान्तर्भावः, 'तस्माद्विराडजायत विराजो अधिपुरुषः' 'त्र्यक्षः शूलपाणिः पुरुषोऽजायत' 'इन्द्रो वरुणस्सोमो रुद्रः' 'स ब्रह्मा स शिवस्सेन्द्रः' इतीन्द्रवत्कार्यत्वादिश्रवणात्. एवमेव ह्युपबृंहितं भगवता व्यासेन ब्रह्मरुद्रसंवादे "ममान्तरात्मा तव च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् ॥" 'अहं ब्रह्मा आद्य ईशः प्रजानां तस्माज्जातस्त्वं च मत्तः प्रसूतः । मत्तो जगत्स्थावरजङ्गमं च सर्वे वेदास्सरहस्याश्च पुत्र"इति । अत एव मानवे धर्मशास्त्रेऽपि 'योऽस्यात्मनः कारयिता' इत्यादिवचनानि च न भवदभिमतवाङ्मयप्राणमयविषयाणि, श्रुत्यनुसारित्वात् स्मृतिवचनानाम्; अत एव 'मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्यादिश्रुतयश्च न भवदभिमतपरिपाटीप्रतिपादिकाः, स्वब्रक्यस्वारस्याभावात् श्रुत्यन्तरविरोधादनुपपन्नत्वाच्च । यत ईश्वरस्य न प्रलयकाले व्यूहत्रयं प्रामाणिकम्, अत एव ब्रह्मरुद्रयोर्वाङ्मयप्राणमयव्यूहत्वं च दूरोत्सारितम् । स्मृतयश्च श्रुत्यनुरोधेन वर्णनीयाः, अशक्यवर्णनाश्चेदनादरणीयाः । एवं वाङ्मयादिव्यूहत्रयकल्पनस्य निर्मूलत्वात् 'त्रिपादस्यामृतं दिवि' इति वाक्यस्य यादवप्रकाशैरभिहितार्थोऽनुपपन्नः, तस्मात् भूतादिपादेत्यादिसूत्रस्य भाष्यकाराभिमत एवार्थ उपपन्न इति स्थितम् ॥ .... .... .... .... .... .... .... ....

ꣳ भावप्रकाशिका ꣳ

स्तमसः परस्य स्थानस्येति ) तमोविभागरूपस्य मुक्तपरमात्मस्थानस्य प्रत्यभिज्ञानासम्भवादित्यर्थः ॥ .... .... .... .... .... .... .... ....

---

१ छां ६-१२-६ ॥

अर्थस्वभावैक्येन प्रत्यभिज्ञाया अविरोधात्; यथा 'वृक्षाग्रे श्येनो वृक्षाग्रात्परतः श्येनः' इति । तस्मात्परमपुरुष एव निरतिशयतेजस्को दिवः परो ज्योतिर्दीप्यत इति प्रतिपाद्यते । "एतावानस्य महिमा । अतो ज्यायांश्च पुरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि' इति प्रतिपादितस्य चतुष्पदः परमपुरुषस्य "वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे" इत्यभिहिताप्राकृतरूपस्य तेजोऽप्यप्राकृतमिति तद्वत्तया स एव ज्योतिश्शब्दाभिधेय इति निरवद्यम् ॥ २८ ॥ ॥ ९ ॥ ॥ ॥ ॥

* श्रुतप्रकाशिका *

॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ ( यथा वृक्षाग्रे श्येन इति) सप्तम्यन्तर्बहिरधरोर्ध्वभागस्थितिसाधारणी, पञ्चमी तु उपरि स्थित्यसाधारणी, अत उभाभ्यां स्थानाविशेषादुपरि स्थितिरेव विवक्षितेति भावः । सूत्रार्थं परमसाध्येन घटयति ( तस्मादिति ) न खल्वात्मस्वरूपे दीप्तिरस्ति. तत्कथं 'ज्योतिर्दीप्यते' इत्युक्तज्योतिश्शब्दाभिधेयत्वमिति शङ्कां परिहरन्नधिकरणार्थं निगमयति ( एतावानिति) पुरुषसूक्तवाक्योपादानं विग्रहविशेषज्ञापनार्थम् ॥

५ भावप्रकाशिका ५

( सप्तम्यन्तर्बहिरिति ) पुरोवादिवाक्यगताया अपि अनेकार्थसाधारणसप्तम्याः अनुवादिवाक्यगतयापि एकार्थनियतया पञ्चम्या कांस्यभोजिन्यायेनार्थनिर्णयो भवतीति भावः । यत्र हि गुरोः कांस्यभोजननियमो नास्ति, शिष्यस्य तु सोऽस्ति . तत्र क्रमेणोभयोरेकपात्रभोजने प्रसक्ते गुरुणापि गुणभूतं शिष्यमनुसृत्य कांस्यभोजनमेवाद्रियते, सोयं कांस्यभोजिन्यायः । ( स्थानविशेषादुपरिस्थितिरिति ) स्थानविशेषस्योपरिस्थितिरितिपाठस्समीचीनः । अतसर्थप्रत्यययोगे 'पष्ठ्यतसर्थप्रत्ययेन' इति षष्ठ्या एव युक्तत्वात् ॥ .... .... ....

॥ इति ज्योतिरधिकरणम् ॥

निरतिशयदीप्तियुक्तं ज्योतिश्शब्दाभिधेयं प्रसिद्धवन्निर्दिष्टं परमपुरुष एवेत्युक्तम् । इदानीं कारणत्वव्याप्तामृतत्वप्राप्त्युपायतयोपास्यत्वेन श्रुत इन्द्रप्राणादिशब्दाभिधेयोऽपि परमपुरुष एवेत्याह—

* श्रुतप्रकाशिका *

अवान्तरसङ्गतिमाह ( निरतिशयेति ) (ज्योतिश्शब्दाभिधेयमिति) आकाशप्राणतेजसां क्रमोपपत्तेः ‘ अत एव प्राणः’ इत्यस्यानन्तरं ज्योतिश्चरणाभिधानादित्यधिकरणं सङ्गतमिति भावः । (प्रसिद्धवन्निर्दिष्टमिति) अनेनाधिकरणयोः पौर्वापर्यनियम उक्तः । ‘ सर्वाणि ह वा इमानि भूतानि’ इति पूर्वस्मात् पूर्वाधिकरणद्वयविषयवाक्ययोः प्रसिद्धवन्निर्देशो दृश्यते । अत्रापि “ अथ यदतः परः’ इति यच्छब्देन प्रसिद्धवन्निर्देशो दृश्यते, तस्मात् ज्योतिराधिकरणं पूर्वाधिकरणद्वयेन सङ्गतम् । एवं सत्युत्तराधिकरणस्य ज्योतिरधिकरणानन्तरभावित्वं प्राप्तमिति भावः । अवान्तरपेटिकानुगतमर्थमाह ( कारणत्वव्याप्तेति ) पूर्वाधिकरणे परमपुरुषस्य ज्योतिश्शब्दाभिधेयत्वमुक्तम् । तदयुक्तम्, परमपुरुषादन्यस्येन्द्रादिशब्दवाच्यस्य वेदान्तप्रतिपाद्यत्वादिति शङ्कया सङ्गतिरित्यर्थः । तत्र कारणत्वाक्षेपकलिङ्गभूयस्त्वमनुसन्धेयम् ॥

ᳲ भावप्रकाशिका ᳲ

( कारणत्वाक्षेपकेति ) जीवविशेषकारणत्वसाधकलिङ्गभूयस्त्वमित्यर्थः ॥ श्रुतावुपयुक्तांशो लिख्यते “ प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम ’ मनुष्यस्य इन्द्रलोकगमने हेतुमाह, युद्धेन च पौरुषेण च युद्धपौरुषाभ्यां प्रीतस्येन्द्रस्य धाम जगामेत्यर्थः । तं महेन्द्र उवाच, प्रतर्दन वरं ते ददामीति. स होवाच प्रतर्दनः । त्वमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति । तं महेन्द्र उवाच . एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्, त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम् . बह्वीस्सन्धा अतिक्रम्य दिवि प्रह्लादीनतृणहम् अन्तरिक्षे पौलोमान् पृथिव्यां कालकञ्जान् तस्य मे तत्र न लोम चर्मीयते । स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते न

ঌ भावप्रकाशिका ঌ

मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्या नास्य पापं च नचकृषो मुखन्नीलं वेत्तीति । स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्वायुः प्राणः प्राणो वा आयुः प्राण उवाचामृतं यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिंल्लोकेऽमृतत्वमाप्नोति प्रज्ञया सत्यसङ्कल्पं स यो मा आयुरमृतमित्युपास्ते सर्वमायुरस्मिन् लोक एत्याप्नोत्यमृतत्वम् ····इन्द्र उवाचास्तीत्येव च प्राणानां निश्श्रेयसादानमिति ॥ २ ॥ मुख्यप्राणस्यास्तित्व एवेतरेषामिन्द्रियाणां श्रेय इत्यर्थः । तदेवोपपादयति– 'जीवति वागपेतो मूकान् विपश्यामो जीवति चक्षुरपेतोऽन्धान् विपश्याम....इत्यथ खलु प्राण एव प्रज्ञात्मा इदं शरीरं परिगृह्योत्थापयति तस्मादेतमेवोक्थमुपासीत यो वै प्राणस्सा प्रज्ञा या वा प्रज्ञा स प्राणः स ह ह्येतावस्मिन् शरीरे वसतस्सहोत्क्रामतस्तस्यैषैव दृष्टिरेतद्विज्ञानं यत्रैतत्पुरुषस्सुप्तस्स्वप्नं न कथञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिस्सहाप्येति चक्षुस्सर्वैः रूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैस्सहाप्येति मनस्सर्वैर्ध्यातैस्सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विष्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते....प्राणेभ्यो देवा देवेभ्यो लोकाः ॥३॥ यो वै प्राणस्सा प्रज्ञा या वा प्रज्ञा स प्राणस्स ह ह्येतावस्मिन् शरीरे वसतस्सहोत्क्रामतोथ खलु यथा प्रज्ञायां सर्वाणिभूतान्येकी भवन्ति तद्व्याख्यास्यामः ॥४॥ वागेवास्या एकमङ्गमदूदुहत् तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा घ्राणमेवास्या एकमङ्गमदूदुहत् तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमदूदुहत् तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमदूदुहत् तस्य शब्दः परस्तात्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमदूदुहत् तस्यान्नरसः परस्तात् प्रतिविहिता भूतमात्रा हस्तावेवास्या एकमङ्गमदूदुहत्....तस्यानन्दो रतिः प्रजापतिः प्रतिविहिता भूतमात्रा पादावेवास्या एकमङ्गमदूदुहत् तयोरित्या परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञैवास्या एकमङ्गमदूदुहत् तस्यै धियो विज्ञातव्यं कामः परस्तात्प्रतिविहिता भूतमात्रा ॥५॥ इन्द्रियाणां मध्ये वागेवास्याः प्रज्ञाया एकमवयवमदूदुहत् । आपूरितवती– सम्पादितवती । तस्याः वाचस्सकाशात्, प्रज्ञायाः परस्ताद्भागे नामरूपा भूतमात्रा आहिता भवति । विषयाणां प्रज्ञांशत्वादिति भावः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समा-

## प्राणस्तथाऽनुगमात् ॥ २६ ॥

११ अधिकरणम्

कौषीतकीब्राह्मणे प्रतर्दनविद्यायां[1] "प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च" इत्यारभ्य "वरं वृणीष्व' इति वक्तारमिन्द्रं प्रति' [1]'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति प्रतर्दनेनोक्ते [1]"स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्स्व' इति श्रूयते। तत्र संशयः, किमयं हिततमोपासनकर्म-

* श्रुतप्रकाशिका *

॥ प्राणस्तथाऽनुगमात् ॥ ( तत्रेति ) 'इन्द्रस्य प्रियं धामोपजगाम ' इत्युपक्रमे

भावप्रकाशिका

रुह्य सर्वान् गन्धानाप्नोति....इत्यादि, प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥ मनसा संयुक्तानि बाह्येन्द्रियाणि स्वकार्यकराणीत्यर्थः । तदेवोपपादयति—नहि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति....इत्यादि। न वाचं विजिज्ञासीत वक्तारं विद्यात्. न गन्धं विजिज्ञासीत घ्रातारं विद्यादित्यादि । इत्यां विजिज्ञासीत इत्यां विद्यात्, इत्या गमनानीत्यर्थः। मनो विजिज्ञासीत मन्तारं विद्यात् ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्रास्स्युर्यद्वा प्रज्ञामात्राः स्युः न भूतमात्रास्स्युः॥८॥ न ह्यन्यतरतो रूपं किञ्चन सिध्येत्। नो एतन्नाना—मात्राद्वयमप्यन्योन्याविनाभूतमित्यर्थः। 'तद्यथा रथस्यारेषु नेमिरर्पिताः नाभावरावर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः। स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान् एष ह्येवैनं साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष ह्येवासाधुकर्म कारयति तं यमेभ्यो लोकेभ्योऽधोनिनीषति एष लोकपाल एष लोकाधिपतिरेष सर्वेशस्स म आत्मेति तद्विद्यात् स म आत्मेति तद्विद्यात्' ॥ ९ ॥

१ कौषीतक्यां. ३-१ ॥

तया इन्द्रप्राणशब्दनिर्दिष्टो जीव एव, उत तदतिरिक्तः परमात्मा ? इति । किं युक्तम् ? जीव एवेति । कुतः ?

* श्रुतप्रकाशिका *

इन्द्रशब्दनिर्दिष्टत्वात् "प्राणोऽस्मि प्रज्ञात्मा ' स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति प्राणशब्देन निर्दिष्टत्वाच्चेन्द्रप्राणशब्दनिर्दिष्ट इत्युक्तम् । प्राणशब्दस्य परमात्मलिङ्गप्रतिपादकवाक्यस्थत्वेन सिद्धान्तहेतुद्योतकत्वात् सूत्रे प्राणशब्देन धर्मी निर्दिष्टः, न त्विन्द्रशब्देन । इन्द्रशब्दनिर्दिष्टस्य विचारविषयत्वमार्थमिति सूत्रकाराभिप्राय इति भावः । जीवमात्रलिङ्गसद्भावेऽपि विशेषाकाङ्क्षायां जीवधर्मस्य इन्द्रशब्दवाच्यप्रकृतजीवविशेषनिष्ठत्वप्रतीतेर्जीवो वेति शिरोऽन्तरं परोक्तमयुक्तमिति भावः । प्राणलिङ्गे सत्यपि प्राणोऽस्मीतिसामानाधिकरण्येन प्राणस्य जीवविशेषणत्वप्रतीतेः प्राधान्येन प्रतिपाद्यत्वशङ्काया असम्भवात् प्राणो वेति चानुपन्यस्तम् । कारणवाक्यप्रतिपाद्यं ब्रह्म किं प्रसिद्धजीवभाव इन्द्रः, उत परमात्मा ? इति विचारः । तदर्थं हिततमोपासनकर्मतयेन्द्रप्राणशब्दनिर्दिष्टः किं प्रसिद्ध इन्द्रः, उत परमात्मा ? इति । तदर्थमानन्दादिगुणाः किं गौणाः, उत मुख्याः ? । तदर्थं किमुपक्रमावगतत्वाष्ट्रहननादि-

६ भावप्रकाशिका ६

( उपक्रमे इन्द्रादिशब्दनिर्दिष्टत्वादिति ) अत्र केचित् , 'इन्द्रस्य प्रियं धामोपजगाम' इत्यत्रेन्द्रशब्दनिर्दिष्टस्य प्रसिद्धेन्द्रत्वं पूर्वपक्षसिद्धान्तसाधारणम् । अत इन्द्रप्राणशब्दनिर्दिष्टो जीवः परो वेति विप्रतिपत्त्यसम्भवात् इन्द्रप्राणशब्दनिर्दिष्ट इति भाष्यस्थेन्द्रशब्देन इन्द्रप्रयुक्तो मामितिशब्द एव विवक्षणीयः, तस्य च द्वितीयान्तत्वेन हिततमोपासनकर्मतयेति भाष्यस्वारस्यमपि सिध्यतीत्याहुः । ( न त्विन्द्रशब्देनेति ) ननु मामितिशब्देनेत्यर्थः । इन्द्रशब्दनिर्दिष्टे विप्रतिपत्त्यभावस्य प्रागेव दर्शितत्वादिति द्रष्टव्यम् । तथा च मदर्थस्तथानुगमादित्येवंरीत्या न सूत्रितमिति भावः । ननु परमतवज्जीवो वा मुख्यप्राणो वा इन्द्रदेवता वा परमात्मा वेति चतुष्कोटिकसंशयः किमिति न प्रदर्शित इत्याशङ्क्याह ( जीवमात्रलिङ्गसद्भावेपीति ) ( विशेषाकाङ्क्षायामिति ) छागपशुन्यायेनेति भावः । ( प्राधान्येन प्रतिपाद्यत्वशङ्काया इति ) नन्वेवं जीवमुख्यप्राणलिङ्गात्वेति चेदिति

इन्द्रशब्दस्य जीवविशेष एव प्रसिद्धेः, तत्समानाधिकरणस्य प्राणशब्दस्यापि तत्रैव वृत्तेः । अयमिन्द्राभिधानो जीवः प्रतर्दनेन 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इत्युक्तः 'मामुपास्स्व' इति स्वात्मोपासनं हिततममुपदिदेश । हिततमश्चामृतत्वप्राप्त्युपाय एव । जगत्कारणोपासनस्यैवामृ-

* श्रुतप्रकाशिका *

लिङ्गानुरोधेनानन्दादिवर्णनम्, उत आनन्दादिलिङ्गानुगुणतया त्वाष्ट्रहननादिवर्णनम् ? । तदर्थं मामुपास्स्वेति किं स्वोपासनमुच्यते, उत स्वावस्थपरमात्मोपासनम् ? इति विचारः । यदा स्वोपासनोक्तिः तदा त्वाष्ट्रवधाद्यनुगुणमानन्दादेर्वर्णनीयत्वेन आनन्दादिगुणानाममुख्यत्वाद्धिततमोपासनकर्मतयोक्त इन्द्र इति जगत्कारणं प्रसिद्धजीवभाव इन्द्र इति पूर्वपक्षे फलफलिभावः । यदा स्वावस्थपरमात्मोपासनोपदेशः, तदा आनन्दादिगुणानुगुणं त्वाष्ट्रवधादेर्वर्णनीयत्वादानन्दादिगुणानां मुख्यत्वाद्धिततमोपासनकर्मभूतेन्द्रप्राणशब्दनिर्दिष्टः परमात्मेति सर्ववेदान्तवेद्यं जगत्कारणं ब्रह्म परमात्मेति राद्धान्ते फलफलिभावः । ( जीवविशेष एव प्रसिद्धेरिति ) अनेन जीवमात्रपक्षस्यानुदयस्सूचितः । प्राणशब्दस्य कथं जीवपरत्वमित्यत्राह ( तत्समानाधिकरणस्येति ) अनेन प्राधान्येन प्राणपरत्वशङ्कानुत्थानमप्यर्थात्सूचितम् । इन्द्रस्य जीवत्वे कथं कारणस्य जीवानतिरिक्तत्वमित्यत्राह ( अयमिति ) स्वात्मोपासनं हिततममुपदिष्टमस्तु, ततः किम् इन्द्रस्य जगत्कारणत्व इत्यत्राह ( हिततम इति ) ततः किमित्यपेक्षायां मुमुक्षूपास्यत्वस्य कारणत्वव्याप्तिं दर्शयति ( जगदिति )

* भावप्रकाशिका *

शङ्कायाः कथमुत्थानमिति चेत्, तस्य मुख्यप्राणलिङ्गनिर्वाहप्रकारप्रश्नपरतया ऽदोषादिति भावः । ( यदा स्वावस्थपरमात्मोपासनोपदेश इति ) ननु स्वावस्थपरमात्मोपासनोपदेशत्वसिद्धेः प्राणशब्दनिर्दिष्टपरमात्मत्वासिध्युपजीवितया तदुपपाद्यस्य कथं तदुपपादककोटौ निवेश इति चेन्न; मामुपास्स्वेत्यस्यासम्भवाद-

तत्त्वप्राप्तिहेतुता १ "तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्यवगता; अतः प्रसिद्ध-जीवभाव इन्द्र एव कारणं ब्रह्म ॥

इत्याशङ्कायामभिधीयते— प्राणस्तथानुगमादिति; अयमिन्द्रप्राणशब्दनिर्दिष्टो न जीवमात्रम्, अपि तु जीवादर्थान्तरभूतं परं ब्रह्म । २"स एष प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृतः' इतीन्द्रप्राणशब्दा-

* श्रुतप्रकाशिका *

अत इति पूर्वपक्षोपसंहारः ॥ .... .... .... .... ....

राद्धान्तं प्रतिजानीते ( अयमिति ) उपपादयति ( स एष इति ) अनुगमः— पूर्ववाक्यप्रकृतस्य उत्तरवाक्यसम्बन्धः । स्ववाक्यानभिव्यक्तस्य सिद्धान्तहेतोः उत्तरवाक्याभिव्यक्ततया अनुगमादित्युक्तम् । आकाशाधिकरणे ज्योतिरधिकरणे च सिद्धान्तहेतोर्हि स्ववाक्यपूर्ववाक्याभिव्यक्ततयाऽनुगमादित्यनुक्तिः । सौत्रं तथापदं साधकाकारपरामर्शित्वेन व्याचष्टे ( आनन्दोऽजरेति ) प्राणः— परमात्मा, तथा-नुगमात्— परमात्मतया अनुगमादिति सूत्रयोजना, तथाशब्दस्य साध्या-

* भावप्रकाशिका *

न्यथासिद्धिकत्वे प्राणशब्दस्य परमात्मपरत्वमिति सिद्धान्तकोटेरेवानुत्थितेस्तस्यापि तदुपपादककोटिनिवेशावश्यम्भावादिति भावः ॥ .... .... ....

( स्ववाक्येति ) विषयवाक्येत्यर्थः । ( साधकाकारपरामर्शित्वेनेति ) पर-मात्मत्वसाधकानन्दादिमत्त्वेनानुगमादित्यर्थो विवक्षित इति भावः । परमात्मत्वा-नुगुण्येनानुगमादित्यस्यापि स एवार्थः, परमात्मतयानुगमादित्यस्यापि स एवार्थ इति द्रष्टव्यम् । नन्वेवं साध्यसाधकधर्मद्वयपरामर्शित्वे तथाशब्दस्यावृत्त्यादिप्रसङ्ग इत्याशङ्क्याह ( प्राणः— परमात्मा, तथानुगमादिति ) ननु तथाशब्दस्यानुगमविशे-षणत्वे कथं तथासत्येवोपपद्यत इति साध्यधर्मपरामर्शित्वानुगुणभाष्यनिर्वाह इत्या-

१ छां ८-१४-२ ॥ | २ कौ. ३-९ ॥

भ्यां प्रस्तुतस्यानन्दाजरामृतशब्दसामानाधिकरण्ये- नानुगमो हि तथा सत्येवोपपद्यते ॥ २९ ॥

न वक्तुरात्मोपदेशादिति चेदध्यात्म- सम्बन्धभूमा ह्यस्मिन् ॥ ३० ॥

यदुक्तम्— इन्द्रप्राणशब्दनिर्दिष्टस्य "आनन्दोऽजरोऽमृतः" इत्यनेनैकार्थ्यादयं परं ब्रह्मेति । तन्नोप-

* श्रुतप्रकाशिका *

कारपरामर्शित्वमप्यभिप्रयन्नाह ( तथा सत्येवेति ) तथा सति—इन्द्रप्राणशब्दनिर्दिष्टे परस्मिन् ब्रह्मणि सत्येवेत्यर्थः । प्राणः परमात्मा तथाऽनुगमात् परमात्मतया अनुगमादिति योजना । अनुगमक्रियाविशेषणं तथाशब्दः । बुद्धिस्थसाध्यसाधकधर्मवत्तयाऽनुगमो विवक्षित इत्यभिप्रायः । आद्यसूत्रं 'स एष प्राण एव' इत्यादिवाक्यमात्रविषयं व्याख्यातम्, न तु परैरिव वाक्यान्तरस्थहेतवोऽप्यत्र विवक्षितत्वेनोक्ताः । अध्यात्मसम्बन्धभूमेति द्वितीयसूत्र एव बहुवाक्यस्थहेतुबाहुल्यस्य विवक्षितत्वावगमात् । आनन्दादिगुणप्रतिपादकवाक्यस्य प्राणशब्दचिह्नितत्वात्तद्गतहेतुपरत्वेन हि प्राणशब्दचिह्नितसूत्रव्याख्यानं युक्तम् । प्राणशब्दचिह्नितस्याऽपि प्राणोऽस्मीत्यादेरत्रानुदाहरणमन्यविशेषणभूतपरमात्मलिङ्गत्वात् । प्राणेर्पिता इत्यस्यानुदाहरणं तु सूत्रान्तरैकार्थ्यात् ॥ .... .... ....

॥ न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ निषेध्याध्याहारेण नञर्थमाह ( यदुक्तमिति ) त्वाष्ट्रवधादीत्यत्रादिशब्देन सालावृकयतिप्रदानदैत्याति-

* भावप्रकाशिका *

शङ्क्य प्राणः परमात्मा तत्साधकानन्दत्वादियोगादित्युक्तेऽर्थात्साध्यस्यापि परामर्शित्वं सम्भवतीत्याशयेनाह ( बुद्धिस्थसाध्यसाधकधर्मेति ) ( अन्यविशेषणभूतपरमात्मलिङ्गत्वादिति ) 'तं मामायुरमृतमित्युपास्व' इत्यत्रामृतत्वादेर्ब्रह्मलिङ्गस्योपासनान्विततया निर्देशादिति भावः । ( सूत्रान्तरैकार्थ्यादिति ) तेन कृतकरत्वादित्यर्थः ॥

( सालावृकयतिप्रदानेति ) 'त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीस्सन्धा अतिक्रम्य दिवि प्राह्लादीनतृणहमनन्तरिक्षे पौलोमान्

पद्यते; "मामेव विजानीहि' 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व" इति वक्ता हीन्द्रः 'त्रिशीर्षाणं त्वाष्ट्रमहनम्' इत्येवमादिना त्वाष्ट्रवधादिभिः प्रज्ञातजीवभावस्य स्वात्मन एवोपास्यतां प्रतर्दनायोपदिशति; अत उपक्रमे जीवविशेष इत्यवगते सति 'आनन्दोऽजरोऽमृतः' इत्यादिभिरुपसंहारस्तदनुगुण एव वर्णनीय इति चेत् परिहरति–अध्यात्मसम्बन्धभूमा ह्यस्मिन्–आत्मनि यः सम्बन्धः सोऽध्यात्मसम्बन्धः । तस्य -भूमा–भूय-

* श्रुतप्रकाशिका *

सन्धानपौलोमनिरासेन्द्रशब्दा विवक्षिताः । ततः किमित्यत्राह (अत इति) उपक्रमो बलीयानित्यर्थः । 'विकारशब्दान्नेति चेन्न' इतिवत् सूत्रे सिद्धान्तखण्डे निषेधवाचिशब्दाभावात् खण्डान्तरस्य सिद्धान्तपरत्वद्योतनाय परिहरतीत्युक्तम् ॥ भूमशब्दो भूयस्त्वशब्देन व्याख्यातः । भूमशब्दप्रकृतिं दर्शयितुं बहुत्व-

* भावप्रकाशिका *

पृथिव्यां कालकञ्जान् तस्य मे तत्र न लोम च मीयते ' इति श्रवणादिति भावः । अरुन्मुखान् रौतीति रुत्, वेदान्तवाक्यं, तत्र मुखं येषां ते अरुन्मुखाः । ततोऽन्ये अरुन्मुखाः, तान् यतीन्, सालावृकेभ्यः वनश्वभ्यः, प्रायच्छम् । बह्वीस्सन्धाः- बह्वीः प्रतिज्ञाः अतिक्रम्य दिवि स्थितान् प्राह्लादीन् प्रह्लादपुत्रान् अतृणहम् हिंसितवानस्मि । पौलोमान् पुलोमपुत्रान्, कालकञ्जान् कालकञ्जाख्यानसुरान्, अतृणहमिति पूर्वेण सम्बन्धः । तस्य-एवं हिंसितवतो मे. तत्र–तादृशेऽतिघोरे दुष्कर्मणि सत्यपि लोमापि न मीयते, न हिंस्यत इत्यर्थः । (भूयस्त्वशब्देन व्याख्यात इति) फलतो व्याख्यात इत्यर्थः । एतेन बहुशब्दात् पृथ्वादित्वादिमनिच् । 'बहोर्लोपो भू च बहोः' इति निष्पन्नस्य भूमशब्दस्य बहुत्वमेवार्थः, नतु बहुतरत्वापरपर्यायं भूयस्त्वमिति शङ्का निराकृता । (भूमशब्दप्रकृतिं दर्शयितुमिति) प्रकृतिप्रत्ययव्युत्पत्तिसिद्धार्थं दर्शयितुमित्यर्थः । बहुत्ववाचिना

स्त्वम्, बहुत्वमित्यर्थः । आत्मन्याधेयतया सम्बध्यमानानां बहुत्वेन सम्बन्धबहुत्वम् । तच्चास्मिन् वक्तरि परमात्मन्येव हि सम्भवति । "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिता स एष प्राण

* श्रुतप्रकाशिका *

मित्युक्तम्। आपेक्षिकं हि बहुत्वम्। पूर्वपक्षयुक्तिबहुत्वादपि बहुतरमिति भावः। सम्बन्धबहुत्वनिबन्धनमाह ( सम्बध्यमानानामिति ) सम्बन्धः कीदृश इत्यत्राह ( आधेयतयेति ) अस्मिन्निति पदं व्याचष्टे ( तच्चेति ) आधेयतया सम्बन्धे श्रुतिमाह ( तद्यथेति ) न केवलमुपसंहारवचनमात्रम्, किन्तु पूर्वमप्यस्तीति बहुत्वाभिप्रायेण 'स एष प्राण एवे'त्यादिकमुपात्तम्। पूर्वोपात्तश्रुत्यर्थमाह (भूतमात्रेति) ननु कथं प्रज्ञामात्राशब्देन चेतनवर्गाभिधानम्? वाग्घ्राणचक्षुःश्रोत्रजिह्वाःपाणिपादोपस्थशरीरमनांसि च प्रतिपाद्य "ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अभिभूतं यदु ह वै दश भूतमात्रा न स्युः न प्रज्ञामात्राः स्युः यदु ह वै न प्रज्ञामात्राः स्युः न भूतमात्राः स्युः" इति भूतमात्राः प्रज्ञामात्राश्च प्रत्येकं दशसङ्ख्याः परस्परसाकाङ्क्षा उक्ताः, तत्र प्रज्ञामात्राशब्दो

ϕ भावप्रकाशिका ϕ

शब्देन भूयस्त्वस्य फलितत्वप्रकारं दर्शयति ( आपेक्षिकं हीति ) बहुत्वस्य सावधिकत्वादवध्यपेक्षायां जीवलिङ्गानां सन्निहितत्वात्ततो बहुत्वस्य सिद्धौ विवक्षितभूयस्त्वं सिध्यतीति भावः। भाष्ये—वक्तरि परमात्मन्येव हि सम्भवतीति । वक्तरि वक्त्रन्तर्यामिणीत्यर्थः। यद्वा वक्तरि परमात्मनीति व्यधिकरणे सप्तम्यौ, वक्तर्यनुप्रविष्ट परमात्मनीत्यर्थः। वस्तुतो वक्तुरिन्द्रस्य परमात्मत्वासम्भव इति द्रष्टव्यम्। ( स एष प्राण एवेत्यादिकमुपात्तमिति ) ततश्च पूर्वसूत्रविषयवाक्यस्य इहोपादानं न दोषायेति भावः। ननु 'नामपुरस्तात्प्रतिविहिता भूतमात्रा गन्धः पुरस्तात्प्रतिविहिता भूतमात्राः' इत्यादिना नामगन्धरूपरसशब्दगमनकर्मसुखदुःखानन्दगतिज्ञातव्यानामेव भूतमात्रात्वेन श्रुतौ दर्शनान्नामगन्धादीनामेव भूतमात्रात्वं

* श्रुतप्रकाशिका *

गन्धादिचतुष्टयवागादिव्यापारचतुष्टयशारीरसुखदुःखमन्तव्यविषयज्ञप्तिपरः । यद्वा भोग्या गन्धादयः, शरीरानुप्रविष्टभूतांशाश्च भूतमात्राः । दशेन्द्रियाणि प्रज्ञामात्राः । प्रत्येकं दशसङ्ख्याश्रवणबलादनुक्ताः पदार्थाश्च अजहल्लक्षणया विवक्षिता इत्यभ्युपेत्यम् । प्रज्ञामात्राशब्दस्य जीवपरत्वे दशसङ्ख्याविरोधात् । एवं "ताश्च ताश्च दश दशोक्ताः न ह्यन्यतरतो रूपं किञ्चन सिध्येत् नो एवैतन्नाने'त्यासामुभयविधानामपि परस्पराविनाभावमुक्त्वा तत्र दृष्टान्तमाह— तद्यथा रथस्येति वाक्येन । न च वाच्यम्, 'यो वै प्राणस्सा प्रज्ञा या प्रज्ञा स प्राणस्सह ह्येतावस्मिञ्छरीरे वसतस्सहोत्क्रामतः' इति प्रकृतजीवविषयोऽयं प्रज्ञामात्राशब्द इति । मात्रान्तेन प्रज्ञाशब्देन व्यवहितवाक्यस्थकेवलप्रज्ञाशब्दनिर्दिष्टजीवप्रत्यभिज्ञानाभावात् अनन्तरपूर्ववाक्यप्रकृतदशसङ्ख्यप्रज्ञामात्राणामेव स्वतः प्रत्यभिज्ञायमानत्वाच्चेति । तदयुक्तम्; अर्थविरोधात् दृष्टान्तदार्ष्टान्तिकभावानुपपत्तेश्च । प्रत्यभिज्ञानस्य भ्रमत्वात् । न हि वागादीन्द्रियाणि भूतमात्राणामाश्रयः, भूतसङ्घातरूपशरीरमेव हीन्द्रियाश्रय इत्यर्थविरोधः स्फुटः । तथा 'दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम्' इति परस्परसाकाङ्क्षत्वं पूर्ववाक्योक्तम् । अरनाभिदृष्टान्तवाक्ये तु न परस्परसाकाङ्क्षत्वं प्रदर्श्यते, 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः' इत्युक्त्वा प्रज्ञामात्रा भूतमात्रास्वर्पिता इति न ह्युक्तम्, तथा सति हि परस्परसाकाङ्क्षत्वे दृष्टान्तता विवक्षिता स्यात्, अपि तु 'प्राणेऽर्पिताः' इत्येवोक्तम् । प्राणश्च पर-

७ भावप्रकाशिका ७

तद्ग्राहिवाग्घ्राणादीनां प्रज्ञामात्रत्वञ्च युक्तमित्यभिप्रयन्नाह ( यद्वा भोग्या गन्धादय इति ) ( अनुक्ताः पदार्थाश्चेति ) दशेन्द्रियमध्येऽनुक्तवायुस्पर्शनेन्द्रियेत्यर्थः । ( दश दशोक्ता इति ) दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतमिति प्रत्येकं दशत्वेनोक्ता इत्यर्थः । ( नो एवैतन्नानेति ) नानाशब्दोऽविनार्थः, भूतमात्रास्वरूपं प्रज्ञामात्रस्वरूपाविनाभूतमित्यर्थः । ( प्रज्ञामात्रा शब्द इतीति ) न च वाच्यमित्यनेनान्वयः । ( नहि वागादीन्द्रियाणि भूतमात्राणामाश्रय इति ) ननु 'दशैव भूतमात्रा अधिप्रज्ञम्' इतिवाक्ये भवतामपीयमनुपपत्तिस्समाना । तत्र प्रज्ञामात्राशब्दस्येन्द्रियपरत्वात् । तत्र च गौणतया निर्वाहे प्रकृतेपि तस्य सुवचत्वादित्यस्वरसादाह ( तथा दशैवेति ) ( तत्तदर्थविषयज्ञापनपरत्वादिति चेदिति ) तत्र

* श्रुतप्रकाशिका *

मात्मा, अनन्तरमेव 'स एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः' इत्युक्तेः, अतो दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिः। अतः प्रत्यभिज्ञानभञ्जकहेतुसद्भावात् "तपसा चीयते ब्रह्म" "तस्मादेतद्ब्रह्म" इतिवाक्यद्वयस्थब्रह्मशब्दयोरिव पूर्वापरवाक्यस्थयोः प्रज्ञामात्राशब्दयोर्नैकार्थ्यम्। किञ्च द्वयोर्वाक्ययोर्मिथस्सन्निकृष्टत्वेप्यन्यतरस्य सम्भवन्मुख्यार्थस्तयोरैकार्थ्यश्रद्धया न त्याज्यः, तयोरेव ब्रह्मशब्दयोस्तथा दर्शनात्। प्रज्ञाशब्दश्च इन्द्रियेष्वमुख्यः, जीवेषु तु मुख्यः, तेषां ज्ञानस्वरूपत्वात्, प्रज्ञाशब्दोऽपि तत्तदर्थविषयज्ञानपर इति चेत्तर्हि दृष्टान्तविरोधः, शरीरगतानां भूतमात्राणां वैषयिकज्ञानैर्धार्यत्वाभावात्, एवमर्थविरोधादिभिर्भिन्नार्थत्वे सति मात्राशब्दः सङ्घातैकदेशाभिप्रायः, विशिष्टस्य ब्रह्मण एकदेशभूतानि हि चिदचित्तत्त्वानि। किञ्चास्मिन् प्रकरणे प्राणशब्दस्येव प्रज्ञाशब्दस्यापि बह्वर्थविषयप्रयोगदर्शनान्नैकार्थनियतत्वम्, अतश्च जीवविषयत्वं युक्तमाश्रयितुम्, विशेषतो जीवे प्रयुक्तत्वाच्च। प्राणशब्दस्तावन्मुख्यप्राणे प्रयुक्तः, 'यावदस्मिञ्छरीरे प्राणो वसति तावदायु'रिति। तथेन्द्रियेषु 'प्राणं प्राणन्तं सर्वे प्राणा अनु प्राणन्ति" इति। तथा परमात्मनि "यत्रैतत्पुरुषः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इति। तथा जीवेषु 'एतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः" इति। न चात्र बहुवचनान्तः प्राणशब्दः पञ्चवृत्तिप्राणपरः, तस्य सुषुप्तौ उपरत्यभावान्निष्क्रमणानुपपत्तेः। नापीन्द्रियपरः, देवशब्देन पृथगुक्तत्वात्, न च देवशब्दः प्रकाशरूपज्ञानवाची, लोकशब्देन तदुक्तेः अस्वारस्याच्च। न च लोकशब्दो लोकनीयविषयपरः, देवेभ्यो लोका इत्यत्र विषयाणां ज्ञानतो निष्क्रमणाभावात्। ज्ञानैर्ग्राह्य इत्यर्थ इति चेन्न, पञ्चम्यर्थैकरूप्यभङ्गादस्वारस्यात् ग्राह्यपदाध्याहारप्रसङ्गाच्च, अतोऽस्मिन् वाक्ये बहुवचनान्तः प्राणशब्दो जीवपरः। प्राणसाह-

❀ भावप्रकाशिका ❀

विषयतया अर्पितत्वं सम्भवतीति भावः। (एकदेशभूतानि हि चिदचित्तत्त्वानीति) ततश्च भूतमात्रा प्रज्ञामात्रास्वित्यस्य चिदचिद्विशिष्टब्रह्मैकदेशभूताचित्त्वं तादृशे अचित्त्वेऽर्पितमित्यर्थ इति भावः। दृष्टान्ततया निर्दिष्टस्य प्राणशब्दस्यानेकार्थप्रयोगमुपपादयति (प्राणशब्दस्तावदित्यादिना) विशेषतो जीवे प्रयुक्तत्वमुपपाद-

* श्रुतप्रकाशिका *

चर्याज्जीवे प्रयोगः। परमात्मनि तु प्राणशरीरकत्वात्। तथा प्रज्ञाशब्दश्च जीवे तावत्प्रयुक्तः "प्राणोऽसि प्रज्ञात्मा" इति। प्रज्ञारूप आत्मा प्रज्ञात्मा। तथा "यो वै प्राणस्सा प्रज्ञा या प्रज्ञा स प्राणः स ह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतस्तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुषः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इति च। न चायं प्रज्ञाशब्द उपरितनखण्डगतप्रज्ञाशब्दवन्मनोविषयः, 'सहोत्क्रामत' इति श्रवणात्, 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' इति श्रुत्यन्तरैकार्थ्याच्च, तथा उत्तरत्र वागादीन्द्रियाणां जीवोपकरणत्वप्रपञ्चनेन पृथङ्निर्देशाच्चायं प्रज्ञाशब्दो जीवपरः। 'अस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ती' त्युपक्रम्य 'वागेवास्या एकमङ्गमदूदुहत् प्राण एवास्या एकमङ्गमदूदुहत्' इत्येवमादिपर्यायैः पादपर्यन्तानां करणानां कृत्यमुक्त्वा 'प्रज्ञैवास्या एकमङ्गमदूदुहत्' इत्युक्तम्। अत्र ह्यस्या इति चतुर्थ्यन्तं पदं प्रज्ञाशब्दनिर्दिष्टजीवपरम्, प्रथमान्तप्रज्ञाशब्दो हि मनोवाची "नीतिं न विजिज्ञासीत नेतारं विद्यात्' 'न मनो विजिज्ञासीत मन्तारं विद्यात्' इति स्थानप्रमाणात्, तस्माच्चतुर्थ्यन्तः प्रज्ञाशब्दः प्रथमान्तप्रज्ञाशब्दवाच्यमनःकरणकजीवविषयः, अतस्सहोत्क्रमणपृथगुपदेशाभ्यां 'यो वै प्राणस्सा प्रज्ञेति प्रज्ञाशब्दो जीवविषयः, उत्क्रमणश्रुतिप्रत्यभिज्ञापकत्वात् वागादीनामुपकरणित्वाच्च बुद्धिपरत्वमप्यनुपपन्नम्, अतो जीवविषयत्वं द्रष्टम्। तथा मनसि च प्रज्ञाशब्दः प्रयुज्यते. 'न हि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञापयेदन्यत्र मनो मेऽभूदिति नाहमेतन्नाम प्राज्ञासिष'मिति। तथा इन्द्रियेषु च 'दश प्रज्ञामात्रा' इति। अतः पूर्वं प्रज्ञाशब्दनिर्दिष्टो जीव इह प्रज्ञामात्राशब्दोक्तः, जात्यभिप्रायेण एकवचननिर्दिष्टस्य व्यक्त्यभिप्रायेण बहुवचननिर्देश उपपद्यते। यथा "सता सोम्य तदा

* भावप्रकाशिका *

यति (तथा प्रज्ञाशब्दश्चेत्यादिना) (उपरितनखण्डगतप्रज्ञाशब्दवदिति) 'प्रज्ञया वाचं समारुह्य नहि प्रज्ञापेता वाङ्नाम किञ्चित्प्रज्ञापयेत्, अन्यत्र मनो मेऽभू'दिति उत्तरखण्डगतप्रज्ञाशब्दवदित्यर्थः। (प्राणोऽनूत्क्रामतीति श्रुत्यन्तरैकार्थ्याच्चेति) न च सहोत्क्रमणानूत्क्रमणश्रुत्योः कथमैकार्थ्यमिति वाच्यम्, अनुगन्तर्यपि सह-प्रयोगदर्शनेन तयोरैकार्थ्यसम्भवादिति भावः। (एकं भवन्तीत्युपक्रम्येति) उपकारकत्वेन एकं भवन्तीत्यर्थः। (नेत्या इति) 'नेत्यां विजिज्ञासीत नेतारं

एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः" इति भूतमात्राशब्देनाचेतनवस्तुजातमभिधाय प्रज्ञामात्राशब्देन तदाधारतया चेतनवर्गं चाभिधाय तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्य तमेव "आनन्दोऽजरोऽमृतः" इत्युपदिशति । तदेतच्चेतनाचेतनात्मककृत्स्नवस्त्वाधारत्वं जीवादर्थान्तभूते ऽस्मिन् परमात्मन्येवोपपद्यते इत्यर्थः ॥ .... .... .... ....

* श्रुतप्रकाशिका *

सम्पन्नो भवति" "सति सम्पद्य न विदुः सति सम्पत्स्यामहे" इति च । यद्वा माभूत् प्रज्ञामात्राशब्दस्यार्थवैरूप्यापादनम्, अरनाभिदृष्टान्तवाक्ये प्रज्ञामात्राशब्दस्य भूतेन्द्रियाभिमानिदेवतारूपदशविधचेतनपरत्वं स्यात्, तदानीमपि तदाधारतया चेतनाधारत्वं परस्यार्थसिद्धम् । एवमेतत्प्रकरणपर्यालोचनासुलभमुपपत्तिजातं सर्वं भाष्य एव व्यक्तीभविष्यति । (प्रज्ञामात्राशब्देन तदाधारतयेति) न हीन्द्रियाणां पृथिव्यादिभूताधारत्वं युक्तमिति भावः । (चेतनवर्गमिति) प्राकरणिकप्रज्ञाशब्दैकवचनं जात्यभिप्रायमिति भावः ।(तस्याप्याधारतया प्रकृतमिन्द्रप्राणशब्दाभिधेयं निर्दिश्येति) 'ता वा एता' इत्यादि पूर्ववाक्योक्ते परस्परसाकाङ्क्षत्वे दृष्टान्तत्वं न घटते, प्रज्ञामात्राणामाधारान्तरकथनादिति भावः । तस्य च परमात्मत्वं कथमित्यत्राह (तमेवानन्दोऽजर इति) एवमर्थविरोधदृष्टान्तदार्ष्टान्तिकभाववैघट्यमुख्यत्वप्राकरणिकप्रयोगसाधारण्यैरनुगृहीतस्य श्रुतिवाक्यस्यार्थमुपन्यस्य सूत्रार्थमुपसंहरति (तदेतदिति) एवं प्रथमयोजनायां 'तद्यथा रथस्यारे'ष्वित्यादिवाक्यमेकमेव विषयः स्यात्, स एष प्राण एवेति एतद्वाक्योदाहरणं वाक्यान्तराण्यपि परब्रह्मपराणि सन्तीति प्रदर्शनार्थम्, तेन उपक्रमस्वारस्यादपि समुदायस्वारस्यं प्रबलमिति फलितम् ॥ .... .... .... ....

एवमवयविस्वारस्यप्राबल्यस्यार्थसिद्धत्वादपि कण्ठोक्तत्वं युक्तमिति मुखान्त-

❀ भावप्रकाशिका ❀

विद्यात्' इति श्रुतिः ।इत्याः—गमनम् ॥ .... .... ....

अथवा, अध्यात्मसम्बन्धभूमा ह्यस्मिन्–परमात्मा साधारणधर्मसम्बन्धोऽध्यात्मसम्बन्धः । तस्य भूमा बहुत्वं हि अस्मिन् प्रकरणे विद्यते । तथा हि ; प्रथमं 'त्वमेव मे वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे" इति 'मामुपास्व' इति च परमात्मासाधारणमोक्षसाधनोपासनकर्मत्वं प्राणशब्दनिर्दिष्टस्येन्द्रस्य प्रतीयते। तथा "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति एष एवासाधु कर्म कारयति तं यमधो निनीषति" इति सर्वस्य कर्मणः कारयितृत्वं च परमा-

* श्रुतप्रकाशिका *

रेण योजयति ( अथवेति ) पूर्वयोजनायामध्यात्मशब्दस्य आत्मनीत्यर्थः । अस्यां त्वात्मनि वर्तमानपरोऽध्यात्मशब्दः । उपसंहारवाक्यमुपक्रमबाधितमिति पूर्वपक्षिणोक्तम्, तत्रेदमुत्तरमुक्तं भवति; उपक्रमोपसंहारौ वाक्यावयवौ, तयोरवयवभूतयोः परस्परविरोधे उपक्रमप्राबल्यम्, न त्ववयविविरोधे। अत्र त्वनेकावान्तरवाक्यैः पर्यालोचितैः प्रतिपन्नस्य महावाक्यार्थस्य अवयविनो विरोधे अवयवभूतोपक्रमो दुर्बलः, यथा गङ्गायां घोषः प्रतिवसतीत्यादिषु घोषः प्रतिवसतीतिपदाभ्यां प्रतिपन्नवाक्यार्थमुपक्रमस्थगङ्गापदं न बाधते, अपि तु स्वयं तदनुगुणार्थं भवति, तद्वदिति। तदेतदभिप्रयन् परमात्मासाधारणधर्मभूयस्त्वं दर्शयति ( तथाहीति ) 'हिततमं मन्यसे' इतिवाक्यं त्वाष्ट्रवधादेरप्युपक्रमगतम्, उपक्रमोपक्रमस्यापि महावाक्यान्तर्भा-

छ भावप्रकाशिका छ

( प्राबल्यस्यार्थसिद्धत्वादिति ) वस्तुतस्तु प्रथमव्याख्यायां 'तद्यथा रथस्य' इत्यादिवाक्यार्थीभूतस्य निखिलचिदचिद्वर्गाधारत्वस्यैव हेतुतयोपन्यासेनावयविसारस्य प्राबल्यस्य फलितत्वमपि नास्तीति द्रष्टव्यम् । ( अध्यात्मशब्दस्यात्मनीत्यर्थ इति ) 'विभक्त्यर्थे यदव्ययम्' इत्यव्ययीभावसमास इति भावः । ( अस्यां त्विति ) अधिगतः आधारत्वेनाधिगतः आत्मा परमात्मा यैस्ते अध्यात्मानः,

त्मधर्मः । तथा 'तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिताः एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः" इति सर्वाधारत्वं च तस्यैव धर्मः । तथा "स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इत्येतेऽपि परमात्मन एव धर्माः । 'एष लोकाधिपतिरेष सर्वेशः' इति च परमात्मन्येव सम्भवति । तदेवमध्यात्मसम्बन्धभूम्नोऽत्र विद्यमानत्वात् परमात्मैवात्रेन्द्रप्राणशब्दनिर्दिष्टः ॥ ३० ॥

* श्रुतप्रकाशिका *

वात्तदुक्तिः, न तु तावन्मात्रस्य साधकत्वाभिप्रायेण। लोकाधिपतिः– लोकस्वामी । सर्वेशः– सर्वनियन्ता। ननु 'पा रक्षणे' इति धातोः पतिशब्दः, तत्कथमत्र शेषिवाचित्वम्? उच्यते; न हि सर्वत्रावयवशक्तिरेव, रूढिशक्तिरपि ह्यस्ति, अन्यथा 'गमेर्डोः' इति व्युत्पत्त्या गोशब्दस्य सर्वजङ्गमवाचित्वप्रसङ्गात् स्थिताया गोरवाचकत्वप्रसङ्गाच्च, अतः शेषिणि पतिशब्दो रूढः, अन्यथा "वृद्धौ च मातापितरौ साध्वी भार्या सुतश्शिशुः। अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥" इति न्यायेन पितुस्संरक्षके पुत्रे पितरं प्रति पतिशब्दप्रयोगप्रसङ्गादिति । सूत्रार्थं निगमयति ( तदेवमिति ) अध्यात्मसम्बन्धभूमा ह्यस्मिन् इति सूत्रांशः परैरेवं व्याख्यातः, अध्यात्मसम्बन्धः– प्रत्यगात्मसम्बन्धः, तस्य भूमा बाहुल्यमुपलभ्यते अस्मिन्नध्याये, आयुषः प्रभुत्वमिन्द्रियाश्रत्वं शरीरोत्थापकत्वं विषयेन्द्रियादिविज्ञानप्रतिक्षेपेण प्रत्यगात्म-

७ भावप्रकाशिका ७

परमात्मासाधारणधर्मा इत्यर्थः । अध्यात्मनां सम्बन्धोऽध्यात्मसम्बन्ध इत्यर्थ इति भावः । ( आयुषः प्रभुत्वमिति ) 'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति श्रुतेरिति भावः ( इन्द्रियाश्रयत्वमिति ) "अस्तित्वे च प्राणानां निश्श्रेयसमिति" प्राणशब्दवाच्यस्य परस्यास्तित्व एव प्राणशब्दितानामिन्द्रियाणां निश्श्रेयसशब्दितपुरुषार्थप्रतिपादनादिति भावः । ( शरीरोत्थापकत्वमिति )

* श्रुतप्रकाशिका *

वेदनं चोपदिश्यत इति । अपरैश्च, प्रज्ञादेहेन्द्रियमनःप्राणात्मनां सम्बन्धोऽध्यात्मसम्बन्धः, स भूयानिति व्याख्यातम् । तदयुक्तम्; आयुरधिपतित्वादीनां मनःप्राणसम्बन्धित्वादीनां च परमात्मसाधकत्वाभावात् । इन्द्रसंज्ञदेवताविशेषे तात्पर्यनिषेधपरं सूत्रमिति चेन्न, इन्द्रस्य शरीरेऽपि प्राणेन्द्रियमनःप्रभृतीनां विद्यमानतया तत्प्रतिक्षेपासामर्थ्यात् । 'अस्मिञ्छरीरे' इति निर्देशो हीन्द्रशरीरेऽपि सम्भवति "सदेव सोम्येदम्" इतीदंशब्दवत् सर्वनामपदस्य साधारणत्वात् । प्रत्यगर्थविषयस्योपदेशस्य पराचीनदेवताविषयत्वमयुक्तमिति चेन्न, इन्द्रस्यापि स्वात्मानं प्रत्यहमिति प्रत्यक्तयाऽवभासात् । "प्राणोऽस्मि' 'मामुपास्स्वे"ति हि तद्वाक्यम् । इन्द्रमात्रस्य प्राधान्यतः प्रतिपाद्यता प्रति-

७ भावप्रकाशिका ७

'जीवति वागपेतो मूकान् हि पश्यामः जीवति चक्षुरपेतोऽन्धान् हि पश्यामः" इत्यारभ्य 'इदं शरीरं परिगृह्योत्थापयती'ति श्रवणादिति भावः । ( विषयेन्द्रियादिविज्ञानप्रतिक्षेपेणेति ) यद्यपि शाङ्करभाष्ये 'एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पितास्स एव प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतः" इति विषयेन्द्रियव्यवहाराधारभूतं प्रत्यगात्मानमेवोपसंहरति, स आत्मेति विद्यादिति चोपसंहारः प्रत्यगात्मपरिग्रह एव साधुरित्येव वर्तते, न तूक्तरूपेण; तथापीदं फलितार्थकथनम्. तथाहि; भूतमात्राशब्दितानां विषयाणां प्रज्ञामात्राशब्दितेषु इन्द्रियतज्जन्यज्ञानेष्वर्पितत्वं नाम तदधीनव्यवहारकर्मत्वम्, तद्भास्यत्वमित्यर्थः । एवं प्रज्ञामात्राणामपि प्राणेऽर्पितत्वं तादृशमेव. ततश्च सर्वभासके तस्मिन् इतरेषां कल्पितत्वात्तस्यैव विज्ञेयत्वम्, नेतरेषामिति फलतीति भावः । ( इन्द्रशरीरेपि सम्भवतीति ) ततश्च तदिन्द्रियाश्रयत्वतच्छरीरस्थापकत्वतदायुरवधित्वानामपीन्द्रदेवतायामपि सम्भवादुक्तहेतुभिरिन्द्रप्रतिक्षेपो न सम्भवतीति भावः । शङ्कते ( सदेव सोम्येति ) इदमुपलक्षणम्. "यतो वा इमानि भूतानि जायन्ते' 'यदिदमस्मिन् ब्रह्मपुरे' 'अस्माच्छरीरात्समुत्थाय" इत्यादिष्वपि सन्निहितव्यक्तिविशेषपरामर्शित्वादर्शनादित्यपि द्रष्टव्यम् । ( सर्वनामपदस्य साधारणत्वादिति ) ततश्च सर्वशरीरगतायुरवधित्वसर्वशरीरोत्थापकत्वसर्वेन्द्रियाश्रयत्वानामन्तःकरणाद्युपहितत्वेन पराग्रूपेन्द्रदेवताया न सम्भव इति भावः । ( इन्द्र-

**कथं तर्हि प्रज्ञातजीवभावस्येन्द्रस्य स्वात्मन उपास्यत्वोपदेशस्सङ्गच्छते ? तत्राह —**

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ ३१ ॥**

**प्रज्ञातजीवभावेनेन्द्रेण "मामेव विजानीहि' 'मामुपास्स्व' इति उपास्यस्य ब्रह्मणः स्वात्मत्वेनोपदेशोऽयं**

* श्रुतप्रकाशिका *

क्षिप्यत इति चेन्न, प्राणेन्द्रियमन आदिसम्बन्धानां तत्प्रतिक्षेपासामर्थ्यात् । सौत्रवचनव्यक्त्यनुगुणता च न स्यात्, प्राणः परमात्मेति प्रतिज्ञातमाद्यसूत्रे, द्वितीयसूत्रस्थेन नञा परमात्मत्वमेव निषेध्यम्, न परमात्मेति पूर्वपक्षिते तत्प्रतिसमाधानपरेण परमात्मैव प्राण इति प्रतिज्ञाय समर्थनीयम्, न परमात्मेतिवदन्तं प्रति नेन्द्र इत्युक्ते कः प्रतिक्षेपः ? न घटोऽस्तीत्युक्ते न पट इतिवत् तयोर्विरोधाभावात् । परमात्मत्वे प्रतिज्ञाते मनःप्राणसम्बन्धादयस्तु न परमात्मत्वसाधनसमर्थाः । ननु नायं परमात्मा, अपि त्विन्द्र इति प्रतिज्ञाते सति नेन्द्र इति प्रतिविधानमयुक्तमिति· चेन्न; त्वदुक्तयुक्तेरिन्द्रप्रतिक्षेपकत्वाभावात् । अस्तु वा तत्प्रतिक्षेपः, ततः किम् ? स तु परमसाध्यस्य परमात्मपरत्वस्योपयोगीति चेन्न, परमसाध्यस्याव्यवहितसाधकहेतूपस्थापकत्वे सम्भवति परम्परया साधकार्थपरत्वेन निर्वाहानुपपत्तेः ॥ .... .... .... .... ....

उत्तरसूत्रं शङ्कयाऽवतारयति ( कथं तर्हीति ) ( प्रज्ञातजीवभावस्येति ) "इदि परमैश्वर्ये" इत्यादिप्रकृतिप्रत्ययविभागेन परमात्मपरत्वमिन्द्रादिशब्दानामयुक्तम्, त्वाष्ट्रवधादिलिङ्गनिर्वाहानुपपत्तेः । तत्कथमिन्द्रशब्देन परमात्मनिर्देश इति भावः । पूर्वं परमात्मपरत्वसाधकहेतुरुक्तः, पूर्वपक्षयुक्तेः कः परिहार इत्यपेक्षायां सूत्रावतार इत्यर्थः ॥

॥ शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ कीदृश उपदेश इत्यत्राह ( प्रज्ञातेति )

६ भावप्रकाशिका ६

स्यापि स्वात्मानमिति ) अहमिति भासमानत्वमेव प्रत्यक्त्वमिति प्रथमसूत्रे शिक्षितत्वादिन्द्रदेवताया अपि प्रत्यक्त्वमस्तीति भावः ॥ .... .... ....

( तत्कथमिन्द्रशब्देनेति ) मामितिशब्देनेत्यर्थः । ननु 'इन्द्रस्य प्रियं धाम'

न प्रमाणान्तरप्राप्तस्वात्मावलोकनकृतः, अपि तु शास्त्रेण स्वात्मदृष्टिकृतः । एतदुक्तम्भवति-- "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' 'ऐतदात्म्यमिदं सर्वम्' 'अन्तःप्रविष्टश्शास्ता जनानां सर्वात्मा' 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति' 'एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिनामहन्त्वमादिशब्दानामपि परमात्मन्येव पर्य्यवसानं ज्ञात्वा 'मामेव विजानीहि' 'मामुपास्व' इति स्वात्मशरीरकं परमात्मानमे-

* श्रुतप्रकाशिका *

शास्त्रदृष्टिशब्दस्य व्यवच्छेद्यमाह ( न प्रमाणान्तरेति ) शास्त्रस्य दृष्टिः शास्त्ररूपा दृष्टिरिति च प्रतीतिः स्यादिति तद्व्यावृत्त्यर्थमाह ( शास्त्रेणेति ) कस्य दृष्टिरित्यपेक्षायां स्वात्मशब्दः, स्वानुभवप्रत्यक्षेण आत्मावलोकने जीवमात्रप्रकाशः, शास्त्रेण तन्मूलयोगेन चात्मानुभवे परमात्मपर्यन्ततया प्रकाश इति भावः । न हि प्रमाणविशेषेणान्यत्प्रमेयमन्यद्भवति । तच्च शास्त्रं किमित्यत्राह ( एतदुक्तमिति ) जीववाचिपदानां परमात्मसामानाधिकरण्योपपादिकाः श्रुतीरुदाजिहीर्षुर्नामरूपव्याकरणश्रुतिमाह ( अनेनेति ) जीवेऽप्यनुप्रवेशं दर्शयितुमाह ( ऐतदात्म्यमिति ) तदेव स्पष्टयति ( अन्तःप्रविष्ट इति ) शरीरत्वलक्षणं दर्शयति ( य आत्मनीति ) पर्यवसानं ज्ञात्वेति नामरूपव्याकरणश्रुतिलब्धार्थः उक्तः, उपदिदेशेत्यन्तेन शास्त्रदृष्ट्या तूपदेश इत्यंशो व्याख्यातः । वाम-

❦ भावप्रकाशिका ❦

इत्यत्रत्येन्द्रशब्देनेति भ्रमितव्यम् । तत्रेन्द्रशब्दस्य जीवपरत्वे विवादाभावादितिध्येयम् ॥ .... .... .... .... ....

वोपास्यत्वेनोपदिदेशेति। वामदेववत्- यथा वामदेवः परस्य ब्रह्मणस्सर्वान्तरात्मत्वं सर्वस्य तच्छरीरत्वं शरीरवाचिनां शब्दानां शरीरिणि पर्य्यवसानं पश्यन् 'अहम्' इति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्य्यादीन् व्यपदिशति[1] "तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवान् ऋषिरस्मि विप्रः" इत्यादिना। यथा च प्रह्लादः [2]"सर्वगत्वादनन्तस्य स एवाहमवस्थितः। मत्तः सर्वमहं सर्वं मयि सर्वं सनातने॥" इत्यादि वदति॥ ३१॥ ....

* श्रुतप्रकाशिका *

देववदित्यंशं व्याचष्टे (यथेति) शरीरिणि पर्यवसानं पश्यन्नित्यन्तेन 'तद्धैतत्पश्यन्' इत्येतद्व्याख्यातम्। उक्तार्थविशदीकरणायाह (यथा च प्रह्लाद इति)॥ ....

* भावप्रकाशिका *

(तद्धैतत्पश्यन्नित्येतद्व्याख्यातमिति) ननु शरीरवाचिशब्दानां शरीरिपर्यवसानस्य 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' इति पूर्ववाक्यनिर्दिष्टत्वात्तदेतच्छब्दाभ्यां कथं परामर्शः। किञ्च शरीरवाचिशब्दानां शरीरिपर्यन्तत्वज्ञानस्य शरीरिणि शरीरवाचिशब्दप्रयोगौपयिकत्वेपि 'अहं मनुरभवम्' इति प्रतिपत्तावहेतुत्वात्. तत्कथनञ्च निष्प्रयोजनमिति चेन्न; 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेव वेदाहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्, इति तत्पूर्ववाक्ये ब्रह्मणस्सर्वमभवदिति सर्वात्मकत्वप्रतिपादनेन सर्वशब्दवाच्यत्वप्रतीत्या शरीरवाचिशब्दानां शरीरिपर्यन्तत्वस्यापि आक्षेपतः प्रतीतत्वेन तस्य तद्धैतत्पश्यन्नित्यत्र परामर्शे दोषाभावात्। यच्चोक्तं शरीरवाचिशब्दानां शरीरिपर्यन्तत्वज्ञानस्य शब्दप्रयोगौपयिकत्वेपि प्रतीत्यनुपयुक्तत्वादिति। तदपि न,

१ बृ. ३-४-१० ॥ "अहम्मनु- सूर्यश्च इत्यन्तमेव बृहदारण्यके दृश्यते। ऋक्संहिता. ३-६-१५-४-३-२६-१-वाक्यम्. 'अहम्' इत्यारभ्य 'विप्र' इत्यन्तम्॥ २ वि-पु. १-१९-८९ ॥

अस्मिन् प्रकरणे जीववाचिभिश्शब्दैरचिद्विशेषाभिधायिभिश्चोपास्यभूतस्य परस्य ब्रह्मणोऽभिधाने कारणं चोद्यपूर्वकमाह—

जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ ३२ ॥

[1]"न वाचं विजिज्ञासीत वक्तारं विद्यात्' [2]'त्रिशीर्षाणं त्वाष्ट्रमहनम् अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम्" इत्यादिजीवलिङ्गात् [2]'यावदस्मिन् शरीरे

* श्रुतप्रकाशिका *

उत्तरसूत्रमवतारयति (अस्मिन्निति) (जीववाचिभिरित्यादि) त्वाष्ट्रवधादिलिङ्गप्रतिपादनकारणमपि कथनीयमित्यभिप्रेतम्, उपरितनग्रन्थानुगुण्यात् । कारणम्– प्रयोजनरूपम् । उपदेष्टुमिति हि वक्ष्यते । चोद्यपूर्वकमाह, न तूक्तार्थप्रतिक्षेपार्थकं चोद्यम्, विशेषणांशे तात्पर्यं प्रतीयत इति तस्य प्रयोजनमेव प्रष्टव्यम्, तच्चोद्यरूपेण पृष्टवान् इत्यर्थः ॥

॥ जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् ॥ न वाचं विजिज्ञासीत वक्तारं विद्यादिति । न केवलं मद्वचनमेव विजानीहि, वक्तारं

* भावप्रकाशिका *

अत्राहं मनुरित्यादिप्रतीतेरपि शब्दानुविद्धतया तादृशशब्दप्रतीतौ तज्ज्ञानस्याप्युपयुक्तत्वादिति दिक् ॥ .... .... .... ....

( उपदेष्टुमिति हि वक्ष्यत इति ) 'तुमन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुनः प्रकृत्यर्थीभूतोपदेशप्रयोजनत्वाभिधायित्वादिति भावः ॥

( वक्तारं मां च विजानीहीत्यर्थः इति ) ननु 'न वाचं विजिज्ञासीत वक्तारं विद्यान्न गन्धं विजिज्ञासीत घ्रातारं विद्यात्' इत्यादिप्रकरणं सामान्यतो वागादीन्द्रियाणां ज्ञेयत्वनिषेधेन तद्विलक्षणस्य तदुपकरणस्यात्मनो ज्ञेयत्वप्रति-

1 कौषी. १-८ | 2 कौषी. ३-१ ॥

प्राणो वसति तावदायुः' 'अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" इति मुख्यप्राण-लिङ्गाच्च नाध्यात्मसम्बन्धभूमेति चेत्—न, उपासात्रै-विध्यात् हेतोः, उपासनात्रैविध्यमुपदेष्टुं तत्तच्छब्देना-भिधानम्--निखिलकारणभूतस्य ब्रह्मणः स्वरूपेणानुस-न्धानम् भोक्तृवर्गशरीरकत्वानुसन्धानम् भोग्यभो-गोपकरणशरीरकत्वेनानुसन्धानञ्चेति त्रिविधमनुस-

* श्रुतप्रकाशिका *

माञ्च विजानीहीत्यर्थः । मुख्यप्राणः—पञ्चवृत्तिः । मुख्यशब्दः इन्द्रियादिव्या-वृत्त्यर्थः । नञो निषेध्याकाङ्क्षायामनतिविप्रकृष्टं सौत्रं पदमध्याहृतम् अध्यात्मेति । हेतुत्वं विवृणोति ( उपासनेति ) उपदेष्टुमित्यनेन प्रयोजनतया हेतुत्वं स्पष्टम् त्रैविध्यं विवृणोति ( निखिलेति ) स्वरूपेणानुसन्धानम्--अद्वारकगुणविशिष्टानु-सन्धानम् । त्रिविधानुसन्धानस्य प्रमाणमूलत्वे सिद्धे ह्ययं निर्वाह उपपन्नः

ಛ भावप्रकाशिका ಛ

पादनपरमिति प्रतीयते नतूक्तार्थपरतयेति चेत्. सत्यम्; तथैवार्थः । न वाचं विजिज्ञासीत वक्तारं विद्यादिति जीवसामान्यलिङ्गतया प्रतीतानामपि वक्तृत्वादीनां त्वाष्ट्रवधादीन्द्रलिङ्गानुसारेण इन्द्र एव पर्यवसानं वक्तव्यमित्य-भिप्रेत्य वक्तारं मामित्यर्थवर्णनोपपत्तेः । अत्र चकार एवार्थकः । भाष्ये— मुख्यप्राणलिङ्गाच्चेति । "प्राणो हि भूतानामायुः' 'यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते" इत्यादिश्रुत्या आयुःप्रदानस्थानव्यशरीरस्थापकत्वयो-र्मुख्यप्राणधर्मत्वावगमादिति भावः । इदमुपलक्षणम् । "यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राणस्सहैतावस्मिन् शरीरे वसतस्सहोत्क्रामतः" इति द्विवचनश्रुतेस्स-होत्क्रमणलिङ्गानुगृहीतायाः परब्रह्मणि योजयितुमशक्यतया जीवमुख्यप्राणलिङ्गा-नामपि प्रतिपिपादयिषितत्वमस्तीत्यपि द्रष्टव्यम् । ( अनतिविप्रकृष्टमिति ) नन्व-ध्यात्मसम्बन्धभूम्नस्सम्प्रतिपन्नस्याक्षेपो न सम्भवति । किन्तु जीवमुख्यप्राणलि-

न्धानमुपदेष्टुमित्यर्थः । तदिदं त्रिविधं ब्रह्मानुसन्धानं प्रकरणान्तरेष्वप्याश्रितम् "सत्यं ज्ञानमनन्तं ब्रह्म" "आनन्दो ब्रह्म" इत्यादिषु स्वरूपानुसन्धानम् "तत्सृष्ट्वा । तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च

* श्रुतप्रकाशिका *

स्यादिति शङ्कायाम् आश्रितत्वादित्येतद्व्याचष्टे ( तदिदमिति ) कुत्रेत्यपेक्षायां प्रकरणान्तरेष्वपीत्युक्तम् । आश्रितम् – प्रतिपन्नमित्यर्थः । ( तत्सृष्ट्वेत्यादि ) 'सत्यं ज्ञानमनन्तम्' इति देशकालवस्तुपरिच्छेदरहितस्य ब्रह्मणः 'ब्रह्मविदाप्नोति' इति वेद्यत्वविधानात् प्रकरणस्य वेद्यब्रह्मप्रतिपादनपरत्वात् 'स यः एवं वित्' इति निगमनवाक्येऽपि पूर्वोक्तसमस्तप्रकारविशिष्टवेदनप्रतीतेश्च चिदचिच्छरीरकत्वानुसन्धानमत्र विवक्षितमिति भाष्याभिप्रायः । ननु 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इत्युक्त्वाऽनन्तरं 'स य एवंविदि'ति वाक्येन जीवान्तर्यामिण आदित्यान्तर्वर्तिनश्च उपासनमुच्यत इति चेन्न, स्थानभेदेन विद्याभेदप्रसङ्गात् । स चानुपपन्नः, 'एतमानन्दमयमात्मानमुपसङ्क्रामति' इत्यान-

* भावप्रकाशिका *

ज्ञानामपि सत्त्वान्न परं ब्रह्मैवात्र प्रकरणे प्रतिपाद्यते, अपितु त्रयोऽपीति चेदित्येव निषेध्याध्याहारो युक्त इति चेन्न; मुख्यप्राणलिङ्गादध्यात्मसम्बन्धभूमा नेत्यस्याध्यात्मसम्बन्धभूमाप्रकरणस्य ब्रह्ममात्रप्रतिपादकत्वसाधको नेत्येवाभिप्रायात्, स्वरूपेणानुसन्धानमित्यस्य निर्विशेषात्मस्वरूपोपासनपरत्वभ्रान्तिं वारयति ( अद्वारकगुणविशिष्टेति ) दिव्यात्मस्वरूपनिष्ठास्सत्यत्वादयो गुणाः अद्वारकगुणाः । ननु तत्सृष्ट्वेत्यादिप्रकरणस्य स्वरूपोपदेशपरत्वेनोपासनविध्यश्रवणात् कथं तत्रोपासात्रैविध्यसिद्धिरित्यत आह ( सत्यं ज्ञानमितीति ) प्रतिपादितस्येति शेषः । ( वेद्यत्वविधानादिति ) उपास्यत्वविधानादित्यर्थः । एवमुत्तरत्रापि विधिरुपासनपरो द्रष्टव्यः । ( उपासनमुच्यत इति चेदिति ) ननु त्वदुक्तं चिदचिच्छरीरकोपासनम्, सच्च त्यच्चाभवदित्यस्य स य एवंविदित्यत्रासन्निहितत्वादिति भावः । ( विद्याभेदप्रसङ्गादिति ) ननु 'अनुत्तमेषूत्तमेषु लोकेषु' इतिवदन्तर्यामिब्राह्मणादिवद्वा-

त्यच्चाभवत् । निरुक्तश्चानिरुक्तश्च निलयनं चानिलयनञ्च । विज्ञानञ्चाविज्ञानञ्च । सत्यं चानृतञ्च सत्यमभवत्" इत्यादिषु भोक्तृशरीरतया भोग्यभोगोपकरणशरीरतया

* श्रुतप्रकाशिका *

न्दमयप्राप्तिफलश्रवणेन 'ब्रह्मविदाप्नोति परम्' 'तस्माद्वा एतस्मादात्मनः' इत्यादिना प्रतिपादितानन्दमयविषयविद्यैकत्वावगमात् प्रकरणस्य सम्भवत्येकवाक्यत्वे वाक्यभेदानुपपत्तेश्च। स यश्चायमित्यादिवाक्ये किमुच्यत इति चेत्. त्रिविधानुसन्धानरूपैकविद्याया मोक्षफलकत्वेन विवक्षितत्वे सति तत्र स्वरूपेणावस्थितस्य अनुसन्धाने ज्ञानादिगुणवद्दिव्यविग्रहयोगस्याप्यनुसन्धेयतासिध्यर्थं पुण्डरीकाक्षमप्राकृतवपुरतिदिश्यते। तत्र 'स यश्चायं पुरुषे' इति विज्ञानमयादन्यतरस्यानन्दमयस्यानुवादः, 'यश्चासावादित्ये' इति विग्रहातिदेशः। किञ्च आनन्दमयप्रतिपादनानन्तरं ब्रह्मविदाप्नोतीत्युपक्रमाभिहितप्राप्तिविशदीकारार्थम् 'अथातोऽनु प्रश्नाः' इति प्रश्ना उपक्षिप्ताः। पूर्वप्रतिपादनस्य बुभुत्साहेतुत्वमतश्शब्देनोच्यते. उताविद्वानिति। उत विद्वानितिपदम् 'निपातस्य' इति छान्दसो दीर्घः, अथासपत्नानितिवत्। अविद्वानिति पदे सति ह्याद्युदात्तत्वं स्यात्, 'तत्पुरुषे तुल्यार्थे'त्यादिस्मरणात्, 'अविद्वान् प्रतिगृह्णातीतिवत्; अन्तोदात्तश्चेदं पदम्' तस्माद्विद्वानिति पदम्। कश्चन— अविप्रकृष्टहृदयादिस्थानस्थमनवच्छिन्नञ्च ब्रह्मोपासीनो विद्वान् किमतः प्रेत्य अमुं लोकं 'परमे व्योमन्' इत्युक्तं लोकं गच्छतीत्येकः प्रश्नः । उत गत्यनपेक्षमिहैव ब्रह्म प्राप्नोतीत्यर्थसिद्धः प्रश्नः। आहो विद्वानिति। समश्नुता इति भोक्तृत्वं विवक्षितम्। कश्चित्—अहङ्ग्रहेणोपासीनोऽपि विद्वान् अमुं लोकं गत्वा किं समश्नुते? भोग्य-

ӿ भावप्रकाशिका ӿ

नेकस्थानस्थितस्य ब्रह्मण एकस्यां विद्यायामुपास्यत्वं सम्भवतीति चेत् 'सम्बन्धादेवमन्यत्रापि' इत्यधिकरणे स्थानभेदे विद्याभेदस्य समर्थयिष्यमाणत्वादित्यभिप्रायः। (विग्रहातिदेश इति) 'यश्चासावादित्ये स एकः' इत्यत्र एक इत्यनेन एकाकारविग्रहवत्त्वं स्वरूपत ऐक्यं चोच्यत इति भावः। (बुभुत्साहेतुत्वमिति) प्रश्नहेतुत्वमित्यर्थः। 'अथातो नु प्रश्नाः" इति प्रश्नस्यैव समभिव्याहारादितिध्येयम्। (तत्पुरुषे तुल्यार्थेति) 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्या'

* श्रुतप्रकाशिका *

भूतं ब्रह्मानुभवतीत्येकः प्रश्नः । उत ब्रह्मस्वरूपेणैकीभवतीत्यर्थसिद्धः प्रश्नः । एवं शास्त्रवैविध्यमूलाः गतिविशेषस्वरूपभेदभावाभावविषयाः प्रश्नाः बहुवचनविवक्षिताः । एतान् प्रतिवक्तुं जगत्कारणत्वौपयिकगुणविशिष्टस्यैव विलक्षणस्य ब्रह्मणः प्राप्यत्वादिज्ञापनाय 'सोऽकामयत' इत्यादिना जगत्कारणत्वादिकं निरतिशयानन्दपर्यन्तं महिमानमुक्त्वा 'स यश्चाय'मित्यादि वाक्यं वदति, सन्निकृष्टहृदयस्थं वा विप्रकृष्टरविमण्डलादिस्थानस्थं वा पूर्वोक्तं सत्यत्वादिलक्षणमानन्दादिगुणकं वा ब्रह्मोपासीनः सर्वोऽपि विद्वान् अस्माल्लोकात् प्रेत्य अन्नमयादिसमष्टिव्यष्टिविभूतिकं निरतिशयानन्दं परमात्मानं भोग्यभूतं भोक्ता सन्ननुभवतीति प्रश्नस्योत्तरमुक्तम् । अतस्सर्वेषां विद्याविशेषनिष्ठानामर्चिरादिगतिमत्त्वं भोक्तृभोग्यभावेनावस्थानञ्च प्रतिप्रादयितुं सन्निकृष्टविप्रकृष्टस्थानविशेषोपलक्षणार्थं स यश्चायमित्याद्युक्तम्, तस्मादादित्यान्तर्वर्त्तितया उपासनमानन्दवल्ल्यां न विधित्सितम् । अत उक्तलक्षणत्रिविधोपासनमेवात्र विवक्षितम् । एवम् 'भोक्ता भोग्यं प्रेरितारञ्च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" इत्यादीनि सदृशानि श्रुत्यन्तराणि च विवक्षितानि, त्रिविधोपासनस्य स्फुटतरत्वात् भोक्तृभोग्ययोरीश्वरविधात्वं कथमित्यपेक्षायां चिदचिदनुप्रवेशादीश्वरस्य तत्प्रकारित्वमिति त्रिविधोपासनपरश्रुत्यन्तरार्थविशदीकारहेतुत्वादानन्दवल्लीवाक्यमिहोदाहृतम् । अन्यत्त्वभिप्रेतम् । इह तद्योगादित्ये-

卐 भावप्रकाशिका 卐

इत्यव्ययस्य पूर्वपदप्रकृतिस्वरविधानादाद्युदात्तत्वं स्यादिति भावः । ( अहङ्ग्रहेणेति ) आत्मबुद्ध्येत्यर्थः । ( अर्थसिद्धः प्रश्न इति ) यद्यपि 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति प्राचीनमन्त्रवर्णत एव इयं शङ्का व्यावर्तिता । तथापि तद्दृढीकरणार्थत्वात्प्रश्नानां नानुपपत्तिरिति द्रष्टव्यम् । 'अन्नमयमात्मानमुपसङ्क्रामति' इत्यादिवाक्यगतान्नमयादिशब्दार्थमाह ( अन्नमयादिसमष्टिव्यष्टिविभूतिकमिति ) ( स्थानविशेषोपलक्षणार्थं स यश्चायमित्युक्तमिति ) इदमुपलक्षणम् । आनन्दमयस्य देवताविशेषत्वनिर्धारणार्थतयापि तद्वाक्यसाफल्यमादित्यान्तर्वर्तिनः पुण्डरीकाक्षत्वेन नारायणत्वस्य सिद्धत्वादित्यपि द्रष्टव्यम् । ननु 'सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्' इति त्रैविध्यप्रतिपादकस्फुटतरवाक्ये विद्यमाने भाष्ये आनन्दवल्लीवाक्योदाहरणस्य प्रयोजनमाह ( भोक्तृभोग्ययोरित्यादिना ) । ( पाशु-

चानुसन्धानम्। इहापि प्रकरणे तत् त्रिविधमनुसन्धानं युज्यत एवेत्यर्थः ॥ एतदुक्तम्भवति,- यत्र हिरण्यगर्भादिजीवविशेषाणां प्रकृत्याद्यचेतनविशेषाणाञ्च परमात्मासाधारणधर्मयोगस्तदभिधायिनां शब्दानां पर-

* श्रुतप्रकाशिका *

तद्व्याचष्टे (इहापीति) 'आनन्दोऽजरोऽमृतः' इति स्वेन रूपेणानुसन्धानम्, 'प्राणोऽस्मीत्यचिद्विशिष्टानुसन्धानम् 'मामुपास्स्वे'ति चिदचिद्विशिष्टानुसन्धानमिति त्रिविधानुसन्धानमिहोपपद्यत इत्यर्थः। त्रिविधानुसन्धाने कर्तव्येऽप्यत्र चिद्विशेषाचिद्विशेषविशिष्टत्वोक्तिः कथम् ? सामान्येन चिदचिद्विशिष्टानुसन्धानं हि प्रकरणान्तरोक्तमित्यपेक्षां प्रशमयन्नस्य न्यायस्य प्रतर्दनविद्यामात्रविषयत्वं च निवारयन् विशिष्टोपासनपरत्वचिह्नं च दर्शयति ( एतदुक्तम्भवतीति ) ( यत्रेति ) अयं न्यायो न प्रतर्दनविद्यामात्रविषयः, अपि त्वीदृशसर्वप्रकरणविषय इति भावः। सामान्येन चिदचिद्विशिष्टोपासनं हि विहितत्वात् स्वीक्रियते विधेरवैयर्थ्यार्थम्, तथा चिदचिद्विशेषविशिष्टोपासनं विहितञ्चेत् तत्र तत्र चिदचिद्विशेषान्तर्यामित्वमनुसन्धेयमित्यभिप्रायेणाह ( हिरण्यगर्भादीति ) हिरण्यगर्भादिजीवविशेषाणामितिपदेन परमात्मशब्देन च 'परमात्मा व्यवस्थितः स ब्रह्मा स शिवस्सेन्द्रः" इति श्रुतिः स्मर्यते। अनन्यपरेण नारायणानुवाकेन सर्वविद्यासूपास्यो नारायण एवेति निर्णीतत्वादिन्द्राद्युपासनेपि तदन्तर्यामिनारायण एवोपास्य इति भावः। पाशुपताधिकरणे तथानुवदिष्यमाणत्वात्। परमात्मपर्यन्तत्वविवक्षाज्ञापकं द्विविधं प्रदर्शयति ( परमात्मासाधारणेति ) परमात्मासाधारणधर्मयोगात्तद्वाचि-

* भावप्रकाशिका *

पताधिकरणे तथा अनुवदिष्यमाणत्वादिति ) केवलपरतत्त्वप्रतिपादननारायणानुवाकसिद्धतत्त्वपराः केषुचिदुपासनवाक्येषु श्रुताः प्रजापतिशिवेन्द्रादिशब्दा इति 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' इत्यत्र प्रतिपादितमित्यनुवदिष्यमाणत्वादित्यर्थः। ( परमात्मासाधारणधर्मयोगादिति ) ननु 'आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' इत्यादिषु परमात्मासाधारणधर्मयोगोऽस्ति, तथापि तत्र न तद्विशिष्टोपासनपरं योगादेव परमात्मनि आकाश-

मात्मवाचिशब्दैः सामानाधिकरण्यं वा दृश्यते; तत्र परमात्मनस्तत्तच्चिदचिद्विशेषान्तरात्मत्वानुसन्धानं प्रतिपिपादयिषितमिति ॥ अतोऽत्रेन्द्रप्राणशब्दनिर्दिष्टो

* श्रुतप्रकाशिका *

शब्दसामानाधिकरण्याच्च विशिष्टोपासनपरत्वमवगम्यत इत्यर्थः । अधिकरणार्थमुपसंहरति ( अत इति ) ॥ .... .... .... .... ....

अत्र कैश्चिदेवं वर्णितम्– प्राणव्यापारस्यापि परमात्मायत्तत्वात्तत्सङ्कीर्तनम्, जीवसङ्कीर्तनं तु तस्यौपाधिकभेदप्रतिक्षेपेण परब्रह्मरूपताज्ञापनार्थम्, अन्यथा त्रिविधमुपासनं प्रसज्येत, ततश्च वाक्यभेदः स्यादिति । तदयुक्तम्, 'नित्योपलब्ध्यनुपलब्धिप्रसङ्गः' 'अपीतौ तद्वत्प्रसङ्गा'दितिवत् प्रसङ्गशब्दस्याश्रुतत्वात् वाक्यभेदाभावाच्च । एकवाक्येनैव हि विधीयते, 'तं मामायुरमृतमित्युपास्स्वे'त्यत्र मामिति जीवविशिष्टतोक्ता, आयुरिति प्राणविशिष्टता, 'आयुः प्राणः' इति ह्यनन्तरवा-

* भावप्रकाशिका *

दिशब्दानां वृत्तिसम्भवादिति चेन्न; यत्रानन्यथासिद्धं चिदचिल्लिङ्गं परमात्मलिङ्गञ्च तादृशस्थले तद्विशिष्टवाचित्वमिति तात्पर्यात् . अत एवोक्तं वेदान्ताचार्यैः– "परविद्यासु जीवोक्तिर्निरुक्त्यादेः पराश्रया । तल्लिङ्गानन्यथासिद्धौ तद्विशिष्टावलम्बिनी ॥" इति । अत एव सर्वपरविद्यासु त्रिविधोपासनवादोपि निरस्त इति वेदितव्यम् ॥ .... .... .... .... .... ....

( कैश्चिदेवं वर्णितमिति ) मृषावादिभिरित्यर्थः । ( तत्सङ्कीर्तनमिति ) प्राणव्यापारकीर्तनं परमात्मन्यप्यविरुद्धमिति शेषः । ( तस्यौपाधिकभेदप्रतिक्षेपेणेति ) ज्ञानशक्तिक्रियाशक्त्याश्रययोः प्रत्यगात्मोपाधिभूतयोर्बुद्धिप्राणयोर्निर्देशमुखेन तत्तदुपाधिकृतभेदपरित्यागेन जीवस्वरूपं ब्रह्मैवात्र प्रकरणे प्रतिपाद्यमिति ज्ञापनार्थम्, अतएवोपाधिद्वयोपहितस्य प्रत्यगात्मनस्स्वरूपेणाभेदमभिप्रेत्य 'यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राणः' इत्यभेदो निर्दिष्ट इति वदन्तीति भावः । ( एकवाक्येनैव हि विधीयत इति ) ननु तावता इन्द्रमुख्यप्राणविशिष्टब्रह्मोपासनलाभेपि इन्द्रस्य तं मामितिविशेषणेन पूर्वोक्तत्वाघ्ह्ननादिगुणकत्वलाभेपि वक्तृत्वघ्रातृत्वादिगुणकत्वस्य वक्ष्यमाणस्यालाभात् । प्राणस्यायुष्ट्वादिगुणकत्व-

* श्रुतप्रकाशिका *

क्यम्, अमृतमिति स्वेन रूपेणावस्थितिः, अत एवंविधं परमात्मानमुपास्स्वेत्येकवाक्यत्वम्। उपासात्रैविध्यविधानस्य वृत्तिकाराभिमतत्वात् तदनतिक्रमाय परैरेवं त्रिविधोपासनपरत्वेन योजनान्तरं कृतम्, तत्र ज्ञानक्रियाशक्तिद्वयाश्रयबुद्धिप्राणरूपोपाधिधर्मेण स्वधर्मेण च त्रिविधं ब्रह्मोपास्यमिति। तदयुक्तम्, जीवेश्वरभेदस्यान्तःकरणरूपोपाध्यवच्छेदकल्पितत्वाभावात् "यस्यात्मा शरीरम्' 'मनोमयः प्राणशरीरः" इति जीवप्राणयोः परमात्मानं प्रति शरीरतया प्रकारत्वस्य श्रुतत्वेन प्रकारान्तरेण त्रैविध्यकल्पनायोगाच्च॥ .... .... .... ....

* भावप्रकाशिका *

लाभेपि इन्द्रियनिश्श्रेयसहेतुत्वशरीरोत्थापकत्वादिगुणकत्वस्य वक्ष्यमाणस्यालाभाच्च तत्तद्गुणविशिष्टेन्द्रप्राणविशेषितब्रह्मोपासनसिद्धये वक्तारं विद्यावित्यादिषु 'एतदेवोक्थमुपासीत' इत्यत्र च जीवमुख्यप्राणोपासने विध्यन्तराणां स्वीकरणीयत्वेन वाक्यभेदे दोषा दुस्तराः। न च वाक्यभेदार्थं वक्ष्यमाणसर्वगुणविशिष्टेन्द्रप्राणविशेषितब्रह्मोपासनं 'तं मामायुरमृतमुपास्व' इत्यत्रैव विधेयमस्त्विति वाच्यम्; वक्ष्यमाणतत्तद्गुणसमर्पकशब्देषु श्रूयमाणेषु तत्तद्गुणोपासनाविधिषु चाग्रे श्रूयमाणेषु तथा स्वीकारस्यैवायुक्तत्वात्, अन्यथा 'अग्निहोत्रं जुहोति' इत्यत्रापि अवाक्यभेदार्थं प्रकरणगतविध्यन्तरश्रुतदध्यादिवैकल्पिक सकलद्रव्यविशिष्टाग्निहोत्रविधिरिति कल्पनापत्तेरिति चेन्न. अग्निहोत्रवाक्येन दध्यादिवाक्यानामिव 'तं मामायुः' इत्यादिवाक्येन एतदेवोक्थमित्यादिवाक्यानां गुणविधायकतया वाक्यैकवाक्यत्वेन निर्वाहे दोषाभावात्। किञ्च ज्ञेयब्रह्मपरमेवेदं प्रकरणमिति वदतस्तव मतेपि भूमविद्यायां ज्ञेयब्रह्मप्रकरणमध्ये नामवागाद्युपासनविधिस्वीकारवत् जीवमुख्यप्राणयोरपि उपासनास्वीकारः किं न भवेत्। यदि च जीवमुख्यप्राणोपन्यासस्य शुद्धब्रह्मप्रतिपत्त्यर्थत्वं तर्हि 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' इत्यादौ 'आध्यानाय प्रयोजनाभावात्' इत्यधिकरणोक्तरीत्या इन्द्रियार्थाद्यनुक्रमणस्य परमपुरुषप्रतिपत्त्युपायत्ववत् भूमविद्यायां नामादिप्रतिपादनस्यापि उत्तरोत्तरभूयस्त्वप्रतिपादनद्वारा ब्रह्मणस्सर्वभूतभूयस्त्वप्रतिपादन एव तात्पर्यमिति वक्तुं सुशकत्वेन वैश्वानरविद्यायां व्यस्तोपासनवत् नामाद्युपासनविधेरपि त्यागप्रसङ्गमित्यलमतिचर्चया। ननु तथापि स्वरूपो-

* श्रुतप्रकाशिका *

अन्ये त्वेवमुपासात्रैविध्येन वाक्यैकत्वमाहुः,— प्रज्ञाशरीरो जीवशरीरः प्राणशरीरश्च परमात्मोपास्यः । तत्र प्रज्ञाशरीरो मनोमयः, जीवशरीरो वाङ्मयः, वाक्शब्दः शब्दपरिणामशक्तियोगात् परमाकाशविषयः, अतो वाङ्मय आकाशशरीरः । आकाशशरीरत्वं च जीवशरीरत्वपर्यन्तम्, "तस्यान्ते सुषिरं सूक्ष्मम्' 'तस्य मध्ये महानग्निः" इति हृदयाकाशमध्ये अग्निशब्देन जाठराग्निपरमात्मज्वालया संसृष्टं जीवमभिधाय 'तस्याशिशखाया मध्ये परमात्मा व्यवस्थितः" इत्याम्नानादिति । तदप्यनुपपन्नम्; मनोमयादिव्यूहानाम् अप्रामाणिकत्वस्य पूर्वमेव दर्शितत्वात् । किञ्च अस्मिन् प्रकरणे प्रजाशब्दस्य सहोत्क्रमणपृथग्व्यवहाराभ्यां स्थानप्रमाणेन च जीवप्रसिद्धमनोविषयत्वोपपादनेन ईश्वरप्रजाशक्तिवाचित्वाभावात् प्राणशब्दस्य घटशब्दस्योदकाहरणशक्तिवाचित्वाभाववत् क्रियाशक्तिवाचित्वाभावाच्च, अतः प्रज्ञाप्राणशब्दौ न मनोमयप्राणमयवाचकौ । यदि प्रसिद्धमनोवाक्प्राणा एतत्कार्यभूताः विवक्षिताः तर्ह्यस्मिन् प्रकरणे चक्षुःश्रोत्रादीनामपि प्रकृतत्वात्तेषाञ्च परमात्ममयत्वादुपासात्रैविध्यं विरुध्यते । आकाशशरीरत्वं जीवशरीरत्वपर्यन्तमित्यप्ययुक्तम् 'तस्य मध्ये महानग्नि'रित्यग्निशब्दस्य जीववाचित्वाभावात् । "तत्र यस्संश्रितो नित्यं स्थाल्याममग्निरिवार्पितः । आत्मानं तं विजानीयात्" इति स्मृतिवचनन्तु न जीवस्य श्रुतावग्निशब्दवाच्यत्वे प्रमाणम्, किन्तु स्थानस्थानिनोर्वैलक्षण्ये दृष्टान्तमात्रसमर्पकम् । वाङ्मयस्य जीवशरीरकत्वं भवत्प्रक्रियया विरुद्धञ्च, प्राणमयस्यान्तर्यामित्वाभ्युपगमात्, अन्तर्यामिणो जीवशरीरकत्वश्रवणाच्च "यस्यात्मा शरीरम्' 'स त आत्मान्तर्याम्यमृतः" इति हि श्रूयते, तमोऽधिष्ठातृतयाऽभ्युपगतस्य वाङ्मयस्य जीवशरीरकत्वं श्रुतिविरुद्धञ्च, 'यः पृथिवीमन्तरे सञ्चरन् यस्य पृथिवी शरीर'मित्यारभ्य 'एष सर्वभूतान्तरात्माऽपहतपाप्मा

❀ भावप्रकाशिका ❀

पासनविधेः 'तं मामायुः' इत्यादावलाभेन 'स म आत्मेति विद्या'दित्रैव विधेः स्वीकर्तव्यत्वात् वाक्यभेदोऽवश्यम्भावी । न चामृतमित्यनेन स्वरूपोपासनलाभः । 'प्राणो वा आयुः प्राण उ वामृतम्' इति वाक्यशेषेणामृतत्वस्य प्राणविशेषणतयावगमेन ब्रह्मस्वरूपावगमत्वाभावादिति चेन्न. केवलप्राणे अमृतत्वासम्भवेन प्राणशब्दस्यामृतशब्दितब्रह्मस्वरूपे प्राणविशिष्टत्वप्रतिपादनपरत्वादिति ध्येयम् ॥

जीवादर्थान्तरभूतः परमात्मैवेति सिद्धम् ॥

इति श्रीमद्भगवद्रामानुजविरचिते शारीरक-
मीमांसाभाष्ये प्रथमस्याध्यायस्य
प्रथमः पादः ॥ १ ॥



* श्रुतप्रकाशिका *

दिव्यो देव एको नारायणः" इति समानप्रकरणे नारायणस्यैवान्तर्यामित्वश्रवणात्। धर्मैक्यात्सर्वमुपपन्नमिति चेन्न, सर्वेषां व्यूहानां सर्वधर्मसम्भवेन व्यूहत्रयतद्व्यापारविभागव्यवस्थोपन्यासानुपपत्तेः, अतो यथोक्तमेव उपासात्रैविध्यमिति सिद्धम् ॥

इतीन्द्रप्राणाधिकरणम् ।

इति श्रीहारीतकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयेन श्रीमद्वरदाचार्यपादसेवासमधि-
गत भगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलि-
खितायां श्रुतप्रकाशिकायां प्रथम-
स्याध्यायस्य प्रथमः पादः ॥



भावप्रकाशिका

( स्थानप्रमाणेनेति ) तच्च प्रागेव दर्शितमनुसन्धेयम् ॥

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुज-
मुनिभिर्विरचितायां श्रुतप्रकाशिका-
व्याख्यायां भावप्रकाशिका-
याम् प्रथमस्याध्यायस्य
प्रथमः पादः ॥







श्रीमते रामानुजाय नमः ।

श्रीमद्भगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## प्रथमाध्याये द्वितीयः पादः ।



प्रथमे पादे अधीतवेदः पुरुषः कर्ममीमांसाश्रवणाधिगतकर्मयाथात्म्यविज्ञानः केवलकर्मणामल्पास्थिर-

* श्रुतप्रकाशिका *

( प्रथमे पाद इत्यादि ) किमर्थमत्र प्रथमपादाधिकरणार्थानुक्रमणम् ? उच्यते ; पादानुयायिनोऽर्थस्य प्रत्यधिकरणमनुयायित्वस्फुटीकरणाय । किमर्थमनुयायित्वकथनम् ? त्रिपादीसङ्गत्यर्थम्, सङ्गतिः कुतः ? सूत्रकाराभिमेतत्वात् पादभेदोऽर्थभेदात्, तत्क्रमश्च सङ्गतिविशेषात् । तत्र किं प्रमाणम् ? सम्प्रदायक्रमः । किञ्च अत्राधिकरणार्थानुक्रमणे न त्रिपाद्या अनारम्भणीयत्वशङ्का चार्थात्परिहृता भवति, त्रिपाद्यामुदाहरिष्यमाणानां श्रुतीनां प्रथमपादाधिकरणोक्तन्यायाविषयत्वज्ञापनार्थत्वादनुक्रमणस्य ; अत एव प्रथमपादे वेदान्तवाक्यानां परमात्मपरत्वे दर्शितेऽपि त्रिपाद्या आरम्भणीयत्वं सिद्धम् । प्रथमे पादेऽपि ईक्षत्यानन्दमयाभि-

छ भावप्रकाशिका छ

( पादानुयायिनोऽर्थस्येति ) चिदचिद्विलक्षणकारणत्वस्येत्यर्थः । नन्वर्थभेदादेव पादक्रमोपपत्तौ सङ्गतिः कुतस्सूत्रकाराभिमतेत्याशङ्क्याह ( पादभेदोऽर्थभेदादिति ) नतु क्रमविशेष इति भावः । (सङ्गतिविशेषादिति ) पौर्वापर्यनियामकजिज्ञासाविषयस्यैव सङ्गतित्वादिति भावः । ( तत्र किं प्रमाणमिति ) सङ्गति-

फलत्वमवगम्य, वेदान्तवाक्येषु चापातप्रतीतानन्तास्थिरफलब्रह्मस्वरूपतदुपासनसमुपजातपरमपुरुषार्थलक्षणमोक्षापेक्षोऽवधारितपरिनिष्पन्नवस्तुबोधनशब्दशक्तिर्वेदान्तवाक्यानां परस्मिन् ब्रह्मणि निश्चितप्रमाणभावस्तदितिकर्त्तव्यतारूपशारीरकमीमांसाश्रव-

* श्रुतप्रकाशिका *

करणयोः कारणस्य चिदचिद्वैलक्षण्ये सिद्धेऽपि पूर्वाधिकरणन्यायाविषयश्रुतिवाक्यार्थनिर्णयार्थो ह्युत्तरोत्तराधिकरणारम्भः, तद्वदत्रापीति । शास्त्रारम्भप्रयोजनायाश्चतुस्सूत्र्याः कथं प्रथमपादे सङ्गतिः? उच्यते; तस्याः शास्त्रारम्भार्थत्वेन शास्त्रोपोद्घातरूपत्वादर्थतः प्रथमपादान्तर्गतत्वम्, न तु प्रथमपादस्य प्रथमाध्यायस्य चासाधारणत्वात्सङ्गतिः— प्रथमे पाद इति। अधीतवेदः—कृतसाङ्गसशिरस्काध्ययनः। तावत्यपर्यवसानमाह (कर्मेति) तत्राप्यपर्यवसाने हेतुमाह (केवलेति) तथापि ब्रह्मविचारप्रवर्त्तनक्षमापातप्रतीतिरेव जायते, सिद्धवस्तुनि व्युत्पत्त्यभावादितिशङ्कायां प्रथमसूत्रस्य तात्पर्यमाह (अवधारितेति) तर्हि वेदान्तवाक्यैरेवालम्, किमर्थो ब्रह्मविचार इत्यत्राह (तदितिकर्त्तव्यतेति) ननु चतुस्सूत्री हि शास्त्रारम्भार्थां, तत्कथं प्रथमाधिकरणार्थानुक्रमे शास्त्रारम्भसिद्धय इत्युक्तम्? जन्मादिसूत्रत्रयस्यापि प्रथमाधिकरणाधीनारम्भत्वात्तथोक्तिः, न तु तेषां सूत्राणां शास्त्रारम्भार्थत्वाभावात्। यद्वा जन्मादित्रिसूत्र्याः शास्त्रारम्भत्वे सत्यपि प्रथमपादे सङ्गतिरप्यस्ति, चिदचिद्विलक्षणकारणास्तित्वविषयत्वात्तस्याः । प्रथमपादो

* भावप्रकाशिका *

विशेषस्य सूत्रकाराभिमतत्वे किं प्रमाणमित्यर्थः । ननु जन्मादिसूत्रत्रयस्यापि प्रथमाधिकरणाधीनारम्भत्वेपि शास्त्रारम्भसिद्ध्यर्थत्वमव्याहतमेव, ईक्षत्यधिकरणोपक्रमत्वाच्छास्त्रस्य। ततश्च प्रथमाधिकरणस्य शास्त्रारम्भसिध्यर्थत्वकीर्तनमयुक्तमित्याशङ्क्याह (यद्वा जन्मादिसूत्र्याः इति) (प्रथमपादे सङ्गतिरप्यस्तीति) शास्त्रान्तर्भूतत्वमप्यस्तीत्यर्थः । नन्वीक्षत्यधिकरणादारभ्यैव शास्त्रं न ततः प्राचीनस्य शास्त्रत्वम्, शास्त्रारम्भार्थतया शास्त्रान्तर्भावस्तु प्रथमाधिकरणस्यापि समानः। अतः प्रथ-

णमारभेतेत्युक्तं शास्त्रारम्भसिद्धये ॥ १ ॥ अनन्तविचित्रस्थिरत्रसरूपभोक्तृभोग्यभोगोपकरणभोगस्थानलक्षणनिखिलजगदुदयविभवलयमहानन्दैककारणं परं ब्रह्म "यतो वा इमानि" इत्यादिवाक्यं बोधयतीति च प्रत्यपादि ॥ २ ॥ जगदेककारणं परं ब्रह्म सकलेतरप्रमाणाविषयतया शास्त्रैकप्रमाणकमित्यभ्यधाम ॥३॥ शास्त्रप्रमाणकत्वं च ब्रह्मणः प्रवृत्तिनिवृत्त्यन्वयविरहेऽपि स्वरूपेणैव परमपुरुषार्थभूते परस्मिन् ब्रह्मणि वेदान्तवाक्यानां समन्वयान्निरूह्यत इत्यब्रूम ॥ ४ ॥

---

* श्रुतप्रकाशिका *

हि समस्तचिदचिद्विलक्षणकारणास्तित्वनिरूपणपरः । जन्मादिसूत्रे जन्मादिकारणत्वं लक्षणमुक्तम्, कारणस्य प्रमाणान्तरासिद्धिः प्रयोजनरूपता चानन्तरसूत्रद्वयेनोक्ते, अतः प्रथमाधिकरणार्थानुक्रमे शास्त्रारम्भसिद्धय इत्युक्तमिति । यद्वा शास्त्रारम्भसिद्धय इतिपदमुत्तराधिकरणत्रयेऽनुषज्यत इति चतुस्सूत्र्याः शास्त्रारम्भसिद्ध्यर्थत्वमुक्तं भवति। जन्मादिसूत्रार्थमनुक्रामति ( अनन्तेति ) सौत्रस्यास्येतिपदस्य विवक्षितमर्थमाह—अनन्तविचित्रादिविशेषणैः । अनन्तविचित्रशब्दौ भोक्तृभोग्यसाधारणौ । महानन्दैककारणत्वं 'तद्विजिज्ञासस्व' इति वाक्याभिप्रेतम्, तापत्रयातुरजिज्ञास्यस्य हि लक्षणं निरूपितम्, अतो महानन्दैककारणमित्युक्तम् । यद्वा 'यत्प्रयन्ती' त्यस्य आत्यन्तिकलयपर्यन्तत्वाभिप्रायेणोक्तम्—महानन्देति। "येयं प्रेते' 'न प्रेत्य" इति चात्यन्तिकलयो हि प्रायणं श्रुतम्, अविरुद्धविशेषणभेदो न विशेष्यभेदावह इत्यभिप्रायेण एकशब्दप्रयोगः, निमित्तोपादानैकत्वाभिप्रायेण वा । ( शास्त्रेति ) समन्वयात्—परमपुरुषार्थभूतस्यैव ब्रह्मणः

* भावप्रकाशिका *

माधिकरणानुक्रमे शास्त्रारम्भसिद्धय इत्युक्तमयुक्तमित्याशङ्क्याह ( यद्वा शास्त्रारम्भसिद्धय इतिपदमिति ) ( आत्यन्तिकलयपर्यन्तत्वाभिप्रायेणेति ) आत्यन्तिक-

निखिलजगदेककारणतया वेदान्तवेद्यं ब्रह्म च ईक्षणाद्यन्वयादानुमानिकप्रधानादर्थान्तरभूतश्चेतनविशेष एवेत्युपापीपदाम ॥ ५ ॥ स च स्वाभाविकानवधिकातिशयानन्दविपश्चित्त्वनिखिलचेतनभयाभयहेतुत्वसत्यसङ्कल्पत्वसमस्तचेतनाचेतनान्तरात्मत्वादिभिर्बद्धमुक्तोभयावस्थाज्जीवशब्दाभिलपनीयाच्चार्थान्तरभूत इति च समार्तिथामहि ६ स चाप्राकृताकर्मनिमित्तस्वासाधारणदिव्यरूप इत्युदैरिराम । ७ । आकाशप्राणाद्यचेतनविशेषाभिधायिभिर्जगत्कारणतया प्रसिद्धवन्निर्दिश्यमानस्सकलेतरचेतनाचेतनविलक्षणस्स एवेति समगरिष्महि ८ परतत्त्वासाधारणनिरतिशयदीप्तियुक्तज्योतिश्शब्दाभिधेयो द्युसम्बन्धितया प्रत्यभिज्ञानात्स एवेत्यातिष्ठामहि १० परमकारणासाधारणामृतत्वप्राप्तिहेतु-

* श्रुतप्रकाशिका *

प्रतिपादकतया शास्त्रस्य तेनान्वयात् । ( स चेत्यादि ) स्वाभाविकानवधिकातिशयशब्दौ प्रतिविशेषणमन्वितौ । आकाशप्राणाधिकरणार्थयोः पृथगनुक्तिर्न्यायस्यानतिभिन्नत्वात् । ( परमेति ) परमकारणस्यासाधारणम्— तस्य प्रदेयत्वेन असाधारणम् अमृतत्वम्, तत्प्राप्तिहेतुरित्यर्थः । यद्वा परमकारणस्यासाधारणम्— चिह्नभूतमित्यर्थः । उपासकस्य अमृतत्वप्राप्तिर्हि उपास्यस्य परमकारणत्वमावेदयति । यद्वा परमकारणासाधारणम्— तद्धर्मभूतममृतत्वम्, तत्प्राप्तिः— परम-

❀ भावप्रकाशिका ❀

लयो मोक्षः, मोक्षस्यानन्दरूपत्वादिति भावः । वस्तुतः परमात्मवृत्तेर्मुक्तगतामृतत्वस्य कथं तदसाधारणत्वमित्याशङ्क्याह ( प्रदेयत्वेनेति ) । ( चिह्नभूतमित्यर्थ इति ) तथाचातद्धर्मस्यापि तच्चिह्नत्वमुपपद्यत इति भावः । भाष्ये—अतिपत्तितेति ।

भूतः परमपुरुष एव शास्त्रदृष्ट्या इन्द्रादिशब्दैरभिधीयत इत्यब्रूमहि ११ तदेवमतिपतितसकलेतरप्रमाणसम्भावनाभूमिस्सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यपरिमितोदारगुणसागरतया स्वेतरसमस्तवस्तुविलक्षणः परं ब्रह्म पुरुषोत्तमो नारायण एव वेदान्तवेद्य इत्युक्तम् ॥ अतः परं द्वितीयतृतीयचतुर्थेषु पादेषु यद्यपि वेदान्तवेद्यं ब्रह्मैव तथापि कानिचिद्वेदान्तवाक्यानि प्रधानक्षेत्रज्ञान्त-

* श्रुतप्रकाशिका *

साम्यापत्तिरित्यर्थः । पादार्थमाह ( तदेवमिति ) पुरुषत्वादसदादिवदित्यादिकुतर्कपरिहारार्थमाह ( अतिपतितेति ) तेषां धर्मिग्राहकमानबाध इति भावः । ज्योतिरधिकरणार्थाभिप्रायः पुरुषोत्तमशब्दः । प्रतर्दनविद्याभिप्रायो नारायणशब्दः । 'मामुपास्व' इत्यस्यापि नारायणानुवाकैक्येन सर्वविद्योपास्यतयोक्तनारायणोपासनपरत्वात् चिदचिद्विलक्षणकारणास्तित्वं पादानुगतार्थ इत्यर्थः । नारायण एवेत्यवधारणाक्षेपेण द्वितीयादिपादोत्थानमित्यभिप्रायेणाह (अतः परमिति) (द्वितीयेतृतीयचतुर्थेष्विति ) प्रथमपादस्य न केवलमनन्तरपादेन सङ्गतिः, अपि तु त्रिपाद्यैवेति भावः । यथा 'चोदनालक्षणोऽर्थो धर्मः' इत्यत्र चोदनैव प्रमाणम् , प्रमाणमेव चोदनेत्यवधारणद्वयम् । तत्र प्रमाणमेव चोदनेत्यवधारणम् औत्पत्तिकसूत्रे साधितम् , चोदनैव प्रमाणमित्यवधारणं प्रत्यक्षसूत्रे स्थापितम्, तथा जन्मादिसूत्रेऽपि ब्रह्म कारणमेव ब्रह्मैव कारणमित्यवधारणद्वयमपि विवक्षितम्, जन्मादिकारणत्वस्य ब्रह्मलक्षणत्वात्, लक्षणस्याव्याप्त्यतिव्याप्त्यसम्भवपरिहारावश्यम्भावात्, तत्र व्यक्त्यैक्यान्नाव्याप्तिः, असम्भवपरिहाररूपायोगव्यवच्छेदः प्रथमपाद उक्तः, अतिव्याप्तिपरिहाररूपान्ययोगव्यवच्छेदः त्रिपाद्या क्रियत इति विभागाभिप्रायेण कानि-

❁ भावप्रकाशिका ❁

प्रमाणान्तरविषयत्वगन्धशून्य इत्यर्थः । ( औत्पत्तिकसूत्र इति ) ' औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः' इति सूत्र इत्यर्थः । (प्रत्यक्षसूत्र इति) 'सत्सम्प्रयोगे पुरुषस्ये-

भूतवस्तुविशेषस्वरूपप्रतिपादनपराण्येवेत्याशङ्क्य तन्निरसनमुखेन तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यते ॥ तत्रास्पष्टजीवादिलिङ्गकानि वाक्यानि द्वितीये पादे विचार्य्यन्ते, स्पष्टलिङ्गकानि तृतीये, तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थे ॥

---

* श्रुतप्रकाशिका *

चिद्वेदान्तवाक्यानीत्युक्तम्'। ( तत्तद्वाक्योदितकल्याणगुणाकरत्वं ब्रह्मणः प्रतिपाद्यत इति ) चिदचिद्विलक्षणस्वरूपं साधितम् । अथ तस्य गुणविशेषप्रतिपादनं त्रिपाद्यां क्रियत इति च प्रथमपादत्रिपाद्योर्विभाग इति भावः । पादत्रयस्यावान्तरभिदामाह ( तत्रेति ) अस्पष्टेत्यादिवैषम्यं ब्रह्मलिङ्गगतमिति परैरुक्तम् । अत्र तु जीवादिलिङ्गगतमिति भिदा । द्वितीयतृतीयपादाद्यधिकरणयोर्जीवस्य पूर्वपक्षित्वाज्जीवादीत्युक्तम् । ( तत्तत्प्रतिपादनच्छायानुसारीणि चतुर्थ इति ) तत्तत्प्रतिपादनम्–जीवादिलिङ्गिप्रतिपादनम्. न तल्लिङ्गप्रतिपादनम् । अस्पष्टस्पष्टस्पष्टतरपूर्वपक्षोत्थानहेतुभेदेन भिन्नास्त्रयः पादा इत्यर्थः । प्रथमपादचरमाधिकरणे अवयवभूतोपक्रमगतजीवलिङ्गमवयविभूतवाक्यार्थस्वारस्येन बाधितमित्युक्तम्, सर्वतादात्म्यमनःप्राणसम्बन्धार्भकौकस्त्वाणीयस्त्वव्यपदेशरूपलिङ्गानामवयविगतत्वेनाबाध्यत्वमिति प्रत्यवस्थानं परिह्रियते द्वितीयपादप्रथमाधिकरणे । इत्यवान्तरसङ्गतिः ॥

❀ भावप्रकाशिका ❀

न्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इतिसूत्र इत्यर्थः ( अन्ययोगव्यवच्छेदस्त्रिपाद्या क्रियत इति ) आक्षेपपरिहारमुखेन, नान्ययोगव्यवच्छेददार्ढ्यमित्यर्थः । ( ब्रह्मलिङ्गगतमिति ) । ( परैरुक्तमिति ) स्पष्टब्रह्मलिङ्गादिवाक्यानि प्रथमपादे चिन्तितानि, अस्पष्टब्रह्मलिङ्गादिवाक्यानि द्वितीयतृतीययोर्विचार्यन्ते । तत्र द्वितीयपादः सविशेषप्रधानः, तृतीयस्तु निर्विशेषप्रधानः । चतुर्थस्तु कारणवाक्यविगानपरिहारपर इति परैरुक्तमित्यर्थः । ( लिङ्गिप्रतिपादनमिति ) अव्यक्तादिशब्दैः प्रधानादेः प्रतिपादनादिति भावः । ( न तल्लिङ्गप्रतिपादनमिति ) द्वितीयतृतीयपादयोरिव न लिङ्गमात्रप्रतिपादनमिति भावः ॥

## सर्वत्र प्रसिद्धोपदेशात् ॥ १ ॥

१ अधिकरणम्

इदमाम्नायते छान्दोग्ये "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः" इत्यादि ॥

* श्रुतप्रकाशिका *

॥ सर्वत्र प्रसिद्धोपदेशात् ॥ ' सर्वं खलु ' इत्यादेर्द्वितीययोजनायामुदाहरिष्यमाणत्वात् प्रथमयोजनापेक्षितम् — अथ खलु इत्यादिकमुपात्तम् । द्वितीयसूत्रे 'भारूपः' इत्यस्य उपरितनवाक्यस्योपादास्यमानत्वात् अत्र भारूप इत्यन्तमुपात्तम् , आदिशब्देनान्यद्गृहीतम् । अत्र रात्रिसत्रन्यायेन मनोमय उपास्यतया सम्बध्यते, आर्थवादिकस्यापि विध्यपेक्षितस्य स्वीकार्यत्वात् । ननु 'स क्रतुं कुर्वीत' इत्यादिकमुपादीयताम् . किमर्थं 'यथाक्रतुरस्मिन्' इत्यादिवाक्योपादानम् ? उच्यते,

७ भावप्रकाशिका ७

( सर्वं खल्वित्यादेरिति ) " सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यस्सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदये एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यश्शाण्डिल्यः" इति श्रुतिः । व्याख्यात्रन्तराभिमतां विषयशुद्धिं दर्शयति, भाष्ये— स क्रतुं कुर्वीतेति । ( मनोमय उपास्यतया सम्बन्ध्यत इति ) अयं भावः, मनोमयादिपदानां प्रथमान्ततया ' स क्रतुं कुर्वीत' इतिप्रकृतोपासनकर्तृविशेषणसमर्पकत्वमेव युज्यते, नतूपास्यविशेषणसमर्पकत्वमिति न वाच्यम्, मनोमयादि-

* श्रुतप्रकाशिका *

" फलवत्सन्निधावफलं तदङ्गम्" इतिन्यायेन ' स क्रतुं कुर्वीते' तिविधेः फलाश्रवणनिमित्तं पूर्वविहितोपासनाङ्गत्वं माभूदिति फलसम्बन्धप्रदर्शनार्थं तदुपादानम्, 'शान्त उपासीत इति विहितोपासनाधिकृतस्यैव उपासनान्तरविधानमनुपपन्नमिति शङ्काव्यावृत्त्यर्थम् 'अथ खलु क्रतुमयः पुरुषः' इति वाक्यं घटकत्वेनोपात्तम् जीवस्य बहुविधोपासनप्रचुरत्वादनेकोपासनविधानं युक्तमिति भावः ॥

अत्र व्याख्यात्रन्तरैः 'सर्वं खल्वि'त्यादिवाक्यस्य ब्रह्मपरत्वं स्पष्टमिति बुद्ध्वा 'स क्रतु'मित्यादिवाक्ययोर्जीवविषयत्वेन पूर्वपक्षं कृत्वा ब्रह्मविषयत्वेन सिद्धान्त उक्तः, इह तु विषयैक्ये स्थित एव पूर्वपक्षसिद्धान्तौ पश्चादभिधास्येते । प्रथमं व्याख्यात्रन्तरोक्तदिशा पूर्वपक्षसिद्धान्तौ उपवर्ण्येते । नन्वत्रोपासनान्तरं न

ᛰ भावप्रकाशिका ᛰ

पदानामनपेक्षितोपासनकर्तृसमर्पकत्वं परित्यज्य विभक्तिविपरिणामेनोपास्यविशेषणसमर्पकत्वस्यैव युक्तत्वादिति । ( फलवत्सन्निधाविति ) ' सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' इतिवाक्ये शान्त्यर्थतयोपासनविधानेन तस्य फलवत्त्वात् । स क्रतुं कुर्वीतेतिवाक्ये फलाश्रवणात् फलवदफलन्यायेन तदङ्गत्वं प्रसज्येतेति भावः । ( विहितोपासनाधिकृतस्यैवेति ) न च तस्यैवोपासनान्तरं विधीयत इत्यत्र किं मानम् ? येनास्याश्शङ्काया उत्थितिस्स्यात् । उपकोसलदहरादिविद्यावत् विद्यान्तरानधिकृताधिकारविषयत्वसम्भवादिति वाच्यम्, शान्तेः ब्रह्मोपासनाङ्गतया शान्त्यर्थोपासनाधिकृतस्यैव स क्रतुं कुर्वीतेत्युपासनायामप्यधिकृतत्वादित्याशयात् । यद्यपि शान्त्यर्थतयोपासनविधानमिति न परेषां मतम्. मृषावादिभिस्तत्तदनभ्युपगमात् । इत्थं हि तन्मतम्. स क्रतुं कुर्वीतेतिवाक्ये उपासनं विधीयते, तदनुवादेन तदङ्गतया शान्त उपासीतेतिवाक्येन शमगुणो विधीयते. तस्य विधेरयमर्थवादः, ' सर्वं खल्विदं ब्रह्म तज्जलान् ' इति तज्जत्वतल्लत्वतदनत्वैस्सर्वस्य ब्रह्मात्मकत्वेनैकात्मकत्वाद्रागद्वेषादेः कर्तुमयुक्तत्वेन शम एव कर्तुमुचित इति 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते इतिवदिति. तथापि व्याख्यात्रन्तराभिमतमिति तथोक्तम्. अत एवोत्तरत्र व्याख्यात्रन्तरशब्दोपि मृषावादिव्यतिरिक्तविषय एवेति द्रष्टव्यम् । ( उपासनप्रचुरत्वादिति ) 'क्रतुमयः पुरुषः' इत्यत्र क्रतुशब्द उपासनपरः । मयट्प्रत्ययश्च प्राचुर्यार्थ इति भावः ॥

अत्र "स क्रतुं कुर्वीत" इति प्रतिपादितस्योपासनस्योपास्यः '' मनोमयः प्राणशरीरः' इति निर्दिश्यत इति प्रतीयते । तत्र संशयः– किं मनोमयत्वादिगुणकः क्षेत्रज्ञः, उत परमात्मा ? इति । किं युक्तम् ? क्षेत्रज्ञ

* श्रुतप्रकाशिका *

विधित्सितम्, पूर्वविहितोपासनाङ्गभूतक्रतुविधिपरत्वादस्य वाक्यस्य । ततश्च मनोमयादिपदान्युपास्यान्तराभावात् प्रकृतब्रह्मपराणीति निश्चयान्न विचारविषय इति शङ्कां व्युदस्यति ( अत्रेति ) मनोमयादिपदानां प्रकृतोपास्यविषयत्वे प्रमाणाभावात् ब्रह्मपरत्वानिश्चयात् ' स क्रतुम्' इतिनिर्दिष्टोपासकविशेषणत्वाश्रयणे तस्यानाविर्भूतगुणाष्टकस्य सत्यसङ्कल्पत्वादेरघटमानत्वाच्च पाश्चात्यविद्यान्तरोपास्यपरत्वनिश्चये सति तद्विशेषनिश्चयाभावात् विचारस्यारम्भणीयत्वमित्यर्थः । उपासनस्येतिपदेन " तं यथा यथोपासते तथैव भवति " " यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति" इत्यनयोर्वाक्ययोरैकार्थ्यात् "क्रतुं कुर्वीत" इत्यत्र क्रतुशब्दश्चोपासनपर इति तदुपास्ये मनोमयत्वादिगुणके संशय इति भावः । (तत्रेति) 'स क्रतुं कुर्वीत" इत्यत्र उपास्यतया निर्दिष्टो मनोमयत्वादिगुणकः किं जीवः ? उत परमात्मा ? इति विचारः । तदर्थं कर्मकर्तृव्यपदेशशब्दविशेषोपसंहारगतब्रह्मशब्दादयः किं मुख्याः, उतामुख्याः ? । तदर्थं मनोमयत्वादिकं जीवस्यैव सम्भवति, उत परमात्मनोऽपि घटते ? इति । तदर्थम् 'अप्राणो ह्यमनाः' इति किं मनआदिसम्बन्धमात्रनिषेधः, उत सम्बन्धविशेषनिषेधः ? इति । यदा सम्बन्धमात्रनिषेधः तदा मनोमयत्वादेर्जीवस्यैवासाधारणतया कर्मकर्तृ-

छ भावप्रकाशिका छ

( क्रतुविधिपरत्वादस्येति ) यागविधिपरत्वादित्यर्थः । ( प्रकृतोपास्यविषयत्व इति ) ननु मनोमयत्वादीनां सर्वं खल्विदं ब्रह्मेतिवाक्ये प्रकृतब्रह्मविशेषणत्वादेव प्रकृतोपास्यविशेषणसमर्पकत्वं भविष्यतीत्याशङ्क्याह ( ब्रह्मपरत्वानिश्चयादिति ) ( मनोमयत्वादिगुणके संशय इति ) भाव इत्यनन्तरं सूच्यत इति शेषः ।

१ छां. ३-१४-१ ॥

इति । कुतः ? मनःप्राणयोः क्षेत्रज्ञोपकरणत्वात्, परमात्मनस्तु [1]"अप्राणो ह्यमनाः" इति तत्प्रतिषेधाच्च । न च [2]'सर्वं खल्विदं ब्रह्म' इति पूर्वनिर्दिष्टं ब्रह्मात्रोपास्यतया सम्बद्धुं शक्यते, 'शान्त उपासीत' इत्युपासनोपकरणशान्तिनिर्वृत्त्युपायभूतब्रह्मात्मकत्वो-

* श्रुतप्रकाशिका *

व्यपदेशादीनाममुख्यत्वेन 'स क्रतुं कुर्वीत' इति विहितोपासनस्योपास्यो जीव इति पूर्वपक्षस्थितिः । यदा सम्बन्धविशेषनिषेधः तदा मनोमयत्वादेः परस्मिन्सम्भवेन कर्मकर्तृव्यपदेशादीनां मुख्यत्वात् तत्रोपास्यतया विहितः परमात्मेति सिद्धान्ते फलफलिभावः । पूर्वपक्षमुपपादयति ( कुत इत्यादिना ) ननु कथमस्य पादस्य अस्पष्टजीवलिङ्गवाक्यविषयत्वम् ? मनोमयत्वादिकं हि स्पष्टं जीवलिङ्गमिति चेत् न,– स्पष्टस्य मनस्सम्बन्धमात्रस्य जीवलिङ्गत्वाभावात् जीवलिङ्गभूतस्योपकरणोपकरणित्वलक्षणसम्बन्धविशेषस्यास्पष्टत्वाच्चेत्यभिप्रायेण मनःप्राणयोः क्षेत्रज्ञोपकरणत्वादित्युक्तम् । ननु 'सर्वं खल्वि'तिवाक्ये प्रकृतं ब्रह्मैव 'स क्रतुं कुर्वीत' इत्यत्रोपास्यतया सम्बध्यमनोमयत्वादिगुणानां विशेष्यं स्यादिति शङ्कायां किं ब्रह्मशब्दस्य विधिपदाकाङ्क्षया उत्तरत्रान्वयः, उत क्रतुं कुर्वीतेति विधिपदस्योपास्यसाकाङ्क्षत्वात्सन्निहितानां मनोमयादिपदानां विशेष्यसाकाङ्क्षत्वाच्च ब्रह्मशब्दस्य उत्तरत्रान्वयः ? इति विकल्पमभिप्रेत्य प्रथमं शिरो दूषयति ( न च सर्वमिति ) अन्यार्थतया निराकाङ्क्षत्वादित्यर्थः । द्वितीयं दूषयति ( न च स

ॐ भावप्रकाशिका ॐ

( ततश्चोपासनस्येतिपदेनेति ) तृतीयान्तपदस्य नान्वय इति शङ्कापास्तेतिध्येयम् । ( उपकरणोपकरणित्वलक्षणसम्बन्धविशेषस्यास्पष्टत्वादिति ) इदमुपलक्षणम् । उदाहृताज्जीवलिङ्गादपि वाक्योपक्रमगततज्जत्वतल्लत्वादिहेतुकसार्वात्म्यरूपब्रह्मलिङ्गस्य स्पष्टतया अस्पष्टब्रह्मलिङ्गानां द्वितीयपादे विचार्यत्वमिति मृषावाद्युक्तमयुक्तम् । न च विषयवाक्यस्य मनोमय इत्यादेः पूर्वपक्षे भिन्नवाक्यतया मनो-

---

१ मु. २-१-२ ॥ २ छां. ३-१४-१ ॥

पदेशायोपात्तत्वात् । न च 'स क्रतुं कुर्वीत' इत्युपासनस्योपास्यसाकाङ्क्षत्वाद्वाक्यान्तरस्थमपि ब्रह्म सम्बध्यत इति युक्तं वक्तुम्, स्ववाक्योपात्तेन मनोमयत्वादिगुणकेन निराकाङ्क्षत्वात्; "मनोमयः प्राणशरीरः" इत्यनन्यार्थतया निर्दिष्टस्य विभक्तिविपरिणाममात्रेणोभयाकाङ्क्षानिवृत्तिसिद्धेः । एवं निश्चिते जीवत्वे 'एत-

* श्रुतप्रकाशिका *

क्रतुमिति ) ( स्ववाक्योपात्तेनेति ) विच्छेदकाभावात् महावाक्यैकत्वं विवक्षितम् । ततश्च 'एष आत्मा' इति स्ववाक्यस्थेनानन्यार्थेन समानलिङ्गेनात्मशब्देन विशेष्याकाङ्क्षाशमनाद्वाक्यान्तरस्थान्यार्थभिन्नलिङ्गब्रह्मशब्दाकर्षो न युक्त इति भावः । प्रथमान्तानां मनोमयादिपदानामुपासनवाचिपदेनान्वयायोगात् ब्रह्मपदमन्वेतव्यमित्यत्राह ( मनोमय इति ) क्रतुशब्देन द्वितीयान्तपदस्याप्यनन्वयात् षष्ठ्यन्ततया विभक्तिविपरिणामे कार्ये सन्निहितस्य साकाङ्क्षस्यैव पदस्य विभक्तिविपरिणामो न्याय्यः, न तु वाक्यान्तरस्थस्य निराकाङ्क्षस्येत्यर्थः । उभयाकाङ्क्षा—मनोमयादिपदस्य क्रतुं कुर्वीतेत्यस्य चाकाङ्क्षा । न वक्तुं युक्तमिति पञ्चम्यन्वयः । मनोमयत्वादि च सत्यसङ्कल्पत्वात्पूर्वमेव प्रतिपन्नम्, अणीयस्त्वञ्च भूयस्त्वात्पूर्वं श्रुतम्, व्यतिरेकनिर्देशश्च मनोमयत्वादेः पाश्चात्यः, अतो मनोमयत्वादिस्वारस्यानुगुणादितरन्नेयमित्यभिप्रायेण चोक्तं मनोमयत्वादिगुणकेनेति । जीवपरत्वे ब्रह्मशब्दः कथमित्यत्राह ( एवमिति ) ॥ .... .... ....

* भावप्रकाशिका *

मयवाक्ये ब्रह्मलिङ्गस्यास्पष्टतेतिवाच्यम्; तर्हि ज्योतिर्वाक्यस्यापीह पादे विचार्यतापत्तेः । तत्पूर्ववाक्ये सर्वभूतचरणत्वरूपब्रह्मलिङ्गस्य स्पष्टत्वेपि ज्योतिर्वाक्ये अस्पष्टतया तस्यापीह चिन्त्यत्वप्रसङ्गादित्यास्तां तावत् । उभयाकाङ्क्षेति व्याख्येयं पदम् । ( पञ्चम्यन्वय इति ) न वक्तुं युक्तमित्यनेन उभयाकाङ्क्षानिवृत्तिसिद्धेरिति पञ्चम्यन्वय इत्यर्थः । वाक्ये योजनां परिसमाप्य वाक्यान्तर्गतस्य मनोमयत्वादिगुणकेनेत्यस्य सिंहावलोकितेन प्रयोजनं दर्शयति ( मनोमयत्वादि चेत्यादिना )॥

ब्रह्म' इत्युपसंहारस्थब्रह्मपदमपि जीव एव पूजार्थं प्रयुक्तमित्यध्यवसीयत इति ॥

एवं प्राप्ते ब्रूमः— सर्वत्र प्रसिद्धोपदेशात् । मनोमयत्वादिगुणकः परमात्मा । कुतः ? सर्वत्र— वेदान्तेषु परस्मिन्नेव ब्रह्मणि प्रसिद्धस्य मनोमयत्वादेरुपदेशात् । प्रसिद्धं हि मनोमयत्वादि ब्रह्मणः । यथा [1]"मनोमयः प्राणशरीरनेता' [2]'स एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः'

* श्रुतप्रकाशिका *

( एवं प्राप्त इति ) प्रतिज्ञावाक्यमध्याहरति ( मनोमयत्वादीति ) सत्यसङ्कल्पत्वादिविशेषितप्राकरणिकात्मशब्दानुरोधेन परमात्मेत्युक्तम्, सर्वत्रेति व्याख्येयं पदम् । तद्व्याचष्टे (वेदान्तेष्विति) सामान्यशब्दवत्सु विशेषशब्दवत्सु चेति भावः । हेतुपदं व्याचष्टे ( प्रसिद्धस्येति ) ननु सर्ववेदान्तेषु परतत्त्वपरतया प्रसिद्धब्रह्मशब्दश्रवणादिति परैर्व्याख्यातम् , तन्मतेन व्याख्याने सत्यपि तद्विहाय कथं युक्त्यन्तरोक्तिः ? उच्यते; पूर्ववाक्यस्थब्रह्मशब्दानन्वयस्योपसंहारस्थब्रह्मशब्ददौर्बल्यस्य च पूर्वपक्षिणोक्तत्वान्न तथोत्तरं वक्तुं युक्तमिति भावः । मनस्सामान्येन सम्बन्धसामान्यपरं वाक्यमाह ( मनोमयः प्राणशरीरनेतेति ) ' अमृतो हिरण्मयः' इति परमात्मपरत्ववैशद्यायोपात्तम् । मनस्सामान्येन सम्बन्धविशेषपरं वाक्य-

✿ भावप्रकाशिका ✿

( परैर्व्याख्यातमिति ) यद्यपि परैर्नैवं व्याख्यातम्, अपितु परमेव ब्रह्मेह मनोमयत्वादिभिर्धर्मैरुपास्यम् । कुतः ? सर्वत्र प्रसिद्धोपदेशात् । यत् सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दस्यालम्बनं जगत्कारणम्, इह च सर्वं खल्विदं ब्रह्मेति वाक्योपक्रमे श्रुतं तदेव मनोमयत्वादिधर्मविशिष्टमुपदिश्यते' इति व्याख्यातम् । तथापि फलितार्थमादाय तथोक्तमिति द्रष्टव्यम् । (कथं युक्त्यन्तरोक्तिरिति) परोक्तयुक्त्यनादरेण

१ मु २-२ ७ ॥ | २ तै शिक्षावल्ल्यां ६-३ ॥

[1]"हृदा मनीषा मनसाभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति" [2]"न चक्षुषा गृह्यते नापि वाचा" "मनसा तु विशुद्धेन" तथा [3]"प्राणस्य प्राणः" [4]"अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति" "सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते" इत्यादिषु । मनोमयत्वम्-- विशुद्धेन मनसा

* श्रुतप्रकाशिका *

माह (हृदा मनीषेति) हृदिति भक्तिरुच्यते, मनीषेति धृतिः । "न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इति पूर्वार्धकमेकरूपं पठित्वा "भक्त्या च धृत्या च समाहितात्मा ज्ञानस्वरूपं परिपश्यतीह" इति महाभारत उक्तत्वात् । अभिक्लृप्तः— ग्राह्यः । मनोविशेषेण सम्बन्धविशेषवाचिवाक्यमाह ( न चक्षुषेति ) प्राणशरीरत्वे श्रुतिमाह ( तथेति ) प्राणस्य प्राणः— आधारः । 'सर्वाणि' इत्यादिवाक्ये प्राणशब्दस्य यौगिकवृत्त्या परमात्मपरत्वं प्रागुक्तम्, इदानीमपर्यवसानवृत्त्यापि परमात्मपरत्वेन तद्वाक्यमुपात्तम्, वैश्वानराधिकरणन्यायेन उभयथापि परमात्मपरत्वं युक्तमिति भावः । अत्र वाक्यजाते प्रतिपन्नं मनोमयादिशब्दार्थमाह ( मनोमयत्वमिति ) ग्राह्यग्राहकलक्षणसम्बन्धविशेषाभिप्रायेण मनोमय-

卐 भावप्रकाशिका 卐

किमर्थं युक्त्यन्तरमुपन्यस्यत इत्यर्थः । (पूर्वार्धमेकरूपं पठित्वेति) तथा च पूर्वार्धयोरैकार्थ्यात् उत्तरार्धयोरप्यैकार्थ्यं युक्तमिति भावः । (समाहितात्मा ज्ञानस्वरूपं परिपश्यतीति) अनेन च विशुद्धमनोग्राह्यत्वमुक्तं भवति । आत्मशब्दस्य मनःपरत्वादिति भावः । धृत्या समाहितात्मा भक्त्या पुरुषोत्तमं पश्यति साक्षात्करोति प्राप्नोतीत्यर्थः । 'भक्त्या त्वनन्यया शक्यः' इत्यनेनैकार्थ्यादिति वेदार्थसङ्ग्रहे प्रतिपादितमिहानुसन्धेयम् । ननु 'सर्वाणि ह वा' इत्यादिवाक्यं प्राणशरीरकत्वे कथं प्रमाणं भवितुमर्हति ? यौगिकवृत्त्या परमात्मपरत्वस्य पूर्वं साधितत्वादित्याशङ्क्याह (सर्वाणीत्यादिवाक्य इति ) ( अपर्यवसानवृत्त्येति ) आकृत्यधिकरणन्यायादिति

१ तै. नारा० ६ ॥ २ मु ३-१-८ ॥ ३ केन. १-२ ॥ ४ कौ. ३-२ ॥

ग्राह्यत्वम् । प्राणशरीरत्वम्—प्राणस्याप्याधारत्वं नियन्तृत्वञ्च ॥ एवञ्च सति 'एष म आत्माऽन्तर्हृदय एतद्ब्रह्म' इति ब्रह्मशब्दोऽपि मुख्य एव भवति । "अप्राणो ह्यमनाः" इति मन आयत्तं ज्ञानं प्राणायत्तां स्थितिञ्च ब्रह्मणो निषेधति ॥

अथवा " सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त

* श्रुतप्रकाशिका *

इत्युक्तमित्यर्थः । प्राणशरीरशब्दार्थमाह ( प्राणेति ) मनोविकारो मनोमयः, सर्वविकाराणां ब्रह्माधिष्ठानत्वात् ब्रह्मसामानाधिकरण्यमिति कैश्चिदुक्तम् , तदा हि मनोविकाराः सुखदुःखेच्छाद्वेषादयो ब्रह्मेत्युक्तं स्यात् । तदयुक्तम्, सत्यसङ्कल्पत्वादिकल्याणगुणप्रकरणविरोधात् हेयगुणविशेषाणामुपास्यत्वानुपपत्तेश्च । उक्तं हि "यथाक्रतुरस्मिँल्लोके भवति तथेतः प्रेत्य भवति' इति, अतो हेयगुणापत्तिरेव फलं स्यात्, प्राणप्रेर्यं शरीरमस्येत्यर्थश्चेत् प्राणशब्देन प्राणसम्बन्ध्यभिधानं क्लिष्टं स्यात् । प्राणः शरीरं चास्येति समासो न घटते, प्राणः शरीरे यस्येति व्यधिकरणबहुव्रीहिश्च क्लिष्टः, अतो यथोक्त एवार्थ इत्यभिप्रायः ॥ उपसंहारस्वारस्यमाह ( एवञ्चेति ) मनःप्रभृतिनिषेधवाक्यार्थमुक्तार्थाविरुद्धमाह ( अप्राण इति ) ग्राह्यग्राहकभावनियन्तृनियाम्यत्वादिरूपसम्बन्धविशेषो विधेयः, उपकरणोपकरणित्वलक्षणसम्बन्धविशेषो निषेध्यत इत्यभिप्रायः ॥ .... ....

अथ स्वाभिमतार्थयोजनां कर्तुमारभते ( अथवेति ) पूर्वस्यां योजनायां सूत्र

* भावप्रकाशिका *

भावः । ( वैश्वानराधिकरणन्यायेनेति ) 'साक्षादप्यविरोधं जैमिनिः' इत्युक्तत्वादिति भावः । ( सुखदुःखेच्छाद्वेषादय इति ) यद्यपि 'सर्वगन्धस्सर्वरसः' इत्यादौ कल्याणगन्धरसपरत्ववन्मनोमयशब्दस्यापि कल्याणसुखादिमनोविकारपरत्वे वा सर्वं खल्विदं ब्रह्मेत्यादिवदसङ्कुचितपरत्वेपि वा न विरोधः । अथापि मनोग्राह्यत्वरूपार्थस्य सम्भवेऽन्तःकरणप्रतिबिम्बतया मनोविकारभूतजीवाभेदोपचारेण मनोमयत्वोक्तिरयुक्तेति भावः ॥ .... .... .... .... .... .... ....

उपासीत" इत्यत्रैवोपासनं विधीयते, सर्वात्मकं ब्रह्म शान्तः सन्नुपासीतेति । "स क्रतुं कुर्वीत" इति तस्यैव गुणोपादानार्थोऽनुवादः । उपादेयाश्च गुणाः

* श्रुतप्रकाशिका *

प्रतिज्ञावाक्यस्याध्याहार्यत्वादुपक्रमोपसंहारगतब्रह्मशब्दैकविषयत्वप्रतीतिस्वारस्येन भिन्नविषयत्वप्रतीतिपूर्वकपूर्वपक्षानुदयेनाधिकरणानारम्भात् श्रवणमननाभ्यामेव निष्पाद्यायाश्शान्तेरुपासननिष्पादकत्वस्य 'एवंविच्छान्तः' इति श्रुतिसिद्धत्वादन्यत्रापि शान्त्युपायत्वेनोपासनविधानादर्शनाच्छान्तशब्दस्य शान्तिकामपरत्वास्वारस्यात् वृत्त्यनुरोधाच्च इयमेव योजना समुचितेति भावः । ( अत्रैवोपासनं विधीयत इति) अत्र शान्त्युपायोपासनम्; उत्तरत्र मोक्षोपायोपासनमिति नायमर्थः, अपि तु अत्रैव मोक्षार्थोपासनं विधीयत इत्यर्थः । शान्तशब्दार्थं स्वरसतो वदन् वाक्यार्थमाह ( सर्वात्मकमिति ) न त्वाशंसायां क्त इह विहितोऽयमिति भावः । तर्हि 'स क्रतुं कुर्वीते'ति किमुच्यत इत्यत्राह ( स क्रतुमिति ) के पुनर्विधेया गुणा इत्यत्राह ( उपादेयाश्चेति ) उपादेयाः—विधेयाः । यथा 'अग्निहोत्रं जुहोति' इति होमे विहिते 'दध्ना जुहोति'इत्यत्र दध्नो होमसाधनत्वमात्रं विधेयम्, जुहोतीत्यनुवादस्तद्वदिति । ननूपासनविधेरुत्पत्तिशिष्टसर्वात्मकत्वगुणावरोधान्मनोमयत्वादीनां नोपास्याकारत्वमिति चेन्न, सर्वात्मकत्वस्य उपासनविधिवाक्यस्थत्वाभावात् । तज्जत्वतल्लत्वतदनत्वैः सर्वमिदं ब्रह्म खल्विति प्रसिद्धवन्निर्देश उपासनविध्येकवाक्यत्वं निवारयति । न ह्युपासीत खल्विति प्रसिद्धवन्निर्देशवचनव्यक्तिः

* भावप्रकाशिका *

( प्रतिज्ञावाक्यस्याध्याहार्यत्वादिति ) कृत्स्नस्येति शेषः । ततश्च पूर्वयोजनायामिव द्वितीययोजनायां न कृत्स्नाध्याहार इति भावः । ( ननूपासनविधेरिति ) विधीयमानोपासनस्येत्यर्थः । ( उत्पत्तिशिष्टसर्वात्मकत्वेति ) उत्पत्तिवाक्यविहितेत्यर्थः । उत्पत्तिवाक्यं प्राथमिकावगतिजनकं वाक्यम् । ( उपासनविध्येकवाक्यत्वमिति ) ननु ब्रह्मशब्दस्य द्वितीयान्तत्वे द्वितीयान्तस्य खल्वित्यनेनैकवाक्यतया अन्वयो न सम्भवेत् । तज्जत्वतल्लत्वतदनत्वैस्सर्वस्य ब्रह्मात्मकत्वं शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थ इति वक्ष्यमाणरीत्या शम-

मनोमयत्वादयः, अतः सर्वात्मकं ब्रह्म मनोमयत्वादिगुणकमुपासीतेति वाक्यार्थः । तत्र सन्देहः, किमिह ब्रह्मशब्देन प्रत्यगात्मा निर्दिश्यते, उत परमात्मा ? इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? तस्यैव सर्वपदसामानाधिकरण्यनिर्देशोपपत्तेः । सर्वशब्दानिर्दिष्टं हि ब्रह्मादिस्तम्बपर्य्यन्तं कृत्स्नं जगत् । ब्रह्मादि-

* श्रुतप्रकाशिका *

घटते । वाक्यार्थमाह ( अत इति ) एवमेकविषयत्वमङ्गीकृत्यैव पूर्वपक्षसिद्धान्तौ दर्शयितुं संशयमाह (तत्रेति ) तत्र—एकविषयत्वे सिद्धे । किमत्रोपास्यतया निर्दिष्टो जीवः, उत परमात्मेति विशयः । तदर्थं किं ब्रह्मशब्दो जीवपरः, उत परमात्मपरः ? । तदर्थं किं ब्रह्मशब्दकर्मकर्तृव्यपदेशादयो मुख्याः, उत न ? इति । तदर्थमणीयस्त्वव्यपदेशः किं मुख्यत्वविरोधि, उत न । तदर्थमणीयस्त्वज्यायस्त्वयोः किं स्वाभाविकम् ? किमौपाधिकम् ? इति । यदाऽणीयस्त्वं स्वाभाविकं ज्यायस्त्वमन्यथा सिद्धं तदाऽणीयस्त्वस्य ब्रह्मशब्दादिमुख्यताविरोधित्वेन ब्रह्मशब्दस्य जीवपरत्वादुपास्यतया निर्दिष्टो जीव इति पूर्वपक्षस्थितिः । यदाऽणीयस्त्वमौपाधिकं ज्यायस्त्वं स्वाभाविकं तदाऽणीयस्त्वव्यपदेशस्य ब्रह्मशब्दादिमुख्यताविरोधित्वाभावेन ब्रह्मशब्दस्य परमात्मपरत्वेनात्रोपास्यतया निर्दिष्टः परमात्मेति सिद्धान्ते फलफलिभावः । हेतुं विवृणोति ( सर्वशब्देति ) । ततः किमित्यपेक्षायां जीवस्य सामानाधिकरण्योपपत्तिमाह ( ब्रह्मादीति ) ब्रह्मादिभावः—चतुर्मुखादिभावः ।

छ भावप्रकाशिका छ

विध्यर्थवादतया परमतवदेकवाक्यत्वं सम्भवत्येव । 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यस्य 'शूर्पेण जुहोति' तेन ह्यन्नं क्रियत' इत्यस्यैव हेतुवन्निगदार्थवादत्वं मतद्वयेपि साधारणम् । इयांस्तु विशेषः, परमते 'स क्रतुं कुर्वीत' इत्युपासनं विधीयते. सर्वं खल्वितिवाक्ये तदनुवादेन शमो विधीयते । अस्मन्मते तु सर्वं खल्वितिवाक्ये शमविशिष्टमुपासनं विधीयते । स क्रतुं कुर्वीतेति वाक्ये तु सर्वं खल्वितिवाक्यविहितोपासनानुवादेन मनोमयत्वादयो गुणा विधीयन्त इति । न च प्राप्तोपासनानुवादेन

भावश्च प्रत्यगात्मनोऽनाद्यविद्यामूलकर्मविशेषोपाधिको विद्यत एव; परस्य तु ब्रह्मणः सर्वज्ञस्य सर्वशक्तेरपहतपाप्मनो निरस्तसमस्ताविद्यादिदोषगन्धस्य समस्तहेयाकरसर्वभावो नोपपद्यते । प्रत्यगात्मन्यपि क्वचित्क्वचिद्ब्रह्मशब्दः प्रयुज्यते, अत एव परमात्मा परं ब्रह्मेति परमेश्वरस्य क्वचित्सविशेषणो निर्देशः । प्रत्यगात्म-

* श्रुतप्रकाशिका *

(अनादीति) अहितकर्मोत्पादनहेतुरविद्या, तद्धेतुः कर्मेति बीजाङ्कुरादिनयादनादिः। तस्यैवेत्यवधारणसूचितां परस्य सर्वभावानुपपत्तिं विवृणोति ( परस्येति ) सर्वज्ञत्वाद्धेयं जानाति, सर्वशक्तित्वान्निवारयितुं शक्नोति, न च ज्ञानशक्त्योः सङ्कोचः, अविद्यामूलकर्मविरहात्, अतो न सर्वभावः सम्भवतीति भावः । ब्रह्मशब्दः कथमित्यत्राह ( प्रत्यगिति ) तदुपपादयति ( अत एवेति ) परमात्मेति दृष्टन्ततयोक्तम्, यथा आत्मशब्दो जीवेश्वरसाधारणः, तद्वत् ब्रह्मशब्द इति भावः । त्रिपाद्याः परब्रह्माभ्युपगमेन वाक्यविशेषविचारपरत्वादत्र पूर्वपक्षिणः परमेश्वराभ्युपगमवाद

* भावप्रकाशिका *

कथमेकस्मिन् वाक्ये मनोमयत्वाद्यनेकगुणविधानमिति वाच्यम् ; मनोमयत्वादीनां नानात्वेपि 'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यत्रेतिशब्देन क्रमविशेषरूपप्रकारविशिष्टतया प्रतीतेर्विधेयनानात्वेपि विधेयतावच्छेदकैक्याद्वाक्यभेदाप्रसक्तेः । ततश्चास्मन्मतेपि सर्वं खल्विदमितिवाक्येपि एकवाक्यत्वं सिद्धमेव । कथं भेद इति चेत्, उच्यते; सत्यमेकवाक्यत्वम्. तथाप्युपास्याकाङ्क्षायां रात्रिसत्रन्यायेन शमविध्यर्थवादप्रतिपन्नं ब्रह्मैवोपास्यतया सम्बध्यते. नतु सर्वात्मकत्वविशिष्टं ब्रह्म. ब्रह्ममात्रेणोपास्याकाङ्क्षाशान्तेः, येनोत्पत्तिशिष्टगुणावरोधशङ्कापि स्यादिति भावः । वस्तुतस्तु सार्वात्म्यस्योत्पत्तिशिष्टस्यापि वक्ष्यमाणमनोमयत्वाद्यविरोधान्न वक्ष्यमाणानां मनोमयत्वादीनामन्वय इत्यपि द्रष्टव्यम् । अत एव 'तं मामायुरमृतमुपास्व' इत्युपासनविधौ 'आनन्दोऽजरोऽमृतः' इत्यौपसंहारिकगुणानामुपास्यतया विधानमिति 'प्राणस्तथानुगमात्' इत्यधिकरणे वर्णितम् । तथा 'ओमि-

**नश्च निर्मुक्तोपाधेर्बृहत्त्वं च विद्यते । "स चानन्त्याय कल्पते" इति श्रुतेः । अविदुषस्तस्यैव कर्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां तज्जलानिति हेतुनिर्देशोऽप्युपपद्यते । तदयमर्थः,– अयं जीवात्मा स्वतोऽपरिच्छिन्नस्वरूपत्वेन ब्रह्मभूतस्सन्ननाद्यविद्यया देवतिर्य्यङ्मनुष्यस्थावरात्मनाऽवतिष्ठत इति ॥**

* श्रुतप्रकाशिका *

उपपन्नः । आत्मशब्दस्य साधारण्यं युक्तम्, प्रवृत्तिनिमित्तसाधारण्यात्, आप्नोतीति हि तद्व्युत्पत्तिः, जगद्देहं व्याप्नोतीति, एवमुभयसाधारणं ब्रह्मशब्दप्रवृत्तिनिमित्तं वक्तव्यमित्यत्राह (प्रत्यगात्मनश्चेति) कथं जन्मादिकारणत्वं हेतुतयोच्यते ? हेतुनिर्देशो हि पूर्वप्रसिद्ध्यपेक्षः, प्रसिद्धिश्च परमात्मविषयेत्युक्तमित्यत्राह (अविदुष इति) जन्मादिहेतुत्वं बद्धस्य, ब्रह्मत्वं तु शुद्धस्य, तस्य सर्वशब्दसामानाधिकरण्यं कथं घटत इत्यत्राह (तदयमर्थ इति) ॥ .... ....

छ भावप्रकाशिका छ

त्येतदक्षरमुद्गीथमुपासीत' इति विहिते उद्गीथावयवत्वगुणकप्रणवोपासने रसतमत्वादीनामप्युपास्यत्वमिति 'स्तुतिमात्रमुपादाना' दित्यत्र समर्थितम् । अत एव शाण्डिल्यविद्यायां सार्वात्म्यस्योपास्यत्वमिति बहुषु स्थलेषु भाष्यटीकयोर्व्यवहारः । न च शान्त्यर्थतयोपदिष्टस्य सार्वात्म्यस्य कथमुपास्यविशेषणत्वमिति शङ्कनीयम्. ब्रह्मण इव सर्वात्मकत्वस्यापि उपास्यत्वोपपत्तेः । इतरथा ब्रह्मणोऽपि शमार्थनिर्दिष्टतयोपास्यत्वं न स्यात्. न चेष्टापत्तिः । ब्रह्मशब्दवाच्यस्योपास्यत्वसिद्धवत्कारेणैव पूर्वोत्तरपक्षयोः प्रवर्तनादिति द्रष्टव्यम् । केचित्तु– गुणानां च परार्थत्वादित्यत्रादृष्टकार्येणापि निरपेक्षतया श्रुतेन पूर्वावगतेनाधानेनावरुद्धेऽग्नौ भिन्नादृष्टकार्याणामपि पवमानेष्टीनां न निवेशो युक्तः । अत एवाग्नेयावरुद्धे प्रयाजादिर्न करणम् । अन्यथा समप्राधान्यं स्यादिति नयविवेकोक्तेरविरोधेऽपि न निवेशो युक्त इति वदन्ति । भाष्ये– क्वचित्क्वचिद्ब्रह्मशब्द इति । इदं ब्रह्मायाति तज्ज्ञानं ब्रह्म संज्ञितम्' इत्यादिष्विति भावः ॥ .... ....

अत्र प्रतिविधीयते-- सर्वत्र प्रसिद्धोपदेशात् । सर्वत्र-- 'सर्वं खल्विदम्' इति निर्दिष्टे सर्वस्मिन् जगति ब्रह्म-शब्देन तदात्मतया विधीयमानं परं ब्रह्मैव न प्रत्यगात्मा । कुतः ? प्रसिद्धोपदेशात्-- 'तज्जलान्' इति हेतुतः 'सर्वं खल्विदं ब्रह्म' इति प्रसिद्धवदुपदेशात् । ब्रह्मणो जातत्वाद्ब्रह्मणि लीनत्वाद्ब्रह्माधीनजीवनत्वाच्च हेतोर्ब्रह्मात्मकं सर्वं खल्विदं जगदित्युक्ते यस्माज्जगज्जन्मस्थितिलयाः वेदान्तेषु प्रसिद्धाः तदेवात्र ब्रह्मेति

* श्रुतप्रकाशिका *

सिद्धान्तमाह ( अत्रेति ) यथा 'अन्तस्तद्धर्मोपदेशात्' इत्यन्तश्शब्दः प्रतिज्ञापरः, एवं सर्वत्रेति सूत्रपदं प्रतिज्ञापरमित्याह ( सर्वत्रेति ) तदेव पदं व्याचष्टे ( सर्वमिति ) सर्वत्रेतिपदं न वाचकवेदान्तपरम् , अपितु वाच्यजगत्परमित्यर्थः । नाशब्दमिति वा नेतर इति वा अन्य इति वा पूर्वपादादनुवर्तते, अतः पर्यवसानलब्धं प्रतिज्ञापदं परं ब्रह्मैवेति । 'न शारीर' इत्यत्र वक्ष्यमाणमनुसन्धायाह ( न प्रत्यगात्मेति ) प्रसिद्धोपदेशादिति पदं व्याचष्टे ( तज्जेति ) जगज्जन्मस्थितिलयानां तत्कृततादात्म्यस्य च प्रसिद्धत्वेनोपदेशादित्यर्थः । इतिशब्देन हेतुतयोक्तत्वात् जन्मादीनां प्रसिद्धत्वम्, प्रमाणसिद्धस्यैव हि हेतुता । तत्कृततादात्म्यस्य प्रसिद्धत्वं खलुनासिद्धम् । तत्स्पष्टयति (ब्रह्मण इति ) कारणत्वनिबन्धनतादात्म्यस्य चात्र

* भावप्रकाशिका *

भाष्ये-ब्रह्मशब्देन तदात्मकतया विधियमानामिति । तदात्मकतया--अन्तर्यामितयेत्यर्थः । सर्वस्य जगतः अन्तर्यामितया विधीयमानमिति यावत् ॥ तज्जलानिति हेतुत इति भाष्यस्य जन्मस्थितिलयानां तत्कृततादात्म्यस्य च प्रसिद्धत्वेनोपदेशादित्यर्थ इति यदुक्तम् तदयुक्तम्; तद्विवरणे भाष्ये-यस्माज्जगज्जन्मस्थितिलयाः प्रसिद्धा इति कारणत्वप्रसिद्धमात्रप्रतिपादनादित्याशङ्क्याह ( कारणत्वनिबन्धनतादात्म्यस्येति ) जगज्जन्मस्थितिलयानां हेतुत्वप्रसिद्धौ प्रस-

प्रतीयते। तच्च परमेव ब्रह्म; तथा हि [1]"यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म" इत्युपक्रम्य [2]"आनन्दो ब्रह्मेति व्यजानात्। आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इत्यादिना पूर्वानुवाकप्रतिपादितानवधिकातिशयानन्दयोगिनो विपश्चितः परस्माद्ब्रह्मण एव जगदुत्पत्तिस्थितिलया निर्दिश्यन्ते; तथा [3]"स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति करणाधिपस्य जीवस्याधिपः परं ब्रह्मैव कारणं व्यपदिश्यते, एवं सर्वत्र परस्यैव ब्रह्मणः कारणत्वं प्रसिद्धम्; अतः परब्रह्मणो जातत्वात्तस्मिन् प्रलीनत्वात् तेन प्राणनात् तदात्मकतया तादात्म्यमुप-

---

* श्रुतप्रकाशिका *

प्रसिद्धत्वेनोपदेशः फलितः। प्रसिद्धत्वमस्तु, ततः किमित्यत्राह ( तच्चेति ) प्रसिद्धिं दर्शयति ( तथाहीति ) यतो वा इमानीति वाक्यस्य जीवविषयत्वव्यावृत्त्यर्थमाह ( आनन्दो ब्रह्मेति ) आनन्दशब्दस्यानन्दमयपरत्वव्यक्तीकरणायाह ( पूर्वानुवाकेति ) वाक्यान्तरमाह ( तथेति ) वाक्यान्तराणामप्युक्तार्थपरत्वात् तेष्वपि तत्प्रसिद्धिमाह (एवमिति) श्रुत्यन्तरेष्वपि जन्मादिहेतुत्वकृततादात्म्यमप्यर्थसिद्धमित्याह (अत इति) ( तदात्मकतया तादात्म्यमिति ) तादात्मकतयेति श्रुत्यन्तरविषयम्, तज्जत्वतदनत्व-

☙ भावप्रकाशिका ☙

क्तायां तत्साध्यतादात्म्यप्रसिद्धिरप्यर्थादुक्तेति भावः। ( प्रसिद्धत्वमस्त्विति ) जगज्जन्मस्थितिलयहेतुत्वेन वेदान्तप्रसिद्धमेव प्रतीयतामित्यर्थः। तस्यैव भाष्ये पूर्ववाक्ये प्रतिपादितत्वादिति द्रष्टव्यम्। ( तादात्म्यमप्यर्थसिद्धमित्याहेति ) तादात्म्यमप्यर्थसिद्धमित्यभिप्रयन्नाहेत्यर्थः। भाष्ये—तदात्मकतया तादात्म्यमुप-

---

१ तै भृ- १ ॥ २ तै भृ-६ ॥ ३ श्वे. ६-९ ॥

पन्नम् । अतस्सर्वप्रकारं सर्वशरीरं सर्वात्मभूतं परं ब्रह्म शान्तो भूत्वा उपासीतेति श्रुतिरेव परस्य ब्रह्मणः सर्वात्मकत्वमुपपाद्य तस्योपासनमुपदिशति । परं ब्रह्म हि कारणावस्थं कार्यावस्थं सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतया सर्वदा सर्वात्मभूतम् । एवम्भूततादात्म्यस्य प्रतिपादने परस्य ब्रह्मणस्सकलहेयप्रत्यनीककल्याणगुणाकरत्वं न विरुध्यते, प्रकारभूतशरीरग-

* श्रुतप्रकाशिका *

तज्जत्वैः श्रुत्यन्तरेषु तदात्मकत्वेनोपपादनादिह प्रतिपन्नमपि तादात्म्यमुपपन्नमित्यर्थः । चिदचिद्विलक्षणस्य कथं तादात्म्योपपत्तिरित्यत्राह ( अतस्सर्वेति ) सर्वात्मशब्दवैशद्याय सर्वशरीरमित्युक्तम् । आकृत्यधिकरणन्यायेन प्रकारिपर्यन्ताभिधानसिद्ध्यर्थमाह ( सर्वप्रकारमिति ) श्रुतिरेव— सर्वं खल्वित्यादिश्रुतिरेव । उपपाद्य—तज्जलानीत्यंशेन कार्यकारणभावेन शरीरात्मभावेन चोपपाद्येत्यर्थः । तत्र अन्तर्यामिरूपेण कृतस्य प्राणनस्य शरीरात्मभावापेक्षत्वात्तेन च तथोपपादितं भवति । स्थितिदशायां हि शरीरात्मभावः, प्रलयावस्थायान्तु 'एकमेवाद्वितीय'मिति सर्वभेदशून्यत्वान्न शरीरात्मभावसिद्धिरित्यत्राह ( परं ब्रह्म हीति ) स्थितौ शरीरात्मभावोपपादनादुभयलिङ्गकस्य ब्रह्मणः कारणावस्थायामपि विशिष्टत्वमर्थसिद्धं श्रुत्यन्तरैः कण्ठोक्तं चेत्यभिप्रायः । सर्वदा विशिष्टं चेत् कार्यकारणावस्थयोः को भेद इति शङ्कापरिहाराय सूक्ष्मस्थूलचिदचिद्वस्तुशरीरतयेत्युक्तम् । ततः किमुभयलिङ्गकत्वस्येत्यत्राह( एवं

* भावप्रकाशिका *

पन्नमिति । अत्र साध्याविशेषमाशङ्क्य श्रुत्यन्तरसिद्धतदात्मकत्वं हेतुः, एतच्छ्रुतिप्रतिपन्नतादात्म्यमुपपाद्यमित्याह ( तदात्मकतयेति श्रुत्यन्तरविषयमिति ) इदमुपलक्षणम् । तदात्मकतया तादात्म्यमित्यस्य वाक्यस्य शरीरशरीरिभावेन तादात्म्यमिति वाक्यतुल्यत्वान्न साध्याविशेषशङ्कापीत्यपि द्रष्टव्यम् । (उभयलिङ्गकस्य ब्रह्मण इति ) तथा च प्रलयदशायां ब्रह्ममात्रपरिशेषे ब्रह्मस्वरूपस्यैव परिणामप्रसक्त्या सविकारत्वरूपदोषप्रसङ्गादिति भावः । ( श्रुत्यन्तरैः कण्ठोक्तं चेति ) ''तम आसीत्'

तानां दोषाणां प्रकारिण्यात्मन्यप्रसङ्गात्, प्रत्युत निरतिशयैश्वर्यापादनेन गुणायैव भवतीति पूर्वमेवोक्तम् ॥ यदुक्तं जीवस्य सर्वतादात्म्यमुपपद्यत इति । तदसत्; जीवानां प्रतिशरीरं भिन्नानामन्योन्यतादात्म्यासम्भवात् । मुक्तस्याप्यनवच्छिन्नस्वरूपस्यापि जगत्तादात्म्यं जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तं न सम्भवतीति 'जगद्व्यापारवर्जम्' इत्यत्र वक्ष्यते । जीवकर्म्मनिमित्तत्वाज्जगज्जन्मस्थितिलयानां स एव कारणमित्यपि न साधीयः, तत्कर्मनिमित्तत्वेऽपीश्वरस्यैव जगत्कारणत्वात् । अतः परमात्मैवात्र ब्रह्मशब्दाभिधेयः । इममेव सूत्रार्थमभियुक्ता बहुमन्वते । यदाह वृत्तिकारः "सर्वं खल्विति सर्वात्मा ब्रह्मेशः" इति ॥ १ ॥

* श्रुतप्रकाशिका *

भूतेति) जीवस्यैव सर्वतादात्म्यं पूर्वपक्षिणोक्तमनूद्य दूषयति ( यदुक्तमित्यादिना ) मुक्तस्य तत्सम्भवतीत्यत्राह ( मुक्तस्येति ) जगज्जन्मस्थितिप्रलयकारणत्वनिमित्तमिति बहुव्रीहिः, कारणत्वप्रयुक्तमित्यर्थः । जीवस्य कर्मद्वारा जगत्कारणत्वमनूद्य दूषयति ( जीवकर्मेति ) (तत्कर्मनिमित्तत्वेऽपीति) न हि कर्म जगतः कर्तृरूपनिमित्तमुपादानञ्च, उभयमीश्वर एव, कर्म तु केवलं वैषम्यहेतुः, यथा घटादिनिर्माणस्य भोक्तृकर्मनिमित्तत्वेऽपि भोक्तृकर्मणां न कर्तृत्वमुपादानत्वं वा, कुलालमृत्पिण्डयोरेव हि तदुभयम् । न च 'तज्जला'नित्यत्र तच्छब्दस्य कर्मवाचित्वम्, अतो न जीवस्य जगत्कारणत्वकृतं तादात्म्यमस्तीत्यभिप्रायः । सूत्रार्थमुपसंहरति ( अत इति ) द्वितीययोजनोक्तार्थस्यैव साम्प्रदायिकत्वमाह ( इममेवेति ) सर्वं खल्वित्यादिवाक्येन सर्वात्मतयोक्तं ब्रह्म ईशः परमात्मेत्यर्थः ॥ .... .... .... ....

७ भावप्रकाशिका ७

'यस्य तमश्शरीरम्" इत्यादिभिरित्यर्थः । ( ततः किमुभयलिङ्गकस्येत्यत्राहेति)

## विवक्षितगुणोपपत्तेश्च ॥ २ ॥

वक्ष्यमाणाश्च गुणाः परमात्मन्येवोपपद्यन्ते "मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धः सर्वरसस्सर्वमिदमभ्यात्तो ऽवाक्यनादरः" इति । मनोमयः- परिशुद्धेन मनसैकेन ग्राह्यः, विवेकविमोकादिसाधनसप्तकानुगृहीतपरमात्मोपासननिर्मलीकृतेन हि मनसा गृह्यते । अनेन हेयप्रत्यनीककल्याणैकतानतया सकलेतरविलक्षणस्वरूपतोच्यते; मलिनमनोभिर्मलिनानामेव ग्राह्यत्वात् ।

* श्रुतप्रकाशिका *

॥ विवक्षितगुणोपपत्तेश्च ॥ विवक्षितत्वम्- वक्तुमिच्छाविषयत्वम् । अपौरुषेयवाक्यप्रतिपाद्यगुणानां पुरुषेच्छापूर्वकत्वायोगात् कथं विवक्षितत्वमिति शङ्कायां विवक्षितपदं व्याचष्टे ( वक्ष्यमाणा इति ) विवक्षितानामेव वक्ष्यमाणत्वाद्विवक्षितशब्देन वक्ष्यमाणत्वं लक्ष्यत इत्यर्थः । सर्वं खल्विति प्रथमवाक्यापेक्षया वक्ष्यमाणं ह्यनन्तरवाक्यगतगुणजालम् । निषेधवाक्यविरोधपरिहाराय सामान्यं मनोमयशब्दं विशेषवाक्यानुगुणं व्याचष्टे ( मनोमय इति ) (परिशुद्धेन मनसैकेनेति) 'अब्भक्षो वायुभक्षः' इतिवदवधारणगर्भ इत्येकशब्दस्य भावः । तच्च "न चक्षुषा गृह्यते नापि वाचा मनसा तु विशुद्धेन' इतिश्रुत्यानुगुण्यात् । तद्विवृणोति ( विवेकेति ) फलितार्थमाह ( अनेनेति ) कुत इत्यत्राह ( मलिनेति ) मलिनमनोग्राह्यत्वं हेयार्हत्वव्यापकम्, अतो व्यापकनिवृत्त्या व्याप्यनिवृत्तिरित्युभयलिङ्गकत्वसिद्धिरिति भावः । मुक्तस्यापि विशुद्धमनोग्राह्यत्वं न सम्भवति, मुक्तं

* भावप्रकाशिका *

पूर्वपक्षिणा आपादितस्योभयलिङ्गत्वविरोधस्य कः परिहार उक्तस्स्यादिति शङ्कार्थः ॥

( निषेधवाक्यविरोधेति ) 'अप्राणो ह्यमनाः' इति वाक्यविरोधपरिहारायेत्यर्थः । ( विशेषवाक्यानुगुणमिति ) मनसा तु विशुद्धेन इतिवाक्यानुगुणमित्यर्थः ।

प्राणशरीरः—जगति सर्वेषां प्राणानां धारकः, प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतञ्च स प्राणशरीरः । आधेयत्वविधेयत्वशेषत्वानि शरीरशब्दप्रवृत्तिनिमित्तानीत्युपपादयिष्यते । भारूपः--भास्वररूपः, अप्राकृतस्वासाधारणनिरतिशयकल्याणदिव्यरूपत्वेन निरतिशयदीप्तियुक्त इत्यर्थः । सत्यसङ्कल्पः— अप्रतिहतसङ्कल्पः । आकाशात्मा- आकाशवत् सूक्ष्मस्वच्छस्वरूपः, सकलेतरकारणभूतस्याकाशस्याप्यात्मभूत इति वा आकाशात्मा, स्वयं च प्रकाशते अन्यानपि प्रकाशयतीति वा आकाशात्मा । सर्वकर्म्मा-- क्रियत इतिकर्म, सर्वं जगद्यस्य कर्म असौ सर्वकर्मा; सर्वा वा क्रिया

* श्रुतप्रकाशिका *

स्वातन्त्र्येण गृह्णाति चेत् मनोऽशुद्धम् , ब्रह्मपर्यन्तत्वेन चेत् विशिष्टस्य ब्रह्मण एव विशुद्धमनोग्राह्यत्वमिति । प्राणशरीरशब्दं व्याचष्टे ( जगतीति ) प्राणशरीरशब्देन प्राणधारकत्वं कथमवगम्यत इत्यत्राह ( प्राणो यस्येति ) शरीरत्वे सति कथमाधेयत्वादिकमित्यत्राह ( आधेयत्वेति ) ( भारूप इति ) ज्ञानस्वरूप इत्यर्थस्त्वतिक्लिष्टः, रूपशब्दो हि धर्मवाची, भाशब्दो हि दीप्तिपरः । दीप्तिधर्मकत्वं विग्रहद्वारकम् 'आदित्यवर्णं तमसः परस्तात्' 'रुक्मवर्णम्'' इत्यादिश्रुत्यैकार्थ्यादित्यभिप्रायेणाह ( भास्वररूप इति ) तद्विवृणोति ( अप्राकृतेति ) (सूक्ष्मस्वच्छस्वरूप इति ) सूक्ष्मत्वम्—व्याप्त्यर्हत्वम् । स्वच्छत्वम्—निर्मलत्वम् । सकलेतरकारणभूतस्याकाशस्येत्यनेन 'आकाश एव तदोतञ्च प्रोतञ्च' इति वाक्यं स्मारितम् । 'अक्षरमम्बरान्तधृते'रित्यधिकरणन्यायादाकाशशब्दः प्रकृतिवाचीति भावः । अन्यानपि प्रकाशयति— स्वस्मै प्रकाशयतीत्यर्थः । ( सर्वा वा क्रियेति ) लौकिक-

ध भावप्रकाशिका ध

धर्मभूतज्ञानव्यावृत्त्यर्थमाह ( स्वस्मै प्रकाशयतीत्यर्थ इति) (सत्यकामपदैकार्थ्यादिति)

यस्यासौ सर्वकर्मा। सर्वकामः- काम्यन्त इति कामाः, भोग्यभोगोपकरणादयः, ते परिशुद्धाः सर्वविधास्तस्य सन्तीत्यर्थः। सर्वगन्धस्सर्वरसः— 'अशब्दमस्पर्शम्' इत्यादिना प्राकृतगन्धरसादिनिषेधादप्राकृताः स्वासाधारणा निरवद्याः निरतिशयाः कल्याणाः स्वभोग्यभूताः सर्वविधाः गन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः- उक्तं रसपर्यन्तं सर्वमिदं कल्याण-

* श्रुतप्रकाशिका *

वैदिकसकलक्रियाणां सद्वारककर्ताऽसौ। यद्वा सर्ववैदिकक्रिया आराधनं यस्य स सर्वक्रिय इत्यर्थः। इच्छाबाहुल्यव्यावृत्त्यर्थं सर्वकामपदं व्याचष्टे (काम्यन्त इति) भोग्यभोगोपकरणादीनां प्राकृतत्वव्यावृत्त्यर्थमाह (ते परिशुद्धा इति) अप्राकृता इत्यर्थः। सत्यकामपदैकार्थ्यादित्यभिप्रायः। (सर्वगन्ध इत्यादि) रूपस्पर्शादिनिषेधपरवाक्यान्तराणामपि तुल्यन्यायत्वद्योतनार्थ आदिशब्दः। गन्धरसादीनामव्यवधानेन स्वरूपान्वयित्वाभावात् सद्वारकत्वे सति प्राकृतानां पृथिव्यादिगतगन्धरसादीनां हेयत्वेन कल्याणगुणप्रकरणविरोधात् 'भारूप' इति दिव्यविग्रहस्य प्रकृतत्वाच्चाप्राकृतदेहद्वारकगन्धरसादिविधिरित्यर्थः। 'तं ब्रह्मगन्धः प्रविशति ब्रह्मरसः प्रविशति' इति मुक्तात्मनि साम्यापन्ने ब्रह्मगन्धरसप्रवेशव्यपदेशश्चास्यार्थस्योत्तम्भकः। (सर्वमिदमिति) जगतोऽपि सर्वकर्मादिगुणान्तर्भावाद्गुणपरं तद्व्याख्यातम्। 'अभ्यात्त' इत्यत्र स्वीकरणरूपगुणविधिः। ननु नायमादिक-

* भावप्रकाशिका *

सत्यकामपदस्य नित्यविभूतिमत्त्वार्थकत्वं दहराधिकरणे स्पष्टयिष्यते (अत्र स्वीकरणरूपगुणविधिरिति) नन्वेतदनुक्तिसिद्धं तद्गुणकत्वप्रतिपादनादेव तदुपादानस्य सिद्धत्वादितिचेन्न; सर्वकर्मेत्यादि पुनः पाठस्य सकृत्पठितमनोमयत्वादिगुणोपास्यत्वपरिसङ्ख्यार्थत्वशङ्कानिरसनाय प्रागुक्तसर्वगुणोपास्यत्वप्रतिपादनार्थतया सार्थक्यमित्याशयात्। पुनः पाठस्य तु प्रयोजनमुत्तरत्र वक्ष्यते (नायमादिकर्मणीति)

गुणजातं स्वीकृतवान् । 'अभ्यात्तः' इति 'भुक्ता ब्राह्मणाः' इतिवत्कर्त्तरि क्तः प्रतिपत्तव्यः। अवाकी - वाकः उक्तिः, सोऽस्य नास्तीति अवाकी । कुत इत्याह अनादर इति । अवाप्तसमस्तकामत्वेनादर्त्तव्याभावा-

* श्रुतप्रकाशिका *

मेणि क्तः, गुणगणादानस्य नित्यत्वात् । न चाभ्याददातिर्गत्यर्थः, स्वीकरणार्थत्वात् । नाप्यकर्मकः, सर्वमिदमिति श्रवणात् । न च शिष्टादिष्वन्यतमः, अपठितत्वात् । तत्कथं कर्त्तरि क्तः "तयोरेव कृत्यक्तखलर्थाः" इति भावकर्मणोरेव हि तत्स्मरण-मित्यत्राह (भुक्ता इति) प्रयुक्तानुशासनत्वात् व्याकरणशास्त्रस्य, यथाप्रयोगमनुशा-सनं कार्यम्, न तु यथानुशासनं प्रयोगान्यथाकरणमिति भावः । ये तु भुक्ता ब्राह्मणा इत्यत्र मत्वर्थीयाकारप्रश्लेषमिच्छन्ति, तेषां भुक्तशब्दस्य अर्शादिगणान्तर्भाव-कल्पनम् अकारप्रश्लेषणमिति तत्र गौरवं पश्यतोक्तम् कर्त्तरीति । कर्त्रर्थतया प्रयोग एव हि भुक्तादीनामाकृतिगणान्तर्भावकल्पननिमित्तम्, तेनैव कर्त्रर्थत्वं क्तप्रत्य-यस्य कल्प्यतां किमश्रूयमाणाकारप्रश्लेषेणेति भावः । यद्वा कर्त्तरि प्रतीतिः प्रतिपत्तिः, सा यथा भुक्ता ब्राह्मणा इत्यत्र प्रतिपाद्यते- निरूप्यते, एवमत्रापि निर्वोढव्येत्यर्थः । ( सोऽस्य नास्तीत्यवाकीति ) फलितार्थकथनमेतत् , वाकः- उक्तिः, अवाकः- तदभावः । अवाकोऽस्यास्तीत्यवाकशब्दस्ताद्धितप्रत्ययः । यद्वा वाकी न भवतीत्यवाकी । कुत इत्याह- कुत इत्यत्राहेत्यर्थः । अवाकत्वं वाक्सामर्थ्याभावादिति शङ्काव्यावृत्त्यर्थम् अनादर इतिपदमिति भावः । तदुपपादयति ( अवाप्तेति ) अवाकित्वस्य तत्फलतामाह ( अत एवेति ) निषेध्यो-

ҩ भावप्रकाशिका ҩ

आरम्भ आदिकर्म, 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' इति कर्तरिक्तप्रत्ययविधानमाशङ्क्य निराकरोति ( न चाभ्याददातिरित्यादिना ) ( तेनैव कर्त्रर्थकत्वं क्तप्रत्ययस्य कल्प्यतामिति ) लक्ष्यप्राधान्यवादिनोयं परिहारः, गत्य-र्थत्वमङ्गीकृत्य कल्प्यतामित्यर्थः । महाभाष्ये कथं भुक्ता ब्राह्मणाः पीता गावः इत्याशङ्क्य अर्श आद्यजन्ततया निर्वाहः कृतः । तदनुरोधेन निर्वाहं दर्शयति ( यद्वा

दादररहितः । अत एव अवाकी-- अजल्पाकः, परिपूर्णैश्वर्यत्वाद्ब्रह्मादिस्तम्बपर्य्यन्तं निखिलं जगत्तृणीकृत्य जोषमासीन इत्यर्थः । त एते विवक्षिता गुणाः परमात्मन्येवोपपद्यन्ते ॥ २ ॥

अनुपपत्तेस्तु न शारीरः ॥ ३ ॥

तमिमं गुणसागरं पर्य्यालोचयतां खद्योतकल्पस्य

* श्रुतप्रकाशिका *

वाको हेयरूप इति दर्शयति ( अजल्पाक इति ) सापेक्षत्वनिबन्धनबहुप्रलापो निषेध्यः, न तु वाक्सामर्थ्यविरह इत्यर्थः । पदद्वयप्रतिपाद्योऽयमेको गुण इत्याह ( परिपूर्णेति ) सूत्रार्थमुपसंहरति ( त एत इति ) ॥ .... .... ....

एवमन्वय उक्तः, कथं परमात्मन्येवेत्यवधारणसिद्धिः, मुक्तेऽपि ह्येते गुणाः शङ्कनीया इत्यपेक्षायां पूर्वसूत्रोक्तान्वयस्थेम्ने व्यतिरेकमाह- ॥ अनुपपत्तेस्तु न शारीरः ॥ शारीरशब्देन मुक्तावस्थस्यापि क्रोडीकारोपपादको योग्यशब्दः, अनुपपत्तेस्तु नेतर इति वक्तव्येपि मुक्तावस्थजीवस्य प्रतिपाद्यत्वानुपपत्तिस्फोरणार्थं शारीरशब्दनिर्देश इति भावः । बद्धोपादानं दृष्टान्ततया, यथा निग्राह्यस्य निग्राहकस्वरूपैक्यानुपपत्तिः तथाऽनुग्राह्यस्याप्यनुग्राहकस्वरूपैक्यानुपपत्तिरित्यभिप्रायः । प्रस्तुतगुणानुपपत्तिः प्रतिगुणमनुसन्धेया । पर्यालोचयतां शङ्का न जायत इत्यन्वयः । न मुक्तपरिग्रहशङ्काहेत्वन्यथासिद्धिः, किन्तु हेत्वसिद्धिरेवेति, तुशब्दाभिप्राय इत्याशयवतोक्तं शारीरपरिग्रहशङ्का न जायत इति ॥ अनुपपत्तेस्तु न शारीर इत्यत्र यदुक्तं परैः-जीवपरयोरैक्याज्जीवधर्म्मैः परस्य विशिष्टत्वानुसन्धानोपपत्तिश्चेत्तदनन्यत्वादेव परमात्मधर्म्माः सत्यसङ्कल्पत्वादयोऽपि जीव उपपद्यन्त इति शङ्कानिरासार्थमिदं सूत्रम् । आरोप्यगतधर्मैरधिष्ठानं विशे-

* भावप्रकाशिका *

कर्तरि प्रतीतिः प्रतिपत्तिरिति ) क्तः इत्यनेन क्तप्रत्ययान्तजन्यप्रतिपत्तिर्लक्ष्यत इति भावः । (नतु वाक्सामर्थ्यविरह इत्यर्थ इति) अवाकीत्यनेन प्रतिपाद्यत इति शेषः ॥

( तुशब्दाभिप्राय इत्याशयवतोक्तमिति ) बद्धे संशयहेतोस्सतोऽन्यथा

शरीरसम्बन्धनिबन्धनापरिमितदुःखसंबन्धयोग्यस्य बद्धमुक्तावस्थस्य जीवस्य प्रस्तुतगुणलेशसम्बन्धगन्धोऽपि नोपपद्यत इति नास्मिन् प्रकरणे शारीरपरिग्रहशङ्का जायत इत्यर्थः ॥ ३ ॥

* श्रुतप्रकाशिका *

ष्यते, यथा सर्पगतभीषणत्वादिना तदधिष्ठानम् । न चाधिष्ठानधर्मैरारोप्यं विशेष्यते, यथा रज्जुत्वेन सर्पः, अतो जीवधर्मैर्मनोमयत्वादिभिः परमात्मनो विशेष्यत्वं युक्तम्, न तु परमात्मधर्मैः सत्यसङ्कल्पत्वादिभिर्जीवस्य विशेष्यत्वमिति सूत्रार्थ इति । तदयुक्तम्; सर्पादिव्यावर्त्तकरज्जुत्वादिधर्म्मप्रतीतौ सर्पादिधर्मभूतभीषणत्वादिभिरधिष्ठानस्य विशेषणायोगात् । इह च जीवव्यावर्तकास्सत्यसङ्कल्पत्वादयः प्रतीयन्ते, अतोऽध्यस्तजीवधर्मैः परमात्मनो विशेष्यत्वमयुक्तम् । मनोमयत्वादिभिः सत्यसङ्कल्पत्वादिभिश्च पदैर्वस्तुमात्रं लक्ष्यत इति चेत्, तर्हि 'विवक्षितगुणोपपत्तेश्च' इतिपूर्वसूत्रं विरुध्यते, उभयविधगुणानामविवक्षितत्वं सूत्रकाराभिमतञ्चेत् 'अनुपपत्तेस्तु न शारीरः' इतिवदनुपपत्तेस्तु नेश्वर इति च सूत्रं वक्तव्यम्, वस्तुमात्रविवक्षायां जीवधर्माणामिवेश्वरधर्माणामप्यनुपपत्त्यविशेषात् । अतः ईश्वरधर्मेषु तात्पर्यमवगम्यते, अतस्तेषु प्रतीयमानेषु रज्जोर्भीषणत्वादिनेव मनोमयत्वादिना परमात्मनो विशेष्यत्वमनुपपन्नम्. मनोमयत्वादिकं न जीवसाधारणमिति चेत्. किं मनोमयादिपदैर्मनःप्राणाद्यधीनज्ञानप्रवृत्तित्वं विवक्षितम्, उत विशुद्धमनोग्राह्यत्वप्राणशरीरकत्वादिकम्? । प्रथमे जीवासाधारणत्वान्मनोमयत्वादिभिः परमात्मनो विशेष्यत्वानुपपत्तिः । द्वितीये तु मनोमयत्वादीनामारोपितधर्मत्वाभावादारोप्यगतधर्मैरधिष्ठानस्य विशेष्यत्वसम्भवरूपन्यायाविषयत्वं वाक्यस्य स्यात् । किञ्च नित्यस्य जीवस्य परस्मिन्नारोपितत्वाभावादेवोक्तन्यायः सुतरामिह न सङ्गच्छते, तस्मात्परोक्तः सूत्रार्थोऽनुपपन्नः ॥

* भावप्रकाशिका *

सिद्धिः कार्या, मुक्तेतु संशायकहेतुरपि नास्तीत्येवंरूपवैषम्यं तुशब्देन द्योत्यत इत्यर्थः ( जीवधर्मैरिति ) मनोमयत्वादिभिरित्यर्थः ॥ .... .... ....

कर्म्मकर्तृव्यपदेशाच्च ॥ ४ ॥

[1]"एतमितः प्रेत्याभिसम्भवितास्मि' इति प्राप्यतया परं ब्रह्म व्यपदिश्यते, प्राप्तृतया च जीवः, अतः प्राप्ता जीव उपासकः, प्राप्यं परं ब्रह्मोपास्यमिति प्राप्तुरन्यदेवेदमिति विज्ञायते ॥ ४ ॥

शब्दविशेषात् ॥ ५ ॥

[2]"एष म आत्माऽन्तर्हृदये" इति शारीरः षष्ठ्या

* श्रुतप्रकाशिका *

अथ परमसाध्यहेतुमाह— ॥ कर्मकर्तृव्यपदेशाच्च ॥ अभिसम्भविता—प्राप्ता । प्राप्यप्राप्तृभेदः सूत्रविवक्षितः । ततः किं 'सर्वं खल्विदं ब्रह्म' इत्युक्तस्योपास्यस्य ब्रह्मणो जीववैलक्षण्यस्येत्यत्राह (अत इति) प्राप्यप्राप्तारावेव ह्युपास्योपासकौ, अतः उपास्यं ब्रह्म उपासकाज्जीवाद्विलक्षणमित्यर्थः । स्वरूपस्यैव प्राप्यत्वमिति चेत् श्रुतिस्वारस्यभङ्गः । (प्राप्तुरन्यदेवेदमिति) अत्रेदमिति निर्देशो ब्रह्मशब्दाभिहितवस्त्वभिप्रायः ॥ .... .... ....

अवस्थाभेदेन प्राप्यत्वप्राप्तृत्वोपपत्तिरिति शङ्कापरिहारार्थमेकस्यामेवाव-

ॐ भावप्रकाशिका ॐ

(परमसाध्यहेतुमाहेति) विवक्षितगुणानुपपत्तिद्वारा साध्ये जीवव्यतिरेके हेतुरुच्यते अनेन सूत्रेण, नतु विवक्षितगुणानुपपत्ताविति भावः । (प्राप्यप्राप्तारावेव हीति) 'एतमितः प्रेत्याभिसम्भवितास्मि' इत्यत्र एतच्छब्देन प्राक्प्रस्तुतोपास्यस्य परामर्शादितिभावः (स्वरूपस्यैवेति) दशमस्त्वमसीत्यादाविव स्वरूपस्यैव प्राप्यत्वं प्राप्तृत्वं च सम्भवतीतिशङ्कार्थः । (श्रुतिस्वारस्यभङ्ग इति) 'एतमितः प्रेत्य' इति श्रुतिस्वारस्यभङ्ग इत्यर्थः । नन्वेवमितः प्रेत्याभिसम्भवितास्मि इति वाक्ये प्राप्यस्य पुल्लिङ्गतया निर्देशात् प्राप्तुरन्यदेवेदमिति विज्ञायत इति भाष्ये नपुंसकनिर्देशः कथमित्याशङ्क्याह (अत्रेदमिति निर्देश इति) ॥

१ छां. ३-१४-४ ॥ | २ छां. ३-१४-३ ॥

निर्दिष्टः, उपास्यस्तु प्रथमया । एवं समानप्रकरणे वाजिनाञ्च श्रुतौ शब्दविशेषः श्रूयते जीवपरयोः । यथा [1]"व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयो यथा ज्योतिरधूमम्" इति । अत्र 'अन्तरात्मन्' इति सप्तम्यन्तेन शारीरो निर्दिश्यते; 'पुरुषो हिरण्मयः' इति प्रथमयोपास्यः, अतः पर एवोपास्यः ॥ .... .... ....

इतश्च शारीरादन्यः—

* श्रुतप्रकाशिका *

स्थायां भेदव्यपदेशं दर्शयत्यनन्तरसूत्रद्वयेन— ॥ शब्दविशेषात् ॥ अस्मिन् सूत्रे असमानविभक्तिकशब्दो विवक्षितः । ( एवं समानप्रकरण इति ) तत्रापि शाण्डिल्यविद्यायामित्यर्थः । सौत्रपदशक्तेस्सङ्कोचकाभावात् समानप्रकरणेन प्रकृतोपपादनस्य अन्यत्र दृष्टत्वाच्च न छान्दोग्यवाक्यमात्रविषयमिदं सूत्रमिति भावः ( जीवपरयोरिति ) उपास्योपासकयोरित्यर्थः । जीवपरयोरित्युक्तिः फलितार्थाभिप्रायेण, अतो नान्योन्याश्रयः, अत्र हिरण्मयशब्देन दिव्यविग्रहवत्त्वं च सिद्धम् उदाहृतवाक्ये शब्दविशेषं दर्शयति ( अत्रेति ) ( सप्तम्यन्तेनेति ) अन्तरात्मन्नित्यत्र नकारलोपाभावात् 'नञ्सम्बुध्यो'रिति नञ्सम्बुध्योरेव नकारलोपप्रतिषेधादिह सम्बुद्ध्यन्तत्वेऽनन्वयाच्च "आत्मन्पश्यन्सर्वभूतानि" इतिवत् लुप्तसप्तमीकोऽयं निर्देश इति भावः । एवं स्वप्रकरणे षष्ठीप्रथमात्मकः, समानप्रकरणे सप्तमीप्रथमात्मकश्च शब्दविशेषो विवक्षितः ॥ .... .... .... .... .... ....

卐 भावप्रकाशिका 卐

( नान्योन्याश्रय इति ) शब्दविशेषस्य जीवपरविषयत्वसिद्धौ जीवपरविषयकशब्दविशेषणोपास्योपासकभेदसिद्धिः, उपास्योपासकभेदासिद्धौ जीवपरविषयत्वसिद्धिरित्यन्योन्याश्रय इत्यर्थः ॥ .... .... ....

१ शतपथब्राह्मणे. १ ६-३ ॥

## स्मृतेश्च ॥ ६ ॥

[1]"सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" [2]'यो मामेवमसम्मूढो जानाति पुरुषोत्तमम्' [3]"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्

* श्रुतप्रकाशिका *

हृदयस्थस्य ईश्वरत्वमुपबृंहणेन विशदयितुमाह— ॥ स्मृतेश्च ॥ 'एष म आत्मान्तर्हृदये' इति हृदयशब्दप्रत्यभिज्ञापनार्थमाह (सर्वस्येति) उपास्यत्वज्ञापनार्थं तदनन्तरवाक्यमाह (यो मामिति) हृत्स्थस्य ईश्वरत्वे कण्ठोक्तिं दर्शयति। (ईश्वर इति) 'तमेव शरणं गच्छ' इत्युपादानं च हृदयस्थस्य भजनप्रदर्शनार्थम् । सर्वस्येति—सर्वशब्दो जीवविषयः, पराधीनस्मृत्याद्याश्रयभूतवस्तुविषयत्वात् । पुरुषोत्तमशब्दवाच्यस्य जीववैलक्षण्यं तत्रैवोक्तम् । सर्वभूतशब्दोऽपि जीवविषयः, भ्रान्त्याश्रयत्वाद्देहाख्ययन्त्रारूढत्वाच्च । अत्र चशब्दोऽवान्तरशङ्कापरिहारहेतुद्वयसमुच्चयार्थः, अन्वाचयो-

* भावप्रकाशिका *

( सर्वशब्दो जीवविषय इति) न देहादिसङ्घातविषयः, येनोपास्योपासकयोर्जीवपरयोर्भेदो न सिद्ध्येदितिभावः । ( भ्रान्त्याश्रयत्वादिति ) ' भ्रामयन् सर्वभूतानि' इतिप्रतिपाद्यभ्रान्त्याश्रयत्वादित्यर्थः । ( अवान्तरशङ्कापरिहारेति ) अवस्थाभेदेन प्राप्यत्वप्राप्तृत्वोपपत्तिरितिशङ्कानिराकरणार्थसूत्रद्वयोक्तहेतुसमुच्चयार्थ इत्यर्थः । श्रुतिस्मृत्योस्साम्यासम्भवादाह ( अन्वाचयो वेति ) अस्मिन् सूत्रे शाङ्करभाष्ये कः पुनरयं शारीरो नाम परमात्मनोऽन्यः यः प्रतिषिध्यते 'अनुपपत्तेस्तु न शारीरः' इत्यादिना । श्रुतिर्हि 'नान्यदतोऽस्ति द्रष्टा नान्यदतोस्ति श्रोता' इत्येवञ्जातीयकापरमात्मनोन्यमात्मानं वारयति । तथा स्मृतिरपि 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' इत्येवञ्जातीयकेति । अत्रोच्यते,—सत्यमेवमेतत्; पर एव त्वात्मा देहेन्द्रियमनोबुध्युपाधिभिः परिच्छिद्यमानो बालैश्शारीर इत्युपचर्यते, यथा घटकरकाद्युपाधिवशादपरिच्छिन्नमपि नभः परिच्छिन्नवदवभासते, तद्वत्तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते । प्राक् तत्त्वमसीत्युपदेशग्रहणाद्गृहीते त्वात्मैकत्वे बन्धमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यादित्युक्तम् , तदनूद्य

१ गीता १५-१५ ॥ २ गीता. १५-१९ ॥ ३ गीता. १८- ६१ ॥

**सर्वभूतानि यन्त्रारूढानि मायया। तमेव शरणं गच्छ" इति च शारीरकमुपासकं परमात्मानं चोपास्यं स्मृति-र्दर्शयति ॥ ६ ॥**

---

* श्रुतप्रकाशिका *

वा। अत्र केचित्,— कर्मकर्तृव्यपदेशादयो घटकरकादिकृतगगनभेदाश्रयेण बालिश-कृताल्पत्वमहत्त्वादिव्यवहारा इव काल्पनिकं भेदमाश्रित्य 'तत्त्वमसी'त्यात्मैकत्वोप-देशग्रहणात्प्राक् प्रवर्त्तन्ते, ऐक्योपदेशग्रहणानन्तरं सर्वव्यवहारपरिसमाप्तिरित्याहुः। अत्र ब्रूमः, यस्य भ्रमस्य एव भ्रान्तिसिद्धमर्थं व्यपदिशति, तस्यैव उपदेशग्रहणात्तन्नि-वृत्तिः, एवं सति जीवेश्वरभेदभ्रान्त्या तयोः कर्मकर्तृभावादिकं को व्यपदिशति। किं जीवः? उतेश्वरः? उत वेद एव?। तत्राश्रुतशास्त्रस्य जीवस्य देहातिरिक्तं जीवमप्यजा-नतः सत्यसङ्कल्पत्वादिलक्षणेश्वरप्रतीत्यसम्भवान्न तद्भ्रान्तिमूलत्वं कर्मकर्तृव्यपदेशस्य सम्भवति, नापि श्रुतशास्त्रस्य जीवस्य, तस्य जीवेश्वरभेदभ्रान्तौ श्रुतिरेव मूलमिति पर-मनिःश्रेयसार्थिभिर्वेदान्तानामनुपादेयत्वप्रसङ्गः, स्वनिमित्तामपि भ्रान्तिं श्रुतिः स्वयमे-वैक्योपदेशेन निवर्त्तयतीति चेत्, तथापि 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादनुपादेयत्वमेव स्यात्। कर्मकर्तृभावादिव्यपदेशस्य ईश्वरभ्रान्तिमूलत्वमपि घटते, व्यपदेशवैघट्यात्। तथा सति हि 'एतमितः प्रेत्याभिसम्भवितास्मि' इति व्यपदेशो न स्यात्, अपि तु इतः प्रेतैरभिसम्भाव्योऽहमित्येव स्यात्। किञ्च भ्रम-निवृत्त्यर्थम् ईश्वरं प्रत्युपदेष्टव्यम्, न ह्यन्यस्य भ्रमे सत्यन्यं प्रत्युपदेष्टव्यम्, तथा च तत्त्वमसीत्युपदेशो न घटते, किन्तु त्वं जीवोऽसीत्येवं वक्तव्यम्, अतः श्रुतिषु कर्मकर्तृव्यपदेशो नेश्वरभ्रममूलः, यदि वेद एव भ्रान्तो व्यपदिशति तर्हि वेदस्य तत्त्वोपदेष्टृत्वं न स्यात्, भ्रान्तत्वात्। पश्चात्प्रतिबुद्ध उपदिशतीति चेत्, तदयुक्तम्, स्वस्य भ्रमनिवृत्तेरन्येषां जीवेश्वरभ्रमाभावाच्चोपदेशवैयर्थ्यात्। अन्येषां जीवेश्वरभेद-भ्रान्त्यभावेऽपि जीवबहुत्वभ्रमनिवृत्त्यर्थमुपदेशः कार्य इति चेत्. न; उपदेशवैघट्या देव। न हि तदानीं तत्त्वमसीत्युपदेशो घटते, किन्तु सर्वे जीवास्त्वमित्युपदेष्टव्यम्।

* भावप्रकाशिका *

**दूषयति** ( अत्र केचिदिति ) ( अन्येषां जीवेश्वरभ्रमाभावाच्चेति ) वेद एवाभ्रान्तो **व्यपदिशतीति पक्ष** इति भावः। (अन्येषां जीवेश्वरभेदभ्रान्त्यभावेपीति ) ईश्वरस्य

* श्रुतप्रकाशिका *

न चैवमुपदेशो वेदान्तेषु क्वचिदपि दृश्यते । न च 'अहं मनुरभवं सूर्य्यश्चाहं कक्षीवान् ऋषिरस्मि विप्रः' इत्याद्यनुसन्धानदर्शनात् तन्मूलभूत उपदेशः सर्वजीवैकत्वविषयोऽस्तीत्यभ्युपगन्तव्यम् ,एकस्य जीवस्य 'सिंहेन भूत्वा बहवो मयात्ताः' 'व्याघ्रेण भूत्वा बहवो मयाऽत्ताः' इतिवत्कल्पभेदेनातीतस्वीयमनुसूर्य्यादिजन्मस्मरणपरत्वसम्भवात्तस्य वाक्यस्य । यतः शास्त्रेण विना शरीरिणां जीवेश्वरविभागप्रतीतिर्न सम्भवति, अत एव लोकसिद्धभेदो निषेधार्थं श्रुत्याऽनूद्यत इत्येतन्निरस्तम् । न चेश्वरस्यानुमेयत्वसम्भवात् जीवेश्वरभेदप्रत्ययस्य लोकसिद्धत्वसम्भव इति वाच्यम्, तर्कवश्यपुरुषानुमानस्य दूषितत्वात्, अनुमानसम्भवेऽपि भारूपत्वसत्यसङ्कल्पत्वमुक्तप्राप्यत्वादीनामनुमातुमशक्यत्वाच्च । कर्मकर्तृव्यपदेशोऽपि ह्युपास्यत्वादिनिबन्धनः । तत्तत्फलविशेषार्थिनां कर्मकर्तृसापेक्षोपासनसिध्यर्थं जीवेश्वरभेदं श्रुतिः कल्पयतीति चेत्, तथा सति तत्त्वनिरूपणदशायाम् "अत्ता चराचरग्रहणात्' 'अनुपपत्तेस्तु न शारीरः' इति जीवविलक्षणं वस्तु प्रतिज्ञाय कर्मकर्तृव्यपदेशस्य हेतुतयोपन्यासायोगात् । कथमुपासनार्थमपरमार्थभेदव्यपदेशं विजानन् सूत्रकारस्तत्त्वार्थहेतुनया तं ब्रूयात् ? न ह्यतात्त्विकभेदः प्रतिज्ञातः, ब्रह्मजिज्ञासेत्युपक्रमविरोधात्, "सम्पत्तेरिति जैमिनिः' 'प्रियशिरस्त्वाद्यप्राप्तिः' 'आध्यानाय प्रयोजनाभावात्"

७ भावप्रकाशिका ७

मानान्तरगोचरत्वेन तद्भेदभ्रमासम्भवेपीत्यर्थः । ( त्वमित्येवोपदेष्टव्यमिति ) श्वेतकेतुं प्रतीतिशेषः । ( मनुसूर्यादिजन्मस्मरणपरत्वसम्भवादिति ) अनद्यतनलङ्निर्देशस्वारस्यादिति भावः । ( मुक्तप्राप्यत्वादीनामनुमातुमशक्यत्वाच्चेति ) ततश्च श्रुत्येकसमधिगम्यानां तेषामनुवादो न सम्भवतीति भावः । ( उपास्यत्वादिनिबन्धन इति ) उपासनार्थ इत्यर्थः । तदेवोपपादयति ( तत्तत्फलविशेषार्थिनामिति ) ( श्रुतिः कल्पयतीति चेदिति ) ननु श्रुतिकल्पितकर्मकर्तृभेदो न भेदकार्यसाधक इति कथमियं शङ्केति चेन्, अत्यन्तागतिकस्यैतादृशशङ्कोपपत्तेः । किञ्च उपासने प्रवर्तमानस्योपास्योपासकभेदबुद्धेरेवापेक्षितत्वेन वास्तवभेदानपेक्षत्वेन शङ्कोपपत्तेरिति द्रष्टव्यम् । ( जीवविलक्षणं वस्त्विति ) जीवभेदं प्रतिज्ञायेत्यर्थः । न ह्यतात्त्विकभेदः प्रतिज्ञात इत्युत्तरग्रन्थानुसारात् । ( अपरमार्थभेदव्यपदेशं विजानन्निति ) कर्मकर्तृभावलक्षणं भेदमित्यर्थः । ( तत्त्वार्थहेतुतयेति ) जीवविलक्षणत्वरूपभेदहे-

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति-
चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७॥

अल्पायतनत्वमर्भकौकस्त्वम्; तद्व्यपदेशः—अल्पत्वव्यपदेशः। "एष म आत्माऽन्तर्हृदये' इत्यणीयसि हृदयायतने स्थितत्वात् 'अणीयान् व्रीहेर्वा यवाद्वा' इत्यादिनाऽणीयस्त्वस्य स्वरूपेण व्यपदेशाच्च नायं परमात्मा, अपि तु जीव एव; 'सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यादिभिः परमात्मनोऽपरिच्छिन्नत्वावगमात्, जीवस्य चाराग्रमात्रत्वव्यपदेशादिति चेत्। नैतदेवम्; परमात्मैव ह्यणीयानित्येवं निचाय्यत्वेन व्यपदिश्यते; एवं निचाय्यत्वेन- एवं द्रष्टव्यत्वेन, एवमुपास्यत्वेनेति यावत्। न पुनरणीय-

* श्रुतप्रकाशिका *

इतिवत् जीवेश्वरभेदापारमार्थ्यविषयप्रतिज्ञान्तराभावाच्च। गरुडनरेन्द्रयोरिव वस्तुतो भिन्नयोः परावरात्मनोरैक्योपदेशस्यैवोपासनार्थत्वाश्रयणौचित्याच्च गरुडनरेन्द्रयोरिव भेदस्य काल्पनिकत्वाश्रयणमयुक्तम्, अतः श्रुतिसूत्राणां काल्पनिकभेदविषयत्वमनुपपन्नम् ॥ .... .... .... .... .... ....

॥ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेवं व्योमवच्च ॥ (अल्पायतनत्वमित्यादि) अणीयस्त्वाक्षेपकार्थव्यपदेशात् साक्षादणीयस्त्वव्यपदेशाच्चेत्यर्थः। परमात्मनस्तु वैधर्म्यमाह (सर्वगतमिति) निचाय्यशब्दार्थमाह (द्रष्टव्यत्वेनेति) "चायृ दर्शने" इति हि धातुः। फलरूपदर्शनव्यावृत्त्यर्थमाह (उपास्यत्वेनेति) तद्व्यावर्त्यमाह (न पुनरिति) तदुपपादकं सूत्रखण्डं

ॐ भावप्रकाशिका ॐ

तुतयेत्यर्थः। (ब्रह्मजिज्ञासेत्युपक्रमविरोधादिति) इतरथा 'अथातोतात्त्विकभेदजिज्ञासा' इत्येव सूत्रयेदिति भावः ॥ .... .... .... ....

स्त्वमेवास्य स्वरूपमिति ; व्योमवच्चायं व्यपदिश्यते, स्वाभाविकं महत्त्वं चात्रैव व्यपदिश्यते "ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः" इति । अत उपासनार्थमेवाल्पत्व-

* श्रुतप्रकाशिका *

व्याचष्टे (व्योमवदिति) व्योमवद्द्रष्टव्यमित्युक्ते प्रतिज्ञामात्ररूपत्वात् प्रमाणाकाङ्क्षा भवति, व्यपदिश्यत इत्युक्ते प्रमाणमेव, दर्शितं भवति, अतोऽध्याहारस्य तुल्यत्वेऽपि निराकाङ्क्षयोजना वरमित्यभिप्रायेण व्यपदिश्यत इतिपदं पूरकतयाऽध्याहृत्यैं व्याख्यातम्। व्योमवच्छब्दफलितं स्वाभाविकमिति। (ज्यायानिति) वृद्धशब्दस्य ज्यादेशे ज्यायश्शब्दनिष्पत्तिः । "ज्यच वृद्धस्य च' इति हि सूत्रम् । नतु 'प्रशस्यस्य श्रः' इति तन्निष्पत्तिः। वृद्धिश्च परिमाणाधिक्यमिह विवक्षितम्, न तु कालाधिक्यम्, अत्राणीयस्त्वप्रतिसम्बन्ध्याकारपरत्वाज्ज्यायश्शब्दस्य । (अतः उपासनार्थमेवेति) अतः– पृथिव्यादिभ्योऽपि ज्यायस्त्वश्रवणादित्यर्थः। महत्त्वयाऽवगतस्य वस्तुन उपाध्युक्तिपूर्वकमुक्तं परिमाणमौपाधिकम्, असम्भावितोपाधिकं परिमाणं स्वाभाविकमितिन्याय इह शिक्षितो भवति । अत्र हि हृदय-

* भावप्रकाशिका *

परव्याख्यां दूषयति (व्योमवद्द्रष्टव्यमित्युक्त इति) (प्रमाणाकाङ्क्षा भवतीति) अर्भकौकस्त्वादिकं व्योमवदौपाधिकं द्रष्टव्यमित्युक्ते स्वाभाविकमेव किं न स्यात्? औपाधिकत्वे प्रमाणाभावादिति प्रमाणाकाङ्क्षा भवतीति भावः । प्रमाणमेव दर्शितं भवतीति श्रुत्या व्यपदिश्यत इति हि तस्यार्थः । अतः प्रमाणमेव दर्शितं भवतीति भावः। ननु 'प्रशस्यस्य श्रः' ज्यच' इति प्रशस्यशब्दस्य ज्यादेशविधानात् प्रशस्यशब्दादीयसुन्प्रत्यये ज्यायश्शब्दनिष्पत्तिः । न तु वृद्धशब्दादित्याशङ्क्याह (ज्य च वृद्धस्य चेति हि सूत्रमिति) ज्यच वृद्धस्य चेति हि सूत्रक्रम इत्यर्थः । अयं भावः, वृद्धस्य चेत्यत्र ज्यचेत्यनुवर्तते, वृद्धशब्दादीयसुन्प्रत्यये वृद्धस्य चेति वृद्धशब्दस्य ज्यादेशे ज्यादादीयस इतीयसुन्नीकारस्य आकारादेशे ज्यायश्शब्दनिष्पत्तिरिति । (नतु प्रशस्यस्य श्र इति तन्निष्पत्तिरिति) प्रशस्यस्य श्र इत्यधिकारे

व्यपदेशः। तथा हि "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति सर्वोत्पत्तिप्रलयकारणत्वेन सर्वस्यात्मतयाऽनुप्रवेशकृतजीवयितृत्वेन च सर्वात्मकं ब्रह्मोपासीतेत्युपासनं विधाय "अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति" इति यथोपासनं प्राप्यसिद्धिमभिधाय

* श्रुतप्रकाशिका *

मल्पत्वोपाधिभूतं श्रुतम्, न तु ज्यायस्त्वोपाधिः श्रुतः। पृथिव्यादयस्तदुपाधय इति नाशङ्कनीयम्, ततोऽपि ज्यायस्त्वश्रवणात्, न हि ततोऽधिकपरिमाणत्वं तदुपाधिकं भवितुमर्हति, अणीयस्त्वस्योपासनार्थत्वमुपासनप्रकरणाविच्छेदेन स्वाभाविकमहत्त्वप्रपञ्चनेनोपपादयति (तथा हीति) (सर्वात्मकं ब्रह्मोपासीतेति) सर्वात्मकत्वं नोपास्यगुणतयोक्तम्, तस्य वाक्यान्तरस्थत्वात्, अतो लक्षणतो धर्मिनिर्देशः। तत्प्रयोजनञ्च शान्तिरूपाधिकारिविशेषणसिद्धिः, भगवदात्मकत्वे हि शास्त्रतोऽवगते रागद्वेषाद्यभावरूपा शमादिनिष्पत्तिः स्यात्, यथोच्यते "सर्वभूतात्मके तात जगन्नाथे जगन्मये। परमात्मनि गोविन्दे मित्रामित्रकथा कुतः" इति।

* भावप्रकाशिका *

पठितेन ज्यचेतिसूत्रेण प्रकृतेन तन्निष्पत्तिरित्यर्थः। अत्रापि हेतुरणीयस्त्वप्रतिसम्बन्ध्याकारपरत्वाज्ज्यायश्शब्दस्येति वक्ष्यमाण एव द्रष्टव्यः। (ततोपि ज्यायस्त्वश्रवणादिति) ज्यायान् पृथिव्या इत्यादिना पृथिव्यादिभ्यो ज्यायस्त्व श्रवणादित्यर्थः। (तस्य वाक्यान्तरस्थत्वादिति) यद्यपि ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन्नित्यादिना एकवाक्यत्वमुत्तरत्र वक्ष्यते. तथापि ब्रह्मणस्सर्वात्मकत्वस्य शमशेषत्वादित्यत्र तात्पर्यम्। वस्तुतस्तु यथा शान्त्यर्थतयोपदिष्टस्यापि ब्रह्मणः 'मूलतश्शाखां परिवास्योपवेषं करोति' इत्यत्र शाखापरिवासने अपादानतया अन्वितस्यापि मूलत इत्यस्योपवेषं करोतीत्यनेनापि आकाङ्क्षावशेनान्वयवदन्वयोऽभ्युपेयते. तथा सर्वात्मकत्वस्यापि अन्यार्थनिर्दिष्टस्योपास्यत्वेन विरोध इति द्रष्टव्यम्। पूर्वमप्येतत्प्रतिपादितम्। (लक्षणतो धर्मिनिर्देश

"स क्रतुं कुर्वीत' इति गुणविधानार्थमुपासनमनूद्य "मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इति जगदैश्वर्यविशिष्टस्य स्वरूपगुणांश्चोपादेयान् प्रतिपाद्य "एष म आत्माऽन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" इत्युपासकस्य हृदयेऽणीयस्त्वेन तदात्मतयोपास्यस्य परमपुरुषस्योपासनार्थमवस्थानमुक्त्वा "एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्तोऽवाक्यनादरः" इत्यन्तर्हृदयेऽवस्थितस्योपास्यमानस्य प्राप्याकारं निर्दिश्य 'एष म आत्मान्तर्हृदय एतद्ब्रह्म' इत्येवम्भूतं परं ब्रह्म परमकारुण्येनास्मदुज्जिजीवयिषयाऽस्मद्धृदये सन्निहितमितीदमनुसन्धानं विधाय "एत-

* श्रुतप्रकाशिका *

शास्त्रजन्यज्ञानपूर्वकशमादिनिष्पाद्यमेवोपासनं श्रुतम्. 'तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुस्समाहितो भूत्वात्मन्येवात्मानं पश्येत्' इति । तस्मान्नोपासननिष्पाद्यः शमः, किन्तु शमनिष्पाद्यमुपासनम् । ब्रह्मात्मकत्वं सर्वस्य शास्त्रादवगम्य रागद्वेषादिरहितस्सन् वक्ष्यमाणगुणकं ब्रह्मोपासीतेत्यर्थः । सर्वात्मकं ब्रह्मेत्यनेन उपक्रमस्याणीयस्त्वविरोधित्वं दर्शितम् । प्रकरणाविच्छेदद्योतनाय अथ खल्वित्याद्युच्यते । (उपासनमनूद्येति) यथा 'अग्निहोत्रं जुहोति' इति विहितहोमः 'दध्ना जुहोति' इत्यत्र दध्नो होमसाधनत्वविधानार्थं जुहोतिपदेनानूद्यते तथेति भावः । जगदैश्वर्यविशिष्टस्येत्यनेन तज्जलानित्यस्यानुवादः । स्वरूपगुणान्—अद्वारकगुणान् । न हि ते प्रकृतिपुरुषद्वारकाः । निचाय्यत्वादित्यस्यार्थमाह (एवम्भूतमिति) सर्वकर्म-

मितः प्रेत्याभिसम्भविताऽस्मि" इति यथोपासनं प्राप्ति-निश्चयानुसन्धानं च विधाय [1]" इति यस्य स्यादद्धा न विचिकित्साऽस्ति" इत्येवंविधप्राप्यप्राप्तिनिश्चयोपेतस्योपासकस्य प्राप्तौ न संशयोऽस्तीत्युपसंहृतम् । अत उपासनार्थमर्भकौकस्त्वमणीयस्त्वञ्च ॥ ७ ॥

सम्भोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ ८ ॥

जीवस्येव परस्यापि ब्रह्मणः शरीरान्तर्वर्त्तित्वमभ्युपगतञ्चेत् तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्राप्तिरिति चेत्। तन्न; हेतुवैशेष्यात्। न हि शरीरान्तर्वर्त्तित्वमेव सुखदुःखोपभोगहेतुः, अपि तु पुण्यपापरूपकर्मपरवशत्वम्; तत्त्वपहतपाप्मनः परमात्मनो

* श्रुतप्रकाशिका *

त्वादिगुणानां द्विरुक्तिरुपास्यतया प्राप्यतया च, हृदि स्थितेर्द्विरुक्तिर्हृदयस्थितिज्ञापनार्थं सौलभ्यानुसन्धानार्थं चेत्यर्थः । एवमत्र पूर्वत्रोत्तरत्र च विभुत्वाभिधानादर्भकौकस्त्वस्वरूपोपाधिकथनाच्च मध्यगतमल्पत्वमौपाधिकमित्ययमर्थ उक्तो भवति ॥

॥ सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् ॥ शरीरान्तर्वर्तित्वम्— हृदयवर्त्तित्वम् । वैशेष्यम्— विशेषः । भोगप्रसञ्जने सुखग्रहणं सांसारिकसुखस्यादिमध्यावसानेषु

* भावप्रकाशिका *

इति ) कारणत्वरूपलक्षणोक्तिमुखेन ब्रह्मरूपधर्मिनिर्देश इत्यर्थः । भाष्ये— प्राप्तिमिश्चयानुसन्धानञ्च प्रतिविधायेति — प्राप्तिनिश्चयरूपानुसन्धानमित्यर्थः । प्राप्तिनिश्चयोपेतस्येत्युत्तरभाष्यानुगुण्याच्छ्रुत्यानुगुण्याच्चेति द्रष्टव्यम् । ( उपास्यतया प्राप्यतयेति ) यद्यप्युपास्यत्वे प्राप्यत्वं सिद्धम्, तथापि द्विःपाठस्तेन क्रमेणानुसन्धानार्थ इति द्रष्टव्यम् । ( हृदिस्थितेर्द्विरुक्तिरिति ) 'एष म आत्मान्तर्हृदये' इति द्विरुक्तिरित्यर्थः ॥ .... .... .... .... ....

( भोगप्रसञ्जने सुखग्रहणमिति ) अपुरुषार्थप्रसञ्जने इत्यर्थः । उक्तार्थे श्रुतेः

१ छां. ३-१४-४ ॥

**न सम्भवति । तथा च श्रुतिः "तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्न्यो अभिचाकशीति" इति ॥ ६ ॥**

॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥

* श्रुतप्रकाशिका *

दुःखमिश्रत्वेनापुरुषार्थपक्षनिक्षेपनिबन्धनम् । तथा च श्रुतिः— शरीरान्तर्वर्तित्वेऽपि फलसम्बन्धासम्बन्धावाहेत्यर्थः ।— अधिकरणार्थनिगमनमर्थसिद्धम्, अस्मिन् सूत्रे परस्मादन्यस्य जीवस्यानभ्युपगमे परस्य कर्मफलभोक्तृत्वप्रसङ्ग इति परिचोद्यपरिहर्तृत्वाभिमानेन कैश्चिदेवमुक्तम्; आत्मान्तराभावो यद्यनवगतः तदा तन्निबन्धनचोद्यानुदयः । अवगतत्वे किं शास्त्रादवगमः, उतास्मद्वाक्यात् ? । प्रथमे शास्त्रसिद्धात्मान्तराभाववत् परस्य भोक्तृत्वाभावोऽपि शास्त्रसिद्धतया स्वीकार्यः, न ह्यर्द्धजरतीयं न्याय्यम् । द्वितीये तु भ्रान्तिसिद्धगगनतलमलिनताविकल्पो गगनमिवापारमार्थिकभोक्तृत्वं परमार्थमद्वितीयं परमात्मानं न स्पृशतीति । तत्र प्रथमं शिरोऽनभ्युपगमनिरस्तम् । शास्त्रं जीवपरयोरनन्यत्वं प्रतिपादयतीति प्रतिवादिवाक्यादात्मान्तराभावमवगम्य तथा सति परस्य जीववद्भोक्तृत्वप्रसङ्गात् अयोग्यं जीवपरैक्यं शास्त्रं न प्रतिपादयितुं शक्नोतीति हि चोदयितुरभिप्रायः, अतो नार्द्धजरतीयम् । अपरमार्थत्वान्न स्पृशतीति वचनव्यक्तिर्दूषणस्य दुष्परिहरतामवगमयति, जीववदुपभोक्तृत्वं हि चोदयित्रा आपादितम् । जीवस्य च भोक्तृत्वं त्वन्मते मिथ्या, अतो गगने मालिन्यवत् परस्मिन् कल्पितं भोक्तृत्वं न तं स्पृशतीति वदता जीववत्

卐 भावप्रकाशिका 卐

सम्मुखतया प्रमाणत्वासम्भवात् । तथाच श्रुतिरित्येतद्व्याचष्टे ( तथाच श्रुतिरिति ) ( जीवस्यानभ्युपगम इति ) जीवस्यानभ्युपगमादित्यर्थः । ( अवगतत्व इति ) अवश्याभ्युपगन्तव्यत्वे सतीनिशेषः । आनन्दगिरीयविकल्पमुपन्यस्यति ( किं शास्त्रादवगमः, उतास्मद्वाक्यादिति ) ( परस्य भोक्तृत्वाभावोपीति ) परस्य जीवस्येत्यर्थः । शारीरस्यैव तावदुपभोक्तृत्वं वारयतीति शाङ्करभाष्यानुसारात् । भोक्तृजीवाभेदायत्तभोक्तृत्वप्रसक्तेः, तथैव परिहर्तव्यत्वाच्च । ( द्वितीये तु भ्रान्तिसिद्धेति ) अस्मदुक्त्या जीवब्रह्मैक्यमवगतं चेत् , तथा तत्पक्षदोषपरिहारप्रकारोपि मदुक्तेरेवावगन्तव्यः । तत्रापि किमर्धजरतीयन्यायेनेति भावः । ( अनभ्युपगमनिरस्तमिति ) द्वितीयपक्षस्य स्फुटत्वादिति भावः ॥ इति सर्वत्रप्रसिद्ध्यधिकरणम् ॥

यदि परमात्मा न भोक्ता, एवं तर्हि सर्वत्र भोक्तृतया प्रतीयमानो जीव एव स्यादित्याशङ्क्याह—

अत्ता चराचरग्रहणात् ॥ ९ ॥

२ अधिकरणम्

कठवल्लीष्वाम्नायते [1]"यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः" इति। अत्रौदनोपसेचनसूचितोऽत्ता

* श्रुतप्रकाशिका *

भोक्तृत्वमभ्युपगतं स्यात्, न चांशभेदेन भोगव्यवस्था, वस्तुनो निरंशत्वात् सांशत्वेऽप्युपाधीनाङ्क्लवरतया घटे चलति नभस्यल्पत्ववत्सर्वप्रदेशैरौपाधिकदोषान्वयप्रसङ्गात्, अतः परपक्षे भोक्तृत्वप्रसङ्गपरिहारोऽनुपपन्नः ॥ सर्वत्रेतिसूत्रं स्ववाक्यस्थहेतुपरम्। तदनन्तरवाक्यस्थहेतुपरं द्वितीयम्। तद्व्यतिरेकपरं तृतीयम्, उपसंहारस्थहेतुपरं चतुर्थम्। तत्र शङ्काविशेषपरिहारपरमनन्तरसूत्रद्वयम्। सूत्रद्वयोक्तहृदयावस्थानप्रयुक्तचोद्यपरिहारपरं तदनन्तरसूत्रद्वयमिति सूत्रसङ्गतिः ॥ ७ ॥

अथ उत्तराधिकरणसङ्गतिमाह (यदीति)—॥ अत्ता चराचरग्रहणात् ॥ (कठेत्यादि) यत्र स इति—यस्मिन् प्रकारे स्थितः, यत्प्रकारविशिष्टः तं प्रकारं को वेदेत्यर्थः। विषयवाक्ये अत्तेत्यश्रवणादस्याः श्रुतेरेतत्सूत्राविषयत्वशङ्कां परिहर्तुमाह (अत्रेति) यस्येति षष्ठीनिर्दिष्टस्सम्बन्धः ओदनोपसेचनसामर्थ्याददनीयात्तृभावलक्षणविशेषपर्यवसितः, तस्मादत्ता सूचित इत्यर्थः। "अग्निरन्नाद" इति श्रुतिप्रसिद्धिमस्यामुपनिषद्यग्नेः प्रस्तुतत्वं चावलम्ब्याग्निर्जीवः परमात्मेति शिरस्त्रयं कल्पितं परैः। चित्याग्नेः प्रस्तुतत्वेन साक्षादग्निप्रस्तावाभावात् अग्निप्रकरणस्य विच्छिन्नत्वादध्यात्मप्रकरणे विद्याङ्गकर्मोपयोगित्वमात्रं विनाऽग्निवैभवप्रतिपादनायोगाच्च तत्प-

७ भावप्रकाशिका ७

(साक्षादग्निप्रस्तावाभावादिति) साक्षादग्निर्मुख्याग्निः ज्वलनरूपाग्निः तदाधारतया अग्निशब्दः स्थण्डिलरूपाग्नावुपचर्यत इति भावः। ननु स्थण्डिलाग्निविषय एव संशयः। तस्यैवान्नादत्वप्रसिद्धिश्चास्तीत्यत्राह (अग्निप्रकरण-

1 कठ. १-२-२५

किं जीव एव, उत परमात्मा ? इति सन्दिह्यते । किं युक्तम् ? जीव इति । कुतः ? भोक्तृत्वस्य कर्मनिमित्तत्वात् जीवस्यैव तत्सम्भवात् ॥

* श्रुतप्रकाशिका *

त्वाशङ्काया मन्दोत्थानत्वमभिप्रयता भगवता भाष्यकारेण शिरोद्वयं विचारकोटौ निवेशितम् ॥ अत्ता जीवः, उत परमात्मा ? इति विचारः । तदर्थमिदमत्तृत्वं किं कर्मफलभोक्तृत्वरूपम्, उत जगदुपसंहर्तृत्वरूपम्, किमत्र पूर्वप्रस्तुतब्रह्मप्रकरणं विच्छिन्नम् ? नेति । 'ऋतं पिबन्ता'विति किं बुद्धिजीवौ निर्दिश्येते ? उत जीवपरौ ? पिबन्ताविति निर्देशः किं छत्रिवल्लक्षणया शब्दशक्त्या वा प्रयोज्यप्रयोजकविषयतया नेयः, उत न ? 'तं दुर्दर्शम्' 'या प्राणेन' इति परजीवयोर्दर्शनं किं लक्षणामापादयति ? उत न ? इति । उपक्रमे 'येयं प्रेते' इति प्रश्नः किं जीवविषयः ? उत परविषयः ? इति । यदा जीवविषयः तदानीमुपक्रमविरोधेन 'तं दुर्दर्श'मित्यादिना ऋतपान-निर्देशस्य प्रयोज्यप्रयोजकविषयतापादनायोगात् 'ऋतं पिबन्ता' विति वाक्यस्य बुद्धिजीवपरत्वेन ब्रह्मप्रकरणं विच्छिन्नमितीह प्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमिति अत्ता जीव इति फलितम् । यदा-'येय'मिति प्रश्नः परविषयः तदानीमुपक्रमानुगुण्येन 'तं दुर्दर्श'मित्यादिना ऋतपाननिर्देशस्य प्रयोज्यप्रयोजकविषयतापादनोपपत्तेः 'ऋतं पिबन्ता' विति वाक्यस्य जीवपरमात्मपरत्वेन ब्रह्मप्रकरणविच्छेदाभावादिह प्रतिपन्नमत्तृत्वं जगदुपसंहर्तृत्वरूपमेवेत्यत्ता परमात्मेति फलितम् । ( भोक्तृत्वस्येति ) ओदनोपसेचनसामर्थ्यावगतस्येति भावः । ततः किमित्यत्राह ( जीवस्यैवेति ) "सर्वभूतान्तरात्माऽपहतपाप्मा' 'न कर्मणा वर्धते नो कनीयान्' 'अनश्नन्नन्यः" इति परस्य भोक्तृत्वं निषिद्धमिति भावः । तत्सम्भवात्-कर्मफलभोक्तृत्वसम्भवात् । ब्रह्मक्षत्रशब्द-

❀ भावप्रकाशिका ❀

स्येति ) ( ओदनोपसेचनसामर्थ्यावगतस्येति ) ओदनादेर्भोग्यत्वेन लोकप्रसिद्धेर्भोक्तृत्वस्यैव प्रथमं बुद्धाववतारादिति भावः । ननु मन्त्रे मुख्य ओदनो न श्रुतः, येन तत्प्रतिसम्बन्धी अत्ता भोक्ता स्यात्, किन्तु ब्रह्मक्षत्रिययोरोदनरूपणमात्रं क्रियते, न ह्युपचरितौदनस्यापि तत्प्रतिसम्बन्धिना भोक्त्रा भवितव्यम्, न चास्य 'मृगयाविनोदिनोऽमृगाः परनृपतयः' इत्यत्रामृगेषु मृगत्वरूपेण वस्तुतो

* श्रुतप्रकाशिका *

वाच्यानां देहिनां स्त्रीपुंसात्मकत्वात्तद्रूपजीवानां परस्परभोक्तृभोग्यभावस्सम्भवति । जीवानां नित्यत्वादेव मृत्युवश्यत्वाभावान्मृत्युर्जीवस्य विधेय इत्यभिप्रायेण मृत्यूपसेचनवादोऽपि सम्भवतीति भावः ॥ .... .... .... ....

ॐ भावप्रकाशिका ॐ

मृगहन्ता क्षत्रिय एव तत्प्रतिसम्बन्धी प्रतीयते, न तु श्रोत्रियः कश्चिद्ब्राह्मण इति वाच्यम्; तथा नियमाभावात् । 'त्वत्कृपाणभुजङ्गस्य क्षीरं विद्विषतां यशः' इत्यत्रोपचरितक्षीरप्रतिसम्बन्धिनि कृपाणे पातृत्वस्याप्रतीतेः, सत्यामपि प्रतीतौ वास्तवपातृत्वादर्शनादिति चेत्. उच्यते, अवश्यं तावदिहानोदनविषयेण ओदनशब्देन वाच्यगतं कश्चिद्गुणमपेक्ष्य वर्तितव्यम् । तदिह भोग्यतया प्रसिद्धस्य वाच्यस्य गुणो भोग्यत्वरूपः पर्यवस्यतीति तत्प्रतिसम्बन्धिनो यस्येति पदोपात्तस्य भोक्तृत्वप्रतीतिरनिवार्या । कृपाणभुजङ्गस्येत्युदाहरणेपि कृपाणे समारोपिततत्पातृत्वप्रतीतिरस्त्येव, स च तत्र भुजङ्गत्वरूपणात् पातृत्वप्रतीतिः, न तु यशःक्षीरत्वरूपणमात्रात् । ततश्च ब्रह्मक्षत्रस्यौदनत्वरूपणमात्रेण कथं पातृत्वप्रतीतिरिति वाच्यम्; 'करवालस्य ते वीर क्षीरं विद्विषतां यशः' इत्यत्रादौ भुजङ्गत्वरूपणाभावेपि क्षीरत्वरूपणमात्रेण पातृत्वप्रतीतेः, नचैवं तद्वदेव भोक्तृत्वमप्यारोपितमस्तु, ततश्च वस्तुतः तत्सम्बन्धिन अभोक्तृत्वमेव पर्यवस्यतीति कथं भोक्तृत्वं जीवत्वसाधकं स्यादिति वाच्यम् ; असति बाधके भोक्तृत्वप्रतीतेः । प्रमात्वस्योचितत्वेन जीवत्वसाधनसम्भवादिति भावः । ( § स्त्रीपुंसात्मकत्वादिति ) स्त्रीणां भोग्यत्वं सिद्धमेव. पुंनपुंसकयोरपि भृत्यादिरूपेण भोग्यत्वमिति भावः । ( विधेय इत्यभिप्रायेणेति ) अबाधक इत्यभिप्रायेणेत्यर्थः । ननूपसेचनशब्देन साधारणमबाधकत्वमात्रं न लक्षयितुमुचितम् , अपितु स्वयमद्यमानत्वे सति अन्यादनहेतुत्वम् . तादृशश्चादनं संहारयितृपरब्रह्मपक्ष एव घटते, नान्यत्रेति चेत् . नैष दोषः, प्रथमश्रुतौदनशब्देन भोग्यत्वस्य प्रतीतत्वात् । तदनुरोधेनैव चरमश्रुतोपसेचनशब्दस्यापि अबाधकत्वार्थकत्वस्यैव युक्तत्वात् । न चोपसेचनपदानुसारेणौदनपदस्य विनाश्यत्वपरत्वमस्त्विति वाच्यम्; चरमश्रुतस्वारस्यानुरोधेन प्रक्रमश्रुतस्वारस्यान्यथानयनायोगात् ॥ .... .... .... ....

§ स्त्रीपुंनपुंसकत्वादिति पाठः ॥

अत्रोच्यते- अत्ता चराचरग्रहणात्। अत्ता परमात्मैव। कुतः? चराचरग्रहणात्- चराचरस्य कृत्स्नस्य अत्तृत्वं हि तस्यैव सम्भवति। न चेदं कर्मनिमित्तं भोक्तृत्वम्, अपि तु जगज्जन्मस्थितिलयहेतुभूतस्य परस्य ब्रह्मणो विष्णोस्संहर्तृत्वम् "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यत्रैव दर्शनात्, तथा च "मृत्युर्यस्योपसेचनम्" इति वचनात 'ब्रह्म च क्षत्रञ्च' इति कृत्स्नं चराचरं जगदिहादनीयौदनत्वेन गृह्यते। उपसेचनं हि नाम स्वयमद्यमानं सदन्यस्यादनहेतुः,

* श्रुतप्रकाशिका *

राद्धान्तमारभते (अत्रेति) चराचरग्रहणादित्येतद्व्याचष्टे (चराचरस्येति) कृत्स्नचराचरविषयं वा कतिपयविषयं वाऽस्तु, ततः किं जीववैलक्षण्यस्य? उक्तं हि कर्मफलभोक्तृत्वरूपमिदमत्तृत्वमित्यत्राह (न चेदमिति) कृत्स्नचराचरविषयमत्तृत्वं जीवस्यानुपपन्नमिति भावः। अत्तृत्वं विष्णुकर्तृकं चराचरसंहर्तृत्वमिति कथमवगतमित्यत्र हेतुद्वयमाह (सोऽध्वन इति) प्रकरणे परमात्मवाचिपदश्रवणं प्रथमो हेतुः। द्वितीयं हेतुमाह (तथा च मृत्युरिति) कथं चराचरस्यादनीयत्वसिद्धिः? मृत्यूपसेचननिर्देशो हि मृत्युवश्यत्वाभावाभिप्रायस्सम्भवतीत्यत्राह (उपसेचनं हीति) यद्यप्युपसेचनशब्दो गौण एव निर्वाह्यः, तथापि साधारणाकारेणोपचारो न घटते, विशेषाकारसम्भवात्; न ह्यग्निर्माणवक इत्युक्तेऽग्निशब्दो द्रव्यत्वाभिप्रायेण वर्णनीयः। मृत्युरुपसेचनम्, अबाधक इत्युक्ते विशेषाकारोपस्थापनं न स्यात्, अबाधकत्वस्य लोष्टतृणादिसाधारणत्वात्, स्वयमद्यमानत्वे सत्यन्यस्यादनहेतुत्वन्तु विशेषाकार इति तेनैवौपचारिकप्रयोगो युक्त इति भावः। साधारणाकारं

* भावप्रकाशिका *

(साधारणाकारं विहायेति) अत एव प्रैतुहोतुश्चमसः प्रब्रह्मणः प्रोद्गातृणां प्रयजमानस्येति। अध्वर्युप्रैष उद्गातृशब्दस्य बहुवचनानुसारेण रूढिपूर्वक-

अत उपसेचनत्वेन मृत्योरप्यद्यमानत्वात्तदुपसिच्यमानस्य कृत्स्नस्य ब्रह्मक्षत्रपूर्वकस्य जगतश्चराचरस्यादनमत्र विवक्षितमिति गम्यते । ईदृशं चादनमुपसंहार एव ; तस्मादीदृशं जगदुपसंहारित्वरूपं भोक्तृत्वं परमात्मन एव ॥ ६ ॥ .... .... ....

* श्रुतप्रकाशिका *

विहायावान्तराकारेण गौणार्थो वर्णनीय इति न्यायोऽत्र व्युत्पादितः । परस्य जगत्संहारे मृत्व्यपेक्षापि नास्तीत्यस्मदुक्त एवार्थ इति शङ्कां परिहरन् फलितमाह ( अत इति ) कृत्स्नजगत्संहारे मृत्व्यपेक्षाभावेप्यत्र मृत्योरद्यमानत्वं व्यष्टिसंहारस्य तद्द्वारकत्वञ्चाभिप्रेतम् । एवं मृत्यूपसेचनत्वसामर्थ्यात् ब्रह्मक्षत्रशब्दौ कृत्स्नचराचरप्रदर्शनार्थाविति भावः । ततोऽपि किमित्यत्राह ( ईदृशमिति ) सूत्रार्थमुपसंहरति ( तस्मादिति ) सोऽध्वन इत्यादिवाक्ये विष्णोः श्रूयमाणत्वान्मृत्यूपसेचनत्वसामर्थ्यसिद्धचराचरादनीयत्वाच्च कृत्स्नजगदुपसंहर्तृत्वरूपमेवेदं भोक्तृत्वमिति नेदं कर्मनिमित्तम्, अतः परमात्मैवात्तेत्यर्थः ॥ .... .... ....

ᛃ भावप्रकाशिका ᛃ

लक्षणया बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय विशेषाकारेणोद्गातृगणमात्रलक्षणा पूर्वतन्त्रे निर्णीता । भाष्ये—तदुपसिच्यमानस्येति । तन्मिश्रितस्येत्यर्थः । ( विष्णोः श्रूयमाणत्वादिति ) यद्यपि 'सोऽध्वनः' इत्यादिवाक्यं 'प्रकरणाच्च' इत्युत्तरसूत्रस्य विषयः, न त्वस्य सूत्रस्य ; अत्र निखिलचराचरसंहर्तृत्वस्यैव हेतुकरणात्. तस्य च मृत्यूपसेचनसमभिव्याहारलभ्यत्वान्नान्यापेक्षा, अथापि मृत्यूपसेचनसमभिव्याहारस्य प्रकरणमप्युत्तम्भकमिति सूचनार्थं तथोक्तमिति द्रष्टव्यम् । ( मृत्यूपसेचनसामर्थ्येति ) ननु प्रक्रमश्रुतौदनपदस्वारस्यप्रतिपन्नभोग्यत्वानुसारेण चरमश्रुतं मृत्यूपसेचनत्वमबाधकत्वाभिप्रायेण नेयमित्युक्तमिति चेत्. उच्यते; इह ब्रह्मक्षत्रयोर्मृत्योश्च तावदोदनोपसेचनभावरूपणात् दध्यन्नरीत्या सम्बन्धः प्रतीयते, तथाच मृत्युमिश्रणप्रतीत्यनुसारेण ब्रह्मक्षत्रशब्दाभ्यां चराचरात्मकं विनाशिवस्तुमात्रं लक्षणीयम् । मृत्यूपसेचनत्वरूपण-

॥ भावप्रकाशिका ॥

सन्निधानादेव ओदनशब्देनापि विनाश्यत्वं लक्षणीयम् । स्वबुद्ध्युपस्थानीयविशेषाकाररूपगुणग्रहणादपि एकवाक्यतापन्नपदान्तरोपस्थापितगुणग्रहणस्य बुद्धिलाघवेन एकवाक्यतासामर्थ्येन च न्याय्यत्वात् । 'अत एवाक्ताश्शर्करा उपदधाति' इत्यत्र विधेयाञ्जनस्य साधनापेक्षायां 'तेजो वै घृत'मिति वाक्यशेषे श्रुतं घृतमेव ग्राह्यम् , नतु पुरुषबुद्धिकल्पनीयमद्रवद्रव्यमात्रमिति पूर्वतन्त्रे निर्णीतम् । ननु तथापि कथं ब्रह्मक्षत्रशब्देन चराचरग्रहणसिद्धिः ? ओदनशब्दस्य गौणत्वावश्यम्भावेन तस्य समभिव्याहृतपदार्थान्तरोपस्थापितगुणलक्षकत्वेपि ब्रह्म च क्षत्रं चेत्यस्य मुख्यार्थवृत्तिसम्भवात् , न च मृत्यूपसेचनकीर्तनात् तदुपसिच्यमानं सर्वं तेन ग्राह्यमित्युक्तं युक्तम् । 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र शूर्पशब्दस्य वाक्यशेषे अन्नकरणत्वकीर्तनेपि यद्यदन्नकरणं तत्र सर्वत्र लक्षणानुगमात् । ननु शूर्पमात्रस्याप्यन्नकरणत्वेन स्तुतिस्सम्भवति, अन्नकरणत्वस्य शूर्पे दर्वीपिठरादौ च व्यासज्यवृत्त्यभावात् इति चेदिहापि ब्रह्मक्षत्रमात्रस्यापि मृत्युमिश्रणप्रतिपादनं सम्भवतीति तुल्यम् । किञ्च व्यर्थं ब्रह्मक्षत्रशब्दयोः कृत्स्नचराचरलक्षकत्वोपपादनम् . ओदनशब्दस्य संहार्यत्वलक्षकत्वोपपादनमात्रेणापि तत्प्रतिसम्बन्धयत्ता संहर्तेति सिद्धौ शब्दवृत्त्यसङ्कोचप्राप्तसर्वकल्पानुयायिसकलब्रह्मक्षत्रजात्यालिङ्गितव्यक्तिसंहर्तृत्वलिङ्गेनैवात्तुः परमात्मत्वसिद्धेरिति चेत् . उच्यते; कर्तृत्वं भोक्तृत्वमुपसंहर्तृत्वमिति पक्षद्वयेपि ओदनपदवत् ब्रह्मक्षत्रपदयोरपि लक्षकत्वमवश्यम्भावि । नहि भृत्यादिरूपभोग्यतया वा भक्ष्यतया वा ब्रह्मक्षत्रयोरेव भोक्ता कश्चिज्जीवोऽस्ति, न वा परमात्मा तदुभयमात्रसंहर्ता, न चाधिकभोक्तृत्वेपि विशिष्य तदुभयमात्रग्रहणे प्रयोजनमस्ति, न चान्तरादित्यविद्यायाम् 'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' इति सर्वलोककामेशितरि परमात्मनि लोकविशेषकामविशेषेशितृत्ववत् सर्वसंहन्तर्यपि परमात्मनि ब्रह्मक्षत्रसंहर्तृत्वोपपत्तिरिति चेन्न; तत्राक्ष्यादित्यस्थानभेदेन 'स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' इति निर्देशभेददर्शनात् तत्र व्यवस्थासिद्धावपि इह तन्मात्रग्रहणे नियामकाभावात् ब्रह्मक्षत्रग्रहणमुपलक्षणं न स्वार्थमात्रनिष्ठमिति उपलक्षणीयाकाङ्क्षायां पश्चात्तनमृत्यूपसेचनकीर्तनात् तदुपसिच्यमानं सर्वमुपलक्षणीयमिति निश्चीयते । किञ्च ओदनशब्दस्योक्तयुक्त्या संहार्यत्वलक्षणास्थितौ

## प्रकरणाच्च ॥ १० ॥

प्रकरणश्चेदं परस्यैव ब्रह्मणः [1]"महान्तं विभुमात्मानं मत्वा धीरो न शोचति" [2]"नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति हि प्रकृतम् । 'क इत्था वेद यत्र सः' इत्यपि हि तत्प्रसादादृते तस्य दुरवबोधत्वमेव पूर्वप्रस्तुतं प्रत्यभिज्ञायते ॥ १० ॥

* श्रुतप्रकाशिका *

॥ प्रकरणाच्च ॥ स्ववाक्यस्थहेतुः पूर्वमुक्तः, प्राकरणिकहेतुरत्रोच्यते; अस्य सूत्रस्य "न जायते म्रियते" इत्यादिवाक्यं विषयतया परैरुपात्तम् । तदयुक्तम्, पित्रादिमरणस्येव परमात्मनो हन्यमानत्वस्य लोकप्रसिध्यभावेन तन्निषेधायोगात् एतत्स्वरूपेण "न जायते म्रियते वा कदाचित्" इति भगवद्गीतावचनेनास्य वाक्यस्य जीवपरत्वावगमात् । "उभौ तौ न विजानीतो नायं हन्ति न हन्यते" इत्यनन्तरमन्त्रोक्तहन्तृहन्तव्यताभ्रान्तेः परमात्माश्रयत्वायोगेन जीवपरत्वोपपत्तेश्च, अतो "नायमात्मा" "महान्तं विभुम्" इत्यादिरेव विषयः । एकप्रकरणत्वं कथमित्यत्राह ( क इत्थेति ) तत्प्रसादादृते तस्य दुरवबोधत्वस्य पूर्वोक्तस्य प्रत्यभि-

* भावप्रकाशिका *

यच्छब्दयोगेनाऽनुवादकेऽस्मिन्मन्त्रे संहार्यसमर्पकस्य ब्रह्म क्षत्रं चेत्यस्य 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' इत्यादि पुरोवादानुसारेण चराचरात्मकविनाशिमात्रोपलक्षकत्वमावश्यकमित्यास्तां तावत् ॥

( प्राकरणिकहेतुरत्रोच्यत इति ) प्राकरणिकः प्रकरणसहित इत्यर्थः । प्रकरणाच्चेति सूत्रे चशब्देन लिङ्गं समुच्चीयते, एवञ्च परमात्मप्रकरणात् क इत्था वेदेति दुर्विज्ञानत्वरूपलिङ्गप्रत्यभिज्ञानाच्चेत्यर्थः । ननु विषयवाक्यात् पूर्ववाक्यस्थमहत्त्वविभुत्वादिहेतुरित्यर्थः । ब्रह्मणः प्रकृतत्वे विवादाभावेन लिङ्गेन तस्यासमर्थनीयत्वात् सूत्रभाष्यगतप्रकरणशब्दस्वारस्याच्च । ( एकप्रकरणत्वं

१-२ कठ. १-२-२२-२३ ॥

अथ स्यात्- नायं ब्रह्मक्षत्रौदनसूचितः पुरुषोऽपहतपाप्मा परमात्मा; अनन्तरम् "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" इति कर्मफलभोक्तुरेव सद्वितीयस्याभिधानात्। द्वितीयश्च

* श्रुतप्रकाशिका *

ज्ञानादित्यर्थः ॥ कैश्चिदेवमुक्तम्,- "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" इति परमात्मनः शरीरेऽवस्थितिश्रवणात् 'यस्य ब्रह्म च क्षत्रं च'इत्यनेन श्लोकेन शरीरे हृदयप्रदेशे वा परस्य स्थितिरिति जिज्ञास्यते, अत एव हि 'क इत्था वेद यत्र सः' इति वचनम्, न पुनः कस्तं वेदेति; तदनेन निरस्तं वेदितव्यम्, प्रश्नानुगुणप्रतिवचनादर्शनात् । ननु अनन्तरमेव दृश्यते " ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ" इतीति चेत्. सत्यं श्रूयते; तत्र स्थानत्वेन किमुक्तम्?। किं सुकृतस्य लोकः? उत गुहा?। तत्र सुकृतस्य लोक इति शरीरं वा, अन्यद्वा? उभयमपि शरीरसम्बन्धिदेशविशेषो न भवतीति तन्नोत्तरं भवितुमर्हति, न च स्थानमात्रमेव पृष्टम् 'अशरीरं शरीरेषु' इत्यनेनैव तत्सिद्धेः। अथ गुहा स्थानत्वेन निर्दिष्टा, साऽपि पूर्वमेव ज्ञातेति न प्रश्नसम्भवः, 'गुहाहितं गह्वरेष्ठं पुराणम्'इति हि श्रुतम्। 'यत्र सः' इत्येकवचनेन पृष्टे 'पिबन्तौ' इति द्विवचनोत्तरं चानुचितम् । अतः 'क इत्था वेद' इति वाक्यस्य यथोक्त एवार्थः ॥ .... .... .... ....

उत्तरसूत्रस्य शङ्कामाह ( अथ स्यादिति ) प्रकरणविच्छेदं दर्शयति ( ऋतं पिबन्ताविति ) लिङ्गाद्धि प्रकरणं दुर्बलम्, ऋतपानलिङ्गबलात् प्रकरण-

* भावप्रकाशिका *

कथमिनीति ) यद्यपि 'महान्तं विभुम्' इत्यादौ ब्रह्म प्रकृतम्, न प्रकृतं च हातुं योग्यम्। अथापि 'न जायते म्रियते' इत्यादौ जीवस्यापि प्रकृतत्वात् ब्रह्मण एव ग्रहणेन प्रमाणं पश्याम इति भावः। (परस्य स्थितिरिति जिज्ञास्यत इति ) सामान्यतश्शरीराधारत्वं जानता शिष्येण शरीरे प्रदेशविशेषः पृच्छ्यत इत्यर्थः ॥

( प्रकरणविच्छेदं दर्शयतीति ) 'ऋतं पिबन्तौ' इति वाक्यस्य परमात्म-

* श्रुतप्रकाशिका *

विच्छेदोऽत्र प्रतिपाद्यते 'यस्य ब्रह्म च' इति वाक्यापेक्षया 'महान्तं विभु'मित्यादि परमात्मप्रकरणविच्छेदो माभूत्, ऋतपानान्वयवाक्यन्तु विच्छिन्नं स्यादिति शङ्कापरिहारार्थमनन्तरमित्युक्तम्, महान्तमित्यादिवाक्यानां व्यवहितत्वाद्विच्छेदो युक्तः, न तु यस्य ब्रह्म चेत्यादिवाक्येनाव्यवहितस्य ऋतं पिबन्ताविति वाक्यस्येति भावः । द्वयोस्समप्राधान्यशङ्कापरिहारार्थं सद्वितीयस्येत्युक्तम् । अत्र भोक्तुर्जीवत्वं कथम्? द्वितीयस्य च बुद्धिप्राणयोरन्यतरत्वं कथम्? कथं न परमात्मत्वमित्य-

ॐ भावप्रकाशिका ॐ

**प्रकरणविच्छेदं** दर्शयतीत्यर्थः । ( **यस्य ब्रह्म** चेत्यादिवाक्यापेक्षयेति ) ऋतपानलिङ्गबलात् ऋतं पिबन्ताविति वाक्ये यस्य ब्रह्म चेत्यस्य पश्चात्पठिते परमात्मप्रकरणविच्छेदेपि नातुः परमात्मत्वहानिः । यस्य ब्रह्मचेत्यादिवाक्यस्य महान्तं विभुमित्यादिना एकप्रकरणतया ऋतं पिबन्तावित्यनेन एकप्रकरणत्वाभावादिति शङ्काभिप्रायः । ( व्यवहितत्वाद्विच्छेदो युक्त इति ) ननु 'महान्तं विभु'मित्यत्रापि अव्यवधानमस्ति । एवं हि पाठक्रमः,—"महान्तं विभुमात्मानं मत्वा धीरो न शोचति । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् । नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात् । यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः । ऋतं पिबन्तौ सुकृतस्य लोके" इति । ततश्चाव्यवधानं द्वयोरप्यविशिष्टम् । तत्र च प्रकरिष्यमाणपरामर्शलोभेन प्रकृतहानमयुक्तम् । प्रकृतप्रत्यभिज्ञापकं दुरधिगमत्वलिङ्गं च वर्तते । अतः कथमृतं पिबन्ताविति खण्डान्तरस्थोत्तरवाक्यैकप्रकरणत्वलोभेन प्रकृतैकवाक्यत्वपरित्याग इतिशङ्केति चेत्, उच्यते; प्रकरणाच्चेतिसूत्रे प्रकरणशब्देन परमात्मप्रतिपादकवाक्यसन्दर्भमध्यगतत्वं विवक्षितम् । तदिह गुहां प्रविष्टाविति सूत्रे आक्षिप्य समाधीयत इत्यनवद्यम् । यद्यपीमौ शङ्कापरिहारौ तदेकप्रकरणत्वात्पूर्वप्रस्तुतोक्तावपि स एव भवितुमर्हतीति भाष्याभिप्रेतौ तत्रैव वक्तव्यौ च । तथाप्यनन्तरमितिपदस्यैकप्रकरणत्वोपपादकत्वादिहोक्ताविति द्रष्टव्यम् । (समप्राधान्यशङ्कापरिहारार्थमिति) तथा हि सति परमात्मनः प्रतिपाद्यत्वशङ्कापि स्यादिति भावः । (बुद्धिप्राणयोरन्यतरत्वमिति) बुद्धिशब्देनान्तःकरण-

प्राणो बुद्धिर्वा स्यात् । ऋतपानं हि कर्मफलभोग एव; स च परमात्मनो न सम्भवति; बुद्धिप्राणयोस्तु भोक्तुर्जीवस्योपकरणभूतयोर्यथाकथञ्चित्पानेऽन्वयस्सम्भवतीति तयोरन्यतरेण सद्वितीयो जीव एव प्रतिपाद्यते ।

* श्रुतप्रकाशिका *

त्राह ( ऋतपानं हीति ) ( कर्मफलभोग एवेति ) न हि सर्वसंहर्तृत्वमुच्यत इतिवत् ऋतपानस्य निर्वाहान्तरं सुवचमिति भावः । ततः किमित्यत्राह ( स चेति) भवदभिमतस्य कथं तत्सम्भव इत्यत्राह ( बुद्धीति ) यथाकथञ्चित्– उपकरणत्वेनान्वय इत्यर्थः । करणे कर्तृत्वोपचारात् पिबन्तावित्युक्तमिति भावः । ( तयोरन्यतरेण सद्वितीयो जीव एवेति ) अयमभिप्रायः,– यद्यपि प्रयोजककर्त्तरि परमात्मनि उपकरणभूतबुद्धिप्राणयोरन्यतरस्मिन्वा पिबन्ताविति निर्देशस्य क्लिष्टत्वं समानम् , तथापि बुद्धिप्राणयोरन्यतरपरिग्रहो न्याय्यः, प्रथममेव पिबन्ताविति निर्देशेन भोक्ता जीवः प्रतिपन्न इत्यविगीतम्, द्वितीयविशेषे हि विप्रतिपत्तिः । तत्र गुहावच्छिन्नत्वं सुकृतसाध्यलोकवर्त्तित्वञ्च सर्वगतस्य परस्य स्वरसतो न सम्भवति । अप्रकाशप्रकाशरूपार्थपरच्छायातपशब्दाभ्यामचिदन्तःकरणचेतनोपस्थापनं युक्तम् तत्र प्रथमत एवानेकैः पदैः स्वरसतः प्रतिपन्नस्य भोक्तुः प्राधान्येन प्रतिपाद्यत्वं यथा न विरुध्यते तथा द्वितीयो वक्तव्यः, द्वितीयस्य

ॐ भावप्रकाशिका ॐ

मुच्यते । ( नहि संहर्तृत्वमुच्यत इतिवदिति ) यस्य ब्रह्म चेति वाक्य इति शेषः । यथाकथञ्चिदिति व्याख्येयं पदम् । युक्त्यन्तरमाह ( तत्र प्रथमत इति ) ( अनेकैरिति ) समभिव्याहृतैरिति भावः । ( यथा न विरुध्यत इति ) ननु द्वयोरप्यजहत्स्वार्थलक्षणाप्रतिपाद्यत्वाविशेषात् कथं कस्यचित्प्राधान्यं कस्यचिदप्राधान्यम्? नहि 'काकेभ्यो दधि रक्ष्यता'मित्यादौ काकानां प्राधान्यम्. नवा 'सृष्टीरुपदधाति प्राणभृत उपदधाति पृष्ठैस्तुवत' इत्यादौ शब्यार्थस्य प्राधान्यमन्यस्याप्राधान्यमुपलभ्यत इति चेदुच्यते; लोके श्रेष्ठवाची शब्द एव हि अश्रेष्ठे उपचरितो दृश्यते। अत एव हि महाभाष्ये 'कारकान्तरे कर्तृवाचीशब्द उपचर्यते न कर्तरि कारकान्तरशब्दः' इत्युक्तम् । ततश्च यद्वाचिशब्दो यत्रोपचारेण

तदेकप्रकरणत्वात्पूर्वप्रस्तुतोऽत्तापि स एव भवितुमर्हतीति । तत्रोच्यते—

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥

न प्राणजीवौ बुद्धिजीवौ वा गुहां प्रविष्टौ ऋतं पिबन्तावित्युच्येते, अपि तु जीवपरमात्मानौ हि

* श्रुतप्रकाशिका *

परमात्मत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वं विरुध्यते, उपकरणभूतान्तःकरणस्य द्वितीयत्वे भोक्तुः प्राधान्येन प्रतिपाद्यत्वं न विरुध्यत इति । ततः किमत्तुर्जीवभावस्येत्यत्राह ( तदेकेति ) ॥ .... .... .... ....

॥ गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ऋतं पिबन्ताविति निर्देष्टव्येऽपि गुहां प्रविष्टाविति सूत्रयतोऽयम्भावः, द्वितीयस्य पानं पक्षद्वयेऽपि क्लिष्टम्, बुद्धिप्राणयोरन्यतरपक्ष एव छायातपनिर्देशो लोकशब्दनिर्देशश्च घटताम्, गुहाप्रवेशस्तु न कथञ्चिदपि घटते "आत्मा गुहायां निहितः' 'यो वेद निहितं गुहायाम्' 'गुहाहितं गह्वरेष्ठम्' 'विधूय कविरेतदनुतिष्ठेत् गुहाशयम्' 'पूः प्राणिनः सर्व एव गुहाशयस्य"इति परमात्मनो गुहाप्रवेशव्यपदेशप्रसिद्धिप्राचुर्यात् बुद्धिप्राणयोरन्यतरस्य तादृशप्रसिद्ध्यभावाच्चेति । एतमेवाभिप्रायं हृदि निधाय सूत्रे प्रतिज्ञाखण्डं व्याचष्टे ( न प्राणजीवाविति ) ( जीवपरमात्मानौ हीति ) सूत्रे हिशब्दः सौत्रार्थस्य परमसाध्योपपादकत्वसूचक इति भावः । सूत्रे प्रतिज्ञोपपादकं

❁ भावप्रकाशिका ❁

प्रयुज्यते स तदपेक्षया श्रेयानिति उत्सर्गसिद्धमेतत् । ततश्च तेन न्यायेन मुख्यार्थस्यौपचारिकार्थापेक्षया प्राधान्यं सिद्धमिति भावः । ( उपकरणभूतान्तःकरणस्य द्वितीयत्व इति ) एतेन 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इति सूत्रोक्तरीत्योपायोपेयोपेतॄणामेवोपन्यसनीयतया बुद्धिप्राणयोश्च त्रिष्वनन्तर्भावेन तत्परपूर्वपक्षस्य कथमुत्थितिरिति शङ्का परास्ता । बुद्धिप्राणयोरप्युपासननिर्वृत्त्युपकरणतयोपायकोटावेवान्तर्भावसम्भवेन पूर्वपक्षोदयसम्भवादिति ध्येयम् ॥

( परमसाध्योपपादकत्वसूचक इति ) अत्तुः परमात्मत्वोपपादकतां सूत्रार्थस्य

तथा व्यपदिश्येते । कुतः ? तद्दर्शनात् । अस्मिन् प्रकरणे जीवपरयोरेव गुहाप्रवेशव्यपदेशो दृश्यते । परमात्मनस्तावत् "तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इति । जीवस्यापि "या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत" इति । कर्मफलान्यत्तीत्य-दितिर्जीव उच्यते । प्राणेन सम्भवति– प्राणेन सह वर्त्तते । देवतामयी– इन्द्रियाधीनभोगा । गुहां प्रविश्य तिष्ठन्ती– हृदयपुण्डरीकोदरवर्त्तिनी । भूतेभिर्व्यजायत– पृथिव्यादिभिर्भूतैस्सहिता देवादिरूपेण विविधा

* श्रुतप्रकाशिका *

हेतुखण्डं व्याचष्टे (अस्मिन्निति) (परमात्मनस्तावदिति) गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः । (तं दुर्दर्शमिति) दुर्दर्शम्– द्रष्टुमशक्यम् । कुतः ? गूढम्– तिरोधायकमेकरूपाविद्यादिना तिरोहितत्वादित्यर्थः । गुहाहितम्– हृदयवर्त्तिनम् । गह्वरेष्ठम्– आत्मान्तर्यामिणम्, परमव्योमनिलयम् वा । अध्यात्मयोगाधिगमेनेति परोपासनस्य जीवोपासनमङ्गत्वेन विधीयते, जीवपरयोरुभयोरपि प्रकरणप्रतिपाद्यमानत्वात् । (जीवस्यापीति) गुहाप्रवेशव्यपदेशो दृश्यत इत्यन्वयः । अदितिशब्दस्य देवमातरि भूमौ च वेदप्रसिद्धेस्तद्व्यावृत्त्यर्थमवयवशक्त्या जीववाचित्वं दर्शयति (कर्मफलानीति) रूढार्थस्य गुहाप्रवेशासम्भवाद्योगपरिग्रह

ध भावप्रकाशिका ध

दर्शयति हिशब्द इत्ययमर्थ उत्तरत्र स्पष्टः । (दृश्यत इत्यन्वय इति) अन्वयः अनुषङ्ग इत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । (जीवोपासनमङ्गत्वेन विधीयत इति) तथाचाध्यात्मयोगाधिगमशब्दस्य जीवोपासनमर्थ इति भावः । (भूमौ च वेदप्रसिद्धेरिति) 'अदित्यास्त्वोपस्थे सादयामि' इत्यादौ भूमौ च प्रयोगाभावा-

जायते । एवञ्च सति 'ऋतं पिबन्तौ' इति व्यपदेशः छत्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः । यद्वा- प्रयोज्य-प्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११ ॥

विशेषणाच्च ॥ १२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वो-पासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते ।

* श्रुतप्रकाशिका *

इति भावः । कर्मफलशब्देन ऋतशब्दार्थोपि दर्शितो भवति । छत्रिणो गच्छन्तीति न्यायेन निर्वाहे लाक्षणिकत्वं स्यादिति मुख्यकल्पनिर्वाहमाह— ( यद्वेति ) मुख्यत्वेऽप्यस्वारस्यमात्रमस्ति, लाक्षणिकत्वादपि तद्वरम् बुद्धि-प्राणयोरन्यतरपरत्वमिति वा स्वरसम् , करणत्वेन हि तयोरन्वयः, परमात्मनस्तु 'तत्प्रयोजको हेतु'रित्युक्तप्रक्रियया प्रयोजककर्तृतायाः कर्तृत्वविशेषत्वात्तद्वाचित्वे पिबन्ताविति निर्देशः स्वरस इति भावः । पिबन्ताविति निर्देशस्वारस्यमुभयोश्चेतनत्व एव घटते, उभौ गुहां प्रविष्टाविति निर्देशो हि न दण्डसद्वितीयपुरुषविषयः, अपि तु पुरुषद्वयविषयः । 'ब्रह्मविदो वदन्ती'त्युक्तत्वाच्च जीवसद्वितीयपरमात्मपरत्वं युक्तम् । एवं निर्वाहद्वयेनापि प्रकरणविच्छेदकलिङ्गत्वेन पराभिमतस्य ऋतपानान्वयस्य अन्यथासिद्धिरुक्ता भवति । गत्यभावे यदमुख्यम् तत्र द्वयोः प्रतिपन्नयोः प्रकरणा-नुगुणस्य ग्राह्यत्वं सजातीययोरेव द्विवचननिर्देशार्हत्वं चेतिन्यायद्वयमत्र शिक्षितम् ॥

॥ विशेषणाच्च ॥ तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वो-पास्यत्वोपासकत्वान्तर्भूतानीत्यभिप्रायेण उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशि-

ꕥ भावप्रकाशिका ꕥ

दिति भावः । ( सजातीययोरेव द्विवचननिर्देशार्हत्वमिति ) विजातीयपरिग्रहे जातिव्यक्त्योर्द्वयोरप्युपस्थापनीयतया गौरवम् । सजातीयपरिग्रहे तु व्यक्तिमात्रस्यै-वोपस्थाप्यतया लाघवमिति भावः ॥ .... .... ....

( तत्तद्वाक्योदितविशेषणान्तराणीति ) ब्रह्मजज्ञत्वसेतुत्वादीनीत्यर्थः । ( उपास्यत्वोपासकत्वेति ) ततश्चोपास्यस्य परमात्मनः उपासकदवीयस्त्वशङ्कानिरा-

ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्ति-मत्यन्तमेति' इति । ब्रह्मजज्ञो जीवः, ब्रह्मणो जात-त्वाज्ज्ञत्वाच्च ; तं देवमीड्यं विदित्वा-जीवात्मानमुपा-सकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा "यस्सेतुरी-जानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतं शकेमहि" इत्युपास्यः परमात्मोच्यते । नाचिकेतम्– नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः । "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्या-दिना उपासको जीव उच्यते । तथा "विज्ञानसार-थिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इति प्राप्यप्राप्तारावभिधीयेते जीवपरमात्मानौ । इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वा-

* श्रुतप्रकाशिका *

ष्टावित्युक्तम् । 'ब्रह्मजज्ञ'मित्युपासकं वदति, शकेमहि उपासितुं प्राप्तुमिति शेषः ( आत्मानं रथिनमित्यादि ) शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः इहापि– ऋतं पिबन्ताविति वाक्येऽपि । अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेन 'ज्ञाज्ञौ द्वौ' इति वाक्यं स्मारितम् । उदाहृतवाक्यैकार्थ्याच्छायातपशब्दयोरप्ययमेवार्थः 'विशेषणाच्च' इति सूत्रे छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः ॥

* भावप्रकाशिका *

साय हृदयगुहायां द्वयोरप्यवस्थितिम् ऋतं पिबन्ताविति वाक्यं प्रतिपादयती भावः । भाष्ये–यस्सेतुरीजानानामिति । यज्वनां सेतुः प्रतिष्ठापक इत्यर्थः ननु भाष्ये–इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते इत्युक्तिरयुक्ता, छायातपशब्दयोरज्ञत्वसर्वज्ञत्वपरत्वस्य पूर्वपक्षिणं प्रत्यसिद्धत्वे विशेषणस्य हेतुकरणासम्भवादित्याशङ्क्य छायातपशब्दयोर्ज्ञाज्ञाविति श्रुतिसमा कतया हेतुकरणं सम्भवतीत्याह ( अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेनेत्यादिना ) ॥

जायते । एवञ्च सति ' ऋतं पिबन्तौ ' इति व्यपदेशः छत्रिणो गच्छन्तीतिवत्प्रतिपत्तव्यः । यद्वा- प्रयोज्य-प्रयोजकरूपेण पाने कर्तृत्वं जीवपरयोरुपपद्यते ॥ ११॥

विशेषणाच्च ॥ १२ ॥

अस्मिन् प्रकरणे जीवपरमात्मानावेवोपास्यत्वो-पासकत्वप्राप्यत्वप्राप्तृत्वविशिष्टौ सर्वत्र प्रतिपाद्येते ।

* श्रुतप्रकाशिका *

इति भावः । कर्मफलशब्देन ऋतशब्दार्थोपि दर्शितो भवति। छत्रिणो गच्छन्तीति न्यायेन निर्वाहे लाक्षणिकत्वं स्यादिति मुख्यकल्पनिर्वाहमाह—( यद्वेति ) मुख्यत्वेऽप्यस्वारस्यमात्रमस्ति, लाक्षणिकत्वादपि तद्वरम् बुद्धि-प्राणयोरन्यतरपरत्वमिति वा स्वरसम् , करणत्वेन हि तयोरन्वयः, परमात्मनस्तु 'तत्प्रयोजको हेतु'रित्युक्तप्रक्रियया प्रयोजककर्तृतायाः कर्तृत्वविशेषत्वात्तद्वाचित्वे पिबन्ताविति निर्देशः स्वरस इति भावः । पिबन्ताविति निर्देशस्वारस्यमुभयोश्चेतनत्व एव घटते, उभौ गुहां प्रविष्टाविति निर्देशो हि न दण्डसद्वितीयपुरुषविषयः, अपि तु पुरुषद्वयविषयः । 'ब्रह्मविदो वदन्ती'त्युक्तत्वाच्च जीवसद्वितीयपरमात्मपरत्वं युक्तम् । एवं निर्वाहद्वयेनापि प्रकरणविच्छेदकलिङ्गत्वेन पराभिमतस्य ऋतपानान्वयस्य अन्यथासिद्धिरुक्ता भवति। गत्यभावे यदमुख्यम् तत्र द्वयोः प्रतिपन्नयोः प्रकरणा-नुगुणस्य ग्राह्यत्वं सजातीययोरेव द्विवचननिर्देशार्हत्वं चेति न्यायद्वयमत्र शिक्षितम्॥

॥ विशेषणाच्च ॥ तत्तद्वाक्योदितविशेषणान्तराणि च प्राप्यत्वप्राप्तृत्वो-पास्यत्वोपासकत्वान्तर्भूतानीत्यभिप्रायेण उपास्यत्वोपासकत्वप्राप्यत्वप्राप्तृत्वविशि-

❀ भावप्रकाशिका ❀

दिति भावः । ( सजातीययोरेव द्विवचननिर्देशार्हत्वमिति ) विजातीयपरिग्रहे जातिव्यक्त्योर्द्वयोरप्युपस्थापनीयतया गौरवम् । सजातीयपरिग्रहे तु व्यक्तिमात्रस्यै-वोपस्थाप्यतया लाघवमिति भावः ॥ .... .... ....

( तत्तद्वाक्योदितविशेषणान्तराणीति ) ब्रह्मजज्ञत्वसेतुत्वादीनीत्यर्थः । ( उपास्यत्वोपासकत्वेति ) ततश्चोपास्यस्य परमात्मनः उपासकदवीयस्त्वशङ्कानिरा-

'ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्ति-
मत्यन्तमेति' इति । ब्रह्मजज्ञो जीवः, ब्रह्मणो जात-
त्वाज्ज्ञत्वाच्च; तं देवमीड्यं विदित्वा--जीवात्मनस्तु-पा-
सकं ब्रह्मात्मकत्वेनावगम्येत्यर्थः । तथा " यस्सेतुरी-
जानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं
नाचिकेतं शकेमहि" इत्युपास्यः परमात्मोच्यते ।
नाचिकेतम्– नाचिकेतस्य कर्मणः प्राप्यमित्यर्थः ।
" आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्या-
दिना उपासको जीव उच्यते । तथा " विज्ञानसार-
थिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति
तद्विष्णोः परमं पदम्" इति प्राप्यप्राप्तारावभिधीयेते
जीवपरमात्मानौ । इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वा-

* श्रुतप्रकाशिका *

ष्टावित्युक्तम् । 'ब्रह्मजज्ञ'मित्युपासकं वदति, शकेमहि उपासितुं प्राप्तुमिति शेषः । ( आत्मानं रथिनमित्यादि ) शरीराद्युपासनपरिकरसहितो जीव उच्यत इत्यर्थः । इहापि– ऋतं पिबन्तावितिवाक्येऽपि । अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेन ' ज्ञाज्ञौ द्वौ' इति वाक्यं स्मारितम् । उदाहृतवाक्यैकार्थ्याच्छायातपशब्दयोरप्ययमेवार्थः । 'विशेषणाच्च' इति सूत्रे छायातपत्वरूपविशेषणमपि विवक्षितमिति भावः ॥

ॐ भावप्रकाशिका ॐ

साय हृदयगुहायां द्वयोरप्यवस्थितिम् ऋतं पिबन्तावितिवाक्यं प्रतिपादयतीति भावः । भाष्ये–यस्सेतुरीजानानामिति । यज्वनां सेतुः प्रतिष्ठापक इत्यर्थः । ननु भाष्ये–इहापि छायातपावित्यज्ञत्वसर्वज्ञत्वाभ्यां तावेव विशिष्य व्यपदिश्येते इत्युक्तिरयुक्ता, छायातपशब्दयोरज्ञत्वसर्वज्ञत्वपरत्वस्य पूर्वपक्षिणं प्रत्यसिद्धत्वेन विशेषणस्य हेतुकरणासम्भवादित्याशङ्क्य छायातपशब्दयोर्ज्ञाज्ञाविति श्रुतिसार्थ-कतया हेतुकरणं सम्भवतीत्याह ( अज्ञत्वसर्वज्ञत्वाभ्यामित्यनेनेत्यादिना ) ॥

भ्यां तावेव विशिष्य व्यपदिश्येते ॥ .... .... ....

अथ स्यात् " येयं प्रेते विचिकित्सा मनुष्येऽस्ती-त्येके नायमस्तीति चैके' इति जीवस्वरूपयाथात्म्य-प्रश्नोपक्रमात्सर्वमिदं प्रकरणं जीवपरमिति प्रतीयत इति । नैतदेवम्, न हि जीवस्य देहातिरिक्तस्यास्ति-त्वनास्तित्वशङ्कयाऽयं प्रश्नः, तथा सति पूर्ववरद्वय-वरणानुपपत्तेः। तथा हि ; पितुः सर्ववेदसदक्षिणक्रतु-समाप्तिवेलायां दीयमानदक्षिणावैगुण्येन क्रतुवैगुण्यं

* श्रुतप्रकाशिका *

उत्तरत्र 'त्रयाणामेव चैव'मित्यादिसूत्रेण वक्ष्यमाणत्वेपि चोद्यस्य बुद्धिस्थत्वात् सुग्रहत्वाय तत्पूर्वकं परिहारमाह ( अथ स्यादिति ) अस्मिन् प्रकरणे जीव-परमात्मनोर्विशेष्यत्वमयुक्तम् । उपक्रमस्य जीवपरत्वादित्याह ( येयमिति ) परिहरति ( नैतदिति ) वरद्वयं किम्, तद्वरणानुपपत्तिः कथमित्यत्राह ( तथा हीति )

ঙ भावप्रकाशिका ঙ

भाष्ये- सर्ववेदसदक्षिणक्रतुसमाप्तिवेलायामिति । अत्रोपयुक्ता श्रुतिर्लिख्यते—

'उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ' उशन्- कामयमान इत्यर्थः। 'तस्य ह न-चिकेता नाम पुत्र आस। तं ह कुमारं सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश । पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः । आनन्दा नाम ते लोकास्तान् स गच्छति ता ददत्' । जरद्गवीः प्रयच्छन् आनन्दान् सुखरहितान् लोकान् प्राप्नो-तीत्येवममन्यत इत्यर्थः । 'स होवाच पितरं तात कस्मै मां दास्यसीति । द्वितीयं तृतीयम् । तं होवाच । मृत्यवे त्वा ददामीति ।-एवं पित्रा कुपितेनोक्तो नचिकेताः परिदेवयाञ्चकार ' बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किं स्विद्यमस्य कर्तव्यं किं मयाद्य करिष्यति' इति। अहं बहूनां पुत्राणां शिष्याणां वा मुख्यो मध्यमो वा न सर्वथा अधमः ईदृशमपि मां कुतो यमाय प्रादात्, तस्य वा मत्तेन मया किं प्रयोजनमित्यर्थः । अथापि पितृवचनं मृषा माभूदिति मत्वा किं

मन्यमानेन कुमारेण नचिकेतसा आस्तिकाग्रेसरेण स्वात्मदानेनापि पितुः क्रतुसाद्गुण्यमिच्छता 'कस्मै मां दास्यसि' इत्यसकृत् पितरं पृष्टवता स्वनिर्बन्धरुष्टपितृवचनात् मृत्युसदनं प्रविष्टेन स्वसदनात्प्रोषुषि यमे तददर्शनात्तत्र तिस्रो रात्रीरुपोषुषा स्वोपवासभीततत्प्रतिविधानप्रवृत्तमृत्युप्रत्ते वरत्रये आस्तिक्यातिरेकात्प्रथमेन वरेण स्वात्मानं प्रति पितुः प्रसादो वृतः, एतच्च सर्वं देहातिरिक्तमात्मानमजानतो नोपपद्यते । द्वितीयेन च वरेणोत्तीर्णदेहात्मानुभाव्यफलसाधनभूता-

* श्रुतप्रकाशिका *

पितृप्रसादवरणस्य अग्निविद्यावरणस्य च प्रत्येकनिरपेक्षहेतुत्वसूचनार्थम्

७ भावप्रकाशिका ७

मयोक्तमिति शोकाविष्टं पितरमाह— 'अनुपश्य यथा पूर्वे प्रतिपश्य यथापरे । सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ।' पूर्वेषां पितृपितामहादीनां वर्तमानानां च साधूनां चरितानि शरीरानित्यतां च ज्ञात्वा यमाय मां प्रेषयेत्यर्थः । एवमुक्तेन पित्रा प्रेषितं यमभवनद्वारि तिस्रो रात्रीर्वसन्तं दृष्ट्वा प्रोष्यागतं यमं प्रति आर्याणां वाक्यम् – " वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम्" अर्घ्यादिपूजां कुर्वित्यर्थः । अकरणे प्रत्यवायं चोचुः– 'आशाप्रतीक्षे सङ्गतं सूनृतं च इष्टापूर्ते पुत्रपशूंश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे" कामसङ्कल्पसत्संयोगसत्यवाक्यत्वेष्टापूर्तपुत्रपश्वादीनुपवसन्नतिथिर्नाशयतीत्यर्थः । एवममात्यैरुक्तस्य मृत्योर्वचनम्– 'तिस्रो रात्रीर्यदवात्सीः गृहे मे अनश्नन् ब्रह्मन्नतिथिर्नमस्यः । नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन् वरान् वृणीष्व' । इत्येवमुक्तो नचिकेतास्त्वाह– 'शान्तसङ्कल्पस्सुमना यथा स्याद्वीतमन्युर्गौतमो माभिमृत्यो । त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत् त्रयाणां प्रथमं वरं वृणे ।' शान्तसङ्कल्पः

मिविद्या वृता, तदपि देहातिरिक्तात्मानभिज्ञस्य न सम्भवति। अतस्तृतीयेन वरेण यदिदं व्रियते 'येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः" इति; अत्र परमपुरुषार्थरूपब्रह्मप्राप्तिलक्षणमोक्षयाथात्म्य-

* श्रुतप्रकाशिका *

एतच्च सर्वं तदपीति द्विरुक्तम् । ( अत्र परमेति ) अत्र यदिदं व्रियते- यद्वरणं क्रियते तत्र वरण इत्यर्थः । ( मोक्षयाथात्म्यविज्ञानाय तदुपायभूत-

ধ भावप्रकाशिका ধ

निवृत्तविचार इत्यर्थः । मा अभि-मां प्रतीत्यर्थः । त्वत्प्रसृष्टं मामभि प्रतीतः सोयं पुत्र इति प्रत्यभिजानन् वदेत् , सल्लपत्वित्यर्थः । एवमुक्तस्य मृत्योरुत्तरम्- 'यथा पुरस्ताद्भविता प्रतीतः औद्दालकिरारुणिः प्रहृष्टः । सुखं रात्रीश्शयीत वीतमन्युस्त्वा दर्शितवान्मृत्युमुखात्प्रमुक्तम् ।' यथापूर्वं प्रत्यभिजानात्वित्यर्थः। दर्शितवान् दृष्टवानित्यर्थः । पुनर्नचिकेता आह- 'स्वर्गे लोके न भयं किञ्च नास्ति न तत्र त्वं जरया बिभेति।' तत्र वर्तमानो जरया युक्तस्सन् त्वत्तो न बिभेतीत्यर्थः । एवं स्वर्गं पशस्याह- 'सत्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्। स्वर्गलोका अमृतत्वं भजन्ते एतद्द्वितीयेन वृणे वरेण।' स्वर्ग्यं स्वर्गसाधनमित्यर्थः। एवमुक्तो मृत्युराह- 'प्रते ब्रवीमि तदु मे निबोध स्वर्ग्य-मग्निं नचिकेतः प्रजानन् । अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धित्वमेतं निहितं गुहायाम् ।' अनन्तलोकाप्तिप्रतिष्ठासाधनभूतं विद्वद्बुद्धौ निविष्टमग्निं जानीहीत्यर्थः । तत्र श्रुतिवाक्यम् 'लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा।' इष्टका यावतीर्वा यथा वा- इष्टकास्वरूपतत्सङ्ख्यादिकमुपदिदेशेत्यर्थः। 'स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनराह तुष्टः।' प्रत्यवदत्- अन्ववददित्यर्थः । 'तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः । तवैव नाम्ना भवितायमग्निः सृङ्काञ्चेमामनेकरूपां गृहाण"। सृङ्का-रत्नमयी माला। 'त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू । ब्रह्मजज्ञं देवमीड्यं

विज्ञानाय तदुपायभूतपरमात्मोपासनपरावरात्मत...

* श्रुतप्रकाशिका *

परमात्मोपासनपरावरात्मतत्त्वजिज्ञासयेति ) मोक्षज्ञानाय मोक्षानुबन्धिजिज्ञासयाऽयं प्रश्न इत्यर्थः । ' येय ' मित्यादिप्रश्नवाक्ये मोक्षस्वरूपप्रश्नः कण्ठोक्तः ।

* भावप्रकाशिका *

विदित्वा निचाय्येमां शान्तिमत्यन्तमेति । त्रिणाचिकेतस्त्रयमेतद्विदित्वा एवं विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशात्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके । यो वाप्येतां ब्रह्मजज्ञात्मभूतां चितिं विदित्वा चिनुते नाचिकेतम् । स एव भूत्वा ब्रह्मजज्ञात्मभूतः करोति तद्येन पुनर्न जायते । एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासः तृतीयं वरं नचिकेतो वृणीष्व । येयं प्रेते विचिकित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः"। एषां वाक्यानामर्थो ग्रन्थकृतैवानुमानिकाधिकरणे वक्ष्यते । एवमुक्तो मृत्युराह– ' देवैरत्रापि विचिकित्सितं पुरा नहि सुज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् । ' मामोपरौत्सीः— अतिमा सृजैनम्– मां मा बधस्व । एनं वरं मां प्रति अतिसृज मुञ्चेत्यर्थः । एवमुक्तो नचिकेता आह– ' देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न सुविज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित्" । एवमुक्तो मृत्युराह– 'शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि " । आयतनम्– निवासस्थानमित्यर्थः । ' एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि' । त्वमेधि– त्वं महाभूमौ राजा भवेत्यर्थः । 'ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामान् छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या न हीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः'। मरणसम्बन्धं येयं प्रेतप्रश्नं न प्रष्टुमर्हसीत्यर्थः । एवं प्रलोभितोपि नचिकेता आह– ' श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः । अपि

# जिज्ञासयाऽयं प्रश्नः क्रियते । एवञ्च ' येयं प्रेते'इति

* श्रुतप्रकाशिका *

प्रतिवचनप्रकारेणोपासनादिप्रश्नश्चार्थसिद्ध इत्यवगम्यते । एवं विभागज्ञापनार्थं

७ भावप्रकाशिका ७

सर्वं जीवितमल्पमेव तवैव भावास्तव नृत्तगीते" इति । श्वः अभावः येषां ते श्वोभावाः, त्वदुपन्यस्तभोगाः सर्वे अति विनश्वरा इत्यर्थः । सर्वेन्द्रियाणामिति । किञ्च ते भोगाः सर्वेन्द्रियबलनाशका इत्यर्थः । तवैव भावास्तव नृत्तगीते इति । भावा रामादयो नृत्तगीतादिकं च तवैव सन्त्वित्यर्थः । ' न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वाम् । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयस्स एव' । वित्तं न तृप्तिहेतुः, किञ्च त्वद्दर्शने धनायुषोः को भारः ? अतस्स एव वरणीय इत्यर्थः । ' अजीर्यताममृतानामुपेत्य जीर्यन्मर्त्यः क्वधस्थः प्रजानन् । अभिध्यायन् वर्णरतिप्रमोदान् नातिदीर्घे जीविते को रमेत ।' क्वधस्थः— भूरूपाधोलोके वर्तमानः । प्रजानन्- विवेकी मनुष्यः देवानामपि समीपं गत्वा वैषयिकभोगप्रवणः । अत्यल्पे जीविते को रमेतेत्यर्थः । ' यस्मिन्निदं विचिकित्सन्ति मृत्यो साम्पराये महति ब्रूहि नस्तत्' । यस्मिन् परलोके देवानामपि विचिकित्सा तमेव ब्रूहीत्यर्थः । अतः परं श्रुतिवचनम्— " योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेतो वृणीते" । अतः परं मृत्युवचनम्— " अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः । तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्यः प्रेयो वृणीते' । सिनीतः— बध्नीतः, भिन्नप्रयोजने श्रेयःप्रेयसी पुरुषसम्बन्धिनी भवतः । तयोर्मध्ये श्रेय आददानस्य साधुत्वम्, अन्यस्य तदभावश्चेत्यर्थः । ' श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ सम्परीत्य विविनक्ति धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमान् वृणीते । एतः— प्राप्नुवत इत्यर्थः । सम्परीत्य-सम्यगालोच्य प्रेयोपेक्षया अभ्यर्हितं श्रेयः धीरो वृणीते । मन्दस्तु प्रेयोरूपशरीराप्यायकान्नपानादि वृणीते इत्यर्थः । "न त्वं प्रियान् प्रियरूपांश्च कामान् अभिध्यायन्नचिकेतोऽत्यस्राक्षीः । नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः" सृङ्का—कुत्सिता गतिः । 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता । विषूची— विरुद्धगती इत्यर्थः ।

न शरीरवियोगमात्राभिप्रायम्, अपि तु सर्वबन्धवि-

* श्रुतप्रकाशिका *

विज्ञानाय जिज्ञासयेति पृथगुक्तिः । मोक्षप्राप्तिप्रश्ने प्राप्यप्रापकप्राप्तृप्रश्नोऽ

* भावप्रकाशिका *

'विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवो लोलुपन्त' । विद्याभीप्सिनम् विद्याभिलाषिणमित्यर्थः । 'अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः । दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः' । दन्द्रम्यमाणाः— कुत्सितां गतिं गच्छन्त इत्यर्थः । "न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वश-मापद्यते मे" । बालम्-अज्ञं प्रति, साम्परायः परलोको न भातीत्यर्थः । अयं लोक इत्यस्यार्थः संयमने त्वनुभूयेत्यत्र वक्ष्यते । 'श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ॥' यस्य श्रवणं वेदनं वक्ता लब्धा ज्ञाता वा दुर्लभ इत्यर्थः । कुशलानुशिष्टः-कुशलेनाचार्येणानुशिष्ट इत्यर्थः । 'न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा विचिन्त्यमानः । अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान् ह्यतर्क्य-मणुप्रमाणात् ।' अवरेण-अल्पज्ञेनाचार्येण प्रोक्तोऽयमात्मा ज्ञातुं शक्यः वादिभि-र्बहुधा उत्प्रेक्ष्यमाणः, अन्येन प्राकृतेन मनुष्येण प्रोक्ते उपदिष्टे सत्यवगतिर्नास्ति, यतोऽयमणोरप्यणीयानित्यर्थः । तदेवाह— 'नैषा तर्केण मतिरापनेया प्रोक्तोऽन्येन सुज्ञानाय प्रेष्ठ । यं त्वमापस्सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेत प्रष्टा । आत्म-विषया मतिस्तत्प्राप्त्या न भवति, हे प्रेष्ठ हे प्रियतम ! अन्यप्रोक्तोपि- आगमा-नभिज्ञप्रोक्तोपि सुज्ञानाय न भवति । यद्विषयिणीं मतिं त्वं प्राप्तवानसि, स आत्मा दुरधिगमः । त्वं यतः प्रलोभ्यमानोपि अविचालितः, अतस्त्वं धीरः, तस्मात् त्वादृश एव न शिष्यस्स्यादित्यर्थः । 'जानाम्यहं शेवधिरित्यनित्यं न ह्य-ध्रुवैः प्राप्यते हि ध्रुवं तत् । ततो मया नाचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवान-स्मि नित्यम् । कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य पारम् । स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः । तं दुर्दर्शं गूढमनु-प्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्ष-शोकौ जहाति । एतच्छ्रुत्वा सम्परिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते

* श्रुतप्रकाशिका *

प्यन्तर्गत इति भावो दर्शितो भवति। निर्विशेषतापत्तिर्मोक्षश्चेत् वाक्यार्थज्ञानस्योपायता स्यात्, उभयलिङ्गकं प्राप्यश्चेत् तथात्वेनोपासनमुपायस्स्यात्, अतो मोक्षस्वरूपज्ञानं तदनुबन्धिज्ञानापेक्षम्। एवं प्रश्नस्य ज्ञातेतरविषयत्वात् प्रतिवचनानुरूप्याच्च यथोक्त एवार्थः। मेतपदस्य उक्तार्थपरत्वे श्रुत्यन्तरसंवादं

* भावप्रकाशिका *

मोदनीयं हि लब्ध्वा विवृतं सद्म नचिकेतसं मन्ये। अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताद्भव्याच्च यत्तत्पश्यसि तद्वद। सर्वे वेदा यत्पदमामनन्ति सर्वाणि भूतानि च यद्वन्ति। यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येतत्॥ एतद्ध्येवाक्षरं परम्। एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्। एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्। एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते। न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित्। अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे। हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायं हन्ति न हन्यते। अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्। आसीनो दूरं व्रजति शयानो याति सर्वदा। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति। अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्। नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमनसो वापि प्रज्ञानेनैनमाप्नुयात्। यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः। ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः। यस्सेतुरीजानानामक्षरं ब्रह्म यत्परम्। अभयं तितीर्षतां पारं नाचिकेतं शकेमहि। आत्मानं रथिनं विद्धि शरीरं रथमेव च'॥ इत्यादि।—

(निर्विशेषतापत्तिर्मोक्षश्चेदिति) ततश्चोपायविशेषनिर्धारणं नासत्तावधारणात्मकमोक्षस्वरूपनिर्धारणं न सम्भवतीति मोक्षज्ञानार्थत्वं तदनुबन्धिज्ञानस्य युज्यत इति भावः। (ज्ञातेतरविषयत्वादिति) देहातिरिक्तस्य नित्यस्यात्मनो ज्ञातत्वेन

निर्मोक्षाभिप्रायम् । यथा 'न प्रेत्य सञ्ज्ञाऽस्ति' इति । अयमर्थः,– मोक्षाधिकृते मनुष्ये प्रेते-- सर्वबन्धविनिर्मुक्ते तत्स्वरूपविषया वादिविप्रतिपत्तिनिमित्ताऽस्तिनास्त्यात्मिका येयं विचिकित्सा तदपनोदनाय तत्स्वरूपयाथात्म्यं त्वयाऽनुशिष्टोऽहं विद्यां-- जानीयामिति । तथा हि बहुधा विप्रतिपद्यन्ते-- केचिद्वित्तिमात्रस्यात्मनः स्वरूपोच्छित्तिलक्षणं मोक्षमाचक्षते । अन्ये वित्तिमात्रस्यैव सतोऽविद्यास्तमयम् । अपरे पाषाणकल्पस्यात्मनो ज्ञानाद्यशेषवैशेषिकगुणोच्छेदलक्षणं कैवल्यरूपम् । अपरे तु अपहतपाप्मानं परमात्मानमभ्युपगच्छन्तः तस्यैवोपाधिसंसर्गनिमित्तजीवभावस्योपाध्यपगमेन तद्भावलक्षणं मोक्षमातिष्ठन्ते । त्रय्यन्तनिष्णातास्तु-- निखिलजगदेककारणस्याशेषहेयप्रत्यनीकानन्तज्ञानानन्दैकस्वरूपस्य स्वाभाविकानवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य सकलेतरविलक्षणस्य

* श्रुतप्रकाशिका *

दर्शयति ( यथेति ) 'न प्रेत्य सञ्ज्ञास्ति' इति श्रुतिः । कः पुनर्वाक्यार्थः ? न हि मनुष्यमात्रस्य बन्धविनिर्मोक्षसम्भव इत्यत्राह (अयमर्थ इति) अस्ति नास्त्यात्मिका-- अस्तिनास्तीत्येवमादिरूपा । विद्यामितिपदस्य द्वितीयान्तकारकपदत्वशङ्कां निवर्तयन् व्याचष्टे ( जानीयामिति ) विप्रतिपत्तिं दर्शयति (तथा हीति) कारणशोधकगुणप्रतिपादकवाक्यार्थविशिष्टमाह ( निखिलजगदेककारणस्येत्यादि ) ( अनु-

* भावप्रकाशिका *

प्रश्नस्य तद्व्यतिरिक्तविषयत्वादित्यर्थः । (श्रुत्यन्तरसंवादमिति ) 'न प्रेत्य संज्ञास्ति' इति वाक्यस्य मोक्षदशायां स्वाभाविकापरिच्छिन्नज्ञानसङ्कोचाभावेन भूतसङ्घातेनैकीकृ-

सर्वात्मभूतस्य परस्य ब्रह्मणः शरीरतया प्रकारभूतस्यानुकूलापरिच्छिन्नज्ञानस्वरूपस्य परमात्मानुभवैकरसस्य जीवस्यानादिकर्मरूपाविद्यातिरोहितस्वरूपस्याविद्योच्छेदपूर्वकस्वाभाविकपरमात्मानुभवमेव मोक्षमाचक्षते। तत्र मोक्षस्वरूपं तत्साधनं च त्वत्प्रसादाद्विद्यामिति नचिकेतसा पृष्टो मृत्युः तस्यार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभनेन चैनं परीक्ष्य योग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानं परमात्मोपासनं तत्पदप्राप्तिलक्षणं मोक्षञ्च "तं दुर्दर्शं गूढमनुप्रविष्टम्" इत्यारभ्य "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" इत्यन्तेन उपदिश्य तदपेक्षितांश्च विशेषानुपदिदेशेति सर्वं समञ्जसम्। अतः परमात्मैवात्तेति सिद्धम्॥ ॥ ७ ॥ इति अत्त्रधिकरणम् ॥ २ ॥

* श्रुतप्रकाशिका *

कूलापरिच्छिन्नज्ञानस्वरूपस्येति) स्वरूपशब्दो धर्मधर्मिणोस्साधारणः। (तत्रेत्यादि) परावरात्मतत्त्वविज्ञानम्— ज्ञातव्यपरावरात्मतत्त्वम्, उपदिश्येत्यन्वयः। तदपेक्षितांश्च विशेषान्— प्रणवाग्निविद्यादीन्। अधिकरणार्थमुपसंहरति (अत इति) अत्तेतिसूत्रे स्ववाक्यस्थहेतुरुक्तः। प्राकरणिकपूर्ववाक्यस्थहेतुपरं द्वितीयम्। अनन्तरवाक्यशङ्कापरिहारपरं तृतीयम्, अतस्तत्र चशब्दाप्रयोगः, उपरितनवाक्यस्थहेतुभिस्तृतीयसूत्रार्थोपपादकं चतुर्थमिति सूत्रसङ्गतिः॥ .... ....

'गुहां प्रविष्टावात्मानौ' इत्यादिसूत्रद्वयमधिकरणान्तरं केचिदाहुः,—

७ भावप्रकाशिका ७

त्यात्मनि देवादिरूपज्ञानं नास्तीत्यर्थकत्वादिति भावः। परावरात्मतत्त्वविज्ञानमिति व्याख्येयं पदम्। (प्राकरणिकपूर्ववाक्यस्थहेतुपरं द्वितीयमिति) अत्र यद्वक्तव्यम् तत्पूर्वमेवोक्तम्॥ .... .... .... .... ....

* श्रुतप्रकाशिका *

तदयुक्तम्; एकप्रकरणस्थवाक्यविशेषविषयाणामधिकरणान्तरपादान्तराव्यवहितानामुपजीव्योपजीवकभावेन परस्परान्वितार्थप्रतिपादकानां सूत्राणां विषयवाक्यभेदे सत्यपि भिन्नाधिकरणत्वाभावात्। ईक्षत्यानन्दमयाधिकरणादिषु "तन्निष्ठस्य मोक्षोपदेशात्" "प्रतिज्ञाविरोधात्' 'तद्धेतुव्यपदेशाच्च" "मान्त्रवर्णिकमेव च गीयते" इत्यादीनां सूत्राणां पूर्वापरबहुवाक्यविषयत्वेऽप्यव्यवहितत्वात् परस्परोपजीव्योपजीवकभावेन अन्वितार्थपरतयापि ह्यैकाधिकरण्यम् । "अदृश्यत्वादिगुणकः' 'द्युभ्वाद्यायतनम्"इत्यधिकरणयोस्तु एकप्रकरणस्थानेकवाक्यविषयत्वेऽपि भेद उपपद्यते । स्पष्टास्पष्टलिङ्गकवाक्यविषयत्वेनैकस्मिन् पादे सङ्गत्यनुपपत्तेरुपजीव्योपजीवकभावाभावाच्च । न हि 'यस्मिन् द्यौः पृथिवी'इत्यादिवाक्यस्य परमात्मपरत्वमदृश्यत्वादिगुणकस्याक्षरात्परतः परस्य च परमात्मत्वोपपादकम्, परप्रकरणेऽपि तच्छेषत्वेन अपरमात्मप्रधानादिप्रतिपादनोपपत्तेः । अतः उपजीव्योपजीवकभावाभावादधिकरणभेदस्तत्र युक्तः, इह तु पूर्ववाक्यप्रतिपन्नमत्तृत्वं कर्मफलभोक्तृत्वरूपमित्यनन्तरवाक्येन प्रतिपन्ने सति तस्यात्तुः परमात्मत्वानुपपत्तेरनन्तरवाक्यस्य परमात्मपरत्वोपपादनमत्तुः परमात्मत्वोपयुक्तमेव । एवमेकप्रकरणस्थवाक्यविषयत्वे सति अधिकरणान्तरपादान्तराव्यवहितत्वे च सति परस्परोपयुक्तार्थप्रतिपादकानां सूत्राणामैकाधिकरण्यमेवोचितम् , अन्यथा ईक्षत्यधिकरणादिष्वपि एकैकाधिकरणस्थसूत्राणामधिकरणभेदकल्पना प्रसजेत् , अतः ऐकाधिकरण्ये स्थित एवावान्तरशङ्काविशेषपरिहारपरं सूत्रद्वयं व्याख्यातव्यम् , व्याख्यातञ्च भवगता भाष्यकारेण । सूत्रभङ्गी च ऐकाधिकरण्य एवोपपद्यते, एकस्मिन् सूत्रे हिशब्दपञ्चम्यन्तपदयोः श्रवणात् । गुहा प्रविष्टयोरात्मत्वसाधकं पञ्चम्यन्तपदम् , अत्तुः परमात्मत्वोपपादकतां सूत्रार्थस्य दर्शयति हिशब्दः । सर्वगतस्य ब्रह्मणो गुहावच्छिन्नत्वायोगात् गुहागतौ बुद्धिजीवौ न पर इति गुहां प्रविष्टा विति सूत्रखण्डः पूर्व-

* भावप्रकाशिका *

( हिशब्दपञ्चम्यन्तपदयोरुभयोः श्रवणादिति ) इतरथा हिशब्दस्यापि हेतुत्वार्थकत्वेन पौनरुक्त्यप्रसङ्गादित्यर्थः । स्वपक्षे पौनरुक्त्याभावमुपपादयति ( गुहां प्रविष्टयोरिति ) ( सूत्रार्थस्य दर्शयतीति ) गुहाप्रविष्टयोरात्मत्वरूपसूत्रार्थस्येत्यर्थः । गुहाप्रविष्टयोरात्मत्वादत्ता परमात्मेत्यर्थः । नन्वेवं हि

* श्रुतप्रकाशिका *

पक्षपर इति योजनाऽनुपपन्ना. 'विकारशब्दान्नेति चेत्' 'जीवमुख्यप्राणलिङ्गान्नेति चेत्' 'सम्भोगप्राप्तिरिति चेत्' इतिवत् पूर्वपक्षद्योतकनिर्देशाभावात् 'अर्भकौकस्त्वात्' इति पूर्वाधिकरणसूत्रेण गुहावच्छेदनिबन्धनशङ्कायाः परिहृतत्वाच्च। आत्मानाविति प्रतिज्ञायाम्, हिशब्दोपपादितायां तद्दर्शनादिति सूत्रखण्डस्य प्रतिज्ञान्तरमध्याहर्तव्यं गुहावच्छेदोऽपि परस्योपपन्न इति। अनध्याहारेण योजना सम्भवति चेत् सैव वरम्। तस्मात् पञ्चम्यन्तपदोपपादितसौत्रार्थस्य परमसाध्योपपादकत्वद्योतको हिशब्दः, अतश्च औचित्यात् कृतकरत्वात् सूत्रशैल्याश्च युक्तमैकाधिकरण्यं सूत्रचतुष्टयस्य। 'द्वा सुपर्णौ' इति वाक्ये अत्रत्यन्यायातिदेशश्चानुपपन्नः, 'स्थित्यदनाभ्याञ्च' इति सूत्रेण निरूपयिष्यमाणस्य तस्यैतन्न्यायसापेक्षत्वाभावात्, न चास्याधिकरणस्य तद्वाक्यसापेक्षत्वादिह तत्प्रस्तावः, अस्याधिकरणस्य अत्रत्यन्यायातिदेशसापेक्षवाक्यान्तरोपपाद्यत्वे अन्योन्याश्रयप्रसङ्गात् तस्य च वाक्यस्य बुद्धिजीवपरत्वं भवदभिमतम् तच्चेह न वक्तव्यम्, प्रकृतानुपयोगात् 'ऋतं पिबन्तौ' इति वाक्यस्य जीवसद्वितीयपरमात्मविषयत्वे वाक्यान्तरस्य बुद्धिजीवपरत्वं

ꣿ भावप्रकाशिका ꣿ

परेषां योजना; गुहां प्रविष्टौ जीवपरावेव। कुतः? आत्मानौ हि तौ, चेतनौ हि तावित्यर्थः। द्वयोरपि चेतनत्वेन सजातीयत्वात्. ऋतपानलिङ्गेन निश्चितस्य द्वितीयापेक्षायां सजातीयस्य चेतनान्तरस्यैव ग्रहणमुचितम्। अस्य गोर्द्वितीयोऽन्वेष्टव्य इत्युक्ते द्वितीयो गौरेवान्विष्यते, नाश्वादि। यदुक्तं परमात्मनो गुहाहितत्वं नोपपद्यत इति. तन्न; श्रुतिस्मृतिषु परमात्मनोपि गुहाहितत्वदर्शनात् परमात्मनोपि गुहाहितत्वं नोपपद्यत इति। अतो भवत्पक्ष इवास्मत्पक्षेपि गुहां प्रविष्टाविति सौत्रं पदं न पूर्वपक्षपरम्। इयांस्तु विशेषः, भवत्पक्षे गुहां प्रविष्टाविति सौत्रं पदं सिद्धान्तयुक्तिसूचकम्। अस्मन्मते पूर्वपक्षयुक्तिसूचकम्। अतः पूर्वपक्षद्योतकनिर्देशोऽनावश्यक इत्यस्वरसादाह (अर्भकौकस्त्वादिति) परस्योपपन्न इतीतिच्छेदः। (कृतकरत्वादिति) अर्भकौकस्त्वादितिसूत्रेणेत्यर्थः। अस्मिन्नधिकरणे एष एव न्यायो 'द्वासुपर्णा सयुजौ सखायौ' इत्यत्रापि शाङ्करभाष्ये यदुक्तं तद्दूषयति (द्वासुपर्णाविितिवाक्य इत्यादिना) ननु पैङ्गिरहस्यब्राह्मणानुसारेण द्वासुपर्णेति मन्त्रस्य बुद्धिजीवपरत्वेन एतन्न्यायातिदेशस्य तद्भाष्य एव दूषितस्य

## अन्तर उपपत्तेः ॥ १३ ॥

३ अधिकरणम्

इदमामनन्तिच्छन्दोगाः [1]"य एषोऽक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्म' इति। तत्र सन्देहः—किमयमक्ष्याधारतया निर्दिश्यमानः पुरुषः प्रतिबिम्बात्मा, उत चक्षुरिन्द्रियाधिष्ठातादेवताविशेषः, उत जीवात्मा, अथ परमात्मा? इति। किं युक्तम्? प्रतिबिम्बात्मेति। कुतः?

* श्रुतप्रकाशिका *

कथमुपयुज्यते? तस्य च वाक्यस्य बुद्धिजीवविषयत्वं पूर्वं निरस्तं निरासिष्यते च; अतो भाष्यसन्दर्शिता सरणिरेव साधीयसी॥ ॥ इति अत्त्रधिकरणम्॥

॥ अन्तर उपपत्तेः॥ अत्र सङ्गतिः पूर्वोक्तया दिशा सिद्धेति न कण्ठोक्ता। "गूढोत्मा न प्रकाशते' 'तं दुर्दर्शं गूढमनुप्रविष्टम्' 'क इत्था वेद" इति च परमात्मा दुर्दर्शश्चेत् सुदर्शनतया प्रसिद्धत्वेन निर्दिष्टो न परमात्मा भवितुमर्हतीति शङ्कया सङ्गतिः। विषयादिकं दर्शयति (इदमित्यादि) किमक्ष्याधारतया निर्दिश्यमानः प्रतिबिम्बचक्षुरधिष्ठातृजीवानामन्यतमः, उत परमात्मा? इति। तदर्थं किममृतत्वादयो यथाकथञ्चिन्नेयाः, उत मुख्याः?। 'कं ब्रह्मे'ति प्रकृतमेव ब्रह्मेह किमुपासनस्थानगुणविधानार्थं निर्दिश्यते, उत न? इति। किं मध्यस्थाग्निविद्यया ब्रह्मप्रकरणं विच्छिन्नम्, उत न? किमग्निविद्या ब्रह्मविद्याङ्गम्, उत न? किमग्निविद्याफलं ब्रह्मविद्याफलानुगुणम्, उत न? इति विचारः। यदाननुगुणं तदाग्निविद्यायाः ब्रह्मविद्याङ्गत्वाभावेन ब्रह्मप्रकरणविच्छेदेन पूर्वप्रकृतब्रह्मण इह परामर्शाभावेन अमृतत्वादीनाममुख्यतया प्रति-

* भावप्रकाशिका *

दूषणं किमर्थं क्रियत इत्याशङ्क्य तदभिमतबुद्धिजीवपरत्वमपि न सम्भवतीत्याह (तस्य च वाक्यस्येति) ॥ इति अत्त्रधिकरणम्॥ .... ....

स्वरूपसत्सन्निधानस्य प्रसिद्धावनुपयोगात् सर्वेन्द्रियकन्दभूते हृदये वर्तमानस्य

[1] छां ४-१५-१॥

प्रसिद्धवन्निर्देशात्; 'दृश्यते' इत्यपरोक्षाभिधानाच्च। जीवात्मा वा, तस्यापि हि चक्षुषि विशेषेण सन्निधानात्प्रसिद्धिरुपपद्यते ? उन्मीलितं हि चक्षुरुद्वीक्ष्य जीवात्मनश्शरीरे स्थितिगती निश्चिन्वन्ति। [1]'रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः' इति श्रुतिप्रसिद्ध्या चक्षुःप्रतिष्ठो देवताविशेषो वा; एष्वेव प्रसिद्धवन्निर्देशोपपत्तेरेषामन्यतमः—

* श्रुतप्रकाशिका *

बिम्बादिष्वन्यतम इति फलितम्। सिद्धान्ते यदा त्वनुगुणं तदा अङ्गत्वेनाग्निविद्यायाः ब्रह्मविद्याप्रकरणविच्छेदकत्वाभावेन प्रकृतब्रह्मण इह परामर्शसम्भवेनामृतत्वादीनां च स्वतः प्राप्तमुख्यत्वसिद्धेः परमात्मेति फलितम्। अपरोक्षप्रसिद्धिर्लौकिकप्रसिद्धिः श्रुतिप्रसिद्धिश्चेति यथाक्रमं प्रतिबिम्बजीवादित्यानामनुसन्धेयाः। य एष इतिपदाभ्यां प्रसिद्धवन्निर्देशः। दृश्यत इत्यपरोक्षाभिधानम्। अनेन सङ्गतिरभिप्रेता। सन्निधानात्—सन्निधानावगमात्। जीवस्य देहसन्निधेश्चक्षुष्यवगमादित्यर्थः। तदेव विवृणोति (उन्मीलितं हीति) अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्ट-

* भावप्रकाशिका *

चक्षुषि सन्निधानाभावाच्च व्याचष्टे (सन्निधानावगमादिति) (चक्षुष्यवगमादित्यर्थ इति) चक्षुषावगमादित्यर्थः, उत्तरग्रन्थानुसारात्। ननु–उन्मीलितं हीत्यादिभाष्येण चक्षुषो देहे जीवस्थितिगतिनिश्चायकत्वमुपपादितम्। नैतावता 'अक्षिणि पुरुषो दृश्यते' इति सप्तम्यर्थ उपपादित इत्याशङ्क्याह (अस्मिन् कर्मणीति) अनेन कर्मणा अस्य सामर्थ्यं दृष्टमिति वक्तव्ये अस्मिन् कर्मण्यस्य सामर्थ्यं दृष्टमितिवत् अक्ष्णा दृश्यत इति वक्तव्ये अक्षिणि दृश्यत इत्युक्तिरिति भावः। (दृष्टमिति) सूचितमित्यर्थः। उत्तरत्र सूचक इति ग्रन्थानुसारात्। अथवा सूचकमित्यस्य दर्शकमिति वार्थस्समाश्रयणीयः। ननु 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इत्यस्य परमात्मपरत्वस्य 'अन्तस्तद्धर्मोपदेशात्' इत्यधिकरणेन समर्थितत्वात् कथं तत्तुल्यनिर्देशेऽस्मिन् वाक्ये अस्य पूर्वपक्षस्योत्थितिरिति चेत्.

१ बृ. ७-५-१॥

इति प्राप्ते प्रचक्ष्महे—अन्तर उपपत्तेः । अक्ष्यन्तरः परमात्मा । कुतः ? [1]" एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्म एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति एष उ एव वामनिः । एष हि सर्वाणि वामानि नयति । एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति" इत्येषां गुणानां परमात्मन्येवोपपत्तेः ॥ १३ ॥

* श्रुतप्रकाशिका *

मित्युक्ते यथा तत्कर्म तत्सामर्थ्यसूचकमित्युक्तं भवति, एवमक्षिणि दृश्यत इत्युक्ते देहे जीवावस्थानं चक्षुरधीननिश्चयमित्युक्तं भवतीत्यर्थः । उपक्रमानुगुणमन्यन्नेयम् । तस्मादमृतत्वसंयद्वामत्वाद्युक्तिः स्तुतिरूपा । 'एष आत्मेति' इतीतिकरणं चार्थातात्पर्यद्योतकम् । देवताविशेषः— आदित्यः । एष्वेव— न तु परमात्मनि ॥ ....

राद्धान्ते ( एषां गुणानामिति ) निरुपाधिका अमृतत्वादयो न जीवादिषु

७ भावप्रकाशिका ७

सत्यम्, तत्र जीव इति पूर्वपक्षस्तत्रत्यानन्यथासिद्धलिङ्गेन प्रत्याख्यातः, इह तु बाधकलिङ्गाभावात् प्रसिद्धिदृश्यत्वाभ्यां प्रतिबिम्बादिपूर्वपक्षस्योत्थितिः । नन्वेवमपि 'एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामानि संयन्ति सर्वाण्येव वामान्यभिसंयन्ति य एवं वेद । एष उ एव वामनिः । एष हि सर्वाणि वामनि नयति, सर्वाणि वामनि नयति य एवं वेद । एष उ एव भामनिः । एष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति । य एवं वेद, इत्यादिना प्रदर्शितानां सर्वकामोपेतत्वसकलशुभप्रापकत्वसर्वलोकभासमानत्वरूपाणां संयद्वामत्ववामनित्वभामनित्वानां तत्तदनुरूपफलरूपतात्पर्यलिङ्गानुगृहीतानाम् 'एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्म' इति श्रुतिप्रतिपादितानामौपसंहारिकाणां बहूनामात्मत्वामृतत्वाभयत्वब्रह्मत्वानामनन्यथासिद्धब्रह्मलिङ्गानां सत्त्वे प्रसिद्धिदृश्यत्वलिङ्गाभ्यां प्रथमश्रुताभ्यामपि कथं पूर्वपक्षोत्थितिरित्याशङ्क्याह ( इतिकरणञ्चार्थतात्पर्यद्योतक-

१ छां. ४-१५-३ ॥

## स्थानादिव्यपदेशाच्च ॥ १४ ॥

**चक्षुषि स्थितिनियमनादयः परमात्मन एव [1]"यश्चक्षुषि तिष्ठन्' इत्येवमादौ व्यपदिश्यन्ते । अतश्च [2]"य**

सम्भवन्तीत्यर्थः। एषामिति । उपक्रमस्थमंक लिङ्गमुपरितनानेकगुणविरोधे दुर्बलम्, अत एव च नामृतत्वाद्युक्तिस्तुरिति भावः। 'इति होवाच इत्यब्रवी'दित्यादिष्विति-करणमर्थपरमेव दृष्टमिति चानुसन्धेयम्। उपपत्तेः अद्यन्तरः परमात्मेत्यन्वयः। 'तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनीव गच्छति' इत्यर्थवादोक्तं सर्पिरुद-कादिनिर्लेपत्वं हेतुं कृत्वा निर्लेपस्य परस्य निर्लेपे चक्षुषि स्थितिरुपपन्नेति वक्तुम-युक्तम्, काचादिभिस्सलेपे चक्षुषि निर्दोषस्य परस्य स्थित्यनुपपत्तेश्च वक्तुं शक्यत्वात् ॥

॥ स्थानादिव्यपदेशाच्च ॥ अनवस्थितेरिति व्यतिरेकस्य वक्ष्यमाणत्वात् 'चक्षुषि तिष्ठन्' इतिश्रुत्यनुरोधेन स्थानशब्दः स्थितिपरतया व्याख्यातः, न तु प्रदेशपरतया। सौत्रस्यादिशब्दस्यार्थमाह ( स्थितिनियमनेति ) आदिशब्दस्य नाम-

॥ भावप्रकाशिका ॥

मिति ) मनो ब्रह्मेत्युपासीतेत्यादौ इतिशब्दप्रयोगे अर्थे तात्पर्यदर्शनादिति भावः ॥

शिष्यबुद्धिसौकर्यार्थमाह ( राद्धान्ते इति ) व्याख्यायत इति शेषः। बहु-वचनाभिप्रायं वक्तुं पुनरपि तमेव प्रतीकं गृह्णाति ( एषामितीति ) ( अर्थपरत्वमेव दृष्टमिति चानुसन्धेयमिति ) इतिशब्दस्तत्रैवार्थविवक्षां वारयति, यत्र ज्ञानसम्बन्धो विवक्ष्यते यथा मनो ब्रह्मेत्युपासीतेत्यादौ । यत्र तूक्तार्थावच्छेदेन वचनसम्बन्धस्त-त्रेतिशब्दो नार्थविवक्षां वारयति। यथा इति ह स्मोपाध्यायः कथयतीत्यादाविति भावः। परोक्तसिद्धान्तयुक्तिं दूषयति ( तद्यद्यप्यस्मिन्नित्यादिना )॥ ..... ....

( व्यतिरेकस्य वक्ष्यमाणत्वाच्चेति ) स्थितिव्यतिरेकस्य हेतूकरिष्यमाणत्वात् तदन्वयो हेतूकर्तुमुचितमिति भावः। ( नतु प्रदेशपरतयेति ) न परमतवदधिकर-णपरतयेत्यर्थः। ( जीवात्मनि सम्भवतस्तस्येति ) नन्वाकाशवत्सर्वगतस्य ब्रह्मणः कथमत्यल्पाक्षिस्थानत्वमित्याशङ्क्य यः पृथिव्यां तिष्ठन्नित्यादिस्थानव्यपदेशवत् नाम-रूपरहितस्यापि ब्रह्मणः तस्योदिति नाम हिरण्यश्मश्रुर्हिरण्यकेशः इति नामरूपो-

१ बृ. ५-७-१८ | २ छां. ४ १५-१ ॥

**एषोऽक्षिणि पुरुषः' इति स एव प्रतीयते; अतः प्रसिद्ध-वन्निर्देशश्च परमात्मन्युपपद्यते । तत एव 'दृश्यते' इति साक्षात्कारव्यपदेशोऽपि योगिभिर्दृश्यमानत्वादुप-पद्यते ॥ १४ ॥**

* श्रुतप्रकाशिका *

रूपान्वयपरत्वेन व्याख्यानमयुक्तम् , जीवात्मनि सम्भवतस्तस्य परमात्मसाधकत्वा-भावादिति भावः । स्थितिनियमनादय इत्यादिशब्देन धारकत्वादिरभिप्रेतः । अस्य हेतोस्सिद्धान्तसाधकत्वं दर्शयति ( अतश्चेति ) अनेन सिद्धान्तसाधकहेतुं वदता पूर्वपक्षहेतोरन्यथासिद्धिश्च फलिता, तामाह ( अतः प्रसिद्धवदिति ) श्रुति-प्रसिद्धत्वात्प्रसिद्धवन्निर्देशः पूर्वपक्षिणोक्तोऽस्मत्पक्षेपि सम्भवतीति । पूर्वपक्षहेत्वन्त-रस्य चान्यथासिद्धिं सूत्राभिप्रेतां दर्शयति ( तत एवेति ) तत एव– श्रुतिप्रसिद्धे-रेव । शास्त्रप्रतिपन्नं हि तत्त्वं योगिभिरुपास्यं दृश्यञ्च, 'यत्तदद्रेश्य'मित्युक्त्वा 'परि-पश्यन्ति धीराः' इत्युक्तेः, 'गूढोऽत्मा न प्रकाशते दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभि'रित्युक्तेश्च, अतोऽर्थतश्शब्दतश्च श्रुत्यन्तरप्रसिद्धेरिति भावः । यादसां समुद्रादिवत्स्थानिनः परमात्मनोऽक्षिस्थानात् परिच्छिन्नत्वशङ्काव्युदासपरत्वं सूत्रस्यायुक्तम्, 'अर्भकौकस्त्वा'दिति सूत्रेण तस्याः परिहृततया शङ्कानुदयात् ।

卐 भावप्रकाशिका 卐

पदेशवच्च सर्वगतस्यापि ब्रह्मण उपलब्ध्यर्थं स्थानविशेषो न विरुध्यत इत्येव परै-रुक्तम् . नतु नामरूपवत्ताया अपरमात्मसाधकत्वमुपन्यस्तम् । येनायं दोषस्यादिति चेत् . उच्यते ; सर्वगतस्य ब्रह्मणः कथमत्यल्पाक्षिस्थानकत्वमितिशङ्कायां 'यश्चक्षुषि तिष्ठन्' इति श्रुत्यन्तरे चक्षुषः स्थानत्वेन व्यपदेशादित्येवमस्मदुक्तरीत्या वक्तुं शक्यत्वेन नामरूपरहितस्य ब्रह्मणोऽनुचितस्थाननामरूपाणां व्यपदेशदर्शनादिति शिरोवेष्टनेन नासिकाग्रहणस्यायुक्तत्वादित्यत्र तात्पर्यात् । ( अस्मत्पक्षेपि सम्भवतीति ) अन्यथासिद्धिः फलितेति शेषः । ( अर्थतश्शब्दतश्चेति ) 'यश्चक्षुषि तिष्ठन्' इत्या-दावर्थतः प्रसिद्धिः । 'दृश्यते त्वग्र्यया' इत्यादौ शब्दतः, इदमुपलक्षणम् । 'य एषोऽक्षिणि पुरुषो दृश्यते' इत्यक्षिविद्यायां शब्दतोऽर्थतश्च प्रसिद्धिर्द्रष्टया । (साध-

## सुखविशिष्टाभिधानादेव च ॥१५॥

इतश्चाद्याधारः पुरुषोत्तमः [1]"कं ब्रह्म खं ब्रह्म" इति

* श्रुतप्रकाशिका *

अतः साधकान्तरप्रदर्शनपरमिदं सूत्रम् । प्रसिद्धवन्निर्देशापरोक्षाभिधानरूपपूर्वपक्षयुक्तिद्वयं चार्थात्परिहृतम् ॥ .... .... .... ....

॥ सुखविशिष्टाभिधानादेव च ॥ सुखविशिष्टम्—सुखत्वविशिष्टम्. द्व्येकयोरितिवत् ।

छ भावप्रकाशिका छ

कान्तरप्रदर्शनपरमिदं सूत्रमिति ) ननु चक्षुषि स्थितिनियमनादिकं मिलितं परमात्मत्वसाधकम्; उत स्थितिमात्रम् ? । नाद्यः, स्थितिनियमनादेर्मिलितस्य परमात्मत्वसाधकत्वेपि य एषोऽक्षिणीतिवाक्ये मिलितस्याश्रवणात् । न द्वितीयः, स्थितिमात्रस्य परमात्मव्यतिरिक्तेष्वपि सत्त्वेन तदसाधारणत्वाभावात् । अतः पूर्वपक्षोक्तयुक्त्यन्यथासिद्धिपरत्वमेव वक्तव्यमिति चेत्. उच्यते; उत्तरत्र सूत्रार्थनिष्कर्षावसरे श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थशङ्कापरिहारपरं द्वितीयसूत्रमित्याचार्यैरेव वक्ष्यमाणत्वान्न तत्राग्रहः ॥ .... .... .... .... ....

"उपकोसलो ह वै कामलायनस्सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य ह द्वात्रिंशद्वर्षाण्यग्नीन् परिचचार । स ह स्मान्यानन्तेवासिनस्समावर्तयंस्तं ह स्मै व न समावर्तयति । तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् पर्यचारीत् । मा त्वाऽग्नयः परिप्रावोचन् प्रब्रूह्यस्मा इति । तस्मै हा प्रोच्यैव प्रवासांचक्रे । स ह व्याधिनाऽनशितुं दध्रे । तमाचार्यजायोवाच । ब्रह्मचारिन्नशान किंनु नाश्नासीति । स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया व्याधिभिः परिपूर्णोस्मि नाशिष्यामीति । अथ हाग्नयस्समुदिरे । तप्तो ब्रह्मचारी कुशलं न पर्यचारीत् । हन्तास्मै प्रब्रवामेति । तस्मै होचुः । प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति । ते होचुः । यदेव कं तदेव खं यदेव खं तदेव कमिति । प्राणं च हास्मै तदाकाशं चोचुः । अथ हैनं गार्हपत्योऽनुशशास । पृथिव्यग्निरन्नमादित्य इति । य एष आदित्ये पुरुषो दृश्यते सोहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्ते । अपहते पापकृत्यां लोकीभवति । सर्व-

१ छां ४-१०-५ ॥

**प्रकृतस्य सुखविशिष्टस्य ब्रह्मणः उपासनस्थानविधानार्थं संयद्वामत्वादिगुणविधानार्थं च 'य एषोऽक्षिणि पुरुषः"**

* श्रुतप्रकाशिका *

'तद्गुणसारत्वा'दितिन्यायेन धर्मभूतसुखविशिष्टमिति वा । 'कं ब्रह्म खं ब्रह्मे'त्युक्तस्य ब्रह्मणः पुनरभिधानं किमर्थमित्यत्राह ( उपासनस्थानेति ) 'एतदमृतमेतदभयमेत-

* भावप्रकाशिका *

मायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्ते उपवयन्तं भुञ्जामोऽस्मिंश्च लोके अमुष्मिंश्च य एतमेवंविद्वानुपास्ते अथ हैनमन्वाहार्यपचनोऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति । य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्ते' इत्यादि पूर्ववत् । अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोहमस्मि स एवाहमस्मीति स य एतमेवंविद्वानुपास्ते' इत्यादि । ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्या चात्मविद्या च आचार्यस्तु ते गतिं वक्तेति आजगामाहास्याचार्यस्तमाचार्योऽभ्युवाद उपकोसला इति भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति कोनु मानुशिष्याद्भो इति उहापेव निह्नुते इमे नूनमीदृशा अन्यादृशा इति हाग्नीनभ्यूदे । किं नु सोम्य किल तेऽवोचन् इदमिति ह प्रतिजज्ञे लोकान् वा व किल सोम्य ते अवोचन् अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति । तस्मै होवाच य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मेति । तद्यद्यप्यस्मिन् सर्पिर्वा उदकं वा सिञ्चति वर्त्मनीव गच्छति एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद एष उ एव वामनिः । एष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद । एष उ एव भामनिरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद । अथ यदु चैवास्मिन शव्यं कुर्वन्ति यदु च नार्चिषमेवाभिसम्भवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षम् आपूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासास्तान् मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते" इति

इत्यभिधानात् । एवकारो नैरपेक्ष्यं हेतोर्द्योतयति ॥

नन्वग्निविद्याव्यवधानात् [1]"कं ब्रह्म" इति प्रकृतं ब्रह्म नेह सन्निधत्ते। तथा हि, अग्नयः [1]"प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म" इति ब्रह्मविद्यामुपदिश्य [2]"अथ हैनं गार्हपत्योऽनुशशास" इत्यारभ्याग्नीनामुपासनमुपदिदिशुः । न चाग्निविद्या ब्रह्मविद्याङ्गमिति शक्यं वक्तुम्; ब्रह्मविद्याफलानन्तर्गततद्विरोधिसर्वायुःप्राप्तिसन्तत्यविच्छेदादि-

* श्रुतप्रकाशिका *

ब्रह्म' इति ब्रह्मशब्देन कं ब्रह्मेत्युक्तस्य ब्रह्मणः प्रत्यभिज्ञानादित्यर्थः । एवकारप्रयोजनमाह (एवेति) पूर्वसूत्रद्वयोक्तं हेतुद्वयं व्यतिरेकोक्तिसापेक्षम् 'अनवस्थितेरसम्भवात्' इति हि वक्ष्यते, अयं तु हेतुर्व्यतिरेकोक्तिनिरपेक्ष इति भावः ॥ प्रकरणविच्छेदं दर्शयन् चोदयति (नन्विति) कथमग्निविद्याव्यवधानमित्यत्राह (तथा हीति) तर्हि अङ्गाङ्गिभावेनाविरोध इत्यत्राह (न चेति) 'फलवत्सन्निधावफलं तदङ्गम्' इति न्यायादिति भावः । अङ्गानामप्यङ्गिफलाविरुद्धफलमुपपद्यत

* भावप्रकाशिका *

श्रुतिक्रमः । श्रुत्यनुरोधेन सूत्रं योजयित्वा सूत्रानुरोधेन श्रुतिं योजयति (तद्गुणसारत्वादितिन्यायेनेति) (अयन्तु हेतुर्व्यतिरेकोक्तिनिरपेक्ष इतीति) इदमुपलक्षणम्, स्वसद्भावसाधने हेत्वन्तरनिरपेक्ष इति द्रष्टव्यम् । अत एव भाष्ये सामान्यत एवकारो नैरपेक्ष्यं द्योतयतीत्युक्तम् । ततश्च ब्रह्मणः प्रस्तुतत्वेऽप्यग्निविद्याव्यवहितत्वान्नास्य परामर्शः, अतस्सुखविशिष्टाभिधानादिति हेतोरसिद्धिरिति या शङ्का सापि नैरपेक्ष्यद्योतकेनैवकारेण सूत्रकृता व्यावर्त्यत इति भाष्याभिप्राय इति भावः॥ (अङ्गानामप्यङ्गिफलाविरुद्धेति) पात्रधारणोपयुक्तप्रस्तरप्रतिपत्तिरूपतया क्रत्वर्थस्यैव सतः प्रस्तरप्रहरणस्य श्रुतिविनियुक्तायुरादिफलप्रदिपादकसूक्तवाककरणकत्वान्यथानुपपत्त्या फलसाधनत्ववत् ब्रह्मविद्याङ्गभूतायाः अग्निविद्याया अपि फलार्थत्वमुपपद्यत इति भावः । उपक्रमोपसंहारयोरुभय-

१ छां. ४-१०-५ ॥ | २ छां. ४-११-१ ॥

फलश्रवणात् । उच्यते ; 'प्राणो ब्रह्म' 'एतदमृतमेतद-भयमेतद्ब्रह्म' इत्युभयत्र ब्रह्मसंशब्दनात्। [1]"आचार्य्यस्तु ते गतिं वक्ता" इत्यग्निवचनाच्च गत्युपदेशात्पूर्वं ब्रह्म-विद्याया असमाप्तेस्तन्मध्यगताग्निविद्या ब्रह्मविद्याङ्ग-मिति निश्चीयते । [2]'अथ हैनं गार्हपत्योऽनुशशास' इति ब्रह्मविद्याधिकृतस्यैवाग्निविद्योपदेशाच्च । किञ्च [3]'व्याधिभिः परिपूर्णोऽस्मि' इति ब्रह्मप्राप्तिव्यतिरिक्त-नानाविधकामोपहतिपूर्वकगर्भजन्मजरामरणादिभव-भयोपतप्तायोपकोसलाय 'एषा सोम्य ते ऽस्मद्विद्या-

* श्रुतप्रकाशिका *

इति शङ्कापरिहारार्थं तद्विरोधीत्युक्तम्। प्रकरणाविच्छेदेन परिहरति (उच्यत इति) उभयत्र उपक्रमोपसंहारयोः ब्रह्मसंशब्दनम्, अग्निविद्यायाः प्राक् ब्रह्मविद्यायाः असमाप्तिः, ब्रह्मविद्याधिकृतस्य अग्निविद्योपदेशः, तापत्रयातुरस्य तच्छान्त्यर्थमुभयोः समुच्चित्योपदेशश्चेति हेतुचतुष्टयेनाङ्गाङ्गित्वमाह (प्राणो ब्रह्मेत्यादिना) 'अथ हैनं गार्हपत्योऽनुशशास' इत्यत्र एनमित्यन्वादेशेन ब्रह्मविद्याधिकृतत्वे तात्पर्यं सिद्धम्। शब्दतः प्रकृतस्यैव पुनः परामर्शो ह्यन्वादेशः, न तु यथाकथञ्चित् बुद्धिस्थमात्र-

ध भावप्रकाशिका ध

त्रेति योजना, नतु व्याख्येयं पदम् । तद्वाक्यस्योत्तरत्रावतरिष्यमाणत्वादिति मन्तव्यम् । (हेतुचतुष्टयेनेति) यद्यप्युपक्रमोपसंहारयोर्ब्रह्मसंशब्दनमपि 'आचार्यस्तु ते गतिं वक्ता' इत्यग्निवचनवदग्निविद्यायाः प्राक् ब्रह्मविद्याया असमाप्तावेव हेतुः । ततश्च प्रस्तुतब्रह्मविद्योपक्रमतदुपसंहारमध्यपतितत्वात् 'अथ हैनम्' इत्यन्वा-देशात् । समुच्चित्योपदेशाच्चेति हेतुत्रयमेवोपन्यस्यत इति शक्यं वक्तुम् । भाष्येपि तथैव प्रतीयते, न प्रकारान्तरेण ; तथापि साक्षात्परम्परोपपादकसाधारण्येन चतुष्ट-यमुपन्यस्तं द्रष्टव्यम् । ( पुनः परामर्शो ह्यन्वादेश इति ) क्रियान्तरसम्बन्धितया

[1] छां. ७-१४-१ ॥ [2] छां ४-११-१ ॥ [3] छां. ४-१६-३ ॥

त्मविद्या च' इति समुच्चित्योपदेशान्मोक्षैकफलात्म-विद्याङ्गत्वमग्निविद्यायाः प्रतीयते। एवं चाङ्गत्वेऽवगते सति फलानुकीर्त्तनमर्थवाद इति गम्यते। न चात्र मोक्षविरोधिफलं किञ्चिच्छ्रूयते, "अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यापर-पुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमु-ष्मिंश्च' इत्यमीषां फलानां मोक्षाधिकृतस्यानुगुणत्वात्। अपहते पापकृत्याम्-- ब्रह्मप्राप्तिविरोधि पापं कर्म्मापहन्ति। लोकी भवति-- तद्विरोधिनि पापे निरस्ते ब्रह्म-लोकं प्राप्नोति। सर्वमायुरेति-- ब्रह्मोपासनसमाप्तेर्या-वदायुरपेक्षितम्, तत्सर्वमेति। ज्योग्जीवति- व्याध्यादि-

---

* श्रुतप्रकाशिका *

परामर्शः, अत एनमिति निर्देशः श्रुतब्रह्मविद्यस्यैवाग्निविद्याधिकारित्वज्ञापकः (समु-च्चित्योपदेशादिति) समुच्चयशब्द उपदेष्टव्यत्वविशेषविवक्षया समसमुच्चयपरः। यद्वा सम्बन्धमात्रपरः, स चाङ्गाङ्गिभावे पर्यवस्यति। फलविरोधमभ्युपगम्य परिहरति (एवञ्चेति) 'द्रव्यगुणसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादस्स्यात्' इति हि कर्ममीमांसासूत्रम्। अथ फलविरोध एव नास्तीत्याह (न चेत्यादिना) ज्योक्-उज्ज्वलः। अनेन व्याध्याद्यनुपहतत्वं फलितम्। तदाह (व्याध्यादिभिरिति) कुले

७ भावप्रकाशिका ७

शब्दतः प्रकृतस्य पुनः क्रियान्तरसम्बन्धितया शब्दतः प्रतिपादनमन्वादेश इत्यर्थः। (उपदेष्टव्यत्वविशेषविवक्षयेति) मोक्षफले समप्रधानत्वाभावेन समुच्चयाभावे-प्युपदेशक्रियायां समुच्चयस्सम्भवतीति भावः। (यद्वा सम्बन्धमात्रपर इति) ननु समप्राधान्येन सम्बन्धपर इत्यर्थः। 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्' इति जैमिनीयसूत्रपाठः। द्रव्यगुणसंस्कारकर्मस्विति क्वचित् कोशे पाठो लेखकस्खलनकृतः। एतत्सूत्रार्थश्च शेषत्वात् पुरुषार्थवाद इत्यत्रास्माभिस्स्पष्टयिष्यते।

भिरनुपहतो यावद्ब्रह्मप्राप्ति जीवति । नास्यापरपुरुषाः क्षीयन्ते-अस्य शिष्यप्रशिष्यादयः पुत्रपौत्रादयोऽपि ब्रह्मविद एव भवन्ति । [1]'नास्याब्रह्मवित्कुले भवति' इति च श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयते । उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च-- वयम् अमयस्तमेनमुपभुञ्जामः यावद्ब्रह्मप्राप्ति विघ्नेभ्यः परिपालयाम इति । अतोऽग्निविद्यायाः ब्रह्मविद्याङ्गत्वेन तत्सन्निधानाविरोधात् सुखविशिष्टं प्रकृतमेव ब्रह्मोपासनस्थानविधानार्थं गुणविधानार्थं चोच्यते । ननु 'आचार्य्यस्तु ते गतिं वक्ता' इति गतिमात्रपरिशेषणादाचार्य्येण गतिरेवोपदेश्येति गम्यते, तत्कथं स्थानगुणविध्यर्थतोच्यते ।

* श्रुतप्रकाशिका *

ब्रह्मविदुत्पत्तेर्ब्रह्मविद्यानुगुणफलत्वं दर्शयति ( नास्येति ) ( भुञ्जाम इति ) 'भुज पालनाभ्यवहारयोः' इति धातोः 'भुजोऽनवने' इति ह्यात्मनेपदम्, अतः परस्मैपदत्वादयं धातुरवनार्थ इत्यर्थः । ( परिपालयाम इति ) श्रुतौ उपशब्दार्थः परिणोपसर्गेण सूचितः । विघ्ननिवारणपर्यन्तः किञ्चित्कारो ब्रह्मविद्यां प्रत्यग्निविद्याया अङ्गत्वनिर्वाहक इत्यभिप्रायः । उक्तहेतुभिरेकप्रकरणत्वे स्थितेपि ब्रह्मणः पुनरवक्तव्यत्वमुखेन चोदयति ( नन्विति ) स्थानगुणयो-

* भावप्रकाशिका *

( ब्रह्मविद्यानुगुणफलत्वं दर्शयतीति ) सत्पुत्रपौत्रादिसन्तत्यभिवृद्धेः पितृपितामहाद्यार्जितविद्यार्थपुण्यकर्मफलाभिवृद्धौ हेतुत्वादित्यर्थः । 'शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां साम्पराये कीर्तिं स्वर्गं च वर्धयन्ति' इत्यापस्तम्बोक्तेरिति द्रष्टव्यम् । भाष्ये-- श्रुत्यन्तरे ब्रह्मविद्याफलत्वेन श्रूयत इति । नचाग्निविद्यायां ब्रह्मविद्योपयुक्तसत्सन्ततिरूपफलजनकत्वकीर्तनावसरे सत्सन्ततेः ब्रह्मविद्याफलत्वप्रापकश्रुत्यन्तरोदा-

१ मु. ३-२-९ ॥

तदभिधीयते 'आचार्य्यस्तु ते गतिं वक्ता' इत्यस्यायमभिप्रायः,- ब्रह्मविद्यामनुपदिश्य प्रोषुषि गुरौ तदलाभादनाश्वासमुपकोसलमुज्जीवयितुं स्वपरिचरणप्रीता गार्हपत्यादयो. गुरोरग्नयस्तस्मै ब्रह्मस्वरूपमात्रं तदङ्गभूतां चाग्निविद्यामुपदिश्य "आचार्य्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' इति श्रुत्यर्थमालोच्य साधुतमत्वप्राप्त्यर्थमाचार्य्य एवास्य संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमर्चिरादिकां च गतिमुपदिशत्विति मत्वा 'आचार्य्यस्तु ते गतिं वक्ता' इत्यवोचन्। गतिग्रहणमुप-

* श्रुतप्रकाशिका *

विधेयत्वे सति हि तदर्थं पुनर्ब्रह्मणोऽभिधानम् . तत्तु नास्ति , पूर्वं तयोराचार्येण वक्ष्यमाणत्वाकथनात्, अतस्स्थानादिपरवाक्यं न परमात्मविषयमित्यन्यपरमिदं वाक्यमित्यर्थः । परिहरति ( तदभिधीयत इत्यादिना ) परिपूर्णोपदेशोऽनुपदेशो वा स्यात् , कथं विकलोपदेश इत्याशङ्कां च परिहरन् स्थानगुणविध्यर्थतामुपपादयति ( आचार्यस्त्वित्यादिना ) साधिष्ठशब्दः साधुतमत्वशब्देन व्याख्यातः । साधिष्ठमिति भावप्रधानो निर्देश इत्यर्थः । ( गतिग्रहणमिति ) उपदेश्यविद्याशेषमाचार्यो वक्तेति 'आचार्य्यस्तु ते गतिं वक्ता' इति वदतामभिप्राय इत्यर्थः ।

ꣳ भावप्रकाशिका ꣳ

हरणमयुक्तमिति वाच्यम् ; निर्दिष्टफलानां पूर्वपक्ष्यभिमतब्रह्मविद्याविरोधित्वप्रतिक्षेपमात्रे तात्पर्यात् । अङ्गत्यनुकूलफलजनकत्वाभावेपि अङ्गिविरुद्धफलजनकत्वाभावेप्यङ्गत्वं सम्भवतीत्येव भाष्यकृत्संरम्भात् . अत एव वक्ष्यति–'अन्यथा त्वशब्दात्'इति सूत्रे आर्थवादिकमपि फलं तदविरुद्धं ग्राह्यमेवेति । ( उपशब्दार्थ इति) पर्यन्तवाचिना परीत्युपसर्गेण उपशब्दार्थभूतं सामीप्यं सूच्यते, अतो विघ्ननिवारणपर्यन्तत्वलाभ इति भावः । ( एकप्रकरणत्वे स्थितेपीति ) पूर्वं ब्रह्मणः प्रकृतत्वे अग्निविद्याव्यवधानाभावे च सत्यपीत्यर्थः । सह व्याधिनाऽनशितुं दध्रे इति

देश्यविद्याशेषप्रदर्शनार्थम् । अत एवाचार्य्योऽपि 'अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इत्युपक्रम्य संयद्वामत्वादिकल्याणगुणविशिष्टं ब्रह्माक्षिस्थानोपास्यमर्चिरादिकाञ्च गतिमुपदिदेश । अतः 'कं ब्रह्म खं ब्रह्म' इति सुखविशिष्टस्य प्रकृतस्यैव ब्रह्मणोऽत्राभिधानादयमक्ष्याधारः परमात्मा ॥ १५ ॥

ननु च ' कं ब्रह्म खं ब्रह्म' इति परं ब्रह्माभिहितमिति कथमवगम्यते ? यस्येहाक्ष्याधारतयाऽभिधानं ब्रूषे । यावता 'कं ब्रह्म खं ब्रह्म' इति प्रसिद्धाकाशलौकिकसुखयोरेव ब्रह्मदृष्टिर्विधीयत इति प्रतिभाति "नाम ब्रह्म' ' मनो ब्रह्म' इत्यादिवचनसारूप्यात् । तत्राह—

---

* श्रुतप्रकाशिका *

तदेवोपपादयति (अत एवेति) सूत्रार्थं निगमयति (अत इति) अतः— उपकोसलविषादपरिहारस्यापेक्षितत्वाद्गुरुमुखाच्छ्रवणेन साधुतमत्वायापुष्कलमुपदिष्टत्वाच्च गतिग्रहणस्य प्रदर्शनार्थत्वादित्यर्थः ॥ .... .... .... .... ....

उत्तरसूत्रशङ्कामाह ( ननु चेति ) यावता— प्रत्युत । ( वचनसारूप्यादिति ) "नाम ब्रह्म' 'मनो ब्रह्म" इत्यादिवद्दृष्टिविशेषणस्य ब्रह्मणः पश्चादुपादानं विशेष्यस्य प्रथमोपादानं च सारूप्यमभिप्रेतम् । 'प्राणञ्च हास्मै तदाकाशञ्चोचुः' इति प्राणाकाशशब्दाभ्यां निगमितम्, न तु ब्रह्मशब्देन ; ततोऽपि दृष्टिविधिरिति भावः । तस्याप्युत्तरत्र परिहरिष्यमाणत्वात् ।—

❁ भावप्रकाशिका ❁

वाक्यार्थमभिप्रयन्नाह, भाष्ये—अनाश्वासमिति । 'उपेयिवाननाश्वा'निति नञ्पूर्वाद्श्नातेरनाश्वानितिरूपम् , अभुक्तवन्तमित्यर्थः ॥ यावतेत्येतद्व्याचष्टे ( प्रत्युतेति ) ( नतु ब्रह्मशब्देनेति ) ब्रह्मोपदिष्टं चेत् ब्रह्मोचुरित्येव निगमनं स्यादिति भावः ॥

## अत एव च स ब्रह्म ॥ १६ ॥

**यतस्तत्र "यदेव कं तदेव खम्" इति सुखविशिष्टस्याकाशस्याभिधानम्; अत एव खशब्दाभिधेयस्सः**

* श्रुतप्रकाशिका *

॥ अत एव च स ब्रह्म ॥ अत एवेत्येतद्व्याचष्टे ( यतस्तत्रेति ) निगमनवाक्यस्थपुँल्लिङ्गाकाशशब्दकटाक्षेण सूत्रे स इति निर्देशः । अतश्शब्दः सुखविशिष्टाभिधानपरः । ननु अतश्शब्दः प्रकृतवाची 'प्राणो ब्रह्म कं ब्रह्म' इति वाक्योदितस्य सुखविशिष्टस्य ब्रह्मणः स्थानगुणविध्यर्थमभिधानं हि प्रकृतं पूर्वसूत्रे, तदेव सुखविशिष्टाभिधानमत्रात इति परामृश्यते । तत् कथं 'यदेव खं तदेव कम्' इति सुखविशिष्टाभिधानमतश्शब्दार्थतयोच्यते ? । उच्यते,– सामान्येन सुखविशिष्टाभिधानं हेतुतया अतश्शब्देन परामृश्यते, तत्र सुखविशिष्टाभिधानव्यक्तिविशेषौ वाक्यद्वयस्थाविह सूत्रद्वयेऽप्यर्थवशाद्धेतुभूतौ, यथा "नात्मा श्रुतेः" "ज्ञोऽत एव"

७ भावप्रकाशिका ७

( निगमनवाक्यस्थपुल्लिङ्गेति ) 'प्राणं च हास्मै तदाकाशं चोचुः' इति निगमनवाक्यस्थेत्यर्थः । न चाकाशशब्दस्योभयलिङ्गतया पुल्लिङ्गत्वसम्भवेपि नपुंसकलिङ्गतत्पदसमभिव्याहारान्निगमनवाक्यस्थाकाशशब्दस्यापि नपुंसकतया कथं तत्कटाक्षेण स इति पुल्लिङ्गप्रयोग इति वाच्यम्, स चासावाकाशश्च तदाकाश इति तदाकाशपदस्य समस्ततया तस्य नपुंसकलिङ्गत्वे प्रमाणाभावेन 'आत्मन आकाशस्सम्भूतः' 'आकाश इति होवाच' 'आकाशो ह वै नामरूपयोर्निर्वहिता' 'यदेष आकाश आनन्दो न स्यात्" इत्यादिप्रयोगानुसारेण आकाशशब्दस्य पुल्लिङ्गतया प्रसिद्धिप्राचुर्येण पुल्लिङ्गत्वोपपत्तेः, इदञ्चोपलक्षणम् । कं ब्रह्म खं ब्रह्मेतिवाक्यानां ब्रह्मेत्यादिवाक्यसारूप्यात् दृष्टिविधित्वमस्त्विति वदतः प्राणो ब्रह्मेतिवाक्येपि दृष्टिविधित्वमभिमतम् । अतः प्राणो ब्रह्मेत्यत्रापि दृष्टिविधित्वपरिहारेण प्राणस्यापि ब्रह्मत्वमिह सूत्रे सिसाधयिषितम् । अतः प्रक्रमश्रुतपुल्लिङ्गप्राणशब्दानुरोधात् स इति प्राणः परामृष्ट इत्युक्तौ दोषाभावात् न चैवं कंखंशब्दानिर्दिष्टयोर्ब्रह्मत्वं नोक्तं स्यादिति वाच्यम् : खशब्दाभिधेयो यस्स आकाश इत्युक्तावपीतरयोस्समत्वात् । यदि चैकस्य निर्देशे इतरयोरपि निर्दिष्टत्वं सिद्धमिति मतम्, तदसत्प-

आकाशः परं ब्रह्म । एतदुक्तं भवति; अग्निभिः 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इत्युक्ते उपकोसल उवाच "विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामि" इति ॥ अस्यायमभिप्रायः,— न तावत्प्राणादिप्रतीकोपासनमग्निभिरभिहितम् , जन्मजरामरणादिभवभयभीतस्य मुमुक्षोर्ब्रह्मोपदेशाय प्रवृत्तत्वात्, अतो ब्रह्मैवोपास्यमुपदिष्टम् । तत्र प्रसिद्धैः प्राणादिभिस्समानाधिकरणं ब्रह्म निर्दिष्टम्, तेषु च प्राणविशिष्टत्वं जगद्विधरणयोगेन वा प्राणशरीरतया प्राणस्य नियन्तृत्वेन वा ब्रह्मण उपपद्यत इति 'विजानाम्यहं यत्प्राणो

* श्रुतप्रकाशिका *

इत्यत्र श्रुतिमात्रस्यातच्छब्दपरामृष्टत्वेऽप्यर्थसामर्थ्याच्छ्रुतिव्यक्तिविशेषसिद्धिः तद्वदिहापीति । भाष्ये यदेव कं तदेव खमिति न वाक्योपादानम् , अपि त्वर्थोपादानम्. 'यद्वाव कं तदेव खम्' इति हि वाक्यम् । यदेव कं तदेव खमित्यत्राप्यन्योन्यदृष्टिविधिरेवास्तु, नान्योन्यव्यवच्छेदकत्वम्, व्यवच्छेदकत्वे वा कथं खशब्दाभिधेयस्याकाशस्य परब्रह्मत्वमिति शङ्काद्वयं हृदि निधायाह ( एतदुक्तमिति ) ( अग्निभिरित्यादि ) दृष्टिविधित्वे 'प्राणो ब्रह्मे'त्यस्य ज्ञातत्वं 'कं च तु खं च' इत्यस्याज्ञातत्वं च नोपपद्यते, दृष्टिविधित्वेन सर्वस्य ज्ञातत्वादिति ,भावः । प्राणो ब्रह्मेत्यस्य ज्ञातत्वे अन्यस्याज्ञातत्वे च किं वैषम्यम् ? आकाशस्य सुखविशिष्टत्वं च कथमित्यपेक्षायां विजानाम्यहमितिवाक्यस्याभिप्रायं विवृणोति ( अस्यायमिति ) ( न

* भावप्रकाशिका *

क्षेपि समानमित्यास्तां तावत् । ( वाक्यद्वयस्याविति ) 'य एषोऽक्षिणि पुरुषः' इत्यत्र स्थानगुणविध्यर्थं कं ब्रह्मेतिवाक्योक्तसुखविशिष्टाभिधानव्यक्तिविशेष एकः पूर्वसूत्रे साधकतयोक्तः । इह तु 'यद्वाव कं तदेव ख'मितिवाक्यगताभिधानव्यक्तिविशेष एक इति द्वौ व्यक्तिविशेषावित्यर्थः । ( अर्थसामर्थ्याच्छ्रुतिव्यक्तिविशेष-

ब्रह्म' इत्युक्तवान् । तथा सुखाकाशयोरपि ब्रह्मणः शरीरतया तन्नियाम्यत्वेन विशेषणत्वम् ; उतान्योन्यव्यवच्छेदकतया निरतिशयानन्दरूपब्रह्मस्वरूपसमर्पणपरत्वेन वा ? । तत्र पृथग्भूतयोः शरीरतया विशेषणत्वे वैषयिकसुखभूताकाशयोर्नियामकत्वं ब्रह्मणः स्यादिति स्वरूपावगतिर्न स्यात्, अन्योन्यव्यवच्छेदकत्वे अपरिच्छिन्नानन्दैकस्वरूपत्वं ब्रह्मणः स्यादित्यन्यतरप्रकारनिर्दिधारयिषया "कं च तु खं च न विजानामि"

* श्रुतप्रकाशिका *

तावदित्यादि ) मुमुक्षोरुपदिष्टत्वात् प्रतीकोपासनव्युदासः, मुमुक्षोः प्रतीकोपासनं न कर्त्तव्यमिति ज्ञानं पूर्वमेव सम्भवति, यथा मुमुक्षूपास्यं ब्रह्मेति ज्ञानं सम्भवति तद्वत्. शरीरवाचिशब्दस्य शरीरिपर्यन्ताभिधायित्वं च देवमनुष्यादिशब्देषु व्युत्पन्नमेव। (तथेत्यादि) शरीरं च नियाम्यमिति लोकसिद्धत्वात् ज्ञातमेव। 'यदेष आकाश आनन्दः' इत्यादिश्रुतिषु ब्रह्मशब्देन विनाप्याकाशशब्दस्यानन्दविशेषणत्वेन प्रयोगदर्शनात् तस्य च महत्त्वोपस्थापनेनैवानन्दविशेषणत्वोपपत्तेर्ब्रह्मणोऽपरिच्छिन्न-

७ भावप्रकाशिका ७

सिद्धिरिति ) नात्माश्रुतेरित्यत्रात्मानुत्पत्तिप्रतिपादिका 'न जायते म्रियते' इत्यादिका विवक्षिता या श्रुतिः न सा श्रुतिव्यक्तिः 'ज्ञोऽत एव' इत्यनन्तरसूत्रे अतश्शब्देन परामृश्यते, अपितु ज्ञत्वप्रतिपादिका 'विज्ञातारमरे केने'त्यादिकाऽन्यैव श्रुतिः तद्वदित्यर्थः । नन्वश्रुतवेदान्तस्योपकोसलस्य मुमुक्षवे प्रतीकोपासनं नोपदेश्यमिति ज्ञानं तथा प्राणो ब्रह्मेत्यत्र प्राणस्य शरीरत्वं शरीरत्वे च शरीरवाचिशब्दानां शरीरिपर्यन्तत्वमित्येतावज्ज्ञानं कथं स्यात्। शरीरं नियाम्यमिति ज्ञानञ्च कथम् ? तथा कं ब्रह्म खं ब्रह्मेत्यत्र प्राणो ब्रह्मेत्यत्रेव वैषयिकसुखभूताकाशशरीरकत्वनिश्चयस्यैव सम्भवेनान्योन्यविशेषणभावस्य क्वाप्यदृष्टचरस्य कथं प्रतिपाद्यत्वशङ्कोत्थानम्, अतश्चैतादृशविचारसम्भवः कथमितीमामाशङ्कां परिहरति ( मुमुक्षोः प्रतीकोपा-

इत्युक्तवान् । उपकोसलस्येममाशयं जानन्तोऽग्नयः "यद्वा व कं तदेव खं यदेव खं तदेव कम्" इत्यूचिरे । ब्रह्मणस्सुखरूपत्वमेवापरिच्छिन्नमित्यर्थः । अतः प्राणशरीरतया प्राणविशिष्टं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपं चेति निगमितम्, "प्राणञ्च हास्मै तदाकाशं चोचुः"

* श्रुतप्रकाशिका *

सुखरूपत्वप्रतीतिसम्भवादेवं विचार उपपद्यत इति भावः । ( उपकोसलस्येत्यादि ) 'यद्वा व कं तदेव खं यदेव खं तदेव क'मित्यत्र न दृष्टिविधिरिवं शङ्कनीयम्, तथा सति 'कं च तु खं च न विजानामि' इत्यस्योत्तरत्वायोगात् । मदर्थान्तरदृष्टिविध्यज्ञानस्य दृष्टिविध्यन्तरमुत्तरं भवतीत्यभिप्रायः, एवं 'कं च तु खं च न विजानामी'त्यज्ञानवचनान्मुमुक्षोरुपदिष्टत्वादर्थान्तराज्ञानं प्रति दृष्टिविध्यन्तरस्योत्तरत्वायोगाच्च 'यद्वा व क'मित्यादिवाक्यस्य दृष्टिविधिपरत्वानुपपत्तेरन्योन्यव्यवच्छेदपरत्वं स्थितम्, 'अस्मद्विद्यात्मविद्या च' इति अग्नीनां वचने पूर्वप्रकृतविद्यायाः आत्मविद्यात्वावगमाच्च ब्रह्मणो दृष्टिविशेषणत्वशङ्का निरस्ता । तथा सत्यस्य वाक्यस्यार्थमाह ( ब्रह्मण इति ) निगमनवाक्यस्यार्थमाह ( अत इति ) उक्तहेतुभिर्दृष्टिविधित्वायोगात् 'यद्वा व कम्' इत्यादि वाक्ये कंखमितिशब्दयोरन्योन्यव्यवच्छेदकत्वेनापरिच्छिन्नसुखरूपब्रह्मपरत्वादुपसंहारस्योपक्रमानुगुण्यस्य न्याय्यत्वात् 'प्राणं च' इत्युपसंहारवाक्यमुक्तार्थपरमित्यर्थः । "प्राणं चे'ति प्राणो ब्रह्मे'त्युक्तार्थस्य निगमनम् । 'तदाकाशं चे'ति 'यद्वा व क'मित्यादिवाक्यार्थनिगमनम् । 'तदाकाश'मित्यत्र प्रकृतपरामर्शिना तच्छब्देन सुखरूपत्वमभिप्रेतम् । कखयोरन्योन्यव्यवच्छेद्यव्यवच्छेदकत्वे

* भावप्रकाशिका *

सनमित्यादिना ) सम्भवति तद्वदितिच्छेदः, प्रतीकोपासनशङ्कायां मुमुक्षूपदेश्यत्वज्ञाताज्ञातविभागकथनानुपपत्तिनिरास्यत्वे सौत्रहेतोर्निरासकत्वं न स्यादित्याशङ्क्य सौत्रहेतोरपि निरासकत्वं समर्थ्यते ( यद्वा व कं तदेव खमित्यादिना ) ( न अर्थान्तरदृष्टिविध्यज्ञानस्येति) अन्यतरप्रकारं न जानामीति वदन्तं प्रतीत्यर्थः । (अज्ञानवचनादिति ) दृष्टिविधित्वेन सर्वस्यापि ज्ञातत्वादिति पूर्वमुक्तत्वादित्यर्थः ।

इति। अतः 'कं ब्रह्म खं ब्रह्म' इत्यत्रापरिच्छिन्नसुखं ब्रह्म प्रतिपादितमिति परं ब्रह्मैव तत्र प्रकृतम्, तदेव चात्राऽक्ष्याधारतयाऽभिधीयत इत्यक्ष्याधारः परमात्मा। १६।

श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १७ ॥

श्रुतोपनिषत्कस्य-- अधिगतपरमपुरुषयाथात्म्यस्यानु-

---

* श्रुतप्रकाशिका *

विशेषणयोरन्योन्यविशेषणविशेष्यभावप्रसङ्ग इति चेत्. ततः किम्? नीलोत्पलादौ नीलत्वोत्पलत्वादिधर्माणामन्योन्यविशेषणविशेष्यभावस्याप्रामाणिकत्वात्तत्रानिष्टत्वं अत्र तु प्रामाणिकत्वान्नानिष्टत्वमिति भावः। 'कं ब्रह्म खं ब्रह्मे'तिवाक्यप्रतिपाद्यं न सुखविशिष्टं ब्रह्मेति शङ्कापरिहारार्थं हि 'अत एव च स ब्रह्मे'ति सूत्रस्योत्थानम्, तस्याश्शङ्काया अनेन परिहृतत्वं दर्शयति (अतः कं ब्रह्मेति) यद्वा व कमित्यादिवाक्यस्यापरिच्छिन्नसुखरूपब्रह्मपरत्वात् निगमनवाक्यस्यापि तदनुगुणार्थत्वात् कं ब्रह्म खं ब्रह्मेतिवाक्ये परं ब्रह्मैव प्रकृतमित्यर्थः। ततः किमक्षिपुरुषस्य परमात्मत्व इति शङ्कायां सूत्रार्थस्याधिकरणार्थोपपादकत्वं दर्शयति (तदेव चेति) अन्यथा वाक्यभेदश्च प्रसजेत्, सम्भवत्येकवाक्यत्वे वाक्यभेदोऽनुपपन्न इति भावः। (इतीति) कं ब्रह्मेति प्रकृतस्यैवाक्ष्याधारत्वप्रतिपादनादक्षिपुरुषः परमात्मेत्यर्थः ॥

॥ श्रुतोपनिषत्कगत्यभिधानाच्च ॥ श्रुतोपनिषत्कस्येति व्याख्येयं पदम्। समस्तमपि व्याख्यानार्थं यस्य निर्दिष्टम्। उपनिषत्सु प्रतीकोपासनानामर्चिरादिगतिरहितानामपि

ꣳ भावप्रकाशिका ꣳ

(अन्योन्यविशेषणविशेष्यभावस्याप्रामाणिकत्वादिति) न चापरिच्छिन्नसुखरूपत्वयोः कंखंशब्दार्थयोरन्योन्यव्यवच्छेदकत्ववन्नीलोत्पलयोरपि परस्परव्यवच्छेदकत्वे को दोषः? यदेव नीलं तदेवोत्पलं यदुत्पलं तन्नीलमिति सम्भवादिति वाच्यम्; तथात्वे विशेषणं विशेष्येणेति समासे पूर्वनिपातानियमप्रसङ्गेनोत्पलनीलमित्यपि प्रयोगस्यादिति भावः। (निगमनवाक्यस्यापीति) 'प्राणं च हास्मै' इति वाक्यस्यापि च स्वारस्यपरित्यागेनान्योन्यविशेषणतया ब्रह्मस्वरूपपरत्वमेव नोपास्यपरत्वमित्याहुः ॥ .... .... .... ....

सन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गति-

* श्रुतिप्रकाशिका *

विद्यमानत्वात्तद्व्यावृत्त्यर्थं व्याचष्टे (अधिगतेति) परमपुरुषशब्देन "तं त्वौपनिषदं पुरुषं विद्धि" इति श्रुतिः स्मारिता। उपासनफलम् अर्चिरादिगतिः, न तु श्रवणफलम्। तत्कथं श्रुतोपनिषत्कगतीत्युक्तमित्यत्राह (अनुसन्धेयतयेति) तर्हि श्रुतब्रह्मण इति वक्तव्ये किमिति साधारणाधिकाराक्षरश्रुतोपनिषत्कपदोपादानमित्यत्राह (श्रुत्यन्तरप्रतिपाद्यमानेति) छान्दोग्य एव प्रदेशान्तरे "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति" इति। वाजसनेयके "य एवमेतद्विदुर्ये चामी अरण्ये श्रद्धां सत्यमित्युपासते तेऽर्चिषमेवाभिसम्भवन्ति" इत्यादिः, कौषीतकीनां पर्यङ्कविद्यायां "सोऽग्निलोकमागच्छति' इत्यादिः, ताभिः प्रतिपाद्यमानेत्यर्थः। गतिचिन्तनस्य ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थं श्रुतोपनिषत्कव्यपदेश इत्यभिप्रायः। अक्षिपुरुषस्याब्रह्मत्वे तत्क्रतुनयविरोध

* भावप्रकाशिका *

(उपनिषत्सु प्रतीकोपासनानामिति) ये श्रुतोपनिषदोपि प्रतीकमुपासते तेषामर्चिरादिगतेरनुसन्धेयत्वाभावात्तद्व्यावृत्त्यर्थमधिगतपरमपुरुषयाथात्म्यस्येति व्याचष्ट इत्यर्थः। नन्वेवमपि ये पुनरधिगतपरमपुरुषयाथात्म्या अदृष्टवैगुण्यवशान्न ब्रह्मोपासते तेषामर्चिरादिगतेरनुसन्धेयत्वाभावात्. पुनरपि स दोषस्तदवस्थ इति चेन्न; अधिगतपरमपुरुषयाथात्म्यस्येत्यस्य ब्रह्मोपासकस्येत्यर्थात्। (ब्रह्मविद्याङ्गत्वज्ञापकश्रुत्यन्तरज्ञापनार्थमिति) श्रुताः पठिताः उपनिषदः अङ्गभावप्रतिपादकत्वेन यस्या गतेः सा श्रुतोपनिषत्का, अङ्गभावप्रतिपादकपठ्यमानोपनिषत्प्रतिपाद्यगत्यभिधानादित्यर्थ इत्येवमावृत्त्या श्रुतोपनिषत्कस्य पुरुषस्य श्रुतोपनिषत्कगत्यभिधानादिति प्रदर्शनार्थम्। श्रुतोपनिषत्केत्यधिकाक्षरोपादानमिति श्रुत्यन्तरप्रतिपाद्यमानार्चिरादिकेति भाष्याभिप्राय इति भावः। ततश्च श्रुतोपनिषत्केत्यनेनायमर्थः कथं लभ्यते? श्रुतब्रह्मण इत्युक्ते कुतो न लभ्यत इति शङ्का पराकृता। सूत्रस्य सर्वतोमुखत्वात् आवृत्तिरलङ्कार इति द्रष्टव्यम् (तत्क्रतुनयविरोध इत्यभिप्रायेणेति प्राप्यस्य परमपुरुषस्योपासनविषयत्वावश्यम्भावादिति भावः। ननु 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदु च न' इति पूर्ववाक्ये अस्मिन्नित्येकवचननिर्देशात्कथं

र्थो तामपुनरावृत्तिलक्षणपरमपुरुषप्राप्तिकरीमुपकोसलायाक्षिपुरुषं श्रुतवते "तेऽर्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षम्" इत्यारभ्य 'चन्द्रमसो विद्युतं तत्पुरुषोऽमानवस्स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते" इत्यन्तेनोपदिशति ; अतोऽप्ययमक्षिपुरुषः परमात्मा ॥ १७ ॥

* श्रुतिप्रकाशिका *

इत्यभिप्रायेणाह ( अपुनरावृत्तीति ) 'अर्चिषमेवे'त्यतः पूर्वं "अथ यदु चास्मिन् शव्यं कुर्वन्ति यदु च न" इति वाक्यम् , तत्रास्मिन्नित्येकवचनं जात्यभिप्रायम् , 'तेऽर्चिष'मितिबहुवचनानुरोधात् । पञ्चाग्निविद्योक्ता गतिरिहानूदिता अपुनरावृत्तिविधानार्थम् ॥ .... .... .... .... ....

भावप्रकाशिका

'तेऽर्चिषमेवाभिसम्भवन्ति' इत्युक्तिरित्याशङ्कय पूर्ववाक्यस्थस्यास्मिन्नित्यंशस्य जात्यभिप्रायत्वान्न दोष इत्यभिप्रयन्नाह ( अर्चिषमेवेत्यतः पूर्वमिति ) नन्वस्यामुपकोसलविद्यायामर्चिरादिगतिप्रतिपादनं व्यर्थम् । 'तद्य इत्थं विदुर्ये चेमे अरण्ये श्रद्धा तप इत्युपासते' इतिपञ्चाग्निविद्यावाक्यसिद्धत्वात् । न च 'आचार्यस्तु ते गतिं वक्ता' इति गतेराचार्यवक्तव्यत्वेनाग्निभिरुपदिष्टत्वात् आचार्येण गतिरुक्तेति वाच्यम्; अग्नयो वा किमर्थं तथोचुरिति पर्यनुयोगस्य तत्रापि समत्वादित्यत्राह ( पञ्चाग्निविद्येति ) ननु श्रुतोपनिषत्कगत्यभिधानं कथमक्षिपुरुषस्य परमात्मत्वसाधकम्, अग्निभिस्सुखविशिष्टब्रह्मोपासनमुपदिश्य तच्छेषत्वेन 'आचार्यस्तु ते गतिं वक्ता' इति आचार्यवक्तव्यत्वेनोक्ता गतिराचार्येणोपदिष्टेत्येतावताक्षिपुरुषस्य ब्रह्मत्वे किमायातम् ? अग्न्युपदिष्टसुखविशिष्टविद्याया ब्रह्मविद्यात्वमात्रेणापि अर्चिरादिगत्यभिधानस्य सङ्गतत्वात् । नचाग्न्युपदिष्टसुखविशिष्टस्य ब्रह्मत्वे सिद्धे सुखविशिष्टाभिधानादेव चेतिसूत्रोक्तन्यायादेवाक्षिपुरुषस्यापि ब्रह्मत्वं सिद्धमिति वाच्यम् ; तथात्वे श्रुतोपनिषत्कसूत्रवैयर्थ्यापत्तेः । नचेदमपि सूत्रमग्न्युपदिष्टसुख-

अनवस्थितेरसम्भवाच्च नेतरः ॥ १८ ॥

प्रतिबिम्बादीनामक्षिणि नियमेनानवस्थानादमृतत्वादीनां च निरुपाधिकानां तेष्वसम्भवान्न परमात्मन इतरः, छायादिरक्षिपुरुषो भवितुमर्हति । प्रतिबिम्बस्य तावत्पुरुषान्तरसन्निधानायत्तत्वान्न नियमेनावस्थानसम्भवः । जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नाव-

* श्रुतप्रकाशिका *

॥ अनवस्थितेरसम्भवाच्च नेतरः ॥ अनवस्थितेरितिपदं व्याचष्टे ( प्रतिबिम्बादीनामिति ) असम्भवादितिपदं व्याचष्टे ( अमृतत्वादीनामिति ) असम्भवादित्यनेन अन्तर उपपत्तेरिति सूत्रार्थस्य व्यतिरेक उक्तः, अनवस्थितेरित्यनेन स्थानादिव्यपदेशाच्चेति सूत्रार्थस्य व्यतिरेको दर्शितः । इतरसूत्रोक्तहेतूनां व्यतिरेकोपपादनानपेक्षत्वाद्व्यतिरेकश्चार्थसिद्ध इति वा व्यतिरेको न प्रदर्शितः । अनवस्थानासम्भवौ प्रतिबिम्बादिषु दर्शयति ( प्रतिबिम्बस्येत्यादिना ) ( सर्वेन्द्रियकन्दभूते स्थानविशेष इति ) हृदीत्यर्थः । "शतञ्चैका च हृदयस्य नाड्यः' 'सन्ततं सिराभिः" इत्युक्तप्रकारेण हृदयसम्बन्धनाडीसम्बन्धानीन्द्रियाणीत्यर्थः, । एवंविधे हृदि जीवस्यावस्थानं "हृदि ह्ययमात्मा" इति श्रुतेरवगम्यते । ननु "नेत्रस्थं जाग्रतं विद्यात् कण्ठे स्वप्नं विनिर्दिशेत् । सुषुप्तं हृदयस्थन्तु तुरीयं मूर्धनि स्थितम्" इति श्रुत्या जीवस्य जागरावस्थायां नेत्रे स्थितिरुच्यते, न चेयं श्रुतिः परमात्मविषया,

ಛ भावप्रकाशिका ಛ

विशिष्टस्यैव ब्रह्मपरत्वसाधकमिति वाच्यम्, एतस्य सूत्रस्य साक्षादक्षिपुरुषब्रह्मत्वोपपादकत्वस्यैव ग्रन्थकृदभिमतत्वादितिचेत्. उच्यते; 'अथ यदु चैवास्मिन् शव्यं कुर्वन्ती'त्यत्र इदंशब्दस्याक्षिपुरुषविद्यानिष्ठविषयत्वस्य परित्यागायोगेनाक्षिपुरुषस्य साक्षाद्ब्रह्मत्वसाधकत्वात् ॥ .... .... .... .... ....

ननु हृदयस्य कथं गोलकादिप्रदेशवर्तीन्द्रियकन्दत्वमित्याशङ्क्य 'शतं चैका च' इत्यादिप्रतिपन्ननाडीद्वारा कन्दत्वमभिप्रयन्नाह ( शतं चैका चेत्यादि ) ( इयं च

स्थानम्। देवतायाश्च "रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः" इति रश्मिद्वारेणावस्थानवचनाद्देशान्तरावस्थितस्यापीन्द्रियाधिष्ठानोपपत्तेर्न चक्षुष्यवस्थानम्। सर्वेषामेवैषां

* श्रुतप्रकाशिका *

तस्य जाग्रत्स्वप्नसुषुप्त्यसम्भवात्। उच्यते,—नेत्रशब्दः सर्वेन्द्रियप्रदर्शनार्थः, जाग्रतमित्युक्तत्वात्तदानीं सर्वेन्द्रियव्यापारदर्शनात् अणुपरिमाणस्य जीवस्य नेत्रमात्रवर्तित्वे सति शब्दादिज्ञानानुपपत्तेः। तत्र च स्थितत्वं नामाधिष्ठातृत्वमात्रमुपसङ्ग्राह्यम्, अधिष्ठानस्यापि स्वाधारत्वन्तर्भूतत्वात्। अणोस्तस्य युगपदेव तत्तदिन्द्रियाधिष्ठानानुपपत्तौ पश्यतः शृण्वतो वा गमनादानोचितपादपाण्याद्यधिष्ठानानुपपत्त्या सर्वेन्द्रियकन्दभूते हृदि स्थितस्य धर्मभूतज्ञानप्रसरणद्वारेणाधिष्ठातृत्वमिति "नेत्रस्थं जाग्रतं विद्यात्" इति श्रुतेरर्थ इत्यभिप्रायेण सर्वेन्द्रियकन्दभूत इत्युक्तम्। कण्ठे स्वप्नमिति कण्ठशब्दश्च कण्ठसमीपवर्तिनाडीविशेषपरः, " आसु तदा नाडीषु सुप्तो भवति"इति नाडीनां स्वप्नस्थानत्वश्रुत्यविरोधात्, इयञ्च श्रुतिः स्वप्नविषया, 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति" इत्यनन्तरवाक्यस्य सुषुप्तिस्थानपरत्वात्। हृदयस्थमिति हृदयशब्दो हृद्गतपरमात्मपरः 'सता सोम्य तदा सम्पन्नो भवति'इति परमात्मनः सुषुप्तिस्थानत्वावगमात्; तत्र च सच्छब्दो हृदयस्थपरमात्मपरः, "आभिः प्रत्यवसृप्य पुरीतति शेते" इति सुषुप्तौ हृदयागमश्रवणात्। तुरीयशब्दः उत्क्रान्त्यवस्थजीवपरः "तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्' इति चरमशरीरोत्क्रान्तावेव मूर्द्धसम्बन्धश्रवणादवस्थान्तरे तच्छ्रवणाभावाच्च, अतो जीवस्य चक्षुष्यनवस्थितिरुपपद्यते। (रश्मिद्वारेणेति) खट्वादिद्वारकप्रासादशयनवद्रश्मिद्वारकं चक्षुष्यवस्थानामित्यर्थः। चक्षुष्यवस्थानं नाम चक्षुस्सम्बन्धित्वम्। यद्वा यथा विद्यानिष्ठ इत्युक्ते तद्वशीकार उक्तस्स्यात्, तथा चक्षुष्यवस्थानमपि तद्वशीकरणम् तन्नियमनम्, तच्च सद्वारकम्; अतो नावस्थितिरित्यर्थः। असम्भवमाह (सर्वेषामिति) जीवानां परमात्मोपासनेनाभयत्वामृ-

* भावप्रकाशिका *

श्रुतिरिति) 'आसु तदा नाडीषु' इति श्रुतिरित्यर्थः। अत्र वक्तव्यं सर्वं जगद्वाचित्वादित्यत्र स्पष्टम्। (हृदयशब्दो हृद्गतपरमात्मपर इति) इदमुपलक्षणम्।

निरुपाधिकामृतत्वादयो न सम्भवन्त्येव ; तस्मादक्षि-पुरुषः परमात्मा ॥ ७ ॥ ॥ इति अन्तराधिकरणम् ॥

* श्रुतप्रकाशिका *

तत्वादयो भवन्तीति तद्व्यावृत्त्यर्थं निरुपाधिका इत्युक्तम् । अधिकरणार्थं निगमयति ( तस्मादिति ) अन्तर इति सूत्रे स्ववाक्यस्थहेतुरुक्तः, श्रुत्यन्तरप्रदर्शनमुखेन स्ववाक्यस्थशङ्कापरिहारपरं द्वितीयसूत्रम्, स्ववाक्यस्थशङ्कायां परिहृतायां प्राकरणिकपूर्ववाक्येन परमात्मपरत्वोपपादकं तृतीयम् । पूर्ववाक्यस्य ब्रह्मपरत्वोपपादकं चतुर्थम् । ततः प्राश्चात्यवाक्येन साधकं पञ्चमम् । षष्ठन्तु साध्यद्रढिम्ने पूर्वसूत्रद्वयोक्तहेतुव्यतिरेकप्रदर्शकमिति सूत्रसङ्गतिः ॥ .... .... .... ....

यादवप्रकाशीये तु— 'अन्तर उपपत्ते'रित्यादिसूत्रत्रयं छायापुरुषव्युदासपरं योजितम्, ततोऽपि प्रतिबिम्बस्य जीवस्य च व्युदासपरत्वं युक्तम्, अमृतत्वाभयत्वादीनां सर्वव्यावर्तनक्षमत्वात् तथाऽभ्युपगतत्वाच्च । 'अत एव च स ब्रह्मे'तिसूत्रस्य च वैयर्थ्यं प्रसजेत्, अत एव छायानिराकरणहेतुभिरेव जीवोऽपि न भवतीति हि योजितम् । पूर्वोक्तहेतवो जीवव्यावर्तनसमर्थाः, न वा ? न चेत्तैरेवाक्षिपुरुषस्य परमात्मत्वसाधनमनुपपन्नम् । तद्व्युदाससमर्थाश्चेत्तद्धेतूपादानादेव जीवव्यावृत्तिः सिध्यतीति तदनुवादेन परमात्मत्वसाधनाय सूत्रान्तरप्रणयनवैयर्थ्यमेव स्यात् । प्राणो ब्रह्मेत्यादिवाक्यस्य दृष्टिविधिपरत्वव्युदासेन सुखविशिष्टब्रह्मपरत्वसमर्थनं चापेक्षितम्, अपेक्षितविधेरनपेक्षितविधानं च दुर्बलम् । किञ्च यथा ईक्षत्यधिकरणादिषु 'नाशब्दम्' इति 'आनन्दमयः' इति 'अन्त'रिति च परमात्मत्वं साध्यं प्रतिज्ञायते तथा तच्छेषभूत-

७ भावप्रकाशिका ७

प्रासादगतखट्वास्थे पुंसि प्रासादस्थ इतिवत् हृदयस्थपरमात्मस्थे पुंसि हृदयस्थत्वमिति व्यवहारोमुख्य एव । (यादवप्रकाशीये तु इत्यादि) (परमात्मत्वसाधनमनुपपन्नमिति.) जीवव्युदसनमनुपपन्नमित्यर्थः । (तदनुवादेन परमात्मत्वसाधनायेति.) प्रतिबिम्बव्यावृत्तिं सिद्धवत्कृत्य जीवव्यावृत्तिसाधनायेत्यर्थः । यद्वा पूर्वोपन्यस्तहेतूननूद्य तैर्हेतुभिः जीवव्यावृत्तिसाधनायेत्यर्थः । ननु 'अत एव न देवता भूतं चे'तिसूत्रतुल्ययोगक्षेमं भविष्यतीत्यस्वरसादाह ( प्राणो ब्रह्मेत्यादिवाक्यस्येति ) ( अतो ब्रह्मणः प्रतिपाद्यं न पुनः प्रतिज्ञातव्यमिति ) यद्यप्यत एव च स ब्रह्मेत्यत्र प्रतिबिम्बव्यावृत्तिहेतु-

* श्रुतप्रकाशिका *

व्यतिरेकप्रतिज्ञानं क्वचित्क्रियते, यथा 'नानुमान'मिति। अवान्तरशङ्काविशेषपरिहारः क्वचित्प्रतिज्ञायते, यथा 'विकारशब्दान्नेति चेन्न'इति; अतोऽस्मिंश्चाधिकरणे 'अन्तर उपपत्ते'रिति सूत्र एव परमात्मत्वसाध्यप्रतिज्ञा, यथा 'अन्तस्तद्धर्मोपदेशात्' 'आकाशस्तल्लिङ्गात्' 'प्राणस्तथानुगमात्'' इत्यादिषु आदित्यान्तर्वर्त्याकाशप्राणादीनुद्दिश्य परमात्मत्वं प्रतिज्ञातम्, एवमन्तरशब्दनिर्दिष्टमुद्दिश्य परमात्मत्वं प्रतिज्ञातमिति हि स्वरसतः प्रतीयते, अतो ब्रह्मणः प्रतिपाद्यत्वं न पुनः प्रतिज्ञातव्यम्। इह च परमात्मत्वसाध्योपपादकतयोदाहृतस्य पूर्ववाक्यस्य परमात्मपरत्वशैथिल्ये शङ्किते तत्परिहाराय पूर्ववाक्यप्रतिपाद्यस्य परत्वं प्रतिज्ञायते चेद्युज्यते, प्रयोजनवत्त्वात्. तदभावात्पुनः प्रतिज्ञानं तन्मते विफलम्।'अन्तर' इत्यात्ममात्रं प्रतिज्ञातम्, न परमात्मेति चेत्. तत्सूत्रशैलीविरुद्धत्वादमृतत्वादिधर्माणां जीवव्यावर्तनक्षमत्वाच्चानुपपन्नम्। सुखविशिष्टस्येह प्रत्यभिज्ञानानुपपत्तिपरिहारपरम्'अत एव चे'तिसूत्रमिति चेन्न; 'सुखविशिष्टाभिधानादेव चे'तिसूत्रेणैव पूर्वत्र चात्र च ब्रह्मसंशब्दनादीनां तत्प्रत्यभिज्ञोपपत्तीनां विवक्षितत्वात्। न हि न्यायनिबन्धनात्मकसूत्रं प्रतिज्ञामात्रपरम्, छायापुरुषनिराकरणहेतुतयोक्तानाममृतत्वाभयत्वादीनामक्षिपुरुषे सुखविशिष्टब्रह्मप्रत्यभिज्ञोपपादकत्वायोगात् प्रत्यभिज्ञानुपपत्तिपरिहारपरत्वमयुक्तम्. प्रत्यभिज्ञोपपादनप्रकारश्चानुपपन्नः। पूर्ववाक्ये ''प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'ति प्राणस्य सुखविशिष्टाकाशस्य चोक्तत्वात् श्रुत्यन्तरे दक्षिणवामयोरक्ष्णोरिन्द्रशब्दवाच्यस्यप्राणस्य तत्पत्न्याश्च स्थित्यवगमाद्वाकृच्छक्तिरूपपरमाकाशपत्नीकः प्राणोऽयमक्षिपुरुषः पूर्ववाक्योक्तः प्रत्यभिज्ञायत इति ह्युक्तम्, वाङ्मयाज्जातस्य प्राणस्य वाङ्मयपत्नीकत्वायोगादिति श्रुतिव्याकोपस्य ज्योतिरधिकरणे दर्शिततया अस्यार्थस्यानुपपन्नत्वं

* भावप्रकाशिका *

भिरेव जीवव्यावृत्तिस्सिद्ध्यतीत्येवं जीवव्यावृत्तिरेव प्रतिज्ञायते, न ब्रह्मेत्युक्तम्; तथापि वक्ष्यमाणरीत्या परमसाध्योपपादकोपपादकत्वमेव युज्यत इति भावः। (नहि न्यायनिबन्धनेति) ततश्च सुखविशिष्टाभिधानोपपत्तीनामपि तस्मिन्नेव सूत्रे विवक्षितत्वमभ्युपेयम्, नतु निर्युक्तिकसुखविशिष्टाभिधानस्वरूपमात्रपरमिति भावः। (श्रुत्यन्तरे दक्षिणवामयोरक्ष्णोरिति) 'इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षिन् पुरुषस्तं वा एतमिन्धं सन्तमिन्द्रमित्याचक्षते। अथ तद्वामेऽक्षिणि पुरुषस्य रूपमेषास्य

* श्रुतप्रकाशिका *

स्फुटम् । किञ्च ; इयन्तावत्सूत्रकारशैली— यत्सर्वेष्वधिकरणेषु एकस्मिन्नेव सूत्रे परमसाध्योऽर्थः प्रतिज्ञायते । 'स्थानादिव्यपदेशा'च्चेतीदमपि 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इति श्रुतौ चक्षुष्यवस्थानपरिदृश्यमानत्वव्यपदेशात्परमात्मत्वसाधकमिति व्याख्यातम्, ततोऽप्यन्तर्यामिब्राह्मणविषयतया व्याख्यानं युक्तम्, उपजीवकवाक्यादप्युपजीव्यवाक्यप्राबल्यात् । 'य एषोऽन्तरक्षिणि' इतिवाक्यं ह्यन्तरादित्यविद्यातुल्ययोगक्षेमम्, तत्र च देहविशेषयोगाधीनजीवत्वशङ्का निरस्ता । अतस्तत्रापि प्रसिद्धवन्निर्देशदृश्यत्वव्यपदेशाभ्यां जीवविषयत्वे शङ्कितेऽन्तर्यामिब्राह्मणादिकमेव शरणम्, अत एव ह्यादित्यान्तर्वर्तिनो जीवादन्यत्वसिद्धये 'भेदव्यपदेशाच्चान्यः' इति सूत्रं तद्विषयं प्रणीतम्, तत्र च नियन्तृत्वादिभिः परमात्मत्वं स्फुटम्, अतः उपजीव्यवाक्यविषयतया व्याख्यानं युक्तम् । अनन्तराधिकरणे अन्तर्यामिणः परमात्मत्वसाधनं चास्य सूत्रस्य अन्तर्यामिब्राह्मणविषयतां द्योतयति, प्रयुक्तेऽर्थे असिद्धिशङ्कापरिहारो हि यौक्तिकशैली, न च वाच्यं त्वदुदाहृतवाक्यमप्युपपाद्यत्वाद्दुर्बलमिति । तस्य वाक्यान्तरोपजीव्याभावात्, तत्खल्वनुग्राहकन्यायमात्रापेक्षम्, अतो न्यायानुगृहीतवाक्यान्तरसापेक्षवाक्यविषयत्वाद्वाक्यान्तरनिरपेक्षवाक्यविषयत्वं वरम् . श्रुतोपनिषत्कगत्यभिधानाच्चेत्यत्राक्षिपुरुषविद्याया गतिचिन्तनानुवादेन तदङ्गत्वमुच्यत इत्युक्तम् । तदप्ययुक्तम्; अक्षिपुरुषस्य परमात्मत्वनिर्णयात् परमात्मोपासनस्यानुष्ठेयान्तरं प्रत्यङ्गत्वायोगाद्गतिचिन्तनस्य सर्वपरविद्याङ्गत्वाच्च । गत्यनुवादस्य प्रयोजनन्त्वपुनरावृत्तिविधानमित्युक्तम्, न त्वङ्गान्तरविधानम्. अतो यथोक्तार्थपराण्येव सूत्राणि ॥

---

❀ भावप्रकाशिका ❀

पत्नी विराट् प्रदेशान्तरे तौ मिथुनं समेताम् ! ततः प्राणोऽजायत । इन्द्रस्य' इत्यादिः ज्योतिरधिकरणोदाहृता श्रुतिर्द्रष्टव्या । ( यत्सर्वेष्वधिकरणेष्विति ) तथा च 'अत एव च स ब्रह्म' इत्यस्य परमसाध्योपपादकत्वमयुक्तमिति भावः । ( उपपाद्यत्वाद्दुर्बलमिति ) अन्तर्यामिब्राह्मणस्यापि उत्तराधिकरणन्यायोपपाद्यत्वादिति भावः । अक्षिपुरुषविद्याया गतिचिन्तनानुवादेन तदङ्गत्वमुच्यत इत्यस्य अक्षिपुरुषविद्या गतिचिन्तनाङ्गत्वेन विधीयत इत्यर्थो विवक्षितः, उत गतिचिन्तनमक्षिपुरुषविद्याङ्गत्वेन विधीयते ? इति विकल्प्याद्यं दूषयति ( अक्षिपुरुषस्य परमात्मत्वनिर्णयादिति ) द्वितीयं दूषयति (गतिचिन्तनस्य सर्वपरविद्याङ्गत्वादिति) ॥

---

'स्थानादिव्यपदेशाच्च' इत्यत्र 'यश्चक्षुषि तिष्ठन्' इत्यादिना प्रतिपाद्यमानं चक्षुषि स्थितिनियमनादिकं परमात्मन एवेति सिद्धं कृत्वाऽक्षिपुरुषस्य परमात्मत्वं साधितम्। इदानीं तदेव समर्थयते—

अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् ॥ १९ ॥

४ अधिकरणम्

काण्वा माध्यन्दिनाश्च वाजसनेयिनः

* श्रुतप्रकाशिका *

उत्तराधिकरणसङ्गतिमाह (स्थानादीति)—॥ अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्म्म-व्यपदेशात् ॥ विषयं शोधयति ( काण्वा इत्यादिना ) वेदयज्ञशब्दौ तदभिमानि-

❀ भावप्रकाशिका ❀

( विषयं शोधयतीति ) इत्थं हि विषयशुद्धिः,—जनकेन ब्रह्मिष्ठशुल्कत्वे-नानीते गोसहस्रे याज्ञवल्क्येन वादकथायां प्रवृत्तेषु केषुचिद्ब्रह्मवादिषु विजितेषु उद्दालकेन सूत्रान्तर्यामिणोः प्रश्नः कृतः। 'अथ हैनमारुणिरुद्दालकः पप्रच्छ। याज्ञवल्क्येति होवाच, मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयमानाः' मद्रेषु देशेष्वित्यर्थः। 'तस्यासीद्भार्या गन्धर्वगृहीता। तमपृच्छाम कोसीति। सोऽब्र-वीत् कबन्ध आथर्वण इति।' कबन्धः—कबन्धनामा। 'सोब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ न त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः। सर्वाणि च भूतानि सन्दृब्धानि भवन्ति" इति। सूत्रे पुष्पाणीव प्रोतानीत्यर्थः। 'सोऽब्रवीत् पत-ञ्जलः काप्यो नाहं तद्भगवन् वेदेति। सोब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीति। सोब्रवीत्पतञ्जलं काप्यो नाहं तद्भगवन् वेदेति। सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकांश्च यो वैतत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्स लोकवित्स देववित्स वेदवित्सभूतवित् स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत् तदहं वेद स ब्रह्मवित्' इत्यादिना प्रशस्य काप्याय याज्ञिकेभ्यश्च सूत्रमन्तर्या-मिणं च गन्धर्व उपदिदेश, तद्द्वयमप्यहं जान इत्यर्थः। तच्चेत्त्वं याज्ञवल्क्य

समामनन्ति "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवी-मन्तरो यमयत्येष त आत्मान्तर्य्याम्यमृतः" इति। एवमम्ब्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाश-तमस्तेजस्सु देवेषु च सर्वेषु भूतेषु प्राणवाक्-चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतस्स्वात्मात्मीयेषु च तिष्ठन्तं तत्तदन्तरभूतं तत्तदवेद्यं तत्तच्छरीरकं तत्तद्यमयन्तं

* श्रुतप्रकाशिका *

देवताविशेषपरौ, गुणक्रियादेरद्रव्यतया शरीरत्वायोगात्। अद्रव्यस्यापि शरीरत्वमनेनैव प्रयोगेण कल्प्यतामिति चेन्न, अनन्यथासिद्धस्यैव प्रयो-गस्य कल्पकत्वात् अभिमानिदेवतापरत्वेनापि द्रव्यपरत्वमेवोचितमिति। संशय-

७ भावप्रकाशिका ७

सूत्रमविद्वान् तं चान्तर्यामिणं ब्रह्मगवीरुद्युदजसे मूर्द्धा ते विपतिष्यति' इति। ब्रह्म-गवीः—ब्रह्मिष्ठशुल्कत्वेन जनकेन दत्ता गावः। उद्युदजसे—यदि नयसीत्यर्थः। वेद वा अहं तत्सूत्रं तं चान्तर्यामिणमिति। यो वा इदं कश्च ब्रूयात् वेद वेदेति यथा वेत्थ तथा ब्रूहीति। यः कश्चिदपि अहं जानामीति ब्रूयात् त्वं यदि जानासि तर्हि वदेत्यर्थः। 'स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकस्सर्वाणि भूतानि संद्रब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुः" व्यस्रंसिषतास्याङ्गानीति—विस्रस्तानीत्यर्थः। वायुना हि गौतम सूत्रेण सन्द्रब्धानि भवन्ति" इति। एवं सूत्रप्रश्नस्योत्तरे दत्ते—'एवमेवैतद्याज्ञवल्क्या-न्तर्यामिणं ब्रूहि' इति उक्तांशमभ्युपगम्यान्तर्यामिणं पप्रच्छ 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' इत्युपक्रम्य "योऽप्सु तिष्ठन् योऽग्नौ तिष्ठन्" इत्येवं क्रमेण अम्ब्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशतमस्तेजःपर्यन्तान् पर्यायानुपदिश्य 'इत्यधिदैवतम्' इत्युपसंहृत्य 'अथाधिभूतम्' इत्युपक्रम्य 'यस्स-र्वेषु भूतेषु' इति पर्यायमुपन्यस्य 'इत्यधिभूतम्' इत्युपसंहृत्य 'अथाध्यात्मम्'

कश्चिन्निर्दिश्य "एष त आत्मान्तर्य्याम्यमृतः" इत्युपदिश्यते । माध्यन्दिनपाठे तु "यस्सर्वेषु लोकेषु तिष्ठन् 'यस्सर्वेषु वेदेषु' 'यस्सर्वेषु यज्ञेषु" इति च पर्यायाः, 'यो विज्ञाने तिष्ठन्' इत्यस्य पर्य्यायस्य स्थाने 'य आत्मनि तिष्ठन्' इति पर्य्यायः । 'स त आत्मान्तर्य्याम्यमृतः' इति च विशेषः। तत्र संशय्यते– किमयमन्तर्यामी प्रत्य-

* श्रुतप्रकाशिका *

माह ( तत्रेति ) प्रत्यगात्मशब्दः ऐश्वर्य्ययोगविशेषनिमित्तप्रकर्षादुत्कृष्टजीवपरः, समस्तचेतनाचेतनान्तर्यामित्वेन श्रूयमाणस्यापि कथं जीवत्वशङ्कोत्थानम् ? । उच्यते ; 'द्रष्टा श्रोता' इत्यादिशब्देन करणायत्तज्ञानवत्ताप्रतीतिबलादमृतत्वादिलिङ्गानाम् 'आत्मनि तिष्ठन्' इत्यादिव्यतिरेकनिर्देशस्य नियमनस्य चामुख्यत्वशङ्कयाधिकरणोत्थानमिति। किमन्तर्यामी जीवः ? उत परमात्मा ? इति प्रथमविचारः । तदर्थम् 'आत्मनि तिष्ठन्" इत्यादिकं किं मुख्यम् ? उतामुख्यम् ? । तदर्थं द्रष्टृत्वं किं जीवस्यैव ? उतान्तर्यामिणोऽपि सम्भवति ? । तदर्थं 'द्रष्टा श्रोता' इति किं करणायत्तज्ञानत्वमुच्यते, उत रूपादिसाक्षात्कारः ? इति । तदर्थं रूपादिसाक्षात्कर्त्ता चेत् द्रष्ट्रन्तरनिषेधः किं नोपपद्यते, उतोपपद्यते ? इति विचारः । नोपपद्यत इति पूर्वः पक्षः । उपपद्यत इति सिद्धान्तः । यदा निषेधोऽनुपपन्नः तदा द्रष्टृत्वादिकं करणायत्तज्ञानवत्त्वमिति तस्य जीवात्मन्येव सम्भवादात्मनि स्थित्यादिकममुख्यमि-

* भावप्रकाशिका *

इत्युपक्रम्य प्राणवाक्चक्षुःश्रोत्रमनस्त्वग्विज्ञानरेतःपर्यायानुपन्यस्य 'एष त आत्मा अन्तर्याम्यमृतः 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नान्योतोस्ति श्रोता नान्योतोस्ति मन्ता नान्योतोस्ति विज्ञाता एष त आत्मा अन्तर्याम्यमृतः अतोन्यदार्तम्" इत्युपसंहृतम् । माध्यन्दिनपाठे तु लोकवेदयज्ञपर्यायास्त्रयोऽधिका इति। प्रत्यगात्ममात्रे अन्तर्यामित्वपूर्वपक्षासम्भवात् उपचितसुकृतजीवविशेषपरः प्रत्यगात्मशब्द इत्याह ( प्रत्यगात्मशब्द इति ) ( यदा निषेधोऽनुपपन्न इति ) द्रष्टृत्वस्य रूपादिसाक्षात्कारकर्तृत्वरूपत्व इति शेषः । नियमनस्यार्थ-

गात्मा ; उत परमात्मा ? इति । किं युक्तम् ? प्रत्यगात्मेति । कुतः ? वाक्यशेषे 'द्रष्टा श्रोता' इति करणायत्तज्ञानताश्रुतेः । एवं द्रष्टुरेवान्तर्यामित्वोपदेशात् [1]'नान्योतोऽस्ति द्रष्टा' इति द्रष्ट्रन्तरनिषेधाच्चेति ॥

* श्रुतप्रकाशिका *

त्यन्तर्यामी जीवस्स्यात् । यदा निषेध उपपन्नः तदा रूपादिसाक्षात्काररूपद्रष्टृत्वादेः परमात्मनि सम्भवेनात्मनि स्थित्यादीनां मुख्यतया नेयत्वादन्तर्यामी परमात्मेति फलितं स्यात् । ( कुत इति ) प्रत्यगात्मनोऽप्यन्तर्यामित्वेन श्रुतस्य कथं प्रत्यगात्मत्वमिति भावः । तत्र जीवत्वे हेतुमाह ( वाक्यशेषे इत्यादिना ) ज्ञानस्य करणाधीनत्वोक्त्या नियमनस्य च करणाधीनत्वमर्थसिद्धम् , परप्रेरणरूपस्य सङ्कल्पस्य मनःकरणकत्वदर्शनात् . करणायत्तं ज्ञानमस्तु, ततः किमन्तर्यामिणो जीवत्वस्येत्यत आह ( एवं द्रष्टुरेवेति ) तर्हि रूपादिसाक्षात्कार एव द्रष्टृशब्दप्रवृत्तिनिमित्तमस्तु, न करणायत्तं ज्ञानमित्यत्राह ( नान्योतोऽस्तीति ) रूपादिसाक्षात्कारस्य जीवपरयोः साधारणत्वात्स न निषेद्धुं शक्यते, करणायत्तज्ञानवस्त्वन्तु जीवस्यैवेति तदन्यस्य निषेद्धुं शक्यत्वमित्यर्थः । प्रतिपर्यायं यच्छब्दावृत्त्या

* भावप्रकाशिका *

सिद्धत्वमुपपादयति ( परप्रेरणरूपस्येति ) ननु जीवः कोऽत्रान्तर्यामी स्यात्, न तावदुपासकजीवः, तस्य 'यः पृथिव्यां तिष्ठन्' इत्यादिवाक्यप्रतिपाद्यपृथिव्यादिस्थितिनियमनयोरसम्भवात् । नापि पृथिव्याद्यभिमानी देवताविशेषः, तस्य पृथिव्यादिस्थितिनियमनादिसम्भवेपि उपदेश्योपासकजीवभिन्नतया 'स त आत्मे'ति निर्देशासम्भवात् । नापि जीवसमुदायः, तस्यापि पृथिव्याद्यतिष्ठत्वेन समुदाये स त आत्मेति निर्देशानुपपत्तेरित्याशङ्क्योपासकस्य वा पृथिव्याद्यभिमानिनो वा जीवसमुदायस्य वा नैवान्तर्यामित्वं पूर्वपक्षे विवक्षितम् , किन्तु जीवजातीयानां वस्तूनामन्तर्यामित्वं विवक्षितम्. न च तथात्वे स त आत्मेति निर्देशानुपपत्तिः, उपदेश्यस्योपासजीवस्यान्तर्यामिबहुजीवात्मकत्वाभावादिति वाच्यम्, तज्जातीयस्त्वमसीत्यर्थस्य वक्ष्यमाणत्वेनादोषादित्यभिप्रयन्नाह ( प्रतिपर्यायं यच्छब्दावृत्त्येति )

[1] बृ. ५-७-२३ ॥

एवं प्राप्तेऽभिधीयते— अन्तर्याम्यधिदैवाधिलोकादिषु तद्धर्मव्यपदेशात् । अधिदैवाधिलोकादिपदचिह्नितेषु

* श्रुतप्रकाशिका *

चान्तर्यामिबहुत्वमवगम्यते। 'आत्मनि तिष्ठन्' इति व्यपदेशः स्वे महिम्नि स्थित इतिवद्भवति । तदन्तरत्वं तन्नियन्तृत्वं च 'आत्मेश्वर'मितिवद्व्यापकनियामकवस्त्वन्तराभावाभिप्रायेणोच्यते। 'यमात्मा न वेद' इति संसृष्टेन निष्कृष्टस्वरूपाज्ञानमुच्यत इति नेयम्। यत्तु जीवविशेषान् प्रत्यन्तर्यामित्वं तत्तदवेद्यत्वादिकम्, तदष्टमूर्त्यादेरिव तत्तद्गणाध्यक्षाणां जीवानां तत्तन्नियन्तृत्वेन सम्भवति । यद्वा आदित्यचन्द्रशब्दौ मण्डलपरौ। सर्वेषु देवेष्वित्यादिशब्दाश्च शरीरमात्रपराः । स त आत्मेति निर्देशः शिलापुत्रस्य शरीरमितिवत्स्यात्, स इतिपदं जात्यभिप्रायम्, तज्जातीयस्त्वमित्यर्थः । उपक्रमे च 'य इमं च लोकं परं च लोक'मित्यत्र यच्छब्दो जात्यभिप्राय इति भावः ॥

( एवं प्राप्त इति ) तत्र अधिदैवाधिलोकादिपदचिन्हितेषु वाक्येष्वित्यनेन सर्वसूत्रेषु तत्तत्पदचिह्नितवाक्यप्रतिपाद्यत्वं विवक्षितमिति गम्यते । अधिदैवाधिलो-

* भावप्रकाशिका *

यथा यस्तिष्ठति स ते पुत्रः यः पचति स ते पुत्र इत्युक्ते [illegible] प्रतीयते तद्वदित्यर्थः । ( व्यापकनियामकवस्त्वन्तराभावाभिप्रायेणेति ) नहि [illegible]जातीयावच्छिन्नत्वस्य व्यापकं नियामकं वा किञ्चिदस्तीत्यर्थः । ( [illegible] विशेषान् प्रत्यन्तर्यामित्वमिति ) 'य [illegible] तिष्ठन् यश्चन्द्रमसि तिष्ठन् [illegible] प्रतिपाद्यमानं जीवविशेषान्तर्यामित्वमिति भावः । ( अष्टमूर्त्यादेरिवेति ) रुद्रस्याग्न्याद्यष्टमूर्तिनियन्तृत्वमिवेत्यर्थः । ( तत्तद्गणाध्यक्षाणामिति ) आदित्यगणाध्यक्षाणामित्यर्थः । एवं प्राप्त इत्यस्यानन्तरं सूत्रं इति क्वचित् कोशे पठ्यते, न तस्य प्रयोजनं पश्यामः । भाष्ये—अधिदैवाधिलोकादिपदचिन्हितेष्विति । ननु 'यः पृथिव्यां तिष्ठन्' इत्युपक्रम्य पृथिव्यम्ब्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतमस्तेजांसि निर्दिश्य चरमे तेजःपर्याय एव 'इत्यधिदैवम्' इतिपदं श्रूयते, नतु पूर्वेषु पर्यायेषु; अतस्तेषां कथमधिदैवपदचिन्हितत्वमिति चेन्न; इत्यधिदैवमितीतिकरणेन पूर्वेषामपि पर्यायाणां परामर्शात् तत्पदचिह्नितत्वोपपत्तेरिति भावः ॥

( अनेन सर्वसूत्रेष्विति ) अधिदैवाधिलोकादिष्वित्यत्र दैवलोकभूतादिषु

वाक्येषु श्रूयमाणोऽन्तर्य्याम्यपहतपाप्मा परमात्मा नारायणः। काण्वपाठसिद्धेभ्योऽधिदैवादिमन्त्रो वाक्येभ्योऽधिकान्यधिलोकादिमन्ति वाक्यानि माध्यन्दिनपाठे सन्तीति ज्ञापनार्थमधिदैवाधिलोकादिष्वित्युभयोरुपादानम्। तदेवमुभयेष्वपि वाक्येष्वन्तर्य्यामी परमात्मेत्यर्थः। कुतः? तद्धर्मव्यपदेशात्। परमात्मधर्मो ह्ययम्; यदेक एव सन् सर्वलोकसर्वभूतसर्वदेवादीन्नियमयतीति। तथा ह्युद्दालकप्रश्नः "य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीति' इत्युपक्रम्य 'तमन्तर्य्यामिणं ब्रूहि' इति तस्य चोत्तरम् 'यः पृथिव्यां तिष्ठन्' इत्यारभ्योक्तम्। तदेतत्सर्वान् लोकान्

* श्रुतप्रकाशिका *

कंपदद्वयोपादानस्य प्रयोजनमाह (काण्वेति) ततः किमित्यत्राह (तदेवमिति) माध्यन्दिनपाठे अधिलोकाद्यधिकपर्यायश्रवणेन काण्वमाध्यन्दिनयोर्विषयभेदशङ्कायामुभयसाधारणबहुपर्यायप्रदर्शनार्थेनाधिदैवशब्देनोभयत्रैकविषयत्वप्रत्यभिज्ञानार्थं न्यूनपर्यायेऽपि पाठे 'अनुक्तमन्यतो ग्राह्यम्' इतिन्यायेन अधिकपर्यायपाठार्थविवक्षाज्ञापनार्थं चोभयपदोपादानमित्यर्थः। एकस्यैव सतः सर्वनियमनं कथमवगतमित्यत्राह (तथा हीति) 'यः पृथिव्याम्' इत्यादिकं तस्य प्रश्नस्योत्तरमस्तु, ततः किमित्यत्राह (तदेतदिति) नियाम्यापरिज्ञाने मोघसङ्कल्पत्वे च सर्व-

* भावप्रकाशिका *

विषयेष्वन्तर्यामी परमात्मेत्यपि व्याख्यायास्सम्भवात् तत्परित्यागेनाधिदैवादिशब्दस्य वाक्यपरत्वमभ्युपगम्य वाक्यप्रतिपाद्योऽन्तर्यामीति व्याख्यानात्सर्वसूत्रेष्वपि तत्तद्वाक्यप्रतिपाद्यपरत्वमेव साध्यं विवक्षितम्। अध्यायस्य वाक्यसमन्वयप्रतिपादनपरत्वादिति भाष्यकाराभिप्राय इति भावः। (पदद्वयेति) एतेनाधिलोकपदशून्यः परेषां सूत्रपाठस्तावदप्रामाणिक इति दर्शितम्। (बहुपर्यायप्रदर्श-

सर्वाणि च भूतानि सर्वान् देवान् सर्वान् वेदान् सर्वांश्च यज्ञानन्तःप्रविश्य सर्वप्रकारनियमनं सर्वशरीरतया सर्वस्यात्मत्वं च सर्वज्ञात्सत्यसङ्कल्पात्पुरुषोत्तमादन्यस्य न सम्भवति। तथा हि "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "तत्सृष्ट्वा। तदेवानुप्राविशत्। तदनुप्रविश्य। सच्च त्यच्चाभवत्" इत्यादीन्यौपनिषदानि वाक्यानि परमात्मन एव सर्वस्य प्रशासितृत्वं सर्वस्यात्मत्वमित्यादीनि वदन्ति। तथा सुबालोपनिषदि "नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः। चक्षुश्च द्रष्टव्यं च नारायणः। श्रोत्रं च श्रोतव्यं च नारायणः"

* श्रुतप्रकाशिका *

नियमनायोगात् सर्वज्ञात्सत्यसङ्कल्पादित्युक्तम्। सुबालोपनिषदि समानप्रकरणे 'पुरुष एवेदं सर्व'मित्युक्तत्वादाह ( पुरुषोत्तमादिति ) पुरुषोत्तमस्यैव सर्वनिमयनादिसम्भवे श्रुत्यन्तराणि दर्शयति ( तथा हीति ) ( परमात्मन एवेति ) अत्र सर्वनियन्तृत्वादितरेषां नियाम्यकोटिनिवेशादस्यैवेत्यवधारणं फलितमिति भावः। एतद्वैशद्याय समानप्रकरणोक्तिं दर्शयति ( तथा सुबालोपनिषदीति ) सूत्रविवक्षितं

७ भावप्रकाशिका ७

नार्थेनाधिदैवशब्देनेति ) पृथिव्यम्ब्वग्न्यन्तरिक्षवाय्वादित्यदिक्चन्द्रतारकाकाशपर्यायाणामधिदैवानुप्रविष्टानां बहुत्वादित्यर्थः। ( अवधारणं फलितमिति भाव इति ) यद्यप्यौपनिषदानि वाक्यानि सर्वप्रशासितृत्वादिकं परमात्मन एव वदन्तीत्युक्तौ दोषाभावात् फलितमित्युक्तिर्न सङ्गच्छते. तथापि परमात्मन एव सर्वप्रशासितृत्वं सर्वात्मत्वमित्येवमाकारेण वदन्तीति भाष्यार्थमालोच्यैवमुक्तमिति द्रष्टव्यम्। स्वाभाविकं चामृतत्वमितिभाष्यस्यायं भावः,—स्वाभाविकौपाधिकयोर्मध्ये औपाधिकस्योपाधिप्रतिपत्त्यधीनप्रतिपत्तिकत्वेन विलम्बितप्रतीतिकतया ततोपि

इत्यारभ्य "अन्तश्शरीरे निहितो गुहायामज एको नित्यः यस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद यस्यापश्शरीरम्" इत्यादि, 'यस्य मृत्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" इति परस्यैव ब्रह्मणः सर्वात्मत्वं सर्वशरीरत्वं सर्वस्य नियन्तृत्वं च प्रतिपाद्यते ५ स्वाभाविकं चामृतत्वं परमात्मन एव धर्मः। न च परस्यात्मनः करणा-

* श्रुतप्रकाशिका *

हेत्वन्तरञ्चाह (स्वाभाविकं चेति) पूर्वपक्षयुक्तिं परिजिहीर्षन् दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वं किमार्थम्, उत शाब्दम्? इति विकल्पमभिप्रेत्य प्रथमं शिरः प्रतिवदति (न च परस्येति) 'अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता' इतिवाक्ये आत्मसाक्षात्कारतदुपायभूतश्रवणमनननिदिध्यासनकर्तृत्वं हि प्रतीयते, न तु रूपादिसाक्षात्कार इति शङ्कां परिहर्तुं परस्यात्मन इत्युक्तम्। अत्रायमभिप्रायः, श्रुत्यन्तरेषु 'न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारं शृणुयाः न मतेर्मन्तारं मन्वीथाः न विज्ञातेर्विज्ञातारं विजानीयाः' इति 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादिवाक्यैः श्रवणमननादिकर्तृत्वं परस्य प्रतिषिद्धम्, तत्कर्मत्वञ्च श्रुतम्, तस्मादिह द्रष्टा श्रोता मन्ता विज्ञातेतिप्रतीयमानं परस्यात्मनः श्रवणादिकर्तृत्वं तत्प्रतिषेधकश्रुतिविरुद्धम्। रूपादिसाक्षात्कर्तृत्वन्तु 'पश्यत्यचक्षुस्स शृणोत्यकर्णः' इत्यादिश्रुत्यन्तरावगतम्; अतः श्रवणादिकर्तृत्वप्रतिषेधकश्रुतिविरोधात् रूपादिसाक्षात्कारविधायकश्रुत्यन्तरानुरोधाच्च इह श्रूयमाणा द्रष्ट्रादिशब्दाश्च रूपादिसाक्षात्कारवाचकाः, न तु श्रवणमनन-

५ भावप्रकाशिका ५

स्वाभाविकस्यैव ग्राह्यत्वादिति। (किमार्थमिति) व्याप्तिबलात् परमात्मनोपि दर्शनश्रवणादयः करणैर्विना नोपपद्यन्त इत्यर्थस्वभावायत्तमित्यर्थः। (द्रष्टृत्वा-

यत्तं द्रष्टृत्वादिकम्, अपि तु स्वभावत एव सर्वज्ञत्वात्स-
त्यसङ्कल्पत्वाच्च स्वत एव । तथा च श्रुतिः "पश्यत्य-

* श्रुतप्रकाशिका *

ध्यानतत्साध्यदर्शनपरा इति । द्रष्टृत्वादिकं न करणायत्तमिति— रूपादिभिरपरोक्षव्यवहारानुगुणस्सम्बन्धो न चक्षुराद्यपेक्ष इत्यर्थः । आदिशब्देन श्रोतृत्वादिकं कर्मेन्द्रियकार्यगन्तृत्वगृहीतृत्वादिकं च विवक्षितम्, करणशब्दश्च ज्ञानकर्मेन्द्रियसाधारणः, किं तर्हीत्याकाङ्क्षायामाह ( अपि त्विति ) ( स्वभावत एवेति ) द्रष्टृत्वादिकमित्यन्वयः । स्वभावशब्दो धर्मपरः । स्वरूपस्वभावशब्दयोः समभिव्याहारदर्शनात्, एवकारश्चक्षुरादिकरणापेक्षां योगिप्रत्यक्षहेतुभूतप्रकृष्टादृष्टापेक्षाञ्च व्यावर्तयति । अदृष्टेन्द्रियनिरपेक्षधर्मभूतज्ञानेनैव भवतीत्यर्थः । परमात्मेच्छासापेक्षमुक्तनित्यसिद्धज्ञानव्यावृत्तिं दर्शयन् हेतुमाह ( सर्वज्ञत्वादिति ) स्वत एव सर्वज्ञत्वादित्यन्वयः । ( स्वत एवेति ) स्वशब्दः स्वरूपपरः, सत्ताप्रयुक्तत्वादित्यर्थः । एवकारः स्वव्यतिरिक्तचेतनान्तरसङ्कल्पादृष्टचक्षुरादिव्युदासपरः । यद्वा न करणायत्तं द्रष्टृत्वादिकम्, अपि तु स्वभावत एवेति, रूपादिसाक्षात्काराश्रयत्वं न करणापेक्षम्, अपि तु सत्ताप्रयुक्तमित्यर्थः । कुत इत्यत्राह— स्वत एव सर्वज्ञत्वादिति । करणानपेक्षसत्ताप्रयुक्तसार्वज्ञ्यवत्त्वादित्यर्थः । सामान्येनेश्वरज्ञानमात्रस्य हेतुमात्रनिरपेक्षत्वाद्रूपादिविषयज्ञानविशेषोऽपि अदृष्टेन्द्रियरूपहेतुविशेषनिरपेक्ष इति

* भावप्रकाशिका *

दिकं न करणायत्तमितीति ) यद्यपि न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकमिति भाष्यपाठः, तथाप्यर्थतः प्रतीकग्रहणमिति द्रष्टव्यम् । ननु न च परस्यात्मनः करणायत्तं द्रष्टृत्वादिकमिति भाष्यं युक्तम् । दर्शनकर्तृत्वरूपस्य द्रष्टृत्वस्य करणायत्तनियमात् परमात्मनि तादृशद्रष्टृत्वानभ्युपगमाच्चेत्यतो व्याचष्टे ( रूपादिभिरिति ) ननु स्वभावशब्दो न धर्मपरः , अपितु स्वरूपशब्दपर्यायइत्याशङ्क्य समभिव्याहारदर्शनात्पर्यायत्वं नेत्याह ( स्वरूपस्वभावशब्दयोरिति ) ( अदृष्टापेक्षां च व्यावर्तयतीति ) चशब्देन स्वव्यतिरिक्तचेतनान्तरसङ्कल्पमपि समुच्चिनोति, स्वभावशब्दं धर्मभूतज्ञानपरतया व्याख्याय सत्तापरतया व्याचष्टे ( यद्वा न करणायत्तमिति ) साध्याविशेषमाशङ्क्याह ( सामान्येनेश्वरज्ञानेति ) ( सामान्याकार-

चक्षुस्स शृणोत्यकर्णः अपाणिपादो जवनो ग्रहीता" इति । न च दर्शनश्रवणादिशब्दाश्चक्षुरादिकरणजन्मनो ज्ञानस्य वाचकाः, अपि तु रूपादिसाक्षात्का-

* श्रुतप्रकाशिका *

यावत् । सर्वस्य ब्रह्मात्मकत्वात् त्वं च तदात्मक इतिवद्विवक्षितविशेषसिद्धये सामान्याकारयोगस्य हेतुतयोपन्यासः । गृहीतृत्वगन्तृत्वादिषु कर्मेन्द्रियनैरपेक्ष्यसिद्ध्यर्थमाह— सत्यसङ्कल्पत्वाच्च स्वत एवेति । तत्र प्रमाणं दर्शयति ( तथा चेति ) द्रष्टा श्रोतेत्यत्र उपाध्यनुक्तिपूर्वकदर्शनादिश्रवणात् स्वतस्त्वं सिद्धम्, निरुपाधिकत्वकण्ठोक्तिश्चास्तीति चार्थः । यद्वा न केवलं 'यस्सर्वज्ञः' 'सत्यसङ्कल्पः' इति सामान्यश्रुत्या तत्सिद्धिः, विशेषविषयश्रुतिश्चास्तीति चार्थः । यद्वा 'स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुत्या करणनिषेधोऽर्थसिद्धः, तस्य स्वाभाविकत्वोक्तिबलात्तद्विशेषभूतदर्शनश्रवणादेः करणनैरपेक्ष्यमपि सामान्यतस्सिद्धम्, तदुभयं कण्ठोक्तं चेत्यर्थः । जवनः—झटिति दूरस्थसम्बन्धक्षमः, अतो विभुत्वाविरोधः, एवं दर्शनश्रवणादेरर्थवशात् करणाधीनत्वकल्पनं श्रुतिविरुद्धमित्युक्तम् । अथाचक्षुः पश्यतीति व्याहतम्, दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचित्वादिति शङ्कायां दर्शनश्रवणादिशब्दानां करणायत्तज्ञानवाचितां निषेधति ( न च दर्शनेति ) सर्वप्रयोगानुगतं प्रवृत्तिनिमित्तमाह ( अपि त्विति ) एवञ्च सति द्रष्टा श्रोतेति रूपशब्दयोस्साक्षात्कर्तेत्यर्थः । मन्ता— ये मानसमननाख्यविचारविषयास्तेषां

* भावप्रकाशिका *

योगस्येति) ईश्वरत्वज्ञानत्वावच्छेदेन करणादृष्टादिनैरपेक्ष्यस्येत्यर्थः । तथा च श्रुतिरितिभाष्यस्य तथा श्रुतिश्चेत्यन्वयः । उदाहरिष्यमाणाया हि 'पश्यत्यचक्षुः' इति श्रुतेः ज्ञानविशेषोपादानवत्त्वं कारणविशेषनिषेधकण्ठोक्तिमत्त्वमित्याकारद्वयमस्ति , 'स्वाभाविकी ज्ञानबलक्रिया च ' इत्यत्र कारणनिषेधकण्ठोक्तिमत्त्वेपि ज्ञानविशेषोपादानं नास्ति , द्रष्टा श्रोतेत्यादिविशेषोपादानेपि कारणविशेषकण्ठोक्तिर्नास्ति । पश्यत्यचक्षुरित्यत्र तु द्वयमप्यस्तीति सिद्धम् । तत्र च तथाचेत्यत्र तथाशब्दस्य कारणनिषेधकण्ठोक्तिमत्तापरामर्शितया विशेषोपादानपरामर्शितया वा तदुभयपरामर्शितया वा व्याख्यानं सम्भवतीत्यभिप्रेत्य त्रेधा व्याचष्टे ( द्रष्टा श्रोतेत्यादिना ) ( रूपशब्दयो-

रस्य । स च रूपादिसाक्षात्कारः कर्मतिरोहितस्वाभाविकज्ञानस्य जीवस्य चक्षुरादिकरणजन्मा, परस्य तु स्वत एव । "नान्योऽतोऽस्ति द्रष्टा' इत्येतदपि पूर्ववा-

* श्रुतप्रकाशिका *

साक्षात्कर्ता । विज्ञाता– बुध्याध्यवसेया ये तेषां साक्षात्कर्तेत्यर्थः । तत्तदिन्द्रियविषयसाक्षात्कारपरत्वात् प्रकरणस्य । चक्षुरादिबाह्यकरणमनोबुद्धिरूपान्तःकरणकृत्यविशेषास्साधारणाकारग्रहणविचाराध्यवसायरूपाः, तदाश्रयो जीव इति च मोक्षधर्मेऽभिहितम्. यथा "चक्षुरालोकनायैव संशयं कुरुते मनः । बुद्धिरध्यवसायाय साक्षी क्षेत्रज्ञ उच्यते" इति । संसारिचेतनज्ञानानां प्रतिनियतकरणसापेक्षत्वं प्रमाणाप्रमाणरूपत्वं परोक्षापरोक्षरूपत्वं च भवति, परमात्मनस्तु तत्तत्करणादिनिरपेक्षाणि तत्तत्करणतत्तद्विषयादिसर्वपदार्थगोचराणि सम्यङ्निश्चयरूपाण्यपरोक्षात्मकानि ज्ञानानि भवन्तीति वैषम्यम्। करणाधीनत्वं शाब्दं माभूत्, तथापि व्याप्तिबलात्परमात्मनोपि दर्शनश्रवणादयः करणैर्विना नोपपद्यन्त इति सिंहावलोकितकेनाशङ्क्य दर्शनादीनां करणापेक्षायाः कर्मवश्यत्वेन सोपाधिकत्वान्न व्याप्तिरित्यभिप्रयन्नाह ( स चेति ) कर्मवश्यस्यैव करणापेक्षा, न त्वकर्मवश्यस्येत्यर्थः । उपाधेस्सापेक्षानुगतत्वं दर्शितं कर्मतिरोहितेति । ( परस्य त्विति ) तुशब्दोऽकर्मवश्यत्वरूपवैलक्षण्यपरः । तेनापक्षवृत्तित्वं दर्शितं भवति । तर्हि द्रष्ट्रन्तरनिषेधः कथमुपपद्यत इत्यत्राह (नान्योत इति)

ॐ भावप्रकाशिका ॐ

स्साक्षात्कर्तेत्यर्थ इति) न चैवं रूपद्रष्टेत्यादौ पौनरुक्त्यप्रसङ्ग इति वाच्यम्; पाकं पचतीतिवत् तत्र द्रष्टृशब्दस्य साक्षात्कर्तृत्वमात्रपरत्वात् घटद्रष्टेत्यादावपि घटविषयकरूपसाक्षात्कारवानित्यर्थ इत्यदोषः । ननु द्रष्टा श्रोतेत्यत्र तथार्थसम्भवेपि मन्तेत्यादौ का गतिरित्याशङ्क्य तादृशस्थले लक्षणया मननसमानविषयसाक्षात्कारवत्त्वमित्यर्थ इत्याह ( ये मानसेति ) ननु परमात्मनो नित्यमननादिकमस्त्वित्यत आह ( चक्षुरादिबाह्यकरणेति ) ( साधारणाकारग्रहणेति ) चक्षुरादिबाह्यकरणैस्साधारणाकारं गृहीत्वा मनोरूपान्तःकरणेन विचार्यबुद्धिरूपेणान्तःकरणेन हि जीवोध्यवस्यतीति भावः । (तदाश्रयो जीव इति चेति) ततश्च परमात्मनि मन्त्रबोद्धादिशब्दस्य

क्योदितान्नियन्तुर्द्रष्टुरन्यो द्रष्टा नास्तीति वदति। "यं पृथिवी न वेद' 'यमात्मा न वेद' इत्येवमादिभिर्वाक्यैः पृथिव्यात्मादिनियाम्यैरनुपलभ्यमान एव नियमयतीति यत्पूर्वमुक्तम्, तदेव 'अदृष्टो द्रष्टा अश्रुतश्श्रोता" इति निगमय्य 'नान्योऽतोऽस्ति द्रष्टा' इत्यादिना तस्य नियन्तु-

* श्रुतप्रकाशिका *

तदेव विवृणोति ( यं पृथिवीत्यादिना ) ( निगमय्येति ) अदृष्टो द्रष्टा— पृथिव्यादिनियाम्यादृष्टस्तत्तन्नियन्तृरूपद्रष्टेत्युक्तार्थनिगमनमित्यर्थः। 'यः पृथिव्याम्' इत्यादिपर्यायेषु द्रष्टृत्वमार्थम्, निगमनवाक्ये नियन्तृत्वमार्थं गर्भितम्। विशिष्टस्य प्रकृतत्वे सति सामान्यनिर्देशावगतोऽपि इतरनिषेधः प्रकृताकारविशिष्टेतरविषयो दृष्टः, यथा अस्मिन् ग्रामे देवदत्त एव पुरुषो नाऽन्य इत्युक्ते न पुरुषमात्रं निषिध्यते, किन्तु नैवंविधोऽन्यः पुरुषोस्तीति बुद्धिस्वस्वातन्त्र्यादिविशिष्टपुरुषान्तरं निषिध्यते, अन्यथा प्रमाणविरोधात्, अतः 'नान्योतोऽस्ति द्रष्टे'त्यत्रातश्शब्दस्वारस्यवशात् प्रकृतयथोक्तलक्षणं द्रष्ट्रन्तरं निषिध्यते ; ततश्च परमात्मनाप्यवेद्यस्तदन्तरस्तन्नियामकः कोऽपि द्रष्टा नास्तीत्यर्थस्स्यात्। अपवादाभावात् व्यतिरेकनि-

* भावप्रकाशिका *

लक्षणा दुर्निरासेति भावः। (अतश्शब्दस्वारस्यवशादिति) सर्वनाम्नः पूर्वप्रस्तुतविशेषणविशिष्टपरामर्शित्वनियमादित्यर्थः। अत एव 'तस्योपनिषदहमित्यधिदैवतं तस्योपनिषदहमित्यध्यात्मम्' इत्यत्र तच्छब्दस्य न प्राक्प्रस्तुतब्रह्मपरामर्शित्वमात्रम्, अपितु स्थानादिविशेषविशिष्टपरामर्शित्वमिति 'सम्बन्धादेवमन्यत्रापि' इत्यत्र वक्ष्यत इति भावः। अतश्शब्दस्वारस्यात् इत्येतच्चोपलक्षणम्, अन्यशब्दस्वारस्यादित्यपि द्रष्टव्यम्। अन्यशब्दस्य पूर्वनिर्दिष्टसदृशपरत्वात् ; अत एव इषुनामके क्रतौ 'इषुर्विष्टुतिस्सप्तहं भवति' इति वैशेषिकाङ्गविधानानन्तरमाम्नाते 'समानमितरच्छ्येनेन' इतिवाक्ये इतरशब्दपूर्वनिर्दिष्टवैशेषिकाङ्गसदृशानां वैशेषिकाङ्गानामेवेतरशब्देन ग्रहणम्, पूर्वनिर्दिष्टसादृश्यात्, नतु प्राकृतानामपीति पूर्वतन्त्रे निर्णीततया तन्न्यायेनान्यशब्देनापि सर्वनाम्ना पूर्वनिर्दिष्ट-

र्नियन्त्रन्तरं निषिध्यते। 'एष त आत्मा' 'स त आत्मा' इति च त इति व्यतिरेकविभक्तिनिर्दिष्टस्य जीवस्यात्मतयोपदिश्यमानोन्तर्य्यामी न प्रत्यगात्मा भवितुमर्हति ॥

न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च ॥ २० ॥

स्मार्त्तम्– प्रधानम्, शारीरः– जीवः, स्मार्त्तश्च शारीरश्च नान्तर्य्यामी । अतद्धर्माभिलापात्– तयोरसम्भावितधर्माभिलापात् । स्वभावत एव सर्वस्य द्रष्टृत्वम् सर्वस्य नियन्तृत्वम् सर्वस्यात्मत्वम् स्वत एवामृतत्वं च तयोर्न सम्भावनागन्धमर्हति । एतदुक्तम्भवतिः यथा

* श्रुतप्रकाशिका *

देशस्वारस्यसिद्धिमाह ( एष त इति ) एतत्पादाद्याधिकरणे 'शब्दविशेषात्' इति व्यतिरेकनिर्देशो हेतुतयोक्तः, तस्य प्रदर्शनार्थत्वात् तदुपजीवनेन व्यतिरेकनिर्देशो हेतुरुक्तः । 'एष ते' इति सर्वपर्यायानुवृत्तषष्ठीनिर्देशोऽत्र विवक्षितः, पर्यायविशेषस्थसप्तमीनिर्देशस्तु 'उभयेऽपी'तिसूत्रविवक्षित इति विशेषः ॥

॥ न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च ॥ अक्षरार्थमाह ( स्मार्त्तमित्यादिना ) के पुनस्तदसम्भाविता धर्मा इत्यत्राह ( स्वभावत एवेति ) प्रधानस्यान्तर्यामित्वप्रसङ्गाभावेऽपि किमर्थं सूत्रेण तन्निरसनमित्यत्राह ( एतदुक्तमिति ) पूर्वसूत्रे

❀ भावप्रकाशिका ❀

सदृशस्य नियन्तुरेव ग्रहणमिति भावः । ननु 'एष त आत्मा' 'स त आत्मा' इति व्यतिरेकनिर्देशस्य तद्धर्मव्यपदेशादिति सूत्रखण्डाविवक्षितस्य भाष्ये युक्तितया उपन्यासो न युक्त इत्याशङ्क्य तस्य सूत्रकृदभिमतत्वं दर्शयति ( एतत्पादाद्याधिकरण इति ) ननु 'शब्दविशेषात्' इतिसूत्रे 'सर्वं खल्विदं ब्रह्म' इति श्रुतिवाक्यार्थनिर्धारणार्थतया 'एष त आत्मा' इति व्यतिरेकनिर्देशस्यानभिमतत्वात्तस्य युक्तितयोपन्यासो न युक्त इत्यत आह ( तस्य प्रदर्शनार्थत्वादिति ) ॥ .... .... .... ....

ननु 'पुमान्न देवो न नरः' इत्यत्रैव देवादिशब्दानां शरीरमात्रपरत्वे बाध-

स्मार्त्तमचेतनं सर्वज्ञत्वनियन्तृत्वसर्वात्मत्वादिकं नार्हति तथा जीवोऽप्यतद्धर्मत्वादिति । अमीषां गुणानां परमात्मन्यन्वयः प्रत्यगात्मनि व्यतिरेकश्च सूत्रद्वयेन दर्शितः ॥

निरपेक्षं च हेत्वन्तरमाह —

उभयेऽपि हि भेदेनैनमधीयते ॥ २१ ॥

उभये– माध्यन्दिनाः काण्वाश्च, अन्तर्यामिणो नियाम्यत्वेन वागादिभिरचेतनैस्समम् एवम् शारीरमपि विभज्याधीयते "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्य्याम्यमृतः" इति माध्यन्दिनाः, "यो विज्ञाने तिष्ठन्' इति च काण्वाः, परमात्मनियाम्यतया तस्माद्विलक्षणत्वेनैनमधीयत इत्यर्थः ।

* श्रुतप्रकाशिका *

तद्धर्मा उक्ताः, अस्मिन् सूत्रेऽपि प्रकृतिपुरुषयोरसम्भाविता धर्मा उक्ता इति सूत्रस्य पौनरुक्त्यमाशङ्क्य परिहरति ( अमीषामिति ) ॥ .... .... ....

(निरपेक्षं चेति) पूर्वं व्यतिरेकनिर्देशसापेक्षहेतुरुक्तः, अयं तु वक्ष्यमाणो निरपेक्ष इत्यर्थः । – ॥ उभयेपि हि भेदेनैनमधीयते ॥ अत्रैकैकवस्तुषु परिपूर्णत्वेन नियन्तृतया स्थितिज्ञापनार्थं यच्छब्दावृत्तिः, 'स ते' इति व्यतिरेकनिर्देशो देवादिशब्दानां शरीरमात्रपरत्वं चास्वरसम्, तच्चापवादाभावेऽनुपपन्नम् । आत्मशब्दस्य स्ववाचित्वे तिष्ठन्नित्यादयोऽप्यस्वरसाः । 'यो विज्ञाने तिष्ठन्'इति काण्वपाठैकार्थ्यादात्मशब्दस्य स्ववाचित्वमयुक्तम्. प्रश्नवाक्यस्य चास्वारस्यमिति भिन्ना । यच्छब्दावृत्तिरेकत्वेऽपि सम्भवतीति भावोऽनुसन्धेयः, हिर्हेतौ । न हि भेदशब्दोऽत्र श्रूयत इत्यत्राह ( परमात्मनियाम्यतयेति ) भेदकधर्मश्रवणात् भेदेन व्यप-

ও भावप्रकाशिका ও

काभाव इत्याशङ्क्याह ( तच्चापवादाभाव इति ) ( तदस्वारस्यापवादश्चेति ) न

**अतोऽन्तर्यामी प्रत्यगात्मनो विलक्षणोऽपहतपाप्मा परमात्मा नारायण इति सिद्धम् ॥** इत्यन्तर्याम्यधिकरणम् ॥

* श्रुतप्रकाशिका *

देशस्सिद्ध इत्यर्थः । न केवलं व्यतिरेकनिर्देशादीनामपवादाभावः, किन्तु तदस्वारस्यापवादश्चास्तीति भावः । सुबालोपनिषदुक्तविशेषणैस्तदेकविषयतां स्मारयन्नधिकरणार्थमुपसंहरति ( अत इति ) ॥

अस्मिन्नधिकरणे कैश्चिच्चतुर्धा विचारो दर्शितः, पृथिव्याद्यभिमानिदेवताविशेषो वा योगसिद्धो वा परमात्मा वा अर्थान्तरं वा इति। तत्रार्थान्तरमिति पक्षस्त्वसम्भवनिरस्तः । ऐश्वर्यविशेषयोगस्य प्रकृष्टादृष्टजन्यत्वाविशेषाद्देवतास्वेव योगसम्भवाच्च शिरोऽन्तरभेदकल्पनं विफलम्, कार्यकरणवत्त्वं जीवत्वे हेतुतयोक्तम्. तदयुक्तम्; पृथिव्यादिष्वेकैकस्य शरीरत्वावगमात् चक्षुरादीनां प्रत्येकं शरीरत्वावगमाच्च। तत्कृतजीवत्वशङ्काया आनन्दमयाधिकरणे व्युदस्तत्वाच्च तेन जीवत्वशङ्कानुदयात्। भूतेन्द्रियादीनां सङ्घातरूपेण शरीरेण उपकरणोपकरणित्वलक्षण-

ॐ भावप्रकाशिका ॐ

केवलं व्यतिरेकनिर्देशस्वारस्यबाधकाभावः । स्वारस्यसाधकश्चास्तीत्यर्थः ॥

( असम्भवनिरस्त इति ) परमात्मादित्रिकबहिर्भूतस्यान्तर्यामित्वसम्भावनापदस्य कस्यचिदभावादित्यर्थः । योगसिद्ध इत्यस्याणिमाद्यैश्वर्ययोगशाली सिद्ध इति वा अष्टाङ्गयोगशाली सिद्ध इति वासम्भावितोऽर्थस्स्यात् । अर्थद्वयमपि प्रकृष्टपुण्येषु विग्रहादियुक्तदेवेष्वेव सम्भवतीति तत्रैवान्तर्भावाच्छिरोभेदकल्पनं विफलमित्यर्थः । ( कार्यकरणवत्त्वं जीवत्वे हेतुतयोक्तमिति ) देहेन्द्रियवत एव नियन्तृत्वसम्भवादन्तर्यामित्वे देहेन्द्रियवत्त्वमपेक्षितम्, तादृशञ्च देहेन्द्रियवत्त्वं जीवस्यैव सम्भवतीति नेश्वरस्यान्तर्यामित्वं सम्भवतीत्युक्तमिति भावः । पुरोवादिशङ्करभाष्यानुसारात् । ( पृथिव्यादिष्वेकैकस्य शरीरत्वावगमादिति ) अयं भावः,— देहातिरिक्तनियमने हि शरीरेन्द्रियाद्यपेक्षा, नतु स्वदेहनियमनेपि शरीरान्तरापेक्षा दृष्टचरी, तथा च पृथिव्यादीनां परमात्मशरीरत्वादेव परस्य तैरेव सशरीरत्वेन न तन्नियमने शरीरान्तरापेक्षेति, नतु पृथिव्यादिषु हि सशरीरत्वे परस्य जीवत्वप्रसङ्ग इत्याशङ्क्याह ( तत्कृतजीवत्वशङ्काया इति ) ( उपकरणोप-

* श्रुतप्रकाशिका *

सम्बन्धो हि जीवत्वसाधकः, अदृष्टत्वश्रवणेन प्रधानत्वशङ्काव्युदासपरं द्वितीयं सूत्रं व्याख्यातम्। तच्चायुक्तम्;'अदृष्टो द्रष्टा अश्रुतः श्रोता'इत्यादिवाक्ये अदृष्टाश्रुतादिपदानां द्रष्टृश्रोत्रादिपदान्तरितानामेव श्रूयमाणतया प्रधानपरत्वशङ्कानुदयात् । न ह्येकपदश्रवणेन वाक्यार्थनिर्धारणं पूर्वपक्षेऽपि घटते । प्रधानस्य सर्वविकारकारणत्वेऽपि नियन्तृत्वमुपचारतोऽपि न शक्यशङ्कम्, न हि घटादीन्प्रति मृत्तिकायाः नियन्तृत्वम् , अतः स्मार्तोपन्यासो दृष्टान्ततयैव घटते ; अत एव 'न च स्मार्तमतद्धर्माभिलापाच्छारीरश्च'इत्येवमन्तमेकं सूत्रम्, अन्यथाऽर्थवैघट्यात्। वैघट्यं च प्रधानशङ्कानुदय एव । पृथिव्यादिनियन्तॄणां जीवानामिव ईश्वरस्यापि सर्वनियन्तुर्नियन्त्रन्तरापेक्षया अनवस्थायां प्रसक्तायां नियन्तृनियाम्ययोरभेदेन तत्परिहार इत्यपि दुरुक्तम् ; अनवस्थाप्रसङ्गाभावात् । युक्त्या कल्पनायां ह्यनवस्थानम् , न श्रुत्याऽभ्युपगमे । श्रुतिश्च 'न तत्समश्चाभ्यधिकश्च दृश्यते ' इत्यादिर्नियन्त्रन्तरं प्रतिषेधति । न चानवस्थाया भेदप्रयुक्तत्वादभेदेन तत्परिहार इति वाच्यम् , श्रुतभेदनिबन्धनचोद्यस्य श्रुतविरुद्धाभेदकल्पनया परिहारानुपपत्तेः । कयोरभेदः ? न तावत्पृथिव्यादेः परमात्मनश्च, जडाजडयोरैक्याभावात् । नापि जीवेन, पृथिव्यादिवन्नियाम्यतयाऽवगतस्य तस्य तेनैव न्यायेन परमात्मनैक्यासम्भवात् पक्षपातस्याहेतुकत्वाच्च, परमा-

* भावप्रकाशिका *

करणित्वलक्षणसम्बन्धो हि जीवत्वसाधक इति ) शरीरभोक्तृत्वलक्षणसम्बन्धो हि जीवत्वसाधकः । न तादृशसम्बन्धो नियमने अपेक्षित इति भावः । ( एवमन्तमेकं सूत्रमिति ) न तु शारीरश्च ' उभयेपि हि भेदेनैनमधीयते ' इत्येकं सूत्रमिति भावः । ( नियन्तृनियाम्ययोरभेदेन तत्परिहार इत्यपीति ) ननु तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न सम्भवति, भेदाभावात् । भेदे हि सत्यनवस्थादोषापत्तिरिति शाङ्करभाष्यं व्याकुर्वताऽऽनन्दगिरिणा भेदाभावादित्यस्य परमात्मनो हि निरङ्कुशं सर्वनियन्तृत्वं श्रौतम् , तादृशि च सर्वनियन्तरि नियन्त्रन्तरस्य कल्पयितुमशक्यतया नियन्तृभेदाभावात् सिद्धान्तेप्यन्तर्यामिणोप्यन्यो नियन्तेत्यनवस्था न प्रसज्यत इत्यर्थो वर्णितः , न तु नियन्तृनियाम्ययोः परजीवयोर्भेदाभावमादायेति चेन्न ; तद्भाष्याभिप्रायमाविष्कुर्वता मृषावादिगोष्ठीगरिष्ठेन वाचस्पतिमिश्रेणैव नचानवस्था न च नियन्त्रन्तरं तेन नियम्यते , किन्तु यो जीवो नियन्ता स परमात्मैव उपा-

* श्रुतप्रकाशिका *

त्मसामानाधिकरण्यभेदनिषेधौ ह्युभयत्र समानौ। किञ्च पृथिव्यादेः स्वव्यतिरिक्तज्ञानप्रकाश्यत्वे ज्ञानस्यापि स्वव्यतिरिक्तज्ञानप्रकाश्यत्वेनानवस्थाप्रसङ्गात् तत्परिहारार्थं जडाजडयोरैक्यं किं न स्यात्? ज्ञानस्य स्वप्रकाशत्वेनानवस्थानुदयात् मिथ्यासत्यजडाजडयोस्तयोः स्वभावविरोधाच्चेति चेत् तर्हि सर्वनियन्तुरीश्वरस्यापि आत्मेश्वरतया नियन्त्रन्तराभावेन अनवस्थित्यभावाद्धेयार्हतदनर्हयोस्स्वभावविरोधाच्च न जीवेश्वरयोरेकत्वं युक्तम्। धारणादावप्ययमनवस्थापरिहारोऽनुसन्धेयः। किञ्च भेदो हि प्रतीयते, कथमभेदेनानवस्थापरिहारः? इत्थम्; प्रतीयमानोऽपि भेदो मिथ्या, न च जडाजडयोरैक्यप्रसङ्गः, नियाम्यपृथिव्यादिमिथ्यात्वाद्धि पृथिव्यादेः परस्य च भेदमिथ्यात्वम्, जीवपरयोस्तु स्वरूपैक्यात् भेदमिथ्यात्वम्, अत एव च नानवस्थेति चेत्. स्यादेवानवस्था, जीवपरैक्येऽपि पृथिव्यादिकं प्रति जीवस्येव तदेकीभूतस्यापि ब्रह्मणो नियन्त्रन्तराकाङ्क्षाया निवारकाभावात्. यथा पृथिव्यादेर्जीवस्य च नियन्तृनियाम्यभावमिथ्यात्वेऽपि तस्येश्वरं प्रति नियाम्यत्वमपारमार्थिकं सम्भवति, तथा जीवं प्रति नियन्तुः परमात्मनोऽप्यपरमार्थनियन्तृत्वादेवान्यं प्रत्यपरमार्थभूतनियाम्यत्वशङ्कां को वारयेत्? नियन्त्रन्तरनिषेधकं प्रमाणं निवारकमिति चेत्. यदि प्रमाणबलादनवस्थापरिहारः तर्हि नियन्तृनियाम्यभावपारमार्थ्यमाश्रित्यैव सा परिह्रियताम्, प्रमाणान्तराबाधेन निर्वाहे सम्भवति बाधाश्रयणायोगात्; अत एव 'नान्योऽतोऽस्ति द्रष्टे'त्यपि परमात्मैवाविद्याकल्पितभेदेन नियन्ता नियाम्यश्च भवतीति न पारमार्थिकद्रष्ट्रन्तरनिषेधपरम्, किन्तु नियन्तृरूपद्रष्ट्रन्तरनिवारणपरं विशिष्टे प्रकृते सति इतरनिषेधस्य तत्तुल्येतरविषयत्वदर्शनात्. कथं प्रमाणान्तरा-

६ भावप्रकाशिका ६

ध्यवच्छेदकल्पितभेदस्तथा ख्यायत इति असकृदावेदितम्, तत्कुतो नियन्त्रन्तरं कुतश्चानवस्था। तथा च 'नान्योतोस्ति द्रष्टा' इत्याद्या अपि श्रुतयः उपपन्नार्थाः परमात्मनोऽन्तर्यामिणोऽन्यस्याप्यात्मनो द्रष्टुरभावात् अविद्याकल्पितजीवपरमात्मभेदाश्रयास्तु ज्ञातृज्ञेयभेदश्रुतयः प्रत्यक्षादीनि प्रमाणानि संसारानुभवः विधिनिषेधशास्त्राणि चेति नियन्तृनियाम्यभेदस्यैवाविष्करणादित्यास्तां तावत्। ( प्रतीयमानोपि भेदो मिथ्येति ) सर्वोपीत्यर्थः। ( अत एव नानवस्थेति ) जीवपरभेदमिथ्यात्वादेवेत्यर्थः। ( पृथिव्यादिकं प्रति जीवस्येवेति ) यथा पृथिव्यादिकं

* श्रुतप्रकाशिका *

प्राप्तं नियन्तृनियाम्यभावादिकं विधाय शास्त्रं तदेव प्रतिषेद्धुमलम् ? कथमेकस्मिन् शरीरे प्रत्यगात्मद्वित्वमिति चेत् . काऽत्रानुपपत्तिः ? बहुत्वे प्रत्यक्त्वं हीयेतेति चेत् किं प्रत्यगात्मद्वित्वमात्रेऽनुपपत्तिः , उतैकस्मिन् शरीरे ? । न प्रथमः, सर्वेषामात्मनामहमिति प्रत्यक्त्वयैव स्वात्मानुभवदर्शनात् । न द्वितीयः, एकस्मिन् शरीरे चक्षुराद्यभिमानिनां देवानां प्राणसंवादे 'अहं श्रेयसे विवदमाना' इत्यनेकेषां प्रत्यक्त्वेन स्वात्मानुभवदर्शनात् । तत्र प्रत्यक्त्वमेव सत्यम् भेदो मिथ्येति चेत् . भेदस्सत्यः, प्रत्यक्त्वं मिथ्या किं न स्यात् ? उभयोरपि ह्यबाधस्तुल्यः, 'नेह नानास्ती'त्यादिकं भेदबाधकमिति चेत् . ''तत्त्वमसि' 'अयमात्मा' इत्यादिकं प्रत्यक्त्वबाधकं किं न स्यात्, परागर्थो हीदम्बुद्धिगोचरः । अयमिति निर्देशः प्रत्यक्त्वाविरोधी, प्रत्यक्त्वस्य प्रमाणसिद्धत्वादिति चेत् 'नेह नाने'त्यादिकमपि तत एव प्रमाणवशादात्मबहुत्वाविरोधि; अतो बहुत्वस्य पराक्त्वव्याप्यत्वाभावात् व्याप्तिशून्यस्तर्काभासोऽयम् , अतोऽन्तर्यामिविद्याया यथोक्त एवार्थः ॥ इत्यन्तर्याम्यधिकरणम् ॥

---

द्रष्टृत्वादिचेतनधर्मैर्नियन्तृत्वादिपरमात्मधर्मैश्च सहितेन 'अदृष्टो द्रष्टा' इत्याद्युक्तेनादृश्यत्वेन परमात्मपरत्वमुक्तं पूर्वाधिकरणे । चेतनधर्मादिरहितकेवलादृश्यत्वप्रतिपादकं वाक्यं प्रधानपरमेव भवितुमर्हति, रूपादिमत्पृथिव्यादिगतदृश्यत्वनिषेधस्य धर्म्यन्तरप्रतिपत्तौ गौरवेण पृथिव्यादिकारणावस्थप्रधानोपस्थापकत्वादिति शङ्कयोत्थानात्सङ्गतिः, इयमुत्तरत्र पूर्वपक्षोपन्यासे व्यक्तीभविष्यति ॥

७ भावप्रकाशिका ७

प्रति नियन्तुर्नियाम्यभेदरहितस्य जीवस्य नियन्त्रन्तराकाङ्क्षा; एवं नियाम्यभेदरहितस्यापीश्वरस्य तदाकाङ्क्षावश्यम्भाविनीत्यर्थः ॥ इत्यन्तर्याम्यधिकरणम् ॥

---

( अदृश्यत्वेन परमात्मत्वपरत्वमिति ) पृथिव्यादिनियाम्यैरनुपलभ्यमान एव नियमयतीति भाष्ये उक्तत्वात् . अदृश्यत्वमपि परमात्मत्वसाधकतयोपन्यस्तमिति ग्रन्थकृदाशयः, वस्तुतस्तु भाष्ये नायमाशय उपलभ्यते । प्रत्युतास्यात्तरस्य 'अदृष्टो द्रष्टा' इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयत इत्यादिभाष्यपर्यालोचनायामद्रष्टृत्वादेरचेतनत्वसाधकम् । द्रष्टृत्वादेस्तु तदपवादकत्वमेव प्रतीयते, न त्वद्रष्टृत्वादेरचेतनत्वसाधकत्वमिति द्रष्टव्यम् ॥

## अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २२ ॥

५ अधिकरणम्

आथर्वणिका अधीयते "अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः" इति; तथोत्तरत्र "अक्षरात्परतः परः" इति । तत्र सन्दिह्यते– किमिहादृश्यत्वादिगुणकमक्षरमक्षरात् परतः परश्च प्रकृतिपुरुषौ, अथोभयत्र परमात्मैव ? इति ।

* श्रुतप्रकाशिका *

॥ अदृश्यत्वादिगुणको धर्मोक्तेः ॥ अदृश्त्वादिगुणकशब्देन अक्षरम् पुल्लिङ्गनिर्देशेन अक्षरात्परतः परश्च द्वयमपि विषयीक्रियत इत्यभिप्रायेण वाक्यद्वयं विषयतयोपाददानस्संशयञ्च दर्शयति ( अथेत्यादिना ) अद्रेश्यमग्राह्यम्–इन्द्रियादृश्यमनुमानाद्यवेद्यम् चक्षुरदृश्यमिन्द्रियान्तरादृश्यं वा। यद्वा अद्रेश्यम्–ज्ञानेन्द्रियाविषयः । अग्राह्यम्–पाण्यादिकार्य्यहानोपादानाद्यविषयः । ( किमिहेति ) अदृश्यत्वादिगुणकाक्षरस्य प्रकृतित्वमक्षरात्परतः परस्य जीवत्वं च शङ्क्यते, न तूभयोरुभयात्मकत्वम्। उभयत्र–वाक्यद्वयेऽपि ; किमदृश्यत्वादिगुणकमक्षरात्परतः परश्च प्रधानपुरुषौ, उत परमात्मा ? इति विचारः । तदर्थं पृथिव्यादिसम्बन्धितया दृष्टं दृश्यत्वादिकं निषिध्यमानं किं पृथिव्यादिसजातीयमचेतनमेवाश्रयमुपस्थापयति, उत न ? इति। किमूर्णनाभिदृष्टान्तोपादानमचेतनाश्रयोपस्थापकत्वमुपबृंहयति, उत नेति । किम् 'अक्षरात्सम्भवतीह विश्व'मिति विश्वशब्दश्चिदचिदात्मकप्रपञ्चमुपस्थापयति, उताचेतनम् ? इति । अचेतनोपस्थापकत्वे सत्यूर्णनाभिदृष्टान्तस्य चाचिदाश्रयो-

ॐ भावप्रकाशिका ॐ

( न तूभयोरुभयात्मकत्वमिति ) अदृश्यत्वादिगुणकस्यापि प्रकृतिपुरुषोभयात्मकत्वमक्षरात्परतः परस्यापि प्रकृतिपुरुषोभयात्मकत्वमिति न भ्रमितव्यमित्यर्थः । उभयत्रेति व्याख्येयं पदम् । ( अचिदाश्रयोपस्थापकतोपबृंहकतयेति ) निषिध्य-

* श्रुतप्रकाशिका *

पस्थापकतोपकबृंहकतया निषिध्यमानं दृश्यत्वादिकमचिदुपस्थापकमित्यदृश्यत्वादि-

* भावप्रकाशिका *

मानदृश्यत्वादिगता या अचिदाश्रयोपस्थापकता तदुपबृंहणतयेत्यर्थः । इत्थमत्र विषयशुद्धिः, अव्याख्यातांशे क्वचिदर्थोपि लिख्यते; आथर्वणे– "ब्रह्मा देवानां प्रथमस्सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम-थर्वाय ज्येष्ठपुत्राय प्राह । अथर्वणे यां प्रवदेत ब्रह्माऽथर्वा तां पुरोवाचाङ्गिरसे तत्त्वतो ब्रह्मविद्याम् । स भरद्वाजाय सत्यवाहाय प्राह । भरद्वाजोऽङ्गिरसे परावराम् । शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति । तस्मै स होवाच । द्वे विद्ये वेदितव्ये । इति ह स्म यद्ब्रह्मविदो वदन्ति । परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदस्साम-वेदोऽथर्ववेदश्शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमितिहासपुराणं न्यायो मीमांसा धर्मशास्त्राणीति । अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्य-मग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम् । नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः । यस्मात्परं नापरमस्ति किञ्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् । यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाक्षरात् सम्भवतीह विश्वम् । तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम् । यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः । तस्मा-देतद्ब्रह्मनामरूपमन्नं च जायते ॥ प्रथमः खण्डः ॥

तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्त-तानि । तान्याचरत नियतं सत्यकामा एष वः पन्थाः सुकृतो ब्रह्मलोकः । यथा लोलायते ह्यर्चिस्समिद्धे हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् । यस्याग्निहोत्रमदर्शपूर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जनं च । अहुतमवैश्व-देवमश्रद्धयाऽविधिना हुतमासप्तमात्तस्य लोकान् हिनस्ति । सप्त ते अग्ने समिध-स्सप्तजिह्वास्सप्त ऋषयस्सप्त धाम प्रियाणि । सप्तहोत्रास्सप्तधा त्वा यजन्ति सप्त योनीरापृणस्वा घृतेन । अग्नेस्सप्तापि जिह्वाभेदान्नामत आह । काली कराली च मनोजवाच सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूपी च देवी

* श्रुतप्रकाशिका *

गुणकं प्रधानं ततः परश्च जीव इति स्यात्, यदा विश्वशब्दः चिदचिदात्मक-

७ भावप्रकाशिका ७

लेलायमाना इति सप्तजिह्वाः । एतासु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तान्नयन्त्येतास्सूर्यरश्मयो यत्र देवानां पतिरेकोधिवासः ।" एतासु भ्राजमानासु सप्तसु जिह्वासु यथाकालं यः कर्माचरति तमाददाना आहुतयस्सूर्यरश्मयो भूत्वा इन्द्रादिलोकं नयन्तीत्यर्थः । "एह्येहीति तमाहुतयस्सुवर्चसस्सूर्यस्य रश्मिभिर्यजमानं वहन्ति । प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यस्सुकृतो ब्रह्मलोकः । प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । ये तच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति । अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमानाः । जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः । अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते" । यस्मात्कारणात् कर्मिणो रागोपहतास्तत्त्वं न जानन्ति, तस्माच्च्यवन्त इत्यर्थः । "इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृतेऽनुभूत्वा इमं लोकं हीनतरं चाविशन्ति" । अनुभूत्वा—अनुभूयेत्यर्थः । हीनतरं वा अतिहीनं नरकं वा इत्यर्थः । "तपश्श्रद्धे येह्युपवसन्त्यरण्ये शान्ता विद्वांसो ब्रह्मचर्यं चरन्ति । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्स पुरुषो ह्यव्ययात्मा । परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ द्वितीयः खण्डः ॥

तदेतत्सत्यम् । यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति । दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः । एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा । तस्मादग्नि-

* श्रुतप्रकाशिका *

जगदुपस्थापकः तदोर्णनाभिदृष्टान्तस्य चाचेतनोपस्थापकत्वानुपबृंहकत्वाभिप्रेष्य-

ꣳ भावप्रकाशिका ꣳ

स्समिधो यस्य सूर्यस्सोमः पर्जन्य ओषधयः पृथिव्याः । पुमान् रेतस्सिञ्चति योषितायां बह्वीः प्रजा बहुधा सम्प्रसूताः । तस्मादृचस्सामयजूँषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरश्च यजमानश्च लोकस्सोमो यत्र पवते यत्र सूर्यः । तस्माच्च देवा बहुधा सम्प्रसूतास्साध्या मनुष्याः पशवो वयाँसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च । सप्तप्राणाः प्रभवन्ति तस्मात् सप्तार्चिषस्समिधस्सप्तहोमाः । सप्तेमे लोका येषु चरन्ति प्राणा गुहाशया निहितास्सप्त सप्त । अतस्समुद्रा गिरयश्च सर्वे अस्मात्स्यन्दन्ते सिन्धवस्सप्तरूपाः । अतश्च विश्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा । पुरुष एवेदं सर्वं ततो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य ॥ तृतीयः खण्डः ॥

आविस्सन्निहितं गुहाचरं नाम महत्पदम् । तत्रेदं सर्वमर्पितम् । एजत्प्राणं निमिषच्च यत् । एतज्जानथ सदसद्वरेण्यम् । परं विज्ञानाद्यद्वरिष्ठं प्रजानाम्" । जानथेति—हे शिष्या इति शेषः । "यदर्चिमद्यदणुभ्योऽणु यच्च यस्मिंल्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म तत्प्राणस्तदवाङ्मनः' । वाङ्मनसागोचरमित्यर्थः । 'तदेतत्सत्यं तदमृतं वेद्धव्यं सोम्य विद्धि । ऋग्धनुर्यजुर्बाणस्साम ज्याघोषणादिना । आथर्वणमयं शुभ्रं प्रतिगृह्णीत सुव्रतः । धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासना निशितं सन्दधीत । आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि । प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते । अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् । लक्ष्यं सर्वगतं चैव शरो मे सर्वतो मुखम् । वेद्धा सर्वगतश्चैव विद्धं लक्ष्यं न संशयः । आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् । यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैस्तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः । अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोऽन्तश्चरते बहुधा जायमानः । ओमित्येवं ध्यायथात्मानं स्वीयः पाराय तमसः परस्तात्' । पाराय—तीरभूतायेत्यर्थः । 'यस्सर्वज्ञस्सर्ववित् । यस्यैष महिमा भुवि । दिव्ये ब्रह्मपुरे

* श्रुतप्रकाशिका *

मानं दृश्यत्वादिकमपि नाचेतनोपस्थापकमित्यदृश्यत्वादिगुणकः परमात्मा ; परमात्म-

৬ भावप्रकाशिका ৬

ह्येष व्योम्नि आत्मा प्रतिष्ठितः । मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्तर्हृदये सन्निधाय । तद्विज्ञानेन परिपश्यन्ति धीराः । आनन्दरूपममृतं यद्विभाति । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे । हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः कुतोऽन्या देवताः । स एष देवः कृतभूतभावनः स्वयं विरुद्धो विरजः प्रकाशते । ब्रह्मैवेदममृतं यत्पुरस्तात् ब्रह्म पश्चाद्दक्षिणतश्चोत्तरतश्च । अतश्चोर्ध्वश्च प्रसृतं ब्रह्म ब्रह्मैवेदं सर्वमिदं वरिष्ठं ब्रह्म । पद्मकोशप्रतीकाशं सुषिरञ्चाप्यथोमुखम् । हृदयं तद्विजानीयाद्विश्वस्यायतनं महत् ॥ चतुर्थः खण्डः ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति । समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः । यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । प्राणो ह्येष सर्वभूतैर्विभाति विजानन् विद्वान् भवति नातिवादी' । अतिवादी न भवति—बहुगर्ह्यवाङ् भवतीत्यर्थः । ''आत्मक्रीड आत्मरतिः क्रियावानेष हि ब्रह्मविदां वरिष्ठः । सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यज्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तश्शरीरे ज्योतिर्मयो हि शुभ्रः । यं पश्यन्ति यतयः क्षीणदोषाः । सत्यमेव जयति नानृतम् । सत्यस्य पन्था विततो देवयानः । येनाप्नुवन्ति ऋषयो ज्ञानतृप्ताः । यत्र तत्सत्यस्य परमं निधानम् । ब्रह्म च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति । दूरात्सुदूरे तदिहान्तिके च पश्यस्त्वेतन्निहितं गुहायाम् । न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः । एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।

किं तावत्प्राप्तम्? प्रकृतिपुरुषाविति। कुतः? अस्या-

* श्रुतप्रकाशिका *

नश्च परान्तरासम्भवात् अक्षरात्परतः परश्च परमात्मेति फलितम्। (कुत इति)

७ भावप्रकाशिका ७

प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा" । विभवति वैभवयुक्ता भवति । परमात्मनि प्रसन्ने असङ्कुचितज्ञानो भवतीत्यर्थः । "यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। अनन्तं लोकं जयति तांश्च कामान् तस्मादात्मस्थं ह्यर्चयेद्भूतिकामः ॥ पञ्चमः खण्डः ॥

स यो ह वै तत्परमं धर्मधाम यस्मिन् विश्वं निहितं भाति शुभ्रम्। उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः' । शुक्रम्--पुरुषमित्यन्वयः । शुक्लं शरीरोपादानभूतं यच्छुक्लमित्यर्थः । " कामान् यः कामयते मन्यमानः स कामभृज्जायते यत्र तत्र। पर्याप्तकामश्च कृतात्मनश्च इहैव सर्वे प्रविलीयन्ति कामाः। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्। नायमात्मा बलहीनेन लभ्यो न च प्रमादात्त तपसोप्यऽलिङ्गात्' । तपश्शब्दो ज्ञानपरः । चक्राङ्कनादिलिङ्गशून्य-ज्ञानेन च न लभ्य इत्यर्थः । 'एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशति ब्रह्मधाम' । एतैरुपायैः-- बलाप्रमादसलिङ्गज्ञानैरित्यर्थः । 'सम्प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानस्सर्वमेवाविशन्ति । वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे। गताः कलाः पञ्चदश प्रतिष्ठाः देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्वमेकं भवन्ति। यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्। स यो ह वैतद्ब्रह्म वेद ब्रह्मैव भवति। नास्याब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति। तदेषः श्लोकः। क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः। तेषामेवैतां ब्रह्मविद्यां वदेत शिरो व्रतं विधिवद्यैस्तु चीर्णम्। तदेतत्सत्यमृषिरङ्गिराः प्रोवाच नैतदचीर्णव्रतोऽधीते

त्र्यस्य 'अदृष्टो द्रष्टा' इत्यादाविव न द्रष्टृत्वादिश्चेतनधर्मविशेष इह श्रूयते, 'अक्षरात् परतः परः' इति च सर्वस्माद्विकारात्परभूतादक्षरादस्मात्परः क्षेत्रज्ञः समष्टि-

* श्रुतप्रकाशिका *

अदृष्टशब्दस्य अर्हार्थीयतृजन्तपदविशेषणतया "धातुसम्बन्धे प्रत्ययाः" इति स्मृतिवशेनार्हार्थे विश्रान्तिरवगम्यते, अद्रेश्यमिति च पदं कृत्यप्रत्ययान्तत्वादर्हार्थम् तथा चादृश्यत्वादिकं पूर्वाधिकरणे परमात्मधर्मतयाऽवगतमिति नाक्षरं प्रकृतिः, अत एवाक्षरात्परतः परश्च न समष्टिपुरुषः, न हि परमात्मनोऽन्यत् परं विद्यत इति शङ्कायामदृश्यत्वादिगुणकस्य प्रकृतित्वमुपपादयति ( अस्याक्षरस्येति ) अन्तर्यामिविद्यायामपि न केवलमदृष्टत्वं परमात्मत्वसाधकम्, किन्तु द्रष्टृत्वादिसाचिव्यम्, इह तु तत्साचिव्याभावाददृश्यत्वं नाचिद्व्यावर्त्तकमित्यर्थः । अदृष्टो द्रष्टेत्यादिना सङ्गतिश्चाभिप्रेता, तथाप्यक्षरात्परतः परो न जीवः, न ह्यक्षरात्पर इत्युक्तम्, किन्तु 'परतः पर' इतीति शङ्कायां तस्य समष्टिपुरुषत्वमुपपादयति ( सर्वस्मादिति ) ( सर्वस्माद्विकारात्परभूतादक्षरादिति ) समानविभक्तिनिर्देश-

ꣳ भावप्रकाशिका ꣳ

नाकृतपावनो नासन्न्यासी च नमः परमर्षिभ्यो नमः परमर्षिभ्यः ॥ षष्ठः खण्डः ॥ ( अर्हार्थीयतृजन्तपदेति ) ननु किमत्र प्रमाणम्? 'ल तृचा' विति तृच एव सम्भवात् नित्यसाक्षात्काराश्रये तस्मिन् 'अर्हे कृत्यतृचश्च' इत्यर्हार्थत्वस्यान्याय्यत्वाच्च, सत्यपि तस्य अर्हार्थत्वे अदृष्ट इत्यस्य भूतार्थत्वे विरोधाभावेन 'धातुसम्बन्धे प्रत्यया' इति सूत्राप्रवृत्तेः । अग्निष्टोमयाज्यस्य पुत्रो भवितेत्यादौ भूते करणे यज इति विहितस्य णिनिप्रत्ययस्य भूतार्थतया अग्निष्टोमयाजीत्यस्याग्निष्टोमेनेष्टवानित्यर्थकतया तस्मिन् भवितेति ल्युडर्थभूतानद्यतनभविष्यत्त्वस्यासम्भवेन तत्र धातुसम्बन्धे प्रत्यया इति सूत्रवशेनाग्निष्टोमयाजीत्यस्य भविष्यदर्थाश्रयणेपि अविरोधेन इह तथात्वे प्रमाणाभावादिति चेत्. उच्यते; "वेदाहं समतीतानि मां तु वेद न कश्चन" इत्यादिस्मृत्यनुसारेण स्वयमितरैरदृश्य एव सन् इतरान् पश्यतीत्यस्य तदर्थतया अदृष्ट इत्यस्यादृश्यत्वार्थकत्वाददृश्यत्वस्य च ब्रह्मणि पूर्वाधिकरणे प्रतिपन्नत्वात्कथमदृश्यत्वपदावलम्बनेन पूर्वपक्ष इति भावः ।

पुरुषः प्रतिपाद्यते । एतदुक्तम्भवति-- रूपादिमत्स्थूलरूपाचेतनपृथिव्यादिभूताश्रयं दृश्यत्वादिकं प्रतिषिध्यमानं पृथिव्यादिसजातीयसूक्ष्मरूपाचेतनमेवोपस्थापयति, तच्च प्रधानमेव । तस्मात्परत्वश्च समष्टिपुरुषस्यैव

* श्रुतप्रकाशिका *

स्वारस्यात्, परतोऽक्षरादिति सामानाधिकरण्यमिति भावः । चेतनधर्मविशेषाश्रवणेऽप्यदृश्यत्वं साधारणतया न निर्णायकम्, अतोऽनुकूलयुक्तिर्वक्तव्या, दृष्टान्तश्चेतनकारणत्वानुगुण इत्यत्राह ( एतदुक्तमिति ) तदन्यार्थकनञुपश्लिष्टा अब्राह्मणादयश्शब्दा हि ब्राह्मणादिप्रत्यासन्नसजातीये क्षत्रियादौ वर्तन्ते, न तु श्वपचादौ पश्वादौ वा । अबालाकृशशब्दादयः प्रत्यासन्नावस्थान्तराश्रये तस्मिन्नेव धर्मिणि वर्तन्ते, न तु धर्म्यन्तरे, सन्निकृष्टबोधनस्य न्याय्यत्वात्; एवमदृश्यत्वादिगुणानां धर्मिविशेषाकाङ्क्षायां निषिध्यमानदृश्यत्वस्याचिदाधारत्वेन अचेतने प्रतिपन्ने तस्यैव सूक्ष्मावस्थस्यादृश्यत्वादौ च सम्भवति, विजातीयधर्म्यन्तरकल्पने गौरवप्रसङ्गात् तत्परत्वाश्रयणमयुक्तमिति भावः । दृश्यत्वादिनिषेधाद्रूपादिवदचेतनत्वमपि निवर्तेत इत्यत्राह ( तच्चेति ) न दृश्यत्वादिव्याप्यमचेतनत्वम्, मन आदौ

* भावप्रकाशिका *

( नाविद्यावर्तकत्वमित्यर्थ इति ) प्रत्युताविद्यासाधकमेवेत्यर्थः । ( दृष्टान्तश्च चेतनेति ) ऊर्णनाभेश्चेतनत्वादिति भावः । ( नञुपश्लिष्टेति ) नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिरिति न्यायात् नञिवशब्दयोरेकार्थवृत्तित्वादिति भावः । इदञ्चोपादानोपादेयभेदाभ्युपगमपक्ष इति ध्येयम् । सादृश्यस्य भेदगर्भत्वादुपादानोपादेयभेदमङ्गीकृत्याह ( अबालाकृशेति ) ननु चेतनदृष्टान्तानुगुण्यकार्यसारूप्यनिषेधस्वारस्यहेतुभिः यत्तदद्रेश्यमित्यादौ परमात्मपरत्वव्युदासेन प्रधानपरत्वाश्रयणेपि अक्षरात्परतः परः इति वाक्येन परमात्मत्वपरित्यागे प्रमाणं पश्यामः, प्रत्युत 'यस्सर्वज्ञस्सर्ववित्' इत्यादिश्रुत्यनुरोधेन ब्रह्मविद्यासमाख्यानुरोधेन च परेषां प्रथमपूर्वपक्ष इव परमात्मपरत्वमेवास्त्वित्याशङ्क्य यथा निषेधस्वारस्यवशेन तस्यैव द्रव्यस्यावस्थान्तरयुक्तस्य ग्रहणमित्युच्यते तथा "दिव्यो ह्यमूर्तः

* श्रुतप्रकाशिका *

व्यभिचारादिति भावः । अदृश्यत्वादिगुणकस्य प्रधानत्वसमर्थनमुपजीव्य अक्षरात्परतः परस्य जीवत्वमाह ( तस्मादिति ) यथोर्णनाभिरिति चेतनदृष्टान्तः कथ-

* भावप्रकाशिका *

पुरुषः" इतिमन्त्रे जीवे प्रसिद्धस्य मूर्तिमत्त्वस्य मनःप्राणवत्त्वस्य च निषेधदर्शनात् तस्यैवावस्थान्तरयुक्तस्य ग्रहणमुचितम् ; अतस्सर्वज्ञत्वादिकमपि जीव एव मुक्त्यवस्थापेक्षया नेतुं शक्यमित्यभिप्रयन्नाह ( प्रधानत्वसमर्थनमुपजीव्येति ) ननु निषेधस्वारस्यमवलंब्य 'यत्तदद्रेश्य'मितिवाक्ये प्रधानत्वपूर्वपक्षो न युक्तः। 'अगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्' इति जीवे प्रसिद्धगोत्रादिनिषेधबाहुल्यात्तत्रापि वाक्ये पराभिमतद्वितीयपक्ष इव जीवपरत्वमेव किं न स्यात्, अन्यथा 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं-नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः' इत्यन्तं प्रधानपरम् । 'यस्मात्परं नापरमस्ति किञ्चित्' 'यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्' 'वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्'' इति तदुत्तरवाक्यं जीवपरम् । 'यथोर्णनाभिस्सृजते गृह्णते च' 'यथा पृथिव्यामोषधयस्सम्भवन्ति' 'यथा सतः पुरुषात्केशलोमानि तथाक्षरात्सम्भवतीह विश्वम्' इति तदुत्तरवाक्यं प्रधानपरम्।'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्' इत्यारभ्य 'परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'' इत्युपरितनसन्दर्भो जीवपरः । तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विष्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः। तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' इति प्रधानपरम् । 'दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः' इति जीवपरमिति कथमिवैतत्पण्डितानां हृदयं प्रथममधिरोहेदिति चेन्न; 'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः' इत्यानन्तर्यमचोदनेत्याधिकरणन्यायेनानन्तर्यमात्रस्याप्रयोजकतया दूरस्थेनापि योग्यतावशात् सम्बन्धोपपत्तेः प्रधानजीवयोर्व्यतिकरेण प्रतिपाद्यत्वस्यागत्या स्वीकार्यत्वादिति भावः । ( चेतनदृष्टान्तः

प्रसिद्धम् । तदधिष्ठितञ्च प्रधानं महदादिविशेषपर्य्यन्तं विकारजातं प्रसूत इति तत्र दृष्टान्ता उपन्यस्यन्ते [1]"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्सम्भवतीह विश्वम्" इति। अतोऽस्मिन् प्रकरणे प्रधानपुरुषावेव प्रतिपाद्येते– इति ॥

एवं प्राप्ते ब्रूमः– अदृश्यत्वादिगुणको धर्मोक्तेः । अदृश्यत्वादिगुणकोऽक्षरात्परतः परश्च परमपुरुष एव । कुतः? तद्धर्मोक्तेः 'यस्सर्वज्ञस्सर्ववित्' इत्यादिना

* श्रुतप्रकाशिका *

मित्यत्राह (तदधिष्ठितञ्चेति) अनधिष्ठितत्वेऽपि दृष्टान्तोऽस्ति, यथा पृथिव्यामिति। चेतनसन्निधिमात्रापेक्षत्वे दृष्टान्तः यथा स त इति। पूर्वपक्षमुपसंहरति (अत इति) ॥

राद्धान्ते (अदृश्यत्वेति) परात्परं पुरुषमितिवाक्यं स्मारयति (परमपुरुष इति) कस्य धर्मोक्तेरित्यपेक्षां पूरयति (तद्धर्मोक्तेरिति) नन्वक्षरं प्रकृतिः, सर्वज्ञस्तु

* भावप्रकाशिका *

कथमित्यत्राहेति) प्रधानस्य प्रतिपाद्यत्व इति शेषः । भाष्ये–प्रसूत इति तत्र दृष्टान्ता इति । अत्र इतिर्हेतौ, यतः पुरुषाधिष्ठितप्रधानं प्रसूते, अतश्चेतनाचेतनदृष्टान्ता उपन्यस्यन्त इत्यर्थः । ननु प्रधानजीवावत्र प्रतिपाद्येते इति पूर्वः पक्षः साङ्ख्यमतावलम्बी, साङ्ख्यमते च पुरुषस्य सन्निधानमात्रेणैवोपकर्तृत्वं नाधिष्ठातृत्वेनेत्याशङ्क्य तदनुरूपदृष्टान्तस्यापि सत्त्वात् पुरुषाधिष्ठितं प्रधानं परिणमत इति वा पुरुषसन्निधानमात्रेण परिणमत इति वा किञ्चित्तन्मतमवलम्ब्य पूर्वपक्षः प्रवर्तितुमर्हतीत्यभिप्रयन्नाह (अनधिष्ठितत्वेपीति) पूर्वपक्षमुपसंहरति– अत इति ॥

इतीत्यस्यानन्तरं राद्धान्ते अदृश्यत्वेतीति कोशेषु पाठो दृश्यते, तस्य मन्दप्रयोजनस्यापि शिष्यावधानार्थमिति ध्येयम्। ननु प्रकृष्टपुण्यस्य जीवस्य बद्धदशायां कथं सार्व-

१ मुण्ड. १-१-७ ॥ २ मुण्ड- १ १ ९ ॥

सर्वज्ञत्वादिकास्तस्यैव धर्मा उच्यन्ते; तथा हि "यया तदक्षरमधिगम्यते' इत्यादिना अदृश्यत्वादिगुणकमक्षरमभिधाय 'अक्षरात्सम्भवतीह विश्वम्' इति तस्माद्विश्वसम्भवञ्चाभिधाय "यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इति भूतयोनेरक्षरस्य सर्वज्ञत्वादिः प्रतिपाद्यते । पश्चात्

* श्रुतप्रकाशिका *

स्वसन्निधानात्प्रकृत्युपकारकः प्रकृष्टपुण्यो जीवस्तदवस्थोपलक्षितो मुक्तो वेति शङ्कायामाह (तथाहीति) (तस्मादिति) अक्षरशब्दः प्रकृताक्षरपर इति भावः। (भूतयोनेरक्षरस्येति) सार्वज्ञ्यादेर्द्धर्मिविशेषापेक्षायां प्रकृत एव धर्म्मी स्वीकार्यः, उपक्रमप्रतिपन्नपरित्यागेनाप्रतिपन्नकल्पनायोगात् "भूतयोनिम्" "तस्मादेतत्" इति कारणत्वप्रत्यभिज्ञानाच्च, अतः 'यस्सर्वज्ञः 'तस्मादेत"दिति यत्तच्छब्दौ प्रकृताक्षरविषयौ, ततश्चाक्षरस्य कारणत्वमनूद्य सृष्टिस्थित्युपयोगित्वेन सार्वज्ञ्यादि विधीयत इत्यर्थः। ननु भूतयोनित्वलिङ्गप्रत्यभिज्ञानादपि 'अक्षरात्परत' इति श्रुतिप्रत्यभिज्ञानं प्रबलम्, पञ्चम्यन्ताक्षरपदवाच्यं हि प्रधानम्, अतस्तदेव 'यया तदक्षर' मित्यत्रापि प्रतिपाद्यम्, अतस्तदनुवादेन सार्वज्ञ्यादिविधानमयुक्तमिति चेन्न; केवलश्रुतिप्रत्यभिज्ञानादपि 'येनाक्षरं

ॐ भावप्रकाशिका ॐ

ज्यमित्यत आह (तदवस्थोपलक्षित इति) पुण्योपलक्षित इत्यर्थः। नित्यमुक्तस्य गोत्रवर्णनिषेधस्वारस्याभावात् पुण्योपलक्षितमुक्त इत्युक्तमिति द्रष्टव्यम्। (प्रकृताक्षरपर इति भाव इति ) पूर्वपक्षिणोपि विवादाभावादिति भावः। (कारणत्वप्रत्यभिज्ञानाच्चेति ) 'तथाक्षरात्सम्भवतीह विश्व' मिति पूर्वप्रस्तुतपञ्चम्यन्तप्रत्यभिज्ञानं चशब्देन समुच्चीयते। (कारणत्वमनूद्येति) तस्यापि विधाने गौरवादिति भावः। ननु भूतयोनित्वलिङ्गप्रत्यभिज्ञानादपीति 'अथ परा यया तदक्षरमधिगम्यते' इति वाक्यप्रतिपाद्यस्य 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः तस्मात्' इतिनिर्दिष्टस्य च कारणत्वप्रत्यभिज्ञानादैक्यमभ्युपगम्याक्षरात्परतः पर इत्यत्रापि पञ्चम्यन्ताक्षरपदनिर्दिष्टस्य

१ मुण्ड. १-१-५ ॥

'अक्षरात्परतः परः' इति च प्रकृतमदृश्यत्वादिगुणकं

* श्रुतप्रकाशिका *

पुरुषं वेद सत्य'मिति पूर्वोक्तभूतयोनित्वलिङ्गानुगृहीतस्याक्षरश्रुतिप्रत्यभिज्ञानस्य प्रबलत्वात्। ननु 'भूतयोनिम्' 'अक्षरात्सम्भवती'त्युपादानमुच्यते, 'यस्सर्वज्ञस्सर्ववित्' इति निमित्तम्, अतो लिङ्गानुगृहीतत्वमसिद्धम्। न चैतावता "अक्षरात्परतः" "अक्षरं पुरुष'मितिश्रुतिप्रत्यभिज्ञानयोस्तुल्यत्वम्। "अक्षरात्परतः' इति प्रत्यभिज्ञानस्य ऊर्णनाभिदृष्टान्तानुगृहीतत्वेन प्राबल्यादिति. नैवम्; ऊर्णनाभिदृष्टान्तस्याचिद्विशिष्टब्रह्मकारणत्वेऽप्युपपत्तेः। न चैतावता प्रत्यभिज्ञानयोस्तुल्यत्वम्, 'अक्षरं पुरुष'मिति प्रत्यभिज्ञानस्य प्रथमभाविनः प्रबलतया पञ्चम्यन्ताक्षरशब्दस्य तदविरोधेन वर्णनीयत्वात्, अतो भूतयोन्यक्षरमेव 'अक्षरं पुरुष'मित्युच्यते, पुरुषत्वात् कारणत्वेन प्रत्यभिज्ञानाच्च अक्षरशब्दवाच्यस्स एव सर्वज्ञत्वादिगुणकः, तथा च सति 'अक्षरात् सम्भवति 'तस्मादेतद्ब्रह्म' इति पञ्चम्योर्वैरूप्यं न स्यात्, निमित्तोपादानाभेदे सत्येव ह्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमुपपद्यते। अक्षरं न परमात्मा, अक्षरादपि परस्य प्रतिपन्नत्वादित्यत्राह ( पश्चादिति ) परत्वेन व्यपदिश्यते—प्रथमान्तेन परशब्देन व्यपदिश्यत इत्यर्थः। ( प्रकृतमदृश्यत्वादिगुणकमिति ) अदृश्यत्वादिगुण-

ꣳ भावप्रकाशिका ꣳ

भूतयोन्यक्षरभेदकल्पनापेक्षया अथ परा यया तदक्षरमितिवाक्यप्रतिपन्नाक्षरस्याक्षरात्परतः पर इति पञ्चम्यन्ताक्षरपदनिर्दिष्टप्रधानैक्यमेव ज्यायः। उभयत्राप्यक्षरश्रुतिप्रत्यभिज्ञानात्। ततश्च तस्मिन् प्रधाने सार्वज्ञ्यादिविधानमनुपपन्नमित्यर्थः। ( भूतयोनित्वलिङ्गानुगृहीतस्येति ) यद्यपि येनाक्षरं पुरुषमितिवाक्ये भूतयोनित्वं न श्रुतम्, तथापि 'यस्सर्वज्ञस्सर्वविद्यस्य ज्ञानमयं तपः तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते' इतिवाक्यस्य 'येनाक्षरं पुरुष'मितिवाक्यस्य चैकार्थ्यस्य चोभयसम्प्रतिपन्नतया भूतयोनित्वलिङ्गानुगृहीताक्षरशब्दतया प्रत्यभिज्ञा बलवतीति तात्पर्यम्।( प्रथमभाविनः प्रबलतयेति ) एतेन "तथाक्षरात्सम्भवतीह विश्वम्'तथाऽक्षराद्विविधास्सोम्य भावाः 'अक्षरात्परतः परः" इत्येतेषां पञ्चम्यन्तसारूप्यादेकविषयत्वमित्येतदपि निरस्तं वेदितव्यम्। ( पुरुषत्वादिति ) चेतनत्वात् सार्वज्ञ्ययोग्यत्वं सम्भवतीति भावः। व्यपदिश्यत इत्यर्थ इत्यस्यानन्तरं तत्र हेतुमाह प्रकृत-

**भूतयोन्यक्षरं सर्वज्ञमेव परत्वेन व्यपदिश्यते : अतः 'अक्षरात्परतः परः' इत्यक्षरशब्दः पञ्चम्यन्तः प्रकृतमदृ-**

* श्रुतप्रकाशिका *

कत्वेन प्रकृतत्वादित्यर्थः। अपाणिपादत्वेन सर्वगतत्वेन पुरुषशब्दवाच्यत्वेन च प्रकृतं हि भूतयोन्यक्षरम् "अपाणिपादम्' 'नित्यं विभुं सर्वगतम्' 'तेनेदं पूर्णं पुरुषेण सर्वम्' 'येनाक्षरं पुरुषं वेद" इति च, अक्षरात्परतः परस्य "दिव्यो ह्यमूर्तः पुरुषः" इति पुरुषशब्दसामानाधिकरण्यदर्शनात् अमूर्तशब्देनापाणिपादत्वप्रत्यभिज्ञानात् 'बाह्याभ्यन्तर' इत्यनेन सर्वगतत्वप्रत्यभिज्ञानाच्च भूतयोन्यक्षरमेव अक्षरात्परतः पर इत्यर्थः। सर्वज्ञस्य भूतयोन्यक्षरात्परत्वशङ्काव्युदासाय भूतयोन्यक्षरस्यैव सार्वज्ञ्यादिगुणकत्वोपपादनं स्मारयति ( सर्वज्ञमेवेति ) नन्वक्षरशब्दार्थवैरूप्यपरिहाराय भूतयोन्यक्षरात्सर्वज्ञत्वादिगुणकः पर इत्यभ्युपगन्तव्यमित्यत्राह ( अतोऽक्षरादिति ) ( प्रकृतमदृश्यत्वादिगुणकमिति ) अदृश्यत्वादिगुणकमक्षरमेव 'येनाक्षरं पुरुष'मिति पूर्वस्मिन् सन्निकृष्टवाक्ये प्रकृतम्, तदेव प्रोवाचेति वक्तव्यतया प्रतिपादितमिति तस्यैव प्राधान्येन प्रतिपाद्यत्वमवगम्यते, अतोऽक्षरपुरुष एव अक्षरात्परतः परत्वेनोच्यत इत्यभ्युपेत्यम्। अन्यस्य प्रतिपाद्यत्वमुक्त्वा अर्थान्तरस्य प्रतिपाद-

ॐ भावप्रकाशिका ॐ

मदृश्यत्वादिगुणकमितीति ग्रन्थ उपेक्षितः। अतश्च व्युत्क्रमेण प्रतीकग्रहणशङ्काया नावकाशः। ( अदृश्यत्वादिगुणकत्वेन प्रकृतत्वादित्यर्थ इति ) अमूर्तपुरुषप्रत्यभिज्ञापकापाणिपादत्वादिगुणकत्वादित्यर्थः। उत्तरग्रन्थानुसारात्तस्यैव हेतूकर्तुमुचितत्वादिति द्रष्टव्यम्। ( पुरुषशब्दवाच्यत्वेन चेति ) नच पूर्वपक्षिणः 'तेनेदं पूर्णं पुरुषेण सर्व'मित्यादीनां भूतयोन्यक्षरपरत्वमसम्मतम्। पुरुषशब्दितजीवपरमित्येव तदभिप्रायादिति वाच्यम्; 'यस्मात्परं नापरमस्ती'त्यत्र यच्छब्दादिबलेन प्रकृतभूतयोन्यक्षरप्रतिपादकत्वस्य पुरुषशब्दे वक्तव्यत्वात् 'येनाक्षरं पुरुषं वेद सत्य' मित्यत्रापि प्रक्रमश्रुताक्षरशब्दानुरोधेन पुरुषपदस्य वर्णनीयतया एकविषयत्वस्य वक्तव्यत्वाच्चेति द्रष्टव्यम्। प्रकृतमदृश्यत्वादिगुणकमिति भाष्ये प्रकृतमित्यस्य प्रधानप्रतिपाद्यत्वेन प्रकृतत्वमर्थ इत्यभिप्रयन्व्याचष्टे ( अदृश्यत्वादिगुणकमक्षरमेवेति ) (परतः परत्वेनोच्यत इत्यभ्युपेत्यमिति) अप्रधानप्रतिपाद्यस्य प्रधान-

श्यत्वादिगुणकमक्षरं नाभिधत्ते, तस्य सर्वज्ञस्य विश्वयोनेस्सर्वस्मात्परत्वेन तस्मादन्यस्य परत्वासम्भवात, अतोऽत्राक्षरशब्दो भूतसूक्ष्ममचेतनं ब्रूते ॥

इतश्च न प्रधानपुरुषौ—

* श्रुतप्रकाशिका *

नायोगात्, अतोऽक्षरपुरुषो न पञ्चम्यन्ताक्षरशब्दोक्तः, अपि त्वक्षरात्परतः पर एवेत्यभिप्रायः। अत इत्यभिप्रेतं हेतुं विवृणोति ( तस्येति ) ( सर्वज्ञस्य विश्वयोनेरिति ) 'अक्षरात्सम्भवतीह विश्वम्' 'तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते' इत्युभयत्र कारणत्वप्रत्यभिज्ञानात् भूतयोन्यक्षरमेव सर्वज्ञमिति न सर्वज्ञस्तदपेक्षया पर इत्यभिप्रायः। ( सर्वस्मात् परत्वेन तस्मादन्यस्य परत्वासम्भवादिति ) भूतयोन्यक्षरमभिधायानन्तरमेव "यस्मात्परं नापरमस्ति किञ्चित्" इति समाभ्यधिकनिषेधस्योपक्रमावगतत्वादित्यर्थः। भूतयोन्यक्षरादनन्यत्वेन सर्वज्ञस्य ततः परत्वासम्भवः, उपक्रमविरोधेनाक्षरादर्थान्तरस्य परत्वासम्भव इत्युक्तं भवति। अक्षरादिति किमुच्यत इत्यत्राह ( अतोऽत्रेति ) अतः— यस्य परमात्मधर्मोक्तिः स हि परमात्मा प्रथमान्ताक्षरशब्दनिर्दिष्टस्य तद्धर्मश्रवणात् पञ्चम्यन्ताक्षरशब्दनिर्दिष्टस्य तदभावाच्चेत्यर्थः। अक्षरशब्दयोर्भिन्नविषयत्वमुपपन्नम्, अस्मिन्नेव प्रकरणे "तपसा चीयते ब्रह्म' 'इति ह स्म यद्ब्रह्मविदो वदन्ति' 'तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इत्यत्र ब्रह्मशब्दयोर्भिन्नविषयत्वदर्शनात्। यत्तु समानविभक्तिनिर्देशस्वारस्यात् सामानाधिकरण्यमिति। तन्न; परशब्दस्य पञ्चम्यन्तपदसापेक्षत्वात् तत्स्वारस्यार्थं न सामानाधिकरण्यम्। किञ्च परतोऽक्षरादिति न निर्दिष्टम्! 'अक्षरात्परतः परः' इति हि क्रमः, तत्स्वारस्याच्च न सामानाधिकरण्यम् ॥ .... .... .... .... ....

* भावप्रकाशिका *

प्रतिपाद्यात्परत्वेनोक्त्यसम्भवादिति भावः। ( ब्रह्मशब्दयोर्भिन्नविषयत्वदर्शनादिति ) तच्चोत्तरत्र भाष्य एव स्पष्टम्। ( समानविभक्तिनिर्देशस्वारस्यादिति ) अक्षरात्परतः पर इति पदद्वयस्यापीत्यर्थः। ( पञ्चम्यन्तपदसापेक्षत्वादिति ) अत एव देवदत्तपुत्र इत्यादौ न सामानाधिकरण्यं पुत्रपदस्य षष्ठ्यन्तपदसापेक्षत्वादिति द्रष्टव्यम् ॥

विशेषणभेदव्यपदेशाभ्याञ्च नेतरौ ॥ २३ ॥

विशिनष्टि हि प्रकरणम्—प्रधानाच्च पुरुषाच्च भूतयोन्यक्षरं व्यावर्त्तयतीत्यर्थः, एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोपपादनादिभिः । तथा ताभ्यामक्षरस्य भेदश्च व्यपदिश्यते 'अक्षरात्परतः परः' इत्यादिना। तथा हि "स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' इति सर्वविद्याप्रतिष्ठाभूता ब्रह्मविद्या प्रक्रान्ता ; परविद्यैव च सर्वविद्याप्रतिष्ठा · तामिमां सर्वविद्याप्रतिष्ठां विद्यां चतुर्मुखाथर्वादिगुरुपरम्परयाऽङ्गिरसा प्राप्तां जिज्ञासुः "शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति। ब्रह्मविद्यायास्सर्वविद्याश्रयत्वाद्ब्रह्मविज्ञानेन सर्वं विज्ञातं

---

* श्रुतप्रकाशिका *

॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ विशेषणशब्दं व्याचष्टे (विशिनष्टि हीति) कस्मात्किमित्यत्राह ( प्रधानादिति ) कैर्धर्मैरित्यत्राह ( एकेति ) भेदव्यपदेशशब्दं व्याचष्टे ( तथेति ) हेतुद्वयं विवरीतुमाह ( तथा हीति ) न केवलं विशेष्यवाचिना ब्रह्मविद्याशब्देन, विशेषणवाचिना सर्वविद्याप्रतिष्ठामितिशब्देनापि ब्रह्मविषयत्वं सिद्धमित्याह (परविद्यैव चेति) परब्रह्मविषया विद्या परविद्या । सर्वविद्याप्रतिष्ठात्वम्—सर्वविद्याश्रयत्वम् । ज्ञातव्ये ब्रह्मणि कृत्स्नज्ञातव्यान्तर्भावात् ब्रह्मज्ञाने कृत्स्नविषयज्ञानान्यन्तर्भूतानीत्यर्थः । ब्रह्मजिज्ञासमानेन ब्रह्म हि प्रष्टव्यम् 'कस्मिन्नु भगवः' इति प्रश्नस्य कथं ब्रह्मविषयत्वमित्यत्राह ( ब्रह्मविद्याया इति ) 'द्वे विद्ये' इति

७ भावप्रकाशिका ७

( परब्रह्मविषया विद्या परविद्येति ) न तु 'अथ परा' इति श्रुताविवापरोक्तत्वमर्थ इति भावः । भाष्ये—गुरुपरम्परया अङ्गिरसा प्राप्तामिति । 'ब्रह्मा देवानां प्रथमस्सम्बभूव' इत्यादिश्रुतिरत्रानुसन्धेया । व्याख्यानप्रकारमाह ( तत्र कैश्चि-

भवतीतिकृत्वा ब्रह्मस्वरूपमनेन पृष्टम्; 'तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च' इति। ब्रह्मप्रेप्सुना द्वे विद्ये वेदितव्ये, ब्रह्मविषये परोक्षापरोक्षरूपे द्वे विज्ञाने उपादेये इत्यर्थः। तत्र परोक्षं शास्त्रजन्यं ज्ञानम् , अपरोक्षं योगजन्यम् ; तयोर्ब्रह्मप्राप्त्युपायभूतमपरोक्षं ज्ञानम् . तच्च भक्तिरूपापन्नम् "यमेवैष वृणुते तेन लभ्यः" इत्यत्रैव विशेष्यमाणत्वात्; तदुपायश्चागमजन्यं विवेकादि-

* श्रुतप्रकाशिका *

विद्याद्वयं भिन्नविषयत्वेन इतरैर्व्याख्यातम्, तत्र कैश्चित् परविद्या परमात्मविषया, अर्थान्तरविषया चापरविद्येति , कैश्चित् कर्मज्ञानमपरविद्या , ब्रह्मज्ञानं परविद्येत्युक्तम्, कैश्चित् अपरमात्मज्ञानमपरविद्या, परमात्मज्ञानं परविद्येत्युक्तम्; तद्व्यावृत्त्यर्थं व्याचष्टे ( ब्रह्मप्रेप्सुनेति ) ब्रह्मैव विषयश्चेत् द्वयोरपि को भेद इत्यत्राह ( परोक्षापरोक्षरूपे इति ) तस्येत्यादिः ' स तपोऽतप्यत' ' ओदनपाकं पचती'तिवत् द्वे विद्ये वेदितव्ये इत्युक्तिः । तत्र फलितमाह ( उपादेये इत्यर्थ इति ) किं परोक्षं किमपरोक्षमित्यत्राह ( तत्रेति ) ब्रह्मैव विषयश्चेत् प्रथमेनैवालमित्यत्राह ( तयोरिति ) उपायभूतम्– अव्यवहितोपायभूतम् । तस्यापि निष्फलत्वमत्रत्यवाक्येनावगम्यत इत्यत्राह ( तच्च भक्तिरूपेति ) तर्हि किं प्रथमेनेत्यत्राह ( तदुपायश्चेति) साधनसप्तकं शास्त्रजन्यज्ञानं चोभयमप्युपासनात्मकज्ञानस्य हेतुरिति यावत् ।

७ भावप्रकाशिका ७

दिति ) मृषावादिमतमाह ( कैश्चित्कर्मज्ञानमिति ) अपरा च धर्मसाधनफलविषयेति मुण्डकभाष्ये शङ्करेण व्याख्यातत्वादिति भावः । ( अपरमात्मज्ञानमपरविद्येति ) जीवज्ञानमित्यर्थः । ( अत्रत्यवाक्येनेति ) 'न मेधया न बहुना श्रुतेन' इति वाक्येन मेधाशब्दितस्योपासनस्यापि नैष्फल्यावगमादित्यर्थः । विवेकादिसाधनसप्तकानुगृहीतमित्यत्र साधनसप्तकस्यागमजन्यज्ञानाङ्गत्वाभावात् अनुगृहीतमित्यत्र सहकृतमित्यर्थ इत्यभिप्रयन्नाह ( साधनसप्तकं शास्त्रजन्यज्ञानं चेति ) ( उत्थित-

साधनसप्तकानुगृहीतं ज्ञानम् [1]"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतेः । आह च भगवान् पराशरः [2]"तत्प्राप्तिहेतुर्ज्ञानं च कर्म्म चोक्तं महामुने। आगमोत्थं विवेकाच्च द्विधा ज्ञानं तथोच्यते" इति । [3]'तत्रापरा ऋग्वेदो यजुर्वेदः' इत्यादिना 'धर्मशास्त्राणि' इत्यन्तेन आगमोत्थं ब्रह्मसाक्षात्कारहेतुभूतं परोक्षज्ञानमुक्तम् । साङ्गस्य सेतिहासपुराणस्य सधर्मशास्त्रस्य समीमांसस्य वेदस्य ब्रह्मज्ञानोत्पत्तिहेतुत्वात्. [4]"अथ परा यया तदक्षरमधिगम्यते" इत्युपासनाख्यं ब्रह्मसाक्षात्कारलक्षणभक्तिरूपापन्नं ज्ञानम्. [5]'यत्तदद्रेश्यमग्राह्यम्' इत्यादिना परो-

* श्रुतप्रकाशिका *

एतद्वैशद्यायाह ( आह चेति ) अनेन विद्याद्वयस्य भिन्नविषयत्वोक्तिरुपबृंहणविरुद्धेति दर्शितं भवति । विवेकाच्च– उत्थितमित्यर्थः । यथोक्तलक्षणे ज्ञानद्वयेऽपि किं वाक्यं किं विषयमित्यपेक्षायामागमोत्थज्ञानं तत्रेत्यादिवाक्येनोक्तमित्याह (तत्रेति) वेद एव हि ब्रह्मज्ञानहेतुः, धर्मशास्त्रादिकीर्त्तनं किमर्थम् ? न चात्रागमोत्थत्वं ज्ञानस्य शाब्दं प्रतीयत इत्यत्राह (साङ्गस्येति) सपरिकरस्यागमस्य तज्ज्ञान हेतुत्वादपरा विद्येत्युक्तमित्यर्थः, 'तत्रापरा ऋग्वेदः' इत्यादिवाक्यस्यागमोत्थज्ञानविषयत्वं पूर्वोक्तोपबृंहणवचनेन 'द्विधा ज्ञानं तथोच्यते' इत्यनेन स्पष्टीकृतम् । अथेत्यादिवाक्यस्य विवेकजन्यज्ञानविषयत्वमाह ( अथेति ) उक्तमित्यन्वयः । यत्तदित्यादिवाक्यस्य विषयमाह ( यत्तदिति ) ( यथोर्णनाभिरिति ) भूतयोनित्ववि-

७ भावप्रकाशिका ७

मित्यर्थ इति ) 'आगमोत्थं विवेकाच्च' इति श्लोके उत्थितमिति शेष इत्यर्थः । ( तत्रेत्यादिवाक्येनेति ) भाष्यगतं तत्रेतिपदं न भाष्यकारीयम्, अपितु श्रुतिगत-

१ बृ. ६-४-४२ ॥ २ वि-पु ६-५-६० ॥ ४–५ मुण्ड. १-१-५ ॥

क्षापरोक्षरूपज्ञानद्वयविषयस्य परस्य ब्रह्मणः स्वरूप-मुच्यते 'यथोर्णनाभिस्सृजते गृह्णते च' इत्यादिना। यथोक्तस्वरूपात्परस्माद्ब्रह्मणोऽक्षरात् कृत्स्नस्य चेतनाचेतनात्मकप्रपञ्चस्योत्पत्तिरुक्ता, विश्वमिति वचनान्नाचेतनमात्रस्य 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते। अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्" इति ब्रह्मणो विश्वोत्पत्तिप्रकार उच्यते। तपसा–ज्ञानेन, 'यस्य ज्ञानमयं तपः' इति वक्ष्यमाणत्वात्; चीयते–उपचीयते; 'बहु स्याम्' इति सङ्कल्परूपेण ज्ञानेन ब्रह्म सृष्ट्युन्मुखं भवतीत्यर्थः। ततोऽन्नमभिजायते–अद्यत इत्यन्नम्, विश्वस्य भोक्तृवर्गस्य भोग्यभूतं भूतसूक्ष्ममव्याकृतं परस्माद्ब्रह्मणो जायत इत्यर्थः। प्राणमनःप्रभृति च स्वर्गापवर्गरूपफलसाधनभूतकर्मपर्यन्तं सर्वं विकारजातं तस्मादेव जायते। 'यस्सर्वज्ञस्सर्ववित्' इत्यादिना

* श्रुतप्रकाशिका *

वरणमित्यर्थः। तपसा चीयत इत्यादिकं व्याचष्टे (ब्रह्मण इत्यादिना) विश्वस्य भोक्तृवर्गस्येत्यनेनैतद्वाक्यस्थसत्यशब्दो व्याख्यातो भवति। सत्यशब्दवाच्यस्य भोक्तृवर्गस्येत्यर्थः। (फलसाधनभूतकर्मपर्यन्तमिति) लोकाः– स्वर्गादयः। कर्मसु चामृतम्- कर्मस्वायत्तममृतम्। अमृतत्वसाधनभूतं कर्मेत्यर्थ इति भावः। पुनः सर्गाभिधानपौनरुक्त्यमाशङ्क्याह (यस्सर्वज्ञ इति) यथा "दध्ना जुहोति" इति

७ भावप्रकाशिका ७

मित्यर्थः। 'परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः' इति हि श्रुतिः। स्पष्टीकृतमिति भाष्येपि वेदस्य ज्ञानोत्पत्तिहेतुत्वादित्यत्र वेदशब्देन सूचितम्, तेन चात्रागमोत्थत्वं शाब्दं प्रतीयत इति शङ्का भाष्य एव परिहृतेति द्रष्टव्यम्। (कर्मस्वायत्तममृतमिति) लोकाश्चेति शेषः। अमृतत्वसाधनभूतं कर्मेत्यर्थ इत्य-

सृष्ट्युपकरणभूतं सार्वज्ञ्यसत्यसङ्कल्पत्वादिकमुक्तम् । सर्वज्ञात्सत्यसङ्कल्पात्परस्मात् ब्रह्मणोऽक्षरादेतत् कार्याकारं ब्रह्म नामरूपविभक्तं भोक्तृभोग्यरूपं च जायते। 'तदेतत्सत्यम्' इति परस्य ब्रह्मणो निरुपाधिकसत्यत्वमुच्यते 'मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्याचरत नियतं सत्यकामाः" इति सार्वज्ञ्यसत्यसङ्कल्पत्वादिकल्याणगुणाकरमक्षरं पुरुषं स्वतस्सत्यं कामयमानास्तत्प्राप्तये फलान्तरेभ्यो विरक्ता ऋग्यजुस्सामाथर्वसु कविभिर्दृष्टानि वर्णाश्रमोचितानि त्रेताग्निषु बहुधा सन्ततानि कर्माण्याचरतेति 'एष वः पन्थाः' इत्यारभ्य 'एष वः

* श्रुतप्रकाशिका *

वाक्ये जुहोतिपदेन 'अग्निहोत्रं जुहोती'ति विहितं होममनूद्य दध्नस्तत्साधनत्वं विधीयते तथा कारणानुवादेन सर्वज्ञत्वादिगुणविधानमित्यर्थः । भोक्तृभोग्यरूपञ्च जायत इत्यनेनान्नशब्दो व्याख्यातो भवति 'अद्यतेऽत्ति च भूतानि' इति ह्यन्नशब्दनिर्वचनम् । द्वितीयखण्डार्थमाह ( तदेतत्सत्यमित्यादिना ) ( परस्येति ) कारणत्वशङ्कितदोषव्यावृत्त्यर्थमुक्तमित्यभिप्रायः । ( मन्त्रेष्वित्यादि ) केचित्सत्यकामपदं चतुर्मुखलोककामपरं व्याचक्षत इति तद्व्युदासार्थमाह ( सार्वज्ञ्येति ) कमनीयत्वाय कल्याणगुणाकरत्वमुक्तम् । ( अक्षरं पुरुषं स्वतस्सत्यं कामयमाना इति) 'तदेतत्सत्यम्' 'येनाक्षरं पुरुषं वेद सत्यम्' पुनश्च 'तदेतत्सत्य'मिति पूर्वापरयोर्ब्रह्मवाचित्वेन प्रयुक्तसत्यशब्दैकार्थ्यादिति भावः । बहुधेति— अधिकारमन्त्रफलभेदेन। त्रेता—अग्नित्रयम् । 'अग्नित्रयमिदं त्रेता' इति नैघण्टुकाः । (आचरतेतीति ) उच्यत इति पूर्ववाक्यादनुषङ्गः । ( एष इत्यादि ) एकतरकर्मवैधुर्येऽपी-

* भावप्रकाशिका *

त्रापि स्वर्गामृतत्वसाधनेत्यर्थः । स्वर्गापवर्गेति भाष्यानुरोधात्, ततश्च लोका अमृतं

पुण्यस्सुकृतो ब्रह्मलोकः' इत्यन्तेन कर्मानुष्ठानप्रकारम् श्रुतिस्मृतिचोदितेषु कर्मस्वेकतरकर्मवैधुर्येऽपीतरेषामनुष्ठितानामपि निष्फलत्वम् अयथानुष्ठितस्य चाननुष्ठितसमत्वमभिधाय "प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति" इत्यादिना फलाभिसन्धिपूर्वकत्वेन ज्ञानविधुरतया चावरं कर्माचरतां पुनरावृत्तिमुक्त्वा "तपश्श्रद्धे ये ह्युपवसन्ति" इत्यादिना पुनरपि फलाभिसन्धिरहितं ज्ञानिनाऽनुष्ठितं कर्म ब्रह्मप्राप्तये

* श्रुतप्रकाशिका *

तरेषां निष्फलत्वमित्यनेन "यस्याग्निहोत्रमदर्शपूर्णमासमनाग्रयणमतिथिवर्जितं च हुतमवैश्वदेवम्" इत्यस्यार्थोऽभिप्रेतः । अयथानुष्ठितस्याननुष्ठितसमत्वं चेत्यनेन "अश्रद्धया अविधिना हुतमासप्तमात्तस्य लोकान् हिनस्ति' इत्यस्यार्थ उक्तः । इदं त्रिवर्गफलसाधनकर्मविषयमुक्तम् 'प्लवा ह्येते अदृढा' इति तत्प्रकरणत्वात् 'नेहाभिक्रमनाशोऽस्ति' इति मोक्षसाधनकर्मणां यथोक्तविपरीतत्वप्रतिपादनाच्च । (प्लवा ह्येते इत्यादि) अष्टादशोक्तम्– अष्टादशस्मृत्युक्तम् । श्रुतेरपि प्रदर्शनार्थमिदम्– श्रुतिस्मृतिचोदितं कर्मेत्यर्थः । यद्वा षोडशर्त्विक्पत्नीयजमानरूपाष्टादशपुरुषेषु विहितम् । यद्वा "नव ग्राम्यान् पशूनालभते नवारण्यान् उभयान् पशूनालभते" इति श्रुत्युक्ताष्टादशपशुहविष्कं कर्मेति । यज्ञशब्दः कर्मसामान्यवाची येषु पुरुषेषु

७ भावप्रकाशिका ७

च कर्मस्वायत्तमिति श्रुत्यन्वय इति भावः । यद्वा भोग्यपदेनान्नशब्दो व्याख्यात इत्यर्थः । कमनीयत्वाय–कामनाविषयत्वायेत्यर्थः । (अनाग्रयणमिति) आग्रयणः–शरदि कर्तव्येष्टिविशेषः । अहुतमिति स्वकाले अहुतमित्यर्थः । (त्रिवर्गसाधनकर्मविषयमिति) दर्शपूर्णमासाग्रयणवैश्वदेवातिथिपूजानां नित्यतया यथाशक्ति तदवश्यकर्तव्यत्वस्यापवर्गकर्मस्वपि सत्त्वात् तत्परत्वेपि न दोष इति द्रष्ट-

भवतीति प्रशस्य "परीक्ष्य लोकान्" इत्यादिना केवल-कर्मफलेषु विरक्तस्य यथोदितकर्मानुगृहीतं ब्रह्मप्राप्त्युपायभूतं ज्ञानं जिज्ञासमानस्य च आचार्योपसदनं विधाय "तदेतत्सत्यं यथा सुदीप्तात्" इत्यादिना "सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इत्यन्तेन पूर्वोक्तस्याक्षरस्य भूतयोनेः परस्य ब्रह्मणः परमपुरुषस्यानुक्तैस्स्वरूपगुणैः

* श्रुतप्रकाशिका *

स्मृतिविहितमपरं कर्म फलाभिसन्धिमत्, एतच्छ्रेयो येऽभिनन्दन्ति ते पुरुषा जरामृत्यू अपि यन्तीत्यन्वयः। ब्रह्मप्राप्तये भवतीत्यनेन 'सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतस्स पुरुषोऽव्ययात्मा' इत्यस्यार्थ उक्तः।'परीक्ष्य लोकान्' इत्यादिवाक्ये गुरूपसत्तिविषयनियमविधिः, अन्यन्न्यायसिद्धार्थानुवादरूपम्। तृतीयखण्डार्थमाह (तदेतत्सत्यं यथेत्यादिना) भूतयोन्यक्षरस्याक्षरात्परतः परस्य चानन्यत्वसिद्धये प्रथमतृतीयखण्डयोरैकार्थ्यप्रत्यभिज्ञापकविशेषणानि दर्शयति– पूर्वोक्तस्येत्यादिपदैः। पूर्वोक्तस्यैवेह प्रतिपाद्यत्वोपपादकानि पदान्तराणि। "तदक्षरमधिगम्यते' "भूतयोनिं परिपश्यन्ति" "तथा अक्षराद्विविधाः सोम्य भावाः प्रजायन्ते' 'तत्र चैवापि यन्ति" इति वाक्ययोरेकविषयत्वं दर्शितम्–अक्षरस्य भूतयोनेरिति। "तपसा चीयते ब्रह्म "तपो ब्रह्म परामृतम्" इत्यनयोरैककण्ठ्यं दर्शितम्– परस्य ब्रह्मण इति। 'तस्मादेतद्ब्रह्म' इत्यवगतकार्यब्रह्मव्युदासार्थः परशब्दः। 'तेनेदं पूर्णं पुरुषेण' 'पुरुष एवेदं सर्व'मित्यनयोरेकविषयत्वाभिप्रायेण–परमपुरुषस्येत्युक्तम्। तत्र 'यस्मात् परं नापरमस्ति' इत्युक्तसमाभ्यधिकराहित्यसूचनार्थः परमशब्दः। अक्षरपुरुषशब्दाभ्यां 'येनाक्षरं पुरुष'मिति द्वितीयखण्डैकार्थ्यं च दर्शितं भवति। अत्र हि 'तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ती'त्युक्त्वा 'दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरः' इति प्रकृतकारणाक्षरपरामर्शितच्छब्देनाक्षरात्परतः परस्य सामा-

* भावप्रकाशिका *

न्यम्। (कर्म फलाभिसन्धिमादिति) कर्मण अवरत्वं फलाभिसन्धिमत्त्वमेवेत्यर्थः। इदञ्चोपलक्षणम्, ज्ञानापूर्वकत्वमपि द्रष्टव्यम्। (येभिनन्दन्तीति) ये चाभि-

सह सर्वभूतान्तरात्मतया विश्वशरीरत्वेन विश्वरूपत्वम् तस्माद्विश्वसृष्टिं च विस्पष्टमभिधाय "आविस्सन्निहितम्" इत्यादिना तस्यैवाक्षरस्याव्याकृतात्परतो

* श्रुतप्रकाशिका *

नाधिकरणयात् भूतयोन्यक्षरमेवाक्षरात्परतः पर इत्यवगम्यते । न हि तस्मादक्षरात्पर इत्युक्तम्, अपि त्वक्षरात्स पर इति; पश्चादपि "एतस्माज्जायते प्राणः' 'एष सर्वभूतान्तरात्मा' 'तस्मादग्निस्समिधश्च सूर्यः' इत्यारभ्य 'अतस्सर्वा ओषधयः" इत्यन्तेषु वाक्येषु तमेव तदेतच्छब्दैः परामृश्य 'एतेषु भूतेषु तिष्ठते ह्यन्तरात्मा' इत्युक्त्वा 'पुरुष एवेदं सर्व'मित्यभिधानात्, भूतयोन्यक्षरब्रह्मशब्दवाच्यः पुरुष एवाक्षरात्परतः पर इति प्रतीयते ; अनुक्तैः स्वरूपगुणैरित्यनेन 'दिव्यो ह्यमूर्तः पुरुषः' इत्याद्युक्ताः दिव्यत्वामूर्तत्वविभुत्वादयो गुणाः विवक्षिताः । विश्वरूपत्वम् विश्वप्रकारत्वम्; तदेव विश्वशरीरशब्देन विशेषितम् । तदुपपादकं सर्वभूतान्तरात्मतयेतिपदम् । अन्तःप्रविश्य नियन्तृत्वादस्य विश्वं शरीरतया प्रकार इत्यर्थः । अनेन "पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' 'अतश्च सर्वा ओषधयो रसाश्च' 'एतेषु भूतेषु तिष्ठते ह्यन्तरात्मा' 'पुरुष एवेदं सर्व"मिति श्रुत्यर्थोऽनुसंहितः । तस्माद्विश्वसृष्टिं चेत्यनेन "तस्मादग्निस्समिधश्च सूर्यः सोमः पर्जन्य ओषधयः" इत्याद्यर्थ उक्तः । विस्पष्टमित्यनेन प्रथमतृतीयखण्डयोः पौनरुक्त्यपरिहारः, पूर्वोक्तसृष्टिप्रपञ्चनपरत्वान्न पुनरुक्तिरित्यभिप्रायः । चतुर्थखण्डार्थमाह (आविरिति) आविस्सन्निहितम्- योगिनामपरोक्षं सन्निहितम् । तस्यैव- प्रथमद्वितीयखण्डप्रतिपादितस्य । (अव्याकृतादिति) अक्षरात्परतः' परस्येतितृतीयखण्डप्रतिपादि-

* भावप्रकाशिका *

नन्दन्तीत्यर्थः । ततश्च फलाभिसन्धिमत्कर्मकारिणां तदभिनन्दितॄणां च जरामृत्युवश्यत्वमित्यर्थः । (अतस्सर्वा ओषधय इत्येवमन्तेष्विति) 'एतस्माज्जायते प्राणो मनस्सर्वेन्द्रियाणि च । पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा तस्मादग्निस्समिधश्च सूर्यः । तस्मादृचस्सामयजूँषि दीक्षा । तस्माच्च देवा बहुधा सम्प्रसूताः । सप्त प्राणाः प्रभवन्ति तस्मात् । अतस्समुद्रा गिरयश्च सर्वे । अतश्च सर्वा ओषधयो रसाश्च" इति तत्प्रकरणगततदेतच्छब्दैरित्यर्थः । तदेतच्छब्दैः परामृश्ये-

ऽपि पुरुषात्परभूतस्य परस्य ब्रह्मणः परमव्योम्नि प्रतिष्ठितस्यानवधिकातिशयानन्दस्वरूपस्य हृदयगुहायामुपासनप्रकारम् उपासनस्य च परभक्तिरूपत्वमुपासीनस्याविद्याविमोकपूर्वकं ब्रह्मसमं ब्रह्मानुभवफलं चोपदि-

* श्रुतप्रकाशिका *

तस्येत्यर्थः। तदेतदक्षरं ब्रह्मेतिवाक्यमभिप्रयन्नाह ( परस्य ब्रह्मण इति ) यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योमन्यात्मा प्रतिष्ठितः' इत्यस्यार्थमाह ( परमव्योम्नि प्रतिष्ठितस्येति ) यस्यैष महिमा भुवीति लीलाविभूत्यन्वय उक्तः। दिव्ये व्योम्नीति त्रिपाद्विभूतिरुक्ता, ब्रह्मपुरे इतिशब्दः एतत्सत्यं ब्रह्मपुरमितिवन्न कर्मधारयः, ब्रह्मपुरे आत्मा प्रतिष्ठित इति व्यतिरेकनिर्देशात्। तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभातीति वाक्यं हृदि निधायाह ( अनवधिकातिशयेति ) ( हृदयगुहायामुपासनप्रकारमिति ) 'एतद्यो वेद निहितं गुहाया'मिति पूर्वखण्डावसाने हृदयगुहायामुपासनं विहितम्, 'तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि' इत्यारभ्य "प्रणवो धनुश्शरो ह्यात्मा' 'आत्मानमरणिं कृत्वा" इत्यादिभिरुपासनस्य प्रकार उक्त इत्यर्थः। हृदयगुहासम्बन्ध्युपासनस्यैव प्रकारोपदेशोऽयम्, न तूपासनान्तरस्येति इदमवगतम्, 'गुहाचरन्नाम महत्पदम्' 'प्रतिष्ठितोऽन्तर्हृदये सन्निधाय 'पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम्। हृदयं तद्विजानीयाद्विश्वस्यायतनं महत्" इति चतुर्थखण्ड एव तस्योपासनस्य हृदयगुहासम्बन्धित्वावगमात्। पाठक्रमादर्थक्रमस्य प्रबलत्वात् षष्ठखण्डे प्रतिपन्नमर्थमाह ( उपासनस्य चेति ) "यमेवैष वृणुते तेन लभ्यः" इति हि तत्रोक्तम्। अर्थक्रमेण 'तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति पञ्चमखण्डस्थवाक्यं हृदि निधायाह (ब्रह्मसममिति) भोगमात्रेण साम्यमित्याह ( ब्रह्मानुभवफलमिति ) अविद्याविमोकपूर्वकमित्यनेन

७ भावप्रकाशिका ७

त्यस्यानन्तरभूतं भूतयोनित्वं सप्रपञ्चमुपपाद्येत्यध्याहारोऽपेक्षितः। ननु भाष्ये षष्ठखण्डप्रतिपाद्योपासनपरभक्तिरूपत्वस्य पञ्चमखण्डप्रतिपाद्यब्रह्मसाम्यलक्षणब्रह्मानुभवफलात्प्रागेव प्रतिपादनमसङ्गतमित्याशङ्क्याह ( पाठक्रमादिति ) ( तस्य क्रम-

* श्रुतप्रकाशिका *

पुण्यपापे विधूयेत्यस्यार्थ उक्तः । ननु पञ्चमखण्डे साम्यापत्तिरूपस्सगुणमोक्ष उक्तः । षष्ठे तु 'युक्तात्मानः सर्वमेवाविशन्ती'तिपरब्रह्मप्राप्तिरूपपरममोक्ष उक्तः । वेदान्तविज्ञानेतिमन्त्रेण तस्य क्रमभावित्वमुक्तम्, परे ऽव्यये सर्व एकीभवन्तीति परममोक्षस्यैक्यापत्तिरूपत्वमुक्तम्, यथा नद्य इति विशेषप्रहाणमुक्तम्, ब्रह्मैव भवतीत्यैक्यापत्तिनिगमनमिति । नैवम्, तथाहि, सर्वमेवाविशन्तीति न निर्गुणप्राप्तिः, सर्वशब्दस्य निर्गुणवाचित्वाभावात्; किन्तु ब्रह्मविभूतिभूततद्व्याप्यसमस्तजगदनुभवोक्तिः 'ते सर्वगं सर्वतः प्राप्य धीराः' इति सर्वगस्य ब्रह्मणः प्राप्तेरुक्तत्वात् सर्वगशब्देन सर्वशब्दवाच्यस्य ब्रह्मव्याप्यविभूतित्वावगमाच्च । वेदान्तविज्ञानेति तु वाक्यं चरमशरीरावसाने ब्रह्मप्राप्तिप्रतिपादकमिति वक्ष्यते । 'गतिः कलाः पञ्चदश प्रतिष्ठा' इति मन्त्रश्च मुक्तात्मपरित्यक्तदेहेन्द्रियतदभिमानिदेवतादीनामितरचेतनाचेतनवत्प्रलये परमात्मनि लयपरः, न तु मोक्षपरः, मुक्तौ कलाशब्दोक्तभूतेन्द्रियाणां परमात्मनैक्यापत्त्यभावात् । पृथिव्यादिषु लय एव परमात्मनि लय इति

❀ भावप्रकाशिका ❀

भावित्वमुक्तमिति ) वेदान्तविज्ञानसुनिश्चितार्था इति । वेदान्तार्थनिश्चयवन्तः कर्मसन्न्यासयोगाद्यतनवन्तश्शुद्धान्तःकरणाः , ते परान्तकाले– देहावसानकाले, परामृताः--परममृतं ब्रह्म आत्मतया येषां ते परामृताः, जीवन्मुक्ता एव सन्त इत्यर्थः । ब्रह्मलोकेषु ब्रह्मणि मुच्यन्ते । भिन्नघटाकाशवत् निर्वृतिमुपयान्तीत्यर्थ इत्येवं जीवन्मुक्तिपरममुक्तिक्रमभावित्वमुक्तं शाङ्करमुण्डकभाष्य इति भावः । ( सर्वगस्य ब्रह्मण इति ) न तु सर्वशून्यस्येत्यर्थः । ( ब्रह्मप्राप्तिप्रतिपादकमिति वक्ष्यत इति ) 'कार्यं बादरिरस्य गत्युपपत्तेः' इत्यधिकरणे इति शेषः । ( इतरचेतनाचेतनवदिति ) न चेदं न वक्तव्यम् चेतनान्तरवत्सिद्धेरिति वाच्यम् । मुक्तिदशायामेव न लयः , अपितु आप्रलयं तदिन्द्रियाणामप्यवस्थानमिति प्रदर्शनार्थमिति द्रष्टव्यम् । ( परमात्मनैक्यापत्त्यभावादिति ) ननु 'गताः कलाः पञ्चदश प्रतिष्ठाः' इतिमन्त्रस्य मोक्षकाले दशेन्द्रियपञ्चभूतरूपाः या देहारम्भिकाः कलाः तास्स्वस्वप्रतिष्ठाङ्गताः स्वं स्वं कारणं प्राप्ता भवन्तीत्यर्थः । ये च देहाश्रयाश्चक्षुरादिकरणनिष्ठा देवास्ते आदित्यादिषु गता भवन्तीत्यर्थः । कर्माणि विज्ञानमयश्च आत्मा कर्माणि अभुक्तफलानि कर्माणि विज्ञानोपाधिको जीवश्च परस्मिन् ब्रह्मणि विशे-

श्योपसंहृतम् ; अत एवं विशेषणाद्भेदव्यपदेशाच्च नास्मिन् प्रकरणे प्रधानपुरुषौ प्रतिपाद्येते। भेदव्यपदेशोऽपि हि ताभ्यां परस्य ब्रह्मणोऽत्र विद्यते। " दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात्परतः परः" इत्यादिभिः, अक्षरादव्याकृतात्परो यः समष्टिपुरुषः तस्मादपि पर-

* श्रुतप्रकाशिका *

चेत्. अमुक्तदेहस्यापि पृथिव्यादिषु लयादस्य वाक्यस्य मुक्तविषयत्वं न स्यात्। एकस्मिन्मुक्ते सत्यग्न्यादिदेवताश्च न परमात्मनि लीयन्ते, अतश्चेदं वाक्यं न मुक्तस्य परमात्मैक्यापत्तिपरम्। यथा नद्य इति तु वाक्यं मुक्तस्य ब्रह्मप्राप्तेः कर्मकृतनामरूपप्रहाणपूर्वकत्वपरम्। ब्रह्मैव भवतीति पूर्वोक्तसाम्यापत्तिनिगमनपरम्, ब्रह्मपर्यन्तस्वात्माविर्भावपरं वा; अतो यथोक्त एवार्थः। एवं सौत्रहेतुद्वये विशेषणं प्रपञ्चितम्। उपपादितं हेतुं हेत्वन्तरेण सहानुवदन् साध्यार्थेन घटयति (अत एवमिति) भेदव्यपदेशस्योपादानं तस्य प्रपञ्चनाकाङ्क्षाजननार्थम्। अथ भेदव्यपदेशं प्रपञ्चयति (भेदव्यपदेशोऽपि हीति) अक्षरशब्दस्याव्याकृतवाचित्वं कथमित्य-

ဖ भावप्रकाशिका ဖ

षतां गच्छन्तीत्यर्थ इति मुण्डकभाष्ये शङ्करेणार्थो वर्णितः, ननु मुक्तपरित्यक्तदेहादीनां परमात्मन्यैक्यमिति चेत्. सत्यम्; तानि परे तथाह्याहेतिसूत्रे 'एवमेवास्य परि द्रष्टुरिमाष्षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ती'तिवाक्यमुदाहृत्य परब्रह्मविदः कृत्स्नं कलाजातं ब्रह्मैव सम्पद्यत इत्युपसंहारादेवमाशङ्क्य परिहृतमिति द्रष्टव्यम्। (पूर्वोक्तसाम्यापत्तिनिगमनपरमिति) 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकान् अभिजयति' इत्यत्रेव एवकारस्सादृश्यवाची, 'साम्यैवमेववद्वे'ति निघण्टुपाठादिति भावः। (ब्रह्मपर्यन्तेति) न च ब्रह्मशब्दस्य ब्रह्मात्मकपरत्वे लक्षणा स्यात्, शरीरवाचिशब्दानां शरीरिपर्यन्तत्वेपि शरीरिवाचिशब्दानां शरीरवाचित्वाभावादिति वाच्यम्, तुल्यन्यायतया शरीरिशब्दानामप्यपृथक्सिद्धशरीरवाचित्वसम्भवात् गत्यभावे लक्षणाया अप्यदोषत्वात्।

भूतोऽदृश्यत्वादिगुणकोऽक्षरशब्दाभिहितः परमात्मेत्यर्थः। अश्नुत इति वा, न क्षरतीति वा ऽक्षरम्; तदव्याकृतेपि स्वविकारव्याप्त्या वा महदादिवन्नामान्तरा-

* श्रुतप्रकाशिका *

पेक्षायां 'प्रोक्षणीष्वर्थसंयोगात्' इतिन्यायमभिप्रेत्यावयवशक्तिं दर्शयति ( अश्नुत इति ) अश्नुत इत्यवयवार्थः किमव्याकृते सम्भवतीत्यत्राह ( अव्याकृतेऽपीति ) ( स्वविकारव्याप्त्येति ) कार्याकारेण विकृतमंशं विकृतादन्यः कारणांशः सूक्ष्मतया व्याप्नोतीत्यर्थः। अत एवेदमप्यसदर्थद्वयं नाशङ्कनीयम्। यदुच्यते, इहायं सर्वज्ञशब्दः कस्मिंश्चिद्देवताविशेषे रूढः, न तु यौगिकः, अन्यथा सर्वविच्छब्दपौनरुक्त्यात्, तस्मात् ब्रह्मण उत्पत्तिः श्रूयते 'तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते' इति. इह ब्रह्मशब्दवाच्यश्च परमपुरुषः, 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मिति 'पुरुष एवेदं सर्वं तपो ब्रह्म परामृत'मिति ब्रह्मपुरुषशब्दयोरेकविषयत्वावगमादिति, तत्र पुरुषाक्षरशब्दयोस्सामानाधिकरण्यादक्षरस्य भूतयोनित्वश्रवणात् पुरुष उपादानम्, अक्षरात्परतः परश्च सर्ववित्त्वादियोगान्निमित्तम्, एवञ्च 'अक्षरात् सम्भवति 'अक्षरात्परतः'' इति अक्षरशब्दयोर्विरूपार्थता च न स्यादिति। तत्र तावन्निमित्तोपादानभेदोऽनुपपन्नः, तथा सति निमित्तान्तरस्य स्थितत्वेन ब्रह्मविज्ञानेन सर्वविज्ञानानुपपत्तेः। न च कार्यविषयतया सर्वशब्दसङ्कोचान्निमित्तान्तरस्थित्युपपत्तिः, उपादानभूतस्यैव ब्रह्मणो निमित्तत्वं वदतां

* भावप्रकाशिका *

( प्रोक्षणीष्वर्थसंयोगादितिन्यायमिति ) प्रोक्ष्यते सिच्यते आभिरिति योगादेव प्रोक्षणीशब्दस्य अप्सु वृत्तिसम्भवान्न तत्र रूढिः कल्पनीयेत्युक्तम्, तन्न्यायादिति भावः। अत्र केचित्; ननु कथमदृश्यत्वादिगुणकस्याक्षरशब्दाभिहितत्वम्? अव्याकृतेऽक्षरशब्दस्य रूढत्वात्. रूढेर्योगापहारित्वादित्याशङ्क्य प्रोक्षणीन्यायेन रूढेरभावाद्योगस्य च ब्रह्मसाधारणत्वान्न दोष इत्याह– अश्नुत इति वा न क्षरतीति वेति। इत्येव भाष्यस्यावतारिकामाहुः। ( इदमप्यसदर्थद्वयमिति ) वक्ष्यमाणमिति शेषः। ( देवताविशेषे रूढ इति ) 'कृशानुरेतास्सर्वज्ञो धूर्जटिर्नीललोहितः' इति निघण्टुपाठादिति भावः। ( अक्षरशब्दयोरिति ) अत्र द्वित्व-

भिलापयोग्यत्वरणाभावाद्वाऽक्षरत्वं कथञ्चिदुपपद्यते ॥

* श्रुतप्रकाशिका *

निमित्तान्तरं च निषेधतां वाक्यानां भूयस्त्वात्, एकविज्ञानेन सर्वविज्ञान-प्रतिज्ञानं चोपक्रमावगतत्वात्प्रबलम्। अक्षरपुरुषस्य 'यस्मात्परं नापर'मिति समाभ्यधिकनिषेधश्च उपक्रमावगतः, तेन तत्प्रेरकं निमित्तान्तरमनुपपन्नम्। अस्यामेवोपनिषदि "रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्' इति रुक्मवर्णपुरुषस्यैव कर्तृत्वयोनित्वश्रवणाच्च न निमित्तोपादानभेदः। अन्नादिप्रपञ्चकारणत्वप्रत्यभिज्ञानाच्च न सर्वज्ञाक्षरपुरुषयोर्भेदः। "यस्सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः। तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते" इति सर्वज्ञस्य तथात्वं श्रूयते "तपसा चीयते ब्रह्म ततोऽन्नमभिजायते" इति ब्रह्मणश्च तथात्वं श्रूयते "तपसा चीयते ब्रह्म' 'यस्य ज्ञानमयं तपः"इति तपश्शब्दवाच्यज्ञानवत्त्वं सर्वज्ञस्य ब्रह्मणश्चावगम्यते. ब्रह्मपुरुषशब्दयोश्चैकविषयत्वं दर्शितम्। एवं सर्वज्ञशब्दवाच्यस्य ब्रह्मशब्दनिर्दिष्टपुरुषस्य चान्नादिकारणत्वतदुपयोगिसार्वज्ञ्यादिगुणयोगेनानन्यत्वान्निमित्तोपादानभेदो विध्वस्तः। तदभेदे च सति "तथाऽक्षरात् सम्भवति 'तस्मादेतत् ब्रह्म"इति पञ्चम्योर्वैरूप्यं च न स्यात् "ब्रह्म वनं ब्रह्म स वृक्ष आसीत्" इति श्रुत्यन्तराविरोधश्च स्यात्. 'तपसा चीयते 'यस्सर्वज्ञः' इति मन्त्रयोः प्रतिपन्नस्य सर्वज्ञस्य ब्रह्मणश्च कारणतयाऽनन्यत्वात् मिथः कार्यकारणभावशङ्का निरस्ता। किञ्च अस्यामुपनिषदि अक्षरब्रह्मशब्दौ कारणे कार्ये च प्रयुक्तौ "अक्षरात्सम्भवति'

७ भावप्रकाशिका ७

मविवक्षितम्। 'अक्षरात्सम्भवतीह विश्वम्' तथाक्षराद्विविधास्सोम्य भावाः' अक्षरात्परतः परः' इति त्रयाणामैकार्थ्यं सिध्यतीति द्रष्टव्यम्। (तथात्वं श्रूयत इति) अन्नादिप्रपञ्चहेतुत्वं श्रूयत इत्यर्थः। उत्तरत्र तथात्वमित्यस्याप्ययमेवार्थः। (ब्रह्म वनमिति) वनमित्यधिकरणमुच्यते, ब्रह्म स वृक्ष इत्युपादानत्वम्। ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति निमित्तत्वं चेति भावः। ननु शैवमते पञ्चम्यन्ताक्षरशब्दयोरेकार्थत्वात्। "तपसा चीयते ब्रह्म' तस्मादेतद्ब्रह्म" इति वाक्यद्वयस्थब्रह्मशब्दयोरप्येकार्थत्वाच्चाक्षरब्रह्मशब्दयोः कारणकार्यविषयत्वं नास्त्येव। किञ्च तन्मते अक्षरशब्दितस्य पुरुषस्य सर्वोपादानत्वाभ्युपगमेन कार्यत्वानभ्युपगमात्कारणपरा-

* श्रुतप्रकाशिका *

'अक्षरात्परतः परः 'तपसा चीयते ब्रह्म 'तस्मादेतद्ब्रह्म''इति । तत्र पुरुषशब्दसमानाधिकरणावक्षरब्रह्मशब्दौ किं कारणविषयौ, उत कार्यविषयौ? इति विशये 'नास्त्यकृतः कृतेन' इत्युक्त्वा ''येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्या'मित्युक्तत्वात् कारणविषयाविति निश्चीयते, ततश्च कारणपुरुषादन्यस्य परत्वासम्भवात् भूतयोन्यक्षरमेवाक्षरात्परतः परः । किञ्च येनाक्षरं पुरुषं वेद सत्यं प्रोवाचेत्यक्षरपुरुषस्य वक्तव्यत्वप्रतीतेः तस्यैव प्राधान्यात् स एवाक्षरात्परतः परश्च भवितुमर्हति, अन्यस्य प्रतिपाद्यत्वं प्रतिज्ञायार्थान्तरप्रतिपादनव्याघातात् । भूतयोन्यक्षरधर्माणामक्षरात्परतः परे दर्शनात् तस्य च स इति प्रकृताक्षरपुरुषपरामर्शितच्छब्दसामानाधिकरण्याच्चाक्षरात्परतः पर एवाक्षरपुरुषः । किञ्च यथा भूतयोन्यक्षरस्य पुरुषत्वम् अक्षरं पुरुषमिति पुरुषशब्दसामानाधिकरण्यादवगम्यते, तथा अक्षरात्परतः परस्य च पुरुषत्वं 'दिव्यो ह्यमूर्तः पुरुषः' इति पुरुषशब्दसामानाधिकरण्यादवसीयत इति तयोरनन्यत्वसिद्धिः, ब्रह्मशब्दवाच्याक्षरपुरुषादन्यः सर्वज्ञ इह प्रतिपाद्यते चेत् '' स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठाम्'' इत्युपक्रमविरोधश्च स्यात् । अक्षरपुरुषस्सर्वज्ञादपरश्चेत् 'अथ परा यया तदक्षरमधिगम्यते' इत्यक्षरविद्यायाः परविद्यात्वकथनं विरुध्येत । अक्षरपुरुषः परमकारणं न चेत् 'उपासते पुरुषं ये ह्यकामाः 'परात्परं पुरुषमुपैति दिव्यम्''इति परमपुरुषस्योपास्यत्वप्राप्यत्वश्रवणविरोधः , परमकारणस्यैव ह्युपास्यत्वप्राप्यत्वे वेदान्तप्रसिद्धे । परमकारणं चेदक्षरपुरुषस्तस्मादन्यस्य परत्वमनुपपन्नम् , ''स कारणं

* भावप्रकाशिका *

मर्शि वा कार्यपरामर्शि वा इति विचारो न युक्तः । तस्मादेतद्ब्रह्मनामरूपमन्नञ्च जायत इत्यत्रापि न ब्रह्मशब्दितस्योत्पत्तिः श्रूयते, किन्तु भूतयोन्यक्षरमेतद्ब्रह्माख्यादिरूपेण परिणमत इति ह्युच्यते , नहि कुलालान्मृत्पिण्डो घटो भवतीत्युक्ते मृत्पिण्डस्योत्पत्तिः कुलालकार्यत्वं वा प्रतीयत इत्यस्वरसादाह ( किञ्च येनाक्षरमिति ) ( भूतयोन्यक्षरधर्माणामिति ) अपाणिपादत्वादीनाममूर्तत्वादिना प्रत्यभिज्ञानादिति भावः । ( तच्छब्दसामानाधिकरण्याच्चेति ) नच स बाह्याभ्यन्तर इत्येतद्बाह्याभ्यन्तरसाहित्यवाचकमेकं पदं किं न स्यादिति वाच्यम् ; तथात्वे बाह्याभ्यन्तर इत्यनेनैव तदर्थस्य लाभात्स इत्यस्य वैयर्थ्यप्रसङ्गात् । ( तयोरनन्य-

## रूपोपन्यासाच्च ॥ २४ ॥

"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्वि-

* श्रुतप्रकाशिका *

करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति कारणान्तराधिपत्यन्तरनिषेधात्, एवञ्च सति सर्वज्ञशब्दरूढ्यनुगुणं न पुरुषशब्दो नेयः, अपि तु पुरुषशब्दरूढ्यनुगुणं सर्वज्ञशब्दो नेयः, ततश्च तस्य पशुपतिपरत्वमयुक्तम्। दिव्यो ह्यमूर्तः पुरुषः 'रुक्मवर्णं कर्तारमीशं पुरुषम् 'परात्परं पुरुषम्''इत्यादिवाक्यानाम् 'आदित्यवर्णं तमसः परस्तात् 'आदित्यवर्णं तमसस्तु पारे 'त्रिपादस्यामृतं दिवि 'पुरुष एवेदं सर्वम्" इति पुरुषनारायणोत्तरनारायणैकार्थ्यप्रतीतेः, "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इत्यनेन ' अणोरणीयान् महतो महीयान्'इत्यादिकठवल्ल्यैकार्थ्यावगमात्तत्र च "सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्''इति श्रवणाच्च 'पद्मकोशप्रतीकाशम्' 'पुरुष एवेदं सर्व'मिति नारायणानुवाकसुबालोपनिषदैकार्थ्यावगमाच्च परमपुरुषपरत्वसिद्धिः। ब्रह्मरुद्रयोर्नारायणसृज्यत्ववादिश्रुतिविरोधश्चान्यथा स्यात्, अतस्सर्वज्ञशब्देन सर्वेषां धर्मिणां ज्ञातृत्वमुक्तम्, सर्वविच्छब्दस्तु तत्तद्वस्तुगतसर्वप्रकारवेदित्वपरः, धर्मिमात्रज्ञानादपि तद्गतप्रकारकात्स्न्र्यज्ञानं हि ज्ञातुः प्रकर्षापादकम्, अक्षसंज्ञवृक्षमात्रज्ञानं हि सर्वेषां सम्भवति, सकृच्चक्षुस्संप्रयोग एव तद्गतशाखापत्रफलसङ्ख्यादिज्ञानं ह्यक्षहृदयाभिज्ञस्यैव सम्भवति। यद्वा सर्वं विन्दन्तीति सर्ववित्, सर्वस्वामीत्यर्थः। लब्धधनो हि धनस्वामी भवति, अतस्सर्वज्ञत्वादिगुणको निमित्तोपादानभूतः सर्वस्मात्परः परमपुरुष एव ॥

॥ रूपोपन्यासाच्च ॥ (सर्वभूतान्तरात्मन इति) सर्वभूतान्तरात्मसम्बन्धितयोच्यमानमीदृशं रूपं परमात्मन एव सम्भवतीत्यर्थः ॥

* भावप्रकाशिका *

त्वसिद्धिरिति ) पुरुषद्वित्वे प्रमाणाभावादितिभावः। ( न पुरुषशब्दो नेय इति) 'दिव्यो ह्यमूर्तः पुरुषः' इति पुरुषशब्द इत्यर्थः। (पुरुषनारायणोत्तरनारायणेति) पुरुषदेवताकत्वान्नारायणर्षिकत्वाच्च पुरुषसूक्तस्य पुरुषनारायणत्वम्; एवमुत्तरनारायणेत्यत्रापि द्रष्टव्यम्। ( अक्षहृदयाभिज्ञस्येति ) अक्षहृदयाख्यविद्याभिज्ञस्येत्यर्थः ॥

ननु भाष्ये सर्वभूतान्तरात्मनः परमात्मन एव सम्भवतीत्ययुक्तम्। सर्वभूता-

वृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा" इतीदृशं रूपं सर्व-

* श्रुतप्रकाशिका *

निर्विशेषवादे तावदिदं सूत्रत्रयमनुपपन्नम् ; अभावरूपाणामप्यदृश्यत्वादीनां गुणत्वव्यवहारात् सर्वज्ञत्वादिधर्मव्यवहाराच्च प्रथमसूत्रं विरुद्धम्. व्यावर्तकधर्मापारमार्थ्ये व्यावृत्त्यपारमार्थ्यात् भूतयोन्यक्षरस्य प्रधानव्यावृत्त्यसिद्धेश्च. भेदमिथ्यात्वे भेदव्यपदेशेन परमात्मत्वसाधनमप्ययुक्तम् . शारीराद्विशिनष्टि प्रधानाद्भेदं व्यपदिशतीति द्वितीयसूत्रार्थवर्णनमप्यनुचितम्, विशेषणभेदव्यपदेशयोरेकैकस्यैव शारीरप्रधानव्यावर्तनक्षमत्वात्। दिव्यत्वामूर्तत्वपुरुषत्वादयो हि कार्त्स्न्येन प्रधानस्यापि न सम्भवन्ति, अक्षरात्परतः पर इति जीवव्यावृत्तिरपि हि प्रतीयते, स कारणं करणाधिपाधिप इतिवत् । अक्षरात्परो हि जीवः। विशेषणशब्दस्य दिव्यो ह्यमूर्त इति श्लोकोक्तार्थमात्रविषयत्वं चायुक्तम्, सङ्कोचकाभावात्। एकविज्ञानेन सर्वविज्ञानाभि-

छ भावप्रकाशिका छ

न्तरात्मत्वस्यापि एतद्वाक्यप्रतिपाद्यत्वेन एतद्वाक्यप्रतिपाद्यद्युमूर्द्धत्वादिसर्वभूतान्तरात्मत्वान्तधर्मवत्त्वं परमात्मन एव सम्भवतीत्येव वक्तुं युक्तत्वादित्याशङ्क्य 'पृथिवी ह्येष सर्वभूतान्तरात्मा' इत्यत्र हिशब्देन पूर्वोक्तद्युमूर्द्धत्वादेस्सर्वभूतान्तरात्मत्वहेतुकरणात् द्युमूर्द्धत्वाद्युपपाद्यं सर्वभूतान्तरात्मत्वं परमात्मन एव सम्भवतीत्यर्थ इत्यभिप्रयन्नाह ( सर्वभूतान्तरात्मसम्बन्धितयोच्यमानमिति ) ॥

( शारीराद्विशिनष्टीति ) शारीरादित्यनन्तरं विलक्षणत्वेनेत्यध्याहार्यम् । विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेनेति परैरुक्तत्वाच्छारीरस्य विलक्षणत्वावधित्वेनैव निर्दिष्टतया विशेषणक्रियावधित्वेन निर्दिष्टत्वात् । विशिनष्टीत्युक्ते केन विशेषणेनेत्याकाङ्क्षाया इव कस्माद्विशिनष्टीत्याकाङ्क्षाया अदर्शनाच्च । न च कथं तर्हि भाष्यकृता विशिनष्टि हि प्रकरणं प्रधानात्पुरुषाच्चेति निर्दिष्टमिति वाच्यम् ; प्रधानात्पुरुषाच्चेत्यस्य व्यावर्तयतीत्यर्थ इति तत्रत्योत्तरवाक्यान्वितत्वात् । नच कथं तर्हि किं कस्मादिति टीकोक्तिरिति वाच्यम्; तस्या अपि किं कस्माद्व्यावर्तयतीत्यर्थकत्वादितिध्येयम् । ( अक्षरात्परो हि जीव इति ) परतोऽक्षरादिति सामानाधिकरण्यापेक्षया वैयधिकरण्यस्य ज्यायस्त्वस्य प्रागुपपादितत्वादिति

भूतान्तरात्मनः परमात्मन एव सम्भवतिः अतश्च परमात्मा ॥ ७ ॥ .... .... .... ....

* श्रुतप्रकाशिका *

धानादीनां भूतयोन्यन्तरस्य चिदचिद्व्यावृत्तिफलकत्वाद्विशेषणशब्देन वक्तुं युक्तम्, न तु धर्मशब्देन, न ह्येकविज्ञानेन सर्वविज्ञानाभिधानं नाम परमात्मगतो धर्मः, अतस्तादृशं विशेषणजातं द्वितीयसूत्रेण विवक्षितं भवितुमर्हति, न तु प्रथमेन । रूपोपन्यासाच्चेतिसूत्रस्य पुरुष एवेदमितिवाक्यप्रतिपन्नसर्वात्मकत्वप्रतिपादनपरत्ववर्णनमनुपपन्नम्, पूर्वसूत्रयोरन्यतरविवक्षितैकविज्ञाननिबन्धनसर्वविज्ञानान्तर्गतत्वात्सर्वात्मभावस्य । न च त्रैलोक्यशरीरहिरण्यगर्भोत्पत्तिः 'अग्निर्मूर्धे'त्यादिवाक्यप्रतिपाद्या, अजायतेत्यध्याहारप्रसङ्गात् । "एतस्माज्जायते प्राणः" "तस्मादग्निः समिधश्च" इति प्रकरणवशादध्याहार इति चेन्न; अवान्तरप्रकरणस्य भूतयोन्यन्तरविषयमहाप्रकरणविरोधे दुर्बलत्वात्, सर्वभूतान्तरात्मत्वलिङ्गबाधितत्वाच्च; तद्धि परमकारणस्य लिङ्गम्, न तु कार्यस्य. न च कारणस्य विग्रहवत्त्वानुपपत्त्या हिरण्यगर्भपरत्वाश्रयणम्, अनन्तरं वैश्वानराधिकरण एव त्रैलोक्यशरीरकस्य परमात्मताया उपपादयिष्यमाणत्वात् । "यस्याग्निरास्यं द्यौर्मूर्द्धा" इत्यादिस्मृतिप्रसिद्धं च भगवतः

७ भावप्रकाशिका ७

भावः । ( नतु धर्मशब्देनेति ) अदृश्यत्वादिगुणको धर्मोक्तिरिति धर्मशब्देनेत्यर्थः । 'एतस्माज्जायते प्राणः' इति मन्त्राक्रियानुषङ्गेण अग्निर्मूर्द्धेतिमन्त्रस्य त्रैलोक्यशरीरो हिरण्यगर्भो भूतयोन्यन्तराज्जायतेत्यर्थपरत्वमङ्गीकृत्य रूपोपन्यासादिति सूत्रस्य च 'पुरुष एवेदं सर्वम्' इति सार्वज्ञ्यरूपब्रह्मलिङ्गोपन्यासाद्भूतयोनिः परमात्मेत्यपि योजनान्तरं परैर्दर्शितम् । तदनूद्य दूषयति ( रूपोपन्यासाच्चेतीति ) ( प्रकरणवशादिति ) सन्निधिवशादित्यर्थः । ( अवान्तरप्रकरणस्येति ) सन्निधेः प्रकरणविरोधे दुर्बलत्वादित्यर्थः । ततश्च प्रकरणं खल्वेतद्विश्वयोनेस्सन्निधिश्च जायमानानां सन्निधेश्च प्रकरणं बलीय इति । ननु अजायतेत्यध्याहारमन्तरेण विश्वयोनेरेव प्रकरणिनो रूपाभिधानमिति चेन्न; प्रकरणिनः शरीरेन्द्रियरहितस्य विग्रहवत्त्वविरोधादिति वाचस्पत्यानुगुण्यं च सिध्यति । मीमांसकप्रवादविरोधश्च परिहृतो भवति । अत्रेदमवधेयम् ; अस्मन्मते भट्टमत इवावान्तरप्रकरण-

## वैश्वानरस्साधारणशब्दविशेषात् ॥ २५ ॥

६ अधिकरणम्

इदमामनन्ति च्छन्दोगाः [1]'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति प्रक्रम्य [2]'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' इति। तत्र सन्देहः— किमयं वैश्वानरः

* श्रुतप्रकाशिका *

त्रैलोक्यशरीरत्वम्। यदि कचिद्धिरण्यगर्भस्य त्रैलोक्यशरीरत्वमवगम्यते तदानीमपि परमात्मात्मकत्वेनैव तस्य तथात्वं वर्णनीयम्, 'सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते ' तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः" इति चतुर्मुखस्य भगवदनुप्रवेशतदन्तरात्मकत्वावगमात्, अतः परमात्मन एव त्रैलोक्यशरीरत्वम् अग्निर्मूर्धेत्यादिनाऽभिधीयते, अतः सूत्राणां यथोक्त एवार्थः॥ इत्यदृश्यत्वादिगुणकाधिकरणम् ॥

एवं त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तादृशशरीरत्वं तद्व्यतिरिक्तस्यापि 'श्रूयत इति शङ्कयोत्थानात् सङ्गतिः—॥ वैश्वानरस्साधारणशब्दविशेषात्॥ विषयमाह (इदमिति) अध्येषि 'इक् स्मरणे' स्मरसि— उपास्स इत्यर्थः। यद्वा ' इण् गतौ' गत्यर्था बुध्यर्थाः, अवगच्छमीत्यर्थः। यद्यपि 'को न आत्मा किं ब्रह्म'इत्यात्मब्रह्मशब्दाभ्यामुपक्रमादुपसंहारस्य च तदानुगुण्येन नेयत्वान्न सन्देहोदयः, तथाऽपि समानप्रकरणे वाजसनेये अग्निवैश्वानरशब्दाभ्यामुपक्रमात् संशयस्सम्भवतीत्यभिप्रायेणाह (तत्र सन्देह इति) शक्यनिर्णयत्वाशक्यनिर्णयत्वे सन्देहशिरसी कृते, तच्च साधारणशब्दस्य सूत्रस्थत्वनिबन्धनम्। ननु प्रयोगसाधारण्यं हि वैश्वा-

ॐ भावप्रकाशिका ॐ

भेदेन प्रकरणद्वैविध्यमेव नास्ति, अवान्तरप्रकरणशब्दाभिलप्यवस्तुसन्निधिरेव, नचैवमभिक्रमस्य प्रयाजाङ्गत्वं न सिद्ध्येदिति वाच्यम्। गुरुमतरीत्या समर्थनसम्भवादिति॥ इत्यदृश्यत्वादिगुणकाधिकरणम्॥

(समानप्रकरणे वाजसनेय इति) अग्निरहस्ये 'वैश्वानरं ह वै भगवान्

[1] छां. ५-११-६ ॥ ॥ | [2] छां. ५-१८-१ ॥

आत्मा, परमात्मेति शक्यनिर्णयः, उत न ? इति । किं प्राप्तम् ? अशक्यनिर्णय इति । कुतः ? वैश्वानर-

* श्रुतप्रकाशिका *

नरशब्दस्य साधारणत्वम्, अक्षरशब्दोऽपि हि प्रकृतिपुरुषेश्वरसाधारणः प्रयुज्यते 'अक्षरात्परतः परः' 'क्षरं प्रधानममृताक्षरं हरः 'यया तदक्षरमधिगम्यते'' इत्यादि । ततश्च 'अक्षरमम्बरान्तधृते'रित्यत्रापि शक्यनिर्णयत्वाशक्यनिर्णयत्वे सन्देहविषयतया वक्तव्ये. तथा च न कृतम्, किन्तु प्रधानं वा जीवो वा परमात्मा वेति विचारः कृतः, इहापि तथैव संशयो वक्तव्य इति । नैवम् ; तत्र हि प्रयोगसाधारण्यातिरिक्तः प्रकृतिपुरुषयोरन्यतरविषयत्वनिर्धारकः पूर्वपक्षहेतुर्विद्यते, अतस्तथा सन्देह उपपद्यते ; इह तु प्रयोगसाधारण्यस्यैव पूर्वपक्षहेतुत्वात् तस्य च जाठरभूततृतीयदेवतास्वन्यतमनिर्धारकत्वाभावात्तस्य परमात्मलिङ्गादर्शने तद्विषयत्वनिर्णयप्रतिबन्धकत्वात् त्रेताकल्पनादीनामनिर्धारकत्वस्य वक्ष्यमाणत्वाच्च शक्यनिर्णयत्वाशक्यनिर्णयत्वे संशयविषयतयोक्ते । नन्वेवं सति संशयलक्षणाप्रामाण्यं पूर्वपक्षितं स्यात् . तच्चायुक्तम् ; प्रथमे काण्डे वेदप्रामाण्यस्य समर्थितत्वमुपजीव्यारब्धत्वाच्छारीरकस्य ; अतोऽर्थविशेषपरत्वं पूर्वपक्षीकर्तव्यम्, न त्वशक्यनिर्णयत्वम् । नैवम् ; चतुर्ष्वर्थेष्वन्यतमानिर्धारणेऽपि सर्वथा कस्मिंश्चिदर्थे प्रमाणमेवेदमिति सामान्यतः प्रामाण्यनिश्चयस्यानपोद्यत्वात्, तद्धि नित्यनिर्दोषवाक्यतया स्थापितम् । 'विधिशब्दस्य मन्त्रत्वे भावस्स्यात्' इतिन्यायेन प्रामाण्यसिद्धिः । किमयं वैश्वानरात्मा

ဖ भावप्रकाशिका ဖ

सम्प्रति वेद तन्नो ब्रूहि' इति श्रवणादित्यर्थः । अग्निशब्दोपक्रमः कोशेषु द्रष्टव्यः । त्रिष्वपि क्रमेण प्रयोगं दर्शयति ( अक्षरात्परतः पर इत्यादिना ) हरो जीव इत्यर्थः । (विधिशब्दस्य मन्त्रत्वे भावस्स्यादितिन्यायेनेति) दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपालः' इति बहूनि चाग्नेरभिधानानि 'अग्निश्शुचिः पावकः' इत्यादीनि । तत्राग्निवाचिषु स्वाहाकारोज्झित्यादिनिगदेषु येन केनचिच्छब्देनाभिधानं कर्तव्यम्, उत विधिगतेनैवाग्निशब्देनेति विशये. अग्न्यर्थो देवताकर्तव्य इत्येतावांश्चोदनार्थः । तस्य तच्छब्दोद्दिश्यमानस्य देवतात्वमिति प्रयोगावस्थायां शब्दोच्चारणमापतति, तन्नियमे च नास्ति प्रमाणम्, पावकशब्दे-

* श्रुतप्रकाशिका *

परमात्मेति शक्यन्निर्णयः, उत न ? । तदर्थमात्मब्रह्मशब्दोपक्रमो वैश्वानरस्य ब्रह्मभावमवगमयति, न ? इति । तदर्थमग्निशब्दसामानाधिकरण्यत्रेताकल्पनप्राणाहुत्याधारत्वानि किं वैश्वानरस्य ब्रह्मभावविरोधीनि, उत न ? इति । किम् 'एषोऽग्निर्वैश्वानरः' इत्यग्निशब्दोऽग्निमात्रपरः, ? उताग्न्यवस्थपरमात्मपरः इति । अग्निशब्दस्याग्निमात्रपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावविरोधितया आत्मब्रह्मशब्दोपक्रमस्यापि ब्रह्मभावावगमकत्वाभावेनाशक्यनिर्णय इति पूर्वःपक्षः । अग्निशब्दस्य परमात्मपरत्वे अग्निशब्दसामानाधिकरण्यादीनां ब्रह्मभावाविरोधितया

* भावप्रकाशिका *

नाप्युद्दिश्यमानस्य चोदनाविहितमग्नेर्देवतात्वं सम्पादितमेव भवति, तस्माच्छब्दप्रयोगानियम इति पूर्वपक्षं कृत्वाऽवश्यं ह्यत्रशब्दोच्चारण एव पुरुषो नियोक्तव्यः, शब्दोच्चारणस्यैव पुरुषव्यापारत्वात्। ततश्च शब्दस्वरूपमेव उच्चारणान्वयित्वेन विधीयते, तद्विधाने चार्थस्य देवतात्वं प्राप्तमेवानूद्यते. येन हि शब्देन हविस्त्यज्यते तस्यार्थस्तस्य देवता भवति. तस्माच्छब्दोच्चारणस्यैव विधानान्न पर्यायप्रसक्तिरिति पर्यायशब्दानां बाध इति बाधलक्षणे 'विधिशब्दस्य मन्त्रत्वे बाधस्स्यात्तेन चोदना' इत्यधिकरणे सिद्धान्तितम्, यथा शब्दानियमपूर्वपक्षेपि प्रथमाध्यायप्रतिष्ठापितप्रामाण्यस्य न हानिस्तद्वदत्र वैश्वानरशब्दस्यार्थानियमपूर्वपक्षेपि न प्रतिष्ठापितप्रामाण्यहानिरिति भावः। इदमुपलक्षणम् । 'छागो वा मन्त्रवर्णात्' इत्यादिपूर्वपक्षोत्थानस्यापीति द्रष्टव्यम् । अत्र केचित् ; तदधिकरणपूर्वपक्षे न पदार्थानध्यवसायो न वाक्यार्थानध्यवसायः, इह तु वैश्वानरपदार्थानध्यवसाये तद्घटितवाक्यस्य संशायकत्वेन प्रमापकत्वात्. प्रतिष्ठापितप्रामाण्यस्य हानिर्भवत्येव । अत एव पिकयववराहवेतसशब्दार्थानध्यवसाये तद्घटितचोदनाया अप्रामाण्यमित्युक्तम् । अत एव भावार्थनये किन्नामपदेन विषयतया कर्मार्प्यते, उताख्यातपदेनेत्यध्यवसाय इति संशये अनध्यवसायात्मक एव पूर्वपक्षः प्रवर्तितः । तत्र चाप्रामाण्ये प्रमाणाध्याय एव इयं चिन्ता स्यादित्याशङ्क्योपोद्घातत्वेनात्रैव युक्ता. साक्षात्सङ्गतेरुपोद्घातसङ्गतिबलीयस्त्वादित्युक्तं विवरणे । ततश्च स्वर्गकामाद्यधिकरणेषु प्रसिद्धप्रामाण्याक्षेपवदिहापि पूर्वपक्षिणः प्रामाण्याक्षेपो न दोषमावहतीति वदन्ति । ( अग्निशब्दसामानाधिकरण्येति ) 'स एषोऽग्नि-

शब्दस्य चतुर्ष्वर्थेषु प्रयोगदर्शनात्. जाठराग्नौ तावत् "अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यावदेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति" इति; महाभूततृतीये च "विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इति; देवतायां च "वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः"

* श्रुतप्रकाशिका *

आत्मब्रह्मशब्दोपक्रमस्य ब्रह्मभावावगमकत्वोपपत्तेर्वैश्वानरः परमात्मेति शक्यनिर्णय इति राद्धान्तः। (वैश्वानरशब्दस्य चतुर्ष्वर्थेष्विति) जीवपरसाधारणात्मशब्दसद्भावेऽप्यात्मशब्दस्य वैश्वानरमात्मानमिति वैश्वानरशब्दविशेषितत्वाद्वैश्वानरशब्दस्य च जीवमात्रे प्रयोगाभावादिह जीवविषयत्वशङ्का न सम्भवति, नहि गोशब्दविशेषितस्य चतुष्पाच्छब्दस्याश्वादिपरत्वशङ्कासम्भव इत्यभिप्रायेण पञ्चस्वित्यनुक्तिः। (विश्वस्मा अग्निमिति) विश्वस्मै भुवनाय, विश्वभुवनोपकारार्थम्. वैश्वानरम्– महाभूततृतीयम्। अह्नां केतुम्– आदित्यम्; अकृण्वन्नित्यर्थः। (वैश्वानरस्येति) सुमतिः– शोभनमतिः। सुमतौ स्याम– तद्विषयभूतास्स्याम।

❁ भावप्रकाशिका ❁

वैश्वानरो यत्पुरुषस्स यो हैतमग्निं वैश्वानरं पुरुषं पुरुषविधम्' इत्यादिवाक्यप्रतिपन्नसामानाधिकरण्येत्यर्थः। परैर्वैश्वानरशब्दस्य जाठरतृतीयभूततदधिष्ठातृदेवतारूपार्थतृतीयसाधारणत्वात् आत्मशब्दस्य जीवपरमात्मस्वरूपार्थद्वयसाधारणत्वाच्च पञ्चधा संशयो वर्णितः, तद्दूषयति (जीवपरसाधारणात्मशब्दसद्भावेपीत्यादिना) अग्निमित्यस्य विवरणं महाभूततृतीयमिति। यद्यपि नाग्निशब्दस्य भूततृतीयं सर्वमर्थः। तथापि ज्वलनसामान्यमर्थः। न देवता न जाठराग्निविशेष इति भावः। (केतुमादित्यमिति) आदित्योदये दिनव्यवहारात्तस्य केतुशब्दितं चिह्नत्वमिति भावः। (तद्विषयभूतास्स्यामेति) अस्मासु शोभना मतिस्तस्य

इति; परमात्मनि च "तदात्मन्येव हृदयेऽग्नौ वैश्वानरे प्रास्यत" इति, 'स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते" इति च । वाक्योपक्रमादिषूपलभ्यमानान्यपि लिङ्गानि सर्वानुगुणतया नेतुं शक्यानीति॥

एवं प्राप्ते अभिधीयते- वैश्वानरस्साधारणशब्दविशेषात् । वैश्वानरः–परमात्मा । कुतः? साधारणशब्दविशेषात्- विशेष्यत इति विशेषः, साधारणस्य

* श्रुतप्रकाशिका *

अभितः श्रीर्यस्य सोऽभिश्रीः, "श्रियमिच्छेद्धुताशनात्" इत्युक्तत्वात् । हिकमित्यव्ययम् . प्रयोगसाधारण्यातिरिक्तेषु त्रेताग्निकल्पनाद्विष्वात्मब्रह्मशब्दादिषु च प्रतीयमानेषु कथं शक्यनिर्णयत्वतदभावसन्देहोक्तिरित्यत्राह ( वाक्योपक्रमेति ) काल्पनिकं त्रेतारूपत्वं सर्वत्र सम्भवति । ब्रह्माग्निशब्दौ मिथः प्रतिबन्धकत्वादनिर्धारकौ । अन्नादनरूपं फलञ्च सर्वत्रोपपन्नमित्यभिप्रायः ॥ .... .... ....

(एवं प्राप्ते इति) साधारणशब्दविशेषादित्येतद्व्याचष्टे (विशेष्यत इति विशेष इति) नेदं विशेषशब्दस्य प्रत्ययार्थव्याख्यानम्, अपि तु साधारणशब्दविशेषादिति समासान्तर्गतषष्ठीव्याख्यानम्. कर्मणि षष्ठी, न तु कर्तरीत्यर्थः । विशेष इति कृदन्तं

ᛃ भावप्रकाशिका ᛃ

भूयादित्यर्थः । मतिसम्बन्धस्य भूततृतीये अचेतने,वा जाठरे वा असम्भवाद्देवतापरत्वमाश्रयणीयमिति भावः । (हिकमित्यव्ययमिति) प्रसिद्धौ वर्तत इति शेषः । विशेष्यत इति विशेष इतिभाष्यस्य कर्मत्वरूपप्रत्ययार्थव्याख्यानरूपत्वे स्वरसतः प्रतीयमानेपि साधारणशब्दविशेषादितिसूत्रस्थविशेषपदस्य कर्मणि घञन्तत्वे साधारणशब्द एव विशेष इति कर्मधारयस्याश्रयणीयत्वात्. कर्मधारये च विशेषशब्दस्य पूर्वनिपातप्राप्त्या पश्चान्निर्देशानौचित्यात्सूत्रस्वारस्यानुरोधार्थं विशेषशब्दस्य भावार्थत्वमभिप्रेत्य साधारणशब्दस्येति षष्ठ्यर्थीभूतकर्मत्वव्याख्यानपरं विशेष्यत इतिभाष्यमिति व्याचष्टे ( नेदं विशेषशब्दस्येत्यादिना ) ननु विशेष्यत

वैश्वानरशब्दस्य परमात्मासाधारणैर्धर्मैर्विशेष्यमाण-त्वादित्यर्थः। तथा हि; औपमन्यवादयः पञ्चेमे महर्षयः समेत्य "को न आत्मा किं ब्रह्म" इति विचार्य 'उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छाम" इत्युद्दालकस्य वैश्वानरात्मविज्ञानमवगम्य तमभ्याजग्मुः। स चोद्दालक एतान् वैश्वानरात्मजिज्ञासूनभिलक्ष्यात्मनश्च तत्रा-

* श्रुतप्रकाशिका *

पदं कर्मार्थषष्ठीनिमित्तमित्यभिप्रायेण विशेषपदोपादानम्। यद्वा विशेष्यत इति विशेष इति घञः कर्मार्थतामाह, साधारणशब्द एव विशेष इति कर्मधारयः। किं केन विशेष्यत इत्यत्राह (साधारणस्येति) धर्मशब्दो लिङ्गपरः। विशेष्यमाण-त्वादिति फलितार्थ उक्तः, नाभिधानिकः। के पुनरसाधारणा धर्मा इत्यत्राह (तथा हीति) 'को न आत्मा किं ब्रह्म' इति किंशब्दद्वयमात्मत्वब्रह्मत्वयोर्द्वयोरपि ज्ञातव्यत्वाभिप्रायम्। आत्मब्रह्मशब्दवाच्यधर्म्यैकत्वानेकत्वजिज्ञासया वा किंशब्द-

* भावप्रकाशिका *

इत्यस्य विशेषशब्दव्याख्यानरूपत्वाभावे विशेष इति पृथक्पदमनन्वितं स्यादित्याशङ्क्य विशेष इति कृदन्तं पदम्, कर्मार्थषष्ठीनिमित्तमित्यध्याहृत्य व्याख्येयमित्याह (विशेष इति कृदन्तं पदमिति) अध्याहारक्लेशं विशेषणविशेष्यभावस्य कामचारित्वं चाभिप्रयन् भाष्यस्वारस्यानुरोधेनान्यथा व्याचष्टे (यद्वा विशेष्यत इत्यादिना) फलविशेषनिर्देशादीनां परमात्मधर्मत्वाभावादाह (लिङ्गपर इति) अतच्चिह्नस्यापि लिङ्गत्वमुपपद्यत इति भावः। ननु विशेषपदस्य कर्मसाधनत्वपक्षे भावप्रधानत्वानाश्रयणेन कथं विशेष्यमाणत्वादित्यर्थलाभ इत्यत आह (फलितार्थ इति) भाष्ये—औपमन्यवादय इति। प्राचीनशाल औपमन्यवस्सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनश्शार्कराक्ष्यो बुडिल आश्वतराश्विः। प्राचीनशालादिशब्दा आद्याः पञ्चापि नामानि। ते हैते महाशाला महाश्रोत्रियास्समेत्य मीमांसां

कृत्स्नवेदित्वं मत्वा 'तान् होवाच अश्वपतिर्वै भगवन्तोऽयं केकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छाम" इति । ते चोद्दालकषष्ठास्तमश्वपतिमभ्याजग्मुः । स च तान् महर्षीन् यथार्हं पृथगभ्यर्च्य 'न मे स्तेनः' इत्यादिना 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' इत्यन्तेनात्मनो व्रतस्थतया प्रतिग्रहयोग्यतां ज्ञापयन्नेव ब्रह्मविद्भिरपि प्रतिषिद्धपरिहरणीयतां विहितकर्मकर्तव्यतां च प्रज्ञाप्य 'यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भवन्तः' इत्यवोचत् । ते च मुमुक्षवो वैश्वानरमात्मानं जिज्ञासमानास्तमेवात्मानमस्माकं ब्रूहीत्यवोचन् । तदेवं

* श्रुतप्रकाशिका *

द्वयप्रयोगः । विषयवाक्ये 'न मे स्तेन' इत्यादेः प्रयोजनमाह (आत्मन इति)

* भावप्रकाशिका *

चक्रुः । महाशालाः— विस्तीर्णशालाः, सम्पन्ना इत्यर्थः । 'को न आत्मा किं ब्रह्म' इति ते ह सम्पादयाञ्चक्रुः, निश्चितवन्त इत्यर्थः । उद्दालको ह वै भगवन्तोऽयमारुणिस्सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छामेति तँ हाभ्याजग्मुस्स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला, महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये । सर्वं वक्तुं नोत्सह इत्यर्थः । हन्ताहमन्यमभ्यनुशासानीति । तान् होवाच । अश्वपतिर्वै भगवन्तोऽयं केकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छामेति तं हाभ्याजग्मुः । तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयाञ्चकार स ह प्रातस्सञ्जिहान उवाच । न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः । यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति । ते होचुः येन हैवार्थेन पुरुषश्चरेत् तं हैव वदेत् । यत्प्रयोजनमुद्दिश्य पुरुषः प्रवर्तते

'को न आत्मा किं ब्रह्म' इति जीवात्मनामात्मभूतं ब्रह्म जिज्ञासमानैस्तज्ज्ञमन्विच्छद्भिर्वैश्वानरात्मज्ञसकाशमागम्य पृच्छ्यमानो वैश्वानरात्मा परमात्मेति विज्ञायते, आत्मब्रह्मशब्दाभ्यामुपक्रम्य पश्चात्सर्वत्रात्मवैश्वानरशब्दाभ्यां व्यवहाराच्च ब्रह्मशब्दस्थाने निर्दिश्यमानो वैश्वानरशब्दो ब्रह्मैवाभिधत्त इति विज्ञायते; किञ्च "स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति' 'तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति च वक्ष्यमाणं वैश्वानरात्मविज्ञानफलं वैश्वानरात्मानं परं ब्रह्मेति ज्ञापयति ॥ २५ ॥

---

* श्रुतप्रकाशिका *

फलितानि साधकलिङ्गानि दर्शयति ( तदेवमिति ) मुमुक्षुभिः पृच्छ्यमानत्वमात्मत्वं ब्रह्मत्वं ब्रह्मशब्दस्थाने वैश्वानरशब्दप्रयोगः फलनिर्देशश्च वैश्वानरस्य परमात्मत्वसाधकलिङ्गानीत्यर्थः । द्युमूर्धत्वादिविशिष्टतारूपधर्मस्यास्मिन् सूत्रे अनुक्तिस्तस्यानन्तरसूत्रोक्तत्वात् ॥ .... .... .... .... ....

* भावप्रकाशिका *

तदेव वदेदित्यर्थः । आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहीति । तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे । तान् हानुपनीयैवैतदुवाच, यत एवं महाशाला महाश्रोत्रियाः ब्राह्मणास्सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थितया विनयेनोपाजग्मुः, तथान्यैरपि विद्योपादित्सुभिर्भवितव्यम्, योग्येभ्य एव विद्या दातव्येत्ययमर्थ आख्यायिकया सूच्यते । ( फलविशेषनिर्देशश्चेति ) सर्वलोकाद्याश्रयान्नानुभवसर्वपापप्रदाहरूपफलद्वयनिर्देश इत्यर्थः । परैः द्युमूर्द्धत्वादिकल्पना सर्वविकारानुगते ब्रह्मण्येव सम्भवतीत्युक्तम्, तद्दूषयति ( द्युमूर्द्धत्वादीति ) ॥

इतश्च वैश्वानरः परमात्मा—

स्मर्यमाणमनुमानं स्यादिति ॥ २६ ॥

द्युप्रभृति पृथिव्यन्तमवयवविभागेन वैश्वानरस्य रूपमिहोपदिश्यते । तच्च श्रुतिस्मृतिषु परमपुरुषरूपतया प्रसिद्धम् । तदिह तदेवेदमिति स्मर्यमाणम्, प्रत्यभिज्ञायमानं वैश्वानरस्य परमपुरुषत्वे अनुमानम्, लिङ्गमित्यर्थः । इतिशब्दः प्रकारवचनः । इत्थंभूतं रूपं प्रत्यभिज्ञायमानं वैश्वानरस्य परमात्मत्वे अनुमानं स्यात् । श्रुति-

* श्रुतप्रकाशिका *

॥ स्मर्यमाणमनुमानं स्यादिति ॥ स्मर्यमाणशब्दस्य विशेष्यं दर्शयन् सूत्रं व्याचष्टे ( द्युप्रभृतीति ) ( लिङ्गमित्यर्थ इति ) अनुमानशब्दः करणार्थल्युडन्तः श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितलिङ्गपरश्चेति भावः । अनुमानशब्देन हेतुत्वसिद्धेरिति शब्दवैयर्थ्यमित्यत्राह ( इतिशब्द इति ) इतिशब्दार्थेनान्वितं वाक्यार्थमाह ( इत्थमिति ) परमपुरुषरूपत्वेन प्रसिद्धिं दर्शयति ( श्रुतीति ) परमात्मपरत्वेन

७ भावप्रकाशिका ७

( श्रुतिलिङ्गवाक्येत्यादिसूत्रपठितेति ) न तु ' आकाशस्तल्लिङ्गात् ' इत्यत्रेव तदसाधारणधर्मरूपलिङ्गपरः । स्मर्यमाणस्वरूपस्य परमपुरुषासाधारणधर्मत्वाभावेन परमपुरुषत्वे लिङ्गत्वोक्त्ययोगात्, अतो लिङ्गशब्दो ज्ञापकपर इति भावः । यद्यपि श्रुतिलिङ्गादिसूत्रे सामर्थ्यं लिङ्गम्, तच्च शब्दगतम्, अर्थगतमित्येव व्यवहृतम् । तथापि तदपि ज्ञापकान्नातिरिच्यत इति भावः । यद्वा श्रुतिलिङ्गवाक्ये तत्स्वरूपकथनार्थमिति द्रष्टव्यम् । इत्थं भूतमित्यादिभाष्यस्य द्यु ।भृतीत्यादिना सूत्रार्थप्रतिपादकेन भाष्येण पौनरुक्त्यमाशङ्क्य इतिशब्दान्वयानन्वयाभ्यां परिहरति ( इतिशब्दार्थेनान्वितमिति ) भाष्ये– तथाहीति । " औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाच एष वै सुतेजाः आत्मा वैश्वानरोयं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते । सुतप्रसुता-

स्मृतिषु हि परमपुरुषस्येत्थं रूपं प्रसिद्धम्। यथा आथर्वणे [1]"अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः। वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' इति। अग्निरिह द्युलोकः, [2]"असौ वै लोकोऽग्निः" इति श्रुतेः। स्मरन्ति च मुनयः [3]"द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे। दिशःश्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता"॥ इति। [4]'यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः। सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः"॥ इति च। इह च द्युप-

* श्रुतप्रकाशिका *

साधितत्वात् 'अग्निर्मूर्धा' इत्यादिवाक्यमुदाहृतम्। इह द्यौर्मूर्धत्वेन श्रूयते, उदाहृतवाक्ये अग्निर्मूर्धेति, तत्कथमैकार्थ्यमित्यत्राह (अग्निरिहेति) परमात्मनस्तथाविधरूपवत्त्वे स्मृतिमुदाहरति (स्मरन्ति चेति) 'यस्याग्निरास्यम्' इत्यत्राग्निशब्दः प्रसिद्धाग्निपरः, द्यौर्मूर्धेति पृथगुक्तेः। श्रुतिस्मृतिष्वभिज्ञातस्य रूपस्य प्रत्यभिज्ञायमानत्वं दर्शयति (इह चेति) नन्वत्र 'अग्निर्मूर्धे'त्यादाविव द्युप्रभृति पृथिव्यन्तानां मूर्धादि-

७ भावप्रकाशिका ७

सुतशब्दैरेकाहाहीनसत्रयोगा लक्ष्यन्ते। 'अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्द्धा त्वेष आत्मन इति होवाच मूर्द्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति। अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच एष वै विश्वरूप आत्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते। प्रवृत्तोऽश्वतरी रथोदासीनिष्कोत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यसि प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुस्त्वेतदात्मन

[1] मु. २-१-४॥ [2] छा. ५-२-९॥ [3-4] भारते-शान्तिपर्वे: राजधर्मे ४७-७०॥

भृतयो वैश्वानरस्य मूर्धाद्यवयवत्वेनोच्यन्ते । तथा हि, तैरौपमन्यवप्रभृतिभिर्महर्षिभिः 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि तमेव नो ब्रूहि' इति पृष्टः केकयस्तेभ्यो वैश्वानरात्मानमुपदिदिक्षुर्विशेषप्रश्नान्यथानुपपत्त्या वैश्वानरात्मन्येतैः किञ्चित् ज्ञातं किञ्चिदज्ञातमिति विज्ञाय ज्ञाताज्ञातांशबुभुत्सया तानेकैकं पप्रच्छ । तत्र 'औपमन्यव कं त्वमात्मानमुपास्से' इति पृष्टे 'दिव-

* श्रुतप्रकाशिका *

पादान्तावयवत्वेन सम्भूयोपदेशो न दृश्यत इति शङ्कायां विप्रकीर्णप्रतिपादनहेतुमाह (तथा हीति) (विशेषप्रश्नान्यथानुपपत्त्येति) न ह्यात्मब्रह्मादिशब्दैः प्रश्नः कृतः, वैश्वानरशब्देन हि प्रश्नः, अनेन द्युप्रभृतीनामपूर्वनामनिर्देशहेतुश्चोक्तो

ꣳ भावप्रकाशिका ꣳ

इति होवाचान्धोऽभविष्यो यन्मां नागमिष्य इति । अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैय्याघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाच एष वै पृथग्वर्त्मा वैश्वानरोयं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति । पृथग्रथश्रेण्यो ऽनुयन्ति । अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसङ्कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति । अथ होवाच जनँ शार्कराक्ष्य कं त्वमात्मानमुपास्स इति आकाशमेव भगवो राजन्निति होवाच एष वै बहुल आत्मा वैश्वानरोयं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोसि प्रजया च धनेन च । अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्यद्यन्मां नागमिष्य इति । अथ होवाच बुडिलामाश्वतराश्विं वैय्याघ्रपद्य कं त्वमात्मानमुपास्स इति । अप एव भगवो राजन्निति होवाच एष वै रयिरात्मा वैश्वानरोयं त्वमात्मानमुपास्से तस्मात्त्वं रयिमान् पुष्टिमानत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसङ्कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति

मेव भगवो राजन्' इति तेन चोक्ते दिवि तस्य पूर्ण-वैश्वानरात्मबुद्धिं निवर्तयन् वैश्वानरस्य द्यौर्मूर्धेति चोप-दिशंस्तस्या वैश्वानरांशभूताया दिवस्सुतेजा इति गुणनामधेयं प्राचिख्यपत् । एवं सत्ययज्ञादिभिरादित्य-वाय्वाकाशपृथिवीनामेकैकेनैकैकमुपास्यमानतया कथि-तानां 'विश्वरूपः, पृथग्वर्त्मा, बहुलो, रयिः, प्रतिष्ठा' इत्येकैकगुणनामधेयानि वैश्वानरात्मनश्चक्षुःप्राण-

* श्रुतप्रकाशिका *

भवति, अज्ञातांशः सर्वोऽपि ह्युपदेष्टव्यः । ( गुणनामधेयानीति ) द्यौर्नक्षत्रादिते-जस्विनीति सुतेजाः । प्रकाशकस्यादित्यस्य विश्वं रूपम् प्रकाश्यम्, तस्मात् आदित्यो विश्वरूपः । वायुर्विविधगतिस्वभावत्वात् पृथग्वर्त्मा । आकाशो भूतान्तरेभ्यो मह-त्त्वात् बहुलः । आपो वेगवत्त्वाद्रयिः, रयो हि वेगः, इकारान्तत्वं छान्दसम् । रैरूप-

ϕ भावप्रकाशिका ϕ

होवाच वस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति । अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाच एष वै प्रति-ष्ठात्मा वैश्वानरोऽयं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोसि प्रजया च पशुभिश्च अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेव-मात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति । तान् होवाच एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वान् सोऽन्नमात्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति, तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचनमा-स्यमाहवनीयः, तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति" इत्यादिना प्राणाद्याहुतिपञ्चकं प्रदर्श्य स यदि-दमविद्वानग्निहोत्रं जुहोति" इति पठ्यते । इत्थं श्रुतिक्रमः । भाष्ये—तानेकैकं पप्रच्छेति ।

सन्देहवस्तिपादावयवत्वं चोपदिष्टम् । सन्देहो मध्यकाय उच्यते ; अत एवम्भूतद्युमूर्धत्वादिविशिष्टं परमपुरुषस्यैव रूपमिति वैश्वानरः परमपुरुष एव ॥ २६ ॥

* श्रुतप्रकाशिका *

धनप्राप्तिहेतुत्वाद्वा रयिः, पृथिवी प्राण्याधारत्वात् प्रतिष्ठेतिभावः । श्रुतिस्थं सन्देहशब्दं व्याचष्टे ( सन्देहो मध्यकाय इति ) मध्यं हि पूर्वापरांशसाधारण्यात् कुत्रानुप्रविष्टमिति सन्दिह्यते । एतज्ज्ञापयितुं मध्यकाय इति व्याख्यातम्, न तु नाभिरिति । गुणनामधेयानीत्यनेनान्यदपि प्रयोजनं फलितम्, न केवलं नामधयानि, अपि तु गुणनामधेयानि; तत्तद्गुणकत्वं मूर्धादित्वेनोपदिष्टानां द्युप्रभृतीनामनुसन्धेयमित्यर्थः । अत्रायमभिप्रायः; वाजसनेयके मूर्धभूताया दिवोऽतिष्ठात्वमुक्तम्, न तु सुतेजस्त्वम्, चक्षुर्भूतस्यादित्यस्य सुतेजस्त्वमुक्तम्, न तु विश्वरूपत्वम्. न चैतावता विद्याभेदः, तत्तन्नामधेयोपस्थापितगुणेष्वेव तात्पर्यसम्भवात्. अतीत्य स्थितत्वं हि दिवोऽतिष्ठात्वम्, तच्च सर्वोत्कृष्टत्वम्. तच्च नक्षत्रादितेजश्शालित्वरूपमित्येकगुणत्वेन फलितमित्यविरोधः । आदित्यस्य च सुतेजस्त्वफलरूपं विश्वरूपत्वम्, तद्धि विश्वनिरूपकत्वं विश्वप्रकाशकत्वम्, अतोऽनर्थान्तरतया फलितम्, अतो न विद्याभेद इति, एतदभिप्रायेण गुणनामधेयानीत्युक्तम् ।– परमात्मनस्त्रैलोक्यशरीरत्वविषयं 'द्यां मूर्धान' मित्यादिस्मृतिवचनं स्वमूलत्वेन वैश्वानरविद्यायाः परमात्मविषयत्वं कल्पयतीति व्याख्यानमनुपपन्नम्, स्मृतिवचनं हि स्वमूलत्वेन श्रुतिं कल्पयति, न तु वैश्वानरविद्यामेव कल्पयितुं प्रभवति, श्रुत्यन्तरसम्भवेन कल्पकस्यान्यथासिद्धत्वात्. अस्ति हि 'अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ"

ॐ भावप्रकाशिका ॐ

एकैकमिति क्रियाविशेषणम्. एवमुत्तरत्रापि; एकैकमुपास्यमानतया कथितानामित्यादावपि द्रष्टव्यम् । ( नतु नाभिरितीति ) 'खं वै नाभि'रित्युपबृंहणानुगुण्ये सत्यपीति शेषः । ( स्वमूलत्वेन वैश्वानरविद्याया इति ) स्मृतेर्वेदमूलकत्वावश्यम्भावात्तस्याः स्मृतेर्मूर्द्धैव सुतेजा इति वाक्यमेव मूलं भविष्यतीति भावः । ( अस्ति ह्यग्निर्मूर्द्धेति ) ननु 'अग्निर्मूर्द्धा' इत्याथर्वणवाक्यं 'द्यां मूर्द्धान'मिति स्मृतिवचनस्य मूलाकाङ्क्षां शमयितुं प्रभवति । तत्राग्निमूर्द्धत्वश्रवणेपि द्युमूर्द्धत्वस्याश्रवणात् । न च 'असौ वाव लोकः' इति श्रुत्यनुसारादग्निशब्दस्य द्युलोकपरत्वमस्तीति वाच्यम् ; उप-

पुनरप्यनिर्णयमेवाशङ्क्य परिहरति—

शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते ॥ २७ ॥

यदुक्तं वैश्वानरः परमात्मेति निश्चीयत इति । तन्न; शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरस्याप्यग्नेरिह प्रतीयमानत्वात् । शब्दस्तावद्वाजिनां वैश्वानरविद्याप्रकरणे 'स एषोऽग्निर्वैश्वानरः' इति वैश्वानरसमानाधिकरणतयाऽग्निरिति श्रूयते; अस्मिन् प्रकरणे च

* श्रुतप्रकाशिका *

इत्यादिश्रुतिस्तन्मूलतया सम्भाव्यमाना; तस्मादाभ्यां श्रुतिस्मृतिभ्यामैकार्थ्यप्रत्यभिज्ञानमेवास्मिन् सूत्रे हेतुतया विवक्षितं स्मर्यमाणशब्दश्च प्रत्यभिज्ञायमानोपस्थापकः, तर्कपादे अनुस्मृतेश्चेत्यत्रानुस्मृतिशब्दस्य प्रत्यभिज्ञापरत्वेन सूत्रकारैः प्रयुक्तत्वात् ॥

उत्तरसूत्रमवतारयति (पुनरपीति) अर्थचतुष्टये प्रयोगसाधारण्यादनिर्णयः पूर्वमुक्तः, इदानीं तु विशेषकधर्माणां ब्रह्मशब्दादीनां तत्तदनुरूपविशेषकाच्छब्दादेः प्रतिरोधादनिर्णयो विवक्षितः— ॥ शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते ॥ नेतिपदं व्याचष्टे (यदुक्तमित्यादिना) श्रुत्यन्तरस्थहेत्वोरुभयोर्दूरस्थत्वात् तौ कण्ठोक्तौ, एतत्प्रकरणस्थमग्नित्रयकल्पनं प्राणाहुत्याधारत्वं चादिशब्दोपात्तम्, सन्निकृष्टत्वात्; एतदभिप्रायेण वाजिनां वैश्वानरविद्याप्रकरणे वाजसनेयिनः समामनन्तीति चोक्तम्। (अस्मिन् प्रकरणे चेति)

ॐ भावप्रकाशिका ॐ

चरिताग्निशब्दप्रयोगविषयत्वस्य पर्जन्यपृथिव्यादिष्वपि सत्त्वेन तदनुसारेणार्थनिर्णयासम्भवात्; अतो वैश्वानरविद्यावाक्यमेव मूलमिति चेन्न; "शीर्ष्णो द्यौस्समवर्तत पद्भ्यां भूमिर्दिशः श्रोत्रात्" इत्यादीनां बहूनां परमात्मपरतया निर्णीतानां वाक्यानां मूलत्वसम्भवेन स्मृतिवचनस्य विप्रतिपन्नवैश्वानरविद्यैकशरणत्वमिति भावः ॥

(दूरस्थत्वादिति) यदस्याधिकरणस्य छान्दोग्यवाक्यवद्वाजसनेयवाक्यमपि

"हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः" इति वैश्वानरस्य हृदयादिस्थस्याग्नित्रयकल्पनं क्रियते 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात् प्राणाय स्वाहा' इत्यादिना प्राणाहुत्याधारत्वं च वैश्वानरस्यावगम्यते । तथा वैश्वानरस्यास्मिन् पुरुषेऽन्तःप्रतिष्ठानं वाजसनेयिनः समामनन्ति "स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति । अतोऽग्निशब्दसामा-

* श्रुतप्रकाशिका *

चशब्देन वाजिनामप्यस्तीति सूचितम् । (अग्नित्रयकल्पनं क्रियत इति) अग्नित्रयकल्पनेन होमाधारत्वमात्रं फलितम्, होमाधारत्वविशेषमाह (तद्यद्भक्तमिति) अग्निशब्दनिर्देशसहितमन्तःप्रतिष्ठानं विवक्षितम् । अन्तःप्रतिष्ठत्वमात्रं हि परस्यापि सम्भवति. 'स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति हि श्रूयते, उक्तहेत्वनुक्रमेण पूर्वपक्षत्वेन शङ्कितमर्थमुपसंहरति (अत इति) शब्दादिभ्य इत्यादिसूत्रखण्डं जाठरशङ्कामात्रपरम्, न तु देवताभूतपरम्, अन्तःप्रतिष्ठानोपन्यासाद्धेत्वन्तराणां च तत्साहचर्यात् । यद्यपि देव-

ঌ भावप्रकाशिका ঌ

विषय एव, अतो न दूरस्थत्वादिवैषम्यम्; तथापि 'पुरुषमपि चैनमधीयते' इति वाजसनेयकस्य तटस्थवदुदाहृतत्वादेवमुक्तमिति द्रष्टव्यम् । भाष्ये– समानाधिकरणतयाग्निरिति श्रूयत इति । वाजसनेयकेऽग्निरहस्ये सप्रपञ्चां वैश्वानरविद्यामुक्त्वा 'स एषो वैश्वानरो यत्पुरुषः सहैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद" इति श्रूयत इत्यर्थः । अन्तःप्रतिष्ठितत्वस्याग्निशब्दनिर्देशसाहित्यविवक्षासिद्धिः कथमितिशङ्कायामेकवाक्योपादानादिति दर्शयति (स यो हैतमेवमग्निमिति) परैः 'शब्दादिभ्योन्तःप्रतिष्ठाना'दिति सूत्रखण्डो जाठरादित्रयशङ्कापरतया व्याख्यातः भाष्यकारैस्तदनादरेण जाठरमात्रशङ्कापरतया तत्खण्डस्य व्याख्याने कारणमाह (शब्दादिभ्य इत्यादिसूत्रखण्डमित्यादिना) तथा दृष्ट्युपदेशादित्यत्र दृष्टिशब्दः

# नाधिकरण्यादग्नित्रेतापरिकल्पनात्प्राणाहुत्याधारभावादन्तःप्रतिष्ठानाच्च वैश्वानरस्य जाठरत्वमपि प्रतीयत इति नैकान्ततः परमात्मत्वमिति चेत् . तन्न; तथा दृष्ट्युपदेशात्- पूर्वोक्तस्य त्रैलोक्यशरीरस्य परस्य ब्रह्मणो वैश्वानरस्य जाठराग्निशरीरतया तद्विशिष्टस्यो-

* श्रुतप्रकाशिका *

तायाः 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' इति मुखे प्रवेशोऽवगम्यते, तथापि पुरुषेऽन्तः प्रतिष्ठितत्वं न स्वरसम्. जाठरस्य हि तत्स्वरसतः प्रतीयते, 'सोऽग्रभुग् विभजंस्तिष्ठन्नाहारमजरः कविः । सन्तापयति स्वं देहमापादतलमस्तकम्'' इति कृत्स्नदेहव्याप्तत्वात् तस्य । भूततृतीयस्य तु पुरुषेऽन्तःप्रतिष्ठितत्वं तदेकदेशभूतजाठरद्वारकमिति वक्तव्यम्, अतस्तच्च क्लिष्टम् ; अतोऽन्तःप्रतिष्ठानसहचरैर्हेतुभिर्जाठरभावश्शङ्कित इह सूत्रे, अत एव हि देवताभूततृतीययोस्सूत्रान्तरेण व्युदासः, न त्वेतस्मिन्नेव सूत्रे खण्डान्तरे कृतः, एवं शङ्कितं जाठरविषयत्वं परिहरति ( तन्नेति ) हेत्वाकाङ्क्षायां सौत्रखण्डान्तरस्थं हेतुवाचिपदमुपादत्ते ( तथा दृष्ट्युपदेशादिति) 'यस्याग्निश्शरीर'मिति श्रुत्यभिप्रायेणाह (जाठराग्निशरीरतयेति) उपासनशब्देन सौत्रदृष्टिशब्दव्याख्यानम् , " आत्मा वा अरे द्रष्टव्यः ' 'तस्मिन् दृष्टे परावरे' इति श्रौतप्रयोगात् 'वैश्वानरमुपास्ते' इति चात्र श्रूयते । ननु दृष्टिशब्दोऽतस्मिंस्तथात्वानुसन्धानपरः किं न स्यात् । नैवम्, परमार्थविषयत्वे सम्भवत्यपरमार्थविषयत्वाश्रयणायोगात् द्युमूर्धत्वादिकं हि जाठरेऽत्यन्तबाधितम्, अत एव हि न ' मनोब्रह्मे'त्यादिदृष्टितुल्यत्वशङ्का ; तत्तुल्यत्वं च गत्यन्तरे सम्भवत्ययुक्तम् . जाठराग्निशरीरतयेत्यनेन परमार्थविषयसम्भवश्च दर्शितः, उत्कृष्टे परमात्मन्यपकृष्टाग्निदृष्ट्ययोगाच्च न परस्मिन्नग्निदृष्टिः, अग्नौ परमात्मदृष्टिपरत्वं तु परमात्मत्वसमर्थनपरसूत्रतात्पर्यविरुद्धम् , अतः परमात्मलिङ्गानां जाठरलिङ्गानां

७ भावप्रकाशिका ७

**परैर्जाठरे परमात्मदृष्टिपरतया व्याख्यातः , तदुपेक्षणे किं कारणमिति शङ्कते ( दृष्टिशब्दोऽतस्मिन् तथात्वानुसन्धानेति ) ( सूत्रतात्पर्यविरुद्धमिति ) यद्यप्यु-**

पासनोपदेशात्। अग्निशब्दादिभिर्हि न केवलो जाठरः प्रतिपाद्यते, अपि तु जाठराग्निविशिष्टः परमात्मा। कथमिदमवगम्यत इति चेत्- असम्भवात्- जाठरस्य केवलस्य त्रैलोक्यशरीरत्वासम्भवात्। त्रैलोक्यशरीर-तया प्रतिपन्नवैश्वानरसमानाधिकरणो जाठरविषयतया प्रतीयमानोऽग्निशब्दो जाठरशरीरतया तद्विशिष्टं पर-

* श्रुतप्रकाशिका *

च दर्शनाद्विशिष्टोपासनपरत्वमभ्युपगन्तव्यम्. यथा प्रतर्दनविद्यायामिति वाक्यार्थः। विशिष्टप्रतिपादने सिद्धे हि विशिष्टोपासनपरत्वमित्यत्राह (अग्निशब्दादिभिर्हीति) आदिशब्देन प्राणाहुत्याधारत्वादिकं गृह्यते। जाठरः प्रतिपाद्यते–ज्ञाप्यत इत्यर्थः। अग्निशब्दत्रेताकल्पनादिलिङ्गान्वितेन वाक्येन परमात्मा अभिधीयत इति वार्थः। तदा त्रेताकल्पनादिना अग्निद्वारा परमात्मा विशेष्यते। असम्भवा-दितिपदस्याकाङ्क्षां दर्शयति ( कथमिति ) केवलाग्नौ प्रसिद्धस्य कथं तद्विशिष्ट-परत्वमित्यर्थः। जाठरस्य त्रैलोक्यशरीरत्वासम्भवोऽस्तु, ततः किमग्निशब्दस्य विशिष्टपरत्व इत्यत्राह ( त्रैलोक्येति ) जाठरविषयतया प्रसिद्धस्य शब्दस्य

❁ भावप्रकाशिका ❁

द्गीथप्रस्तावादौ अध्यस्योपास्यमानाकाशप्राणादेः "आकाशस्तल्लिङ्गात्" "अत एव प्राणः" इति परमात्मपरत्वसमर्थनपरसूत्रतात्पर्याविरोधवदविरोधस्सम्भवति, नच तत्रापि दृष्टिविधिपरत्वे विमतिः। 'संज्ञातश्चेत्तदुक्तमस्ति तु तदपि' इत्यत्र भाष्ये कण्ठत एवाविष्कृतत्वात्, तथापि तत्र गत्यभावाद्दृष्टिविधित्वेपि इह तदाश्रयणस्यायुक्तत्वात्; अत एव परैरपि दृष्टिविधित्वपक्षं परित्यज्य अथवा जाठरवैश्वानरोपाधिः परमेश्वर एवेह द्रष्टव्यत्वेनोपदिश्यत इत्युक्तमिति द्रष्टव्यम्। अग्नि-शब्दादिभिर्हीतिभाष्ये– अग्निशब्देन त्रेताकल्पनादिलिङ्गैश्च जाठरप्रतिपाद्य-मानत्वं निषिध्यमानमयुक्तम्, लिङ्गानां प्रतिपादकत्वाभावादित्याशङ्क्य प्रतिपाद्यत इतिपदं शब्दलिङ्गसाधारणज्ञापनपरतया व्याचष्टे ( ज्ञाप्यत इत्यर्थ इति ) ननु वैश्वानरादिशब्दस्य परमात्मपरत्वे त्रेताकल्पनादिलिङ्गं कथं साक्षात्परमात्मन्यन्वे-

मात्मानमेवाभिदधातीत्यर्थः । यथोक्तं भगवता "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" इति जाठरानलशरीरो भूत्वेत्यर्थः । अतस्तद्विशिष्टस्योपासनमत्रोपदिश्यते । किञ्च पुरुषमपि चैनमधीयते वाजसनेयिनः "स एषोऽग्निर्वैश्वानरो यत्पुरुषः" इति ; न जाठरस्य केवलस्य पुरुषत्वम् परत्मन एव हि निरुपाधिकं पुरुषत्वम्, यथा 'सहस्रशीर्षा पुरुषः' 'पुरुष एवेदं सर्वम्' इत्यादौ ॥

* श्रुतप्रकाशिका *

तद्विशिष्टे परमपुरुषे प्रवृत्तिं स्मृत्या दृढयति ( यथोक्तमिति ) सूत्रखण्डमवतारयति ( किञ्चेति ) अपि चेत्यत्र विभक्तश्चशब्दो हेतुसमुच्चयार्थ इति भावः । न केवलमग्नित्वं पुरुषेऽन्तःप्रतिष्ठितत्वं च, किन्तु पुरुषशब्दवाच्यतयाप्यधीयत इत्यभिप्रायेणाह ( पुरुषमपि चेति ) पुरुषत्वम्— पुरुषशब्दवाच्यत्वम् । ( निरुपाधिकमिति ) जीवस्य पुरुषशब्दवाच्यत्वं 'द्वाविमौ पुरुषौ लोके' 'प्रधानपुरुषावेतौ' इत्यादिषु प्रधानादिपदान्तरसमभिव्याहारात्क्षरत्वाद्युपाधिनाऽऽश्रीयते, न तु स्वतः, अतः पुरुषशब्दवाच्यत्वं परमात्मन एव निरुपाधिकम्, अतो जाठरस्य पुरुषत्वं दूरतो निरस्तमिति भावः । 'स एषोऽग्निर्वैश्वानरो यत्पुरुषः' इति प्रसिद्धवन्निर्देशात्तस्य च प्रापकप्रमाणसापेक्षत्वात्परमात्मन एव निरुपाधिकपुरुषत्वविषयां प्रमाणतः प्रसिद्धिं दर्शयति ( यथेति ) अग्निशब्दः त्रेताकल्पनादिलिङ्गत्रयं

७ भावप्रकाशिका ७

रित्याशङ्कयाह ( तदिति) भाष्ये किञ्चेति । हेतुद्वयसमुच्चयप्रतिपादनस्य सूत्रारूढतां दर्शयति ( अपि चेत्यत्रेति ) ( पुरुषशब्दवाच्यतयाप्यधीयत इत्यभिप्रायेणेति ) अधीयत इत्यस्य शब्दकर्मत्वस्यैवोचितत्वात् । पुरुषमपि चैनमधीयत इति सूत्रखण्डस्य एतस्मिन् पुरुषशब्दमध्ये तारं प्रयुञ्जत इति पर्यवसन्नमर्थं हृदि निधायाह ( किन्तु पुरुषशब्दवाच्यतमापीति ) ( क्षरत्वाद्युपाधिनेति ) 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' इति क्षरपदसमभिव्याहाररूपोपाधिबलेनेति भावः । 'पुरुषं

## अत एव न देवता भूतं च ॥ २८ ॥

उक्तेभ्य एव हेतुभ्यो देवतायाश्च तृतीयस्य महाभूतस्यापि न वैश्वानरत्वप्रसङ्गः ॥ २८ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ २९ ॥

* श्रुतप्रकाशिका *

जाठरविषयत्वसाधकं शङ्कितम्, तत्र पुरुषशब्दस्त्रैलोक्यशरीरत्वासम्भवरूपमेकं लिङ्गं च परमात्मविषयत्वसाधकमुक्तम्, तत्र 'तथा दृष्ट्युपदेशा'दित्यनेनाग्निशब्दलिङ्गत्रययोरन्यथासिद्धिर्दर्शिता, असम्भवलिङ्गपुरुषशब्दयोरनन्यथासिद्धतया प्राबल्यं स्थितम् । अत एव 'पुरुषमपि चैनमधीयत' इति सूत्रखण्डं नान्तःप्रतिष्ठानमात्रपरिहारपरम्, तथा दृष्ट्युपदेशादित्यनेनैवान्तःप्रतिष्ठानस्य हेत्वन्तराणां चान्यथासिद्धेर्दर्शितत्वादसम्भवहेतौ च सति अन्तःप्रतिष्ठानस्य दुर्बलत्वान्निरुपाधिकपुरुषत्वश्रवणे सति हेत्वन्तराणामपि दुर्बलत्वाच्च. अतो यथोक्तावेव शङ्कापरिहारौ ॥

॥ अत एव न देवता भूतं च ॥ जाठरप्रसिद्धिशङ्का पूर्वसूत्रे परिहृता, तद्व्यतिरिक्तार्थद्वयशङ्का अत्र परिह्रियते . देवताभूततृतीययोर्जाठरवत् परिच्छिन्नत्वाभावात् त्रैलोक्यशरीरत्वोपपत्तिः, देवताया अधिष्ठातृतया त्रैलोक्यशरीरत्वम्, महाभूततृतीयस्य च त्रिवृत्कृतस्य त्रैलोक्यरूपेण परिणतत्वात् समुदितस्य द्यावापृथिव्यादयो मूर्द्धपादाद्यवयवाः स्युः, अतस्त्रैलोक्यशरीरत्वकल्पनोपपत्तिरित्यसम्भवाक्षेपेणाधिकाऽऽशङ्का । ( उक्तेभ्य एव हेतुभ्य इति ) आत्मब्रह्मपुरुषशब्दनिर्देशासङ्कुचितफलावाप्तिसर्वपापप्रदाहादयः सर्वे हेतवः तयोरनुपपन्ना इति परिहार इत्यभिप्रायः ॥ .... .... .... .... ....

॥ साक्षादप्यविरोधं जैमिनिः ॥ सूत्रार्थस्य सङ्गतत्वाय पूर्वोक्तमनुवदति

* भावप्रकाशिका *

पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद' इति पुरुषान्तःप्रतिष्ठितत्ववत् पुरुषत्वस्यापि श्रवणेन पुरुषान्तःप्रतिष्ठितत्वमात्रस्याश्रवणान्न जाठरत्वमिति परैर्व्याख्यातम्, तन्निराचष्टे (अत एव पुरुषमिति) (हेत्वन्तराणामपीति) 'तथाचासम्भवा'दित्यस्य हेत्वन्तरनिरासकत्वं पुरुषमपि चेत्यस्यान्तःप्रतिष्ठाननिरासकत्वमिति व्यवस्था निर्मूलेति भावः ॥

वैश्वानरसमानाधिकरणस्याग्निशब्दस्य जाठराग्निशरीरतया तद्विशिष्टस्य परमात्मनो वाचकत्वम्, तथैव परमात्मनं उपास्यत्वं चोक्तम्। जैमिनिस्त्वाचार्यो वैश्वानरशब्दवदग्निशब्दस्यापि परमात्मन एव साक्षात् अ-

* श्रुतप्रकाशिका *

( वैश्वानरेति ) 'तथादृष्ट्युपदेशा'दित्यनेन सङ्गतिरित्यर्थः। अक्षरार्थमाह (जैमिनिरिति ) अग्निवैश्वानरशब्दयोरुभयोरपि साक्षात्परमात्मप्रतिपादकत्वपरमिदं सूत्रं परैर्व्याख्यातम्, तद्व्यावृत्त्यर्थमाह ( वैश्वानरशब्दवदिति ) वैश्वानरशब्दस्य पक्षभूतस्य बह्वर्थसाधारणस्याग्निशब्दसामानाधिकरण्येन विना जाठरविषयत्वनिश्चयायोगात् तदुपपादकत्वेन ह्यग्निशब्दः प्रकृतः, अत उपपादकस्यैवान्यथासिद्धिर्वक्तव्या, न तूपपाद्यस्य; उपपादकान्यथासिद्धौ ह्युपपाद्यं स्वयमेव न भवति, अत उपपादकाग्निशब्दस्यैव जाठरविशिष्टपरमात्मविषयत्वमुक्तं तथा दृष्ट्युपदेशादिति, अत इहापि तस्यैवाग्निशब्दस्य प्रकारान्तरेण परमात्मपरत्वमुच्यत इति वैश्वानरशब्दो दृष्टान्ततयोदाहर्तव्यः तस्य च तथात्वं सिद्धम्, वैश्वानरशब्दस्तावत् परमात्मनि प्रयुक्तः। न च क्लृप्तामेव रूढिमाश्रित्यापर्यवसानाद्वैश्वानरशरीरकः परमात्माऽभिधेयः, अग्निशब्देनैवाग्निशरीरके परमात्मन्यभिहिते 'अग्निर्वैश्वानरः' इत्येकवाक्यस्थवैश्वानरशब्दस्याग्निशरीरवाचित्वे पुनरुक्तिप्रसङ्गात्। न चाव्यवधानेन परमात्मनि रूढ्यन्तरं कल्प्यम्, अवयवशक्त्यैव प्रयोगेऽन्यथासिद्धे प्रोक्षणीन्यायेन समुदायशक्तिकल्पनानुपपत्तेः, अतोऽग्निशब्दसमानाधिकरणवैश्वानरशब्दस्यावयव-

* भावप्रकाशिका *

( समुदितस्येति ) त्रिवृत्कृतस्य भूततृतीयस्येत्यर्थः॥

( अग्निशब्दसामानाधिकरण्येन विनेति ) यद्यप्यग्निशब्दो वैश्वानरशब्दवत् बह्वर्थसाधारण एव 'विश्वस्मा अग्निं भुवनाय' इतिभूततृतीये. 'एषोऽग्निर्वैश्वानरो येनेदमन्नं पच्यते' इति जाठरे। 'त्वमग्ने यज्ञानां होता' इति देवतायाम्. 'हृदयेऽग्नौ वैश्वानरे प्रास्यत्' इति परमात्मनि; इत्येवमादिप्रयोगदर्शनात्, तथापि वैश्वानरशब्दे यौगिकार्थाभिव्यक्तिवदग्निशब्दे यौगिकार्थाभिव्यक्तिर्नास्तीतिभावः। ( पुनरुक्तिप्रसङ्गादिति ) नच वैश्वानरशब्देनैवापर्यवसानवृत्त्याग्निविशिष्टस्याभिहि-

व्यवधानेन वाचकत्वेन न कश्चिद्विरोध इति मन्यते॥
एतदुक्तं भवति- यथा वैश्वानरशब्दः साधारणोऽपि

* श्रुतप्रकाशिका *

शक्त्या परमात्मविषयत्वे वाक्यान्तरेष्वप्येकप्रयोजकत्वायावयवशक्त्यैव वृत्तिरास्थेयेत्यभिप्रायेणाव्यवधानेन वाचकत्वे वैश्वानरशब्दो दृष्टान्ततयोक्तः वैश्वानरशब्दवदिति। साक्षादिति व्याख्येयपदम्। साक्षाच्छब्दस्य विशदतरत्वेऽपि प्रयोगात्तद्व्यावृत्त्यर्थमाह (अव्यवधानेनेति) वैश्वानरशब्दस्यावयवशक्त्या वृत्तिः कथम्? न तावदयं शब्दः "भिदादिभ्योऽञ्" "ऋष्यन्धकवृष्णिकुरुभ्यश्च"इत्यनुशासनानुसारेण भिदाद्यञन्तः ऋष्यणन्तो वा, तयोरपत्यार्थत्वात् परमात्मनश्च विश्वानरसञ्ज्ञं कश्चित्प्रत्यपत्यत्वाभावात्; विश्वानरशब्दस्य पुरुषसमष्टिवाचकत्वेऽपि तदपत्यत्वायोगात् भिदाद्यञन्तत्वमृष्यणन्तत्वं चायुक्तम्, अतो गुणान्तरयोगो वक्तव्यः। तत्र वैश्वानरशब्दस्य केन गुणेन वृत्तिः? तद्वदग्निशब्दः केन गुणयोगेन वर्तते? तेन तस्य परमात्मन्यव्यवधानेन वृत्तिः कथमित्यत्राह (एतदुक्तमिति)

७ भावप्रकाशिका ७

ततयाग्निशब्दस्यैव यौगिकार्थपरत्वं किं न स्यादिति वाच्यम्, अग्नौ वैश्वानरे प्रास्यदित्यग्निशब्दस्य प्रक्रमस्थत्वेन पुनरुक्तत्वशङ्कानुदयेनाग्निशब्दस्यापर्यवसानवृत्त्या परमात्मपरत्वस्य सिद्धतया पश्चाच्छ्रुतवैश्वानरशब्द एव पौनरुक्त्यशङ्कोदयादिति भावः। (परमात्मविषयवाक्यान्तरेष्वपीति) अग्निशब्दरहितेषु 'आत्मानमेवेमं वैश्वानरं सम्प्रत्यध्येषि' इत्यादिवाक्येष्वित्यर्थः। (एकप्रयोजकत्वायेति) एकस्यैव प्रयोजकत्वसिध्यर्थमित्यर्थः। (वैश्वानरशब्दो दृष्टान्ततयोक्त इति) ननु पौनरुक्त्यप्रसङ्गपरिहाराय वैश्वानरशब्दस्य यौगिकत्वमाश्रितम्। अग्निशब्दे तादृशबाधकाभावात् कुतो योग इति चेन्न; रूढ्यर्थासम्भवे अपशूद्राधिकरण इव योगस्यैव ज्यायस्त्वमिति जैमिन्यभिप्राय इति भावः। (विशदतरत्वेपि प्रयोगादिति) ज्ञानस्य साक्षात्त्वमित्यादिप्रयोगदर्शनादिति भावः। (भिदाद्यञन्त ऋष्यणन्तो वेति) गोत्रापत्ये भिदाद्यञन्तः अनन्तरापत्ये ऋष्यणित्यर्थः। ततश्च भिदाद्यञन्तादृष्यणो बाधितत्वात् कथमत्र ऋष्यणितिशङ्का निरस्ता। (पुरुषसमष्टिवाचित्वेपीति) 'नरे च संज्ञाया'मिति संज्ञायां ङीप्विधानात् समष्टि-

परमात्मासाधारणधर्मविशेषितो विश्वेषां नराणां नेतृत्वादिना गुणेन परमात्मानमेवाभिदधातीति निश्चीयते; एवमग्निशब्दोऽप्यग्रनयनादिना येनैव गुणेन योगाज्ज्वलने वर्त्तते, तस्यैव गुणस्य निरुपाधिकस्य काष्ठागतस्य परमात्मनि सम्भवादस्मिन् प्रकरणे परमात्मासाधारणधर्मविशेषितः परमात्मानमेवाभिधत्त इति ॥ २६ ॥ .... .... .... ....

* श्रुतप्रकाशिका *

( नेतृत्वादिनेति ) आदिशब्देन विश्वैर्नरैर्नेयत्वम्, प्राप्यत्वं विवक्षितम्। ( अग्रनयनादिनेति ) आदिशब्देन अग्रत्वेन प्राप्यत्वं विवक्षितम्; यथा निराहुः 'वैश्वानरः कस्मात् विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा विश्वानर एव वैश्वानरः राक्षसो वायस इतिवत् रक्ष एव हि राक्षसः वय एव हि वायसः यथाचाग्निः कस्मात् अग्रणीर्भवति अग्रं नीयते अग्रं नयति नमयति सन्नमनोक्तौ प्रसन्नो भवती'ति स्थूला दृष्टिविधिरिति। अव्यवधानमाह ( तस्यैवेति ) ( काष्ठागतस्येति ) अग्निशब्दावयवार्थस्य ब्रह्मणि पुष्कलत्वात् ब्रह्मशब्दरूढिर्न त्याज्या, ब्रह्मशब्दावयवार्थपौष्कल्यस्यागनावसम्भवादग्निशब्दरूढिरेव त्याज्येति भावः। ( परमात्मासाधारणधर्मविशेषित इति ) उपक्रमाद्यानुगुण्याच्च ब्रह्मशब्दः प्रबलः, अग्निशब्दस्तु तदनुगुणार्थो नेय इति भावः। नन्वग्निशरीरकतयाऽनुसन्धाने साक्षादेवाग्रनयनादिगुणकत्वानुसन्धाने च विद्याभेदस्स्यात्। न च वाच्यमेकस्यामेव विद्यायामेकस्मिन् कर्मणि व्रीहियवयोरिवाग्निशरीरकत्वस्या-

* भावप्रकाशिका *

पुरुषसंज्ञात्वेपीत्यर्थः। ( विश्वानर एव वैश्वानर इति ) प्रज्ञादेराकृतिगणत्वादण्प्रत्ययः। ( विद्याभेदस्स्यादिति ) यद्यपि नोपास्याकारभेदमात्रं विद्याभेदकम्, एकस्यामेव शाण्डिल्यविद्यायां मनोमयत्वप्राणशरीरत्वादीनामविरुद्धानां बहूनामुपास्याकाराणां दर्शनात्. किं बहुना, सर्वास्वपि परविद्यासु "आनन्दादयः प्रधानस्य' अक्षरधियान्त्ववरोधः" इति न्यायेन सत्यत्वज्ञानत्वानन्दत्वादीनां बहूनामाकाराणा-

* श्रुतप्रकाशिका *

ग्रनयनादिगुणकत्वस्य च विकल्पेन प्राप्तिः, विकल्पश्च तयोस्तुल्यबलत्वादवर्जनीयः, अग्निशरीरकत्वपरिग्रहे रूढ्यपरित्यागादविलम्बः, अर्थानुपपत्त्या परमात्मपर्यन्तत्वनिर्णय इति विशेष्यप्रतिपत्तिर्विलम्बिता, अग्रनयनादिगुणकत्वपक्षे रूढार्थानुपपत्त्याऽवयवार्थप्रतिपत्तिर्विलम्बिता, अवयवशक्त्युपस्थापितगुणस्य विशेष्यमतिपत्तिस्त्वविलम्बिता , गुणस्याद्वारकतयाऽन्वयसम्भवात् , अतः पक्षद्वयेऽपि विलम्बाविलम्बसाम्यात्तुल्यबलत्वमिति विकल्प इति। एकेनैव वाक्येन वैकल्पिकार्थद्वयविधानानुपपत्तेः , व्रीहियवयोर्हि वाक्यभेदेन प्राप्तिः। उच्यते ; नात्र विद्याभेदप्रसङ्गः, अस्य सूत्रस्य ब्रह्माग्निशब्दयोस्तुल्यताप्रतिक्षेपपरत्वेनोपास्याकारपरभावात्। तथा हि ब्रह्माग्निशब्दयोर्द्वयोरपि रूढार्थद्वयाविरोधेन निर्वाहः पूर्वमुक्तः, रूढार्थविरोधाभ्युपगमेनान्यतरस्य यौगिकत्वे प्राप्तेऽपि न ब्रह्माग्निशब्दयोस्तुल्यत्वादशक्यनिर्णयत्वं वाच्यम् , उपक्रमाद्यानुगुण्यादग्निशब्दावयवार्थस्य

❁ भावप्रकाशिका ❁

मनुयायित्वदर्शनाच्च न विद्याभेदप्रसक्तिः, तथाप्यग्निशरीरत्वाग्रनेतृत्वयोर्विरोधमभ्युपगम्यैवमुक्तमिति द्रष्टव्यम्। (विलम्बाविलम्बसाम्यात्तुल्यबलत्वमितीति) रूढ्यर्थानुपपत्तिप्रतिसन्धानमूलत्वेन दौर्बल्यं यौगिकार्थरूढ्यर्थापर्यवसानवृत्तिलब्धार्थयोस्समानम्। तत्रापर्यवसानवृत्तिलब्धार्थस्य प्रथमप्रतिपन्नरूढ्यर्थानुगुणत्वं प्राबल्यहेतुः, तत्पक्षे रूढ्यर्थस्यापरित्यागात् , यौगिकार्थस्य तु मुख्यत्वमेव प्राबल्यहेतुः। रूढ्यर्थवद्यौगिकार्थस्यापि मुख्यत्वादिति तुल्यबलत्वमिति भावः। ननु रूढ्यर्थापर्यवसानलब्धार्थस्य रूढिपूर्वकलक्षणापेक्षया जघन्येन यौगिकार्थेन तुल्यत्वं वदता अपर्यवसानलब्धार्थे लक्षणैवोक्ता स्यात्. नचेष्टापत्तिः, चराचरव्यपाश्रयाधिकरणे परमात्मनि मुख्यत्वस्यैवाकृत्यधिकरणन्यायेन समर्थितत्वादिति चेत्. उच्यते. मुख्यार्थान्तरानुपपत्तिप्रतिसन्धानमूलकतया यौगिकार्थवद्विलम्बितप्रतीतिकस्यापि ब्रह्मणः 'वचसां वाच्यमुत्तमम्।' नतास्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती' इत्यादिप्रमाणानुसारात् समुदायशक्तिगोचरत्वमस्ति ; नहि विलम्बमात्रेण मुख्यार्थत्वहानिः 'आदित्यस्य गावः प्रकाशयन्ति' इत्यादौ किरणादीनां विलम्बितोपस्थितिकानामपि मुख्यार्थत्वदर्शनादिति द्रष्टव्यम् ( एकेनैव वाक्येन वैकल्पिकार्थेति ) नन्वग्निशरीरत्वाग्रनेतृत्वरूपार्थयोरेकवाक्यविहितत्वे अरुणैकहायन्यो-

* श्रुतप्रकाशिका *

ब्रह्मणि पुष्कलतया च ब्रह्मशब्दप्राबल्याचद्विपरीतोऽग्निशब्दो दुर्बलत्वाद्यौगिक इति हि सूत्रतात्पर्यम् । एवं वा, अस्यां विद्यायामग्निशरीरत्वानुसन्धानमेव सूत्रकारमतं 'तथा दृष्ट्युपदेशा'दिति दर्शितम्, जैमिनिमतं तु सामान्येन परमात्मपरतया तात्पर्यलिङ्गैरवगतेषु प्रकरणेष्वर्थान्तररूढशब्दानां परमात्मपरत्वे अवश्यम्भाविनि सति अवयवशक्त्या साक्षादेव तत्परत्वं वर्णनीयमित्येवंरूपं नैतत्प्रकरणविशेषमात्रविषयम् । अस्य च न्यायस्य सामान्येनोपजीव्यतया यत्र क्वचिद्वक्तव्यत्वे सति अत्र परमात्मपर्यन्तनिर्वाहप्रसङ्गादिहाभ्यधायि। न त्वेतद्विद्याया असाधारणत्वात्; अत एव ह्यवयवशक्त्या आकाशशब्दो व्याख्यातः। सामान्येनोपजीव्यस्य न्यायस्येहाप्युपजीव्यत्वाद्विद्याभेद इति चेन्न, चिदचिद्विशेषासाधारणलिङ्गान्वितेषु वाक्येषु तच्छरीरत्वाश्रयणस्य न्याय्यत्वेनास्य न्यायस्य चिदचिदसाधारणलिङ्गरहितवाक्यविषयत्वात्, अत्र च जाठरलिङ्गान्युपलभ्यन्ते; अत एव हि सूत्रकारः तथादृष्ट्युपदेशादिति स्वमतमुक्तवान्, यथा न द्वितीयेति कृत्वा अवघातादीनां व्रीहिशेषत्वं चिन्तितम्. तद्वज्जाठरलिङ्गाभावेन तद्विशिष्टत्वासम्भवेऽपि परमात्मपरत्वं सिध्यतीत्यन्वारुह्य दर्शितं जैमिनिमतम्, अतो न विद्याभेदः ॥

ॐ भावप्रकाशिका ॐ

रिव समुच्चयस्यैवावश्यम्भावेन विकल्पस्याप्रसक्त्या वैकल्पिकार्थद्वयविधानवादिनो वाक्यभेदपुरस्कारेणैव विकल्पस्याभ्युपगन्तव्यतया कथं वाक्यभेदोपादानम् ? तदनिष्टं स्यात्। किञ्च वाक्यभेदभीत्या विकल्पं परित्यज्य विद्याभेदस्स्वीकर्तव्य इत्याक्षिपतो मते एकेनाग्निशब्देन वृत्तिद्वयाश्रयणेनार्थद्वयविधाने वृत्तिद्वयविरोधप्रसङ्गेनावृत्तिलक्षणवाक्यभेदस्याभ्युपेतव्यतया वाक्यभेददोषस्यानुद्धार्यत्वमिति चेत्, उच्यते ; अग्निशरीरकत्वाग्रनेतृत्वरूपगुणद्वयवत्तया विधाने विद्याभेदो वा स्यात्. तस्यामेव विद्यायां वाक्यभेदमाश्रित्य विकल्पाभ्युपगमेऽष्टदोषदुष्टो विकल्पस्स्यात् वाक्यभेददोषश्च स्यादित्यत्र तात्पर्यात् । ( यौगिक इति हि सूत्रतात्पर्यमिति ) रूढ्यभावे योग एव ज्यायान्, मुख्यत्वात्, न त्वपर्यवसानवृत्तिः, तस्याः यौगिकार्थवन्मुख्यत्वाभावादिति जैमिनेर्मतं ननु द्वयोरपि तुल्यबलत्वम् । येन विद्याभेदो विकल्पो वा स्यादिति भावः । ( न द्वितीयेति कृत्वेति ) 'तानि द्वैधं गुणप्रधानभूतानि' इत्यधिकरणे व्रीहीनवहन्तीत्यत्र किमवघातार्था व्रीहयः, उत

"यस्त्वेतमेवं प्रादेशमात्रमभिविमानम्' इत्यपरिच्छिन्नस्य परस्य ब्रह्मणो द्युप्रभृतिपृथिव्यन्तप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कथमुपपद्यते? तत्राह—

अभिव्यक्तेरित्याश्मरथ्यः ॥ ३० ॥

उपासकाभिव्यक्त्यर्थं प्रादेशमात्रत्वं परमात्मन इत्याश्मरथ्य आचार्यो मन्यते, 'द्यौर्मूर्धा, आदित्यश्चक्षुः, वायुः प्राणः, आकाशो मध्यकायः, आपो वस्तिः, पृथिवी पादौ' इति द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वं कृत्स्नमभिव्याप्तवतो विगतमानस्य ह्यभिव्यक्तेरेव हेतोर्भवति ॥ ३० ॥

---

* श्रुतप्रकाशिका *

उत्तरसूत्रशङ्कामाह ( यस्त्वेतमिति ) ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥ परिच्छिन्नत्वं महाभूततृतीयदेवतयोरेव सम्भवतीति शङ्कापरिहारार्थमिदं सूत्रम् । अभिव्यक्त्यर्थम्— बुद्धिसौकर्यायेत्यर्थः । परिच्छिन्नत्वे हि बुद्धिसौकर्यं स्यात् । उक्तमर्थं विवृणोति ( द्यौर्मूर्धेत्यादिना ) द्युप्रभृतिप्रदेशेत्यादिना प्रादेशमात्रशब्दो व्याख्यातः, अभिविमानमित्यत्राभिशब्दं व्याचष्टे ( कृत्स्नमभिव्याप्तवत इति ) विमानशब्दं व्याचष्टे ( विगतमानस्येति ) ॥ .... ....

ॐ भावप्रकाशिका ॐ

व्रीह्यर्थो वा अवघातः? इतिविचार्य भावार्थाधिकरणन्यायेन भूतस्य द्रव्यस्य क्रियानिवृत्तिर्दृष्टं प्रयोजनं लभ्यत इत्यवघातार्था व्रीहयः अवघातस्त्वदृष्टार्थः इति पूर्वपक्षं कृत्वा अवघातस्य कर्मौपयिकतुषविमोकादिलक्षणदृष्टप्रयोजनेन सप्रयोजनत्वे सम्भवति यागादिवददृष्टार्थकल्पनाया अन्याय्यत्वात् अवघातस्य व्रीह्यर्थत्वमेव । व्रीहीणां च तण्डुलपिष्टप्रणाडिकया यागार्थत्वमिति न कुत्राप्यदृष्टं कल्पनीयमिति सिद्धान्तितम् । तत्र ननु व्रीहीनवहन्तीति द्वितीयाश्रुत्या अवघातस्य व्रीह्यर्थत्वावगमात् कथं पूर्वपक्षोत्थितिरित्याशङ्क्य द्वितीया नास्तीति सिद्धवत्कारेण पूर्वपक्षः

मूर्द्धप्रभृत्यवयवविशेषैः पुरुषविधत्वं परस्य ब्रह्मणः किमर्थमिति चेत्. तत्राह—

अनुस्मृतेर्बादरिः ॥ ३१ ॥

तथोपासनार्थमिति बादरिराचार्यो मन्यते। "यस्त्वेतमेवमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" इति ब्रह्मप्राप्तये ह्युपासनमुपदिश्यते। एतमेवमभिति- उक्तप्रकारेण पुरुषाकारमित्यर्थः । सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु वर्तमानं यदन्नम्- भोग्यं, तदत्ति- सर्वत्र वर्त्तमानं स्वत एवानवधिकातिशयानन्दं ब्रह्मानुभवति । यत्तु सर्वैः कर्मवश्यैरात्मभिः प्रत्येकमनन्यसाधारणमन्नं भुज्यते तन्मुमुक्षुभिस्त्याज्यत्वादिह न गृह्यते ॥ ३१ ॥

* श्रुतप्रकाशिका *

उत्तरसूत्रस्य शङ्कामाह ( मूर्धप्रभृतीति ) प्राकृतमूर्द्धादिद्रव्यावयत्वमप्राकृतरूपस्य परमात्मनो न सम्भवति, अपि तु देवताया एव सम्भवतीत्यभिप्रायः ॥ ॥ अनुस्मृतेर्बादरिः ॥ प्राकृतमूर्धाद्यवयववत्त्वासम्भवपरिहारार्थत्वाभिप्रायेण सूत्रं व्याचष्टे ( तथेत्यादिना ) अनुस्मृतिः उपासनम् , उपासनार्थं पुरुषविधत्वमित्यर्थः । कथमुपासनार्थत्वम्? बुद्ध्यारोहार्थत्वं किं न स्यादित्यत्राह ( यस्त्वेतमिति ) उदाहृतवाक्ये पुरुषविधत्वमुपास्याकारतया न प्रतीयत इत्यत्राह ( एतमेवेति ) अत्र मुक्तिफलवाचिशब्दः क इत्यत्राह (सर्वेष्विति ) अन्नशब्दस्य प्रसिद्धान्नपरत्वानुपपत्तिमाह ( यत्त्विति ) ॥

* भावप्रकाशिका *

अवर्तत इति पूर्वमीमांसकैर्वर्णितमित्यर्थः ॥ .... .... ....

( बुध्यारोहार्थत्वं किं न स्यादिति ) प्रियशिरस्त्वादिवदिति भावः ॥

यदि परमात्मा वैश्वानरः, कथं तदुरःप्रभृतीनां वेद्यादित्वोपदेशः, यावता जाठराग्निपरिग्रह एवैतदुपपद्यत इत्यत्राह—

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३२ ॥

अस्य परमात्मन एव वैश्वानरस्य द्युप्रभृतिपृथिव्यन्तशरीरस्य समाराधनभूतायाः उपासकैरहरहः क्रियमाणायाः प्राणाहुतेरग्निहोत्रत्वसम्पादनायायमुरःप्रभृतीनां वेदित्वाद्युपदेश इति जैमिनिराचार्यो मन्यते । तथा हि- परमात्मोपासनोचितमेव फलं प्राणाहुत्या अग्निहोत्रसम्पत्तिं च दर्शयतीयं श्रुतिः। 'स य इदमविद्वान-

* श्रुतप्रकाशिका *

एवं परमात्मनो द्युप्रभृतिप्रदेशसम्बन्धिन्या मात्रया परिच्छिन्नत्वे पुरुषविधत्वे च प्रयोजनमुखेन भूततृतीयदेवताव्युदासः कृतः । अथोत्तरसूत्रस्य जाठरशङ्काव्युदासकत्वं दर्शयन् तदवतारयति ( यदीति ) यावता—प्रत्युतेत्यर्थः । —॥ सम्पत्तेरिति जैमिनिस्थाहि दर्शयति ॥ कस्य सम्पत्तिः, सा च कीदृशीत्यपेक्षायामाह ( अस्येति ) सम्पत्तिः सम्पादनम् , अतस्मिन् तत्कल्पनम् । तथा हि दर्शयतीति सूत्रखण्डं व्याचष्टे ( तथेति ) ( परमात्मोपासनोचितमेव फलमिति ) अग्निहोत्रसम्पत्तेः परमात्मसमाराधनार्थत्वं 'तस्य सर्वेषु लोकेषु' इत्याद्युक्तफलविशेष एव ज्ञापयतीति भावः । ( स य इदमित्यादि ) इदमविद्वान्—इदम् उरःप्रभृतीनामग्निहोत्रो-

७ भावप्रकाशिका ७

ननु सम्पत्तिं दर्शयतीत्येतावति वक्तव्ये परमात्मोपासनोचितमेव फलं दर्शयतीतिभाष्ये निर्देशो निष्प्रमाणक इत्याशङ्कय प्रागुपक्षिप्तस्य प्राणाहुतेः परमात्मसमाराधनरूपत्वस्योपपादकं तदित्याह ( अग्निहोत्रसम्पत्तेः परमात्मसमाराधनार्थत्वमिति ) परमात्मसमाराधनं प्राणाहुतिः, तस्या अग्निहोत्रहोमत्वार्था गार्हपत्याग्न्यादिसम्पत्तिरिति भावः । तस्य सर्वेषु लोकेष्वित्याद्युक्तः फलविशेष एव

ग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुया-त्तादृक् तत्स्यात् अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति ॥

आमनन्ति चैनमस्मिन् ॥ ३३ ॥

एनम्- परमपुरुषं द्युमूर्धत्वादिविशिष्टं वैश्वानरम्- अस्मिन् उपासकशरीरे प्राणाहुत्याधारत्वाय- आमनन्ति च

* श्रुतप्रकाशिका *

पकरणतामजानन्। यः अग्निहोत्रम्—प्राणाहुतिम्. जुहोति—अनुतिष्ठतीत्यर्थः। एतदेवं विद्वानित्यत्राप्येवमर्थः। सर्वेष्वात्मसु हुतं भवतीति— सर्वात्मकभगवदाराधनेन सर्वमाराधितं भवतीति हुतप्रकर्षोक्तिः, अस्याग्निहोत्रस्य परमात्माराधनत्वज्ञापनार्थं तदङ्गकपरोपासनफलं दर्शयति (तद्यथेषीकेति) ॥ परस्यात्मनो द्युप्रभृतिशरीरकत्वमयुक्तम्, उपासकस्य मूर्धाद्यवयवानामेव द्युप्रभृतित्वेनोपासनविधानादिति शङ्कायामाह ॥ आमनन्ति चैनमस्मिन् ॥ एनमिति पदं व्याचष्टे (द्युमूर्धत्वादीति) अन्वादेशविषयो ह्येनादेशः, अन्वादेशः अन्वाख्यानम्. तस्मादेनमितिपदमुक्तधर्मोपेतमुक्तधर्मिणं परामृशतीति भावः। उपासकशरीरे द्युमूर्धताद्यनुसन्धानं परमात्मनो द्युमूर्धत्वादेर्न

❁ भावप्रकाशिका ❁

प्राणाहुतेः परमात्मसमाराधनत्वं ज्ञापयतीति भावः। (सर्वं समाराधितं भवतीति) यागस्य देवपूजार्थत्वात्पूजायाश्चाराधनरूपत्वाद्यागहोमयोश्चानतिभेदात् हुधातोराराधनमर्थ इति भावः। (तदङ्गपरोपासनफलं दर्शयतीति) उपासनफलस्य सर्वपापप्रदाहस्य प्राणाग्निहोत्रे प्रदर्शनं प्राणाग्निहोत्रस्य तदङ्गत्वज्ञापनार्थमित्यर्थः। इदञ्च प्राणाहुतिमात्रस्येत्याद्युत्तरवाक्ये स्पष्टयिष्यते ॥ (उपासकस्य मूर्धाद्यवयवानामेवेति) 'यस्त्वेवमेवं' इति पूर्ववाक्ये उपासकस्य प्रकृततया 'तस्य ह वा एतस्य' इत्यत्र तच्छब्देन तस्यैव परामृष्टव्यत्वात् 'उर एव वेदिर्लोमानि

"तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाः" इत्यादिना । अयमर्थः- 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते'इति त्रैलोक्यशरीरस्य परमात्मनो वैश्वानरस्योपासनं विधाय 'सर्वेषु लोकेषु' इत्यादिना ब्रह्मप्राप्तिं च फलमुपदिश्य अस्यैवोपासनस्याङ्गभूतं प्राणाग्निहोत्रं 'तस्य ह वा एतस्य' इत्यादि-

* श्रुतप्रकाशिका *

विरोधि, उभयस्यापि विहितत्वात्, अत उपासकशरीर एव द्युमूर्धत्वाद्यवयवत्त्वमित्यवधारणकल्पनमयुक्तमित्यर्थः । एनमित्यत्र गर्भितमर्थं विवृण्वन्नुभयस्य विहितत्वमुपपादयति ( अयमर्थ इत्यादिना ) ( ब्रह्मप्राप्तिं च फलमुपदिश्येति ) फलवत्सन्निधावफलं तदङ्गमिति न्यायात् ब्रह्मप्राप्तिफलकत्वेनोक्तस्य वैश्वानरोपासनस्य प्राणाग्निहोत्रमङ्गमित्यभिप्रायः । कथं प्राणाग्निहोत्रस्याफलत्वम् ? 'अथ एतदेवं विद्वान् 'तद्यथेषीकतूल'मित्यादिना तस्य हि फलं श्रूयत इति चेन्न, प्राणाहुतिमात्रस्य सर्वपापनिवृत्तिपूर्वकापरिच्छिन्नफलहेतुत्वायोगात् अङ्गभूतस्यापि प्राणाग्निहोत्रस्याङ्गिद्वारा मुक्तिरेव फलमिति ज्ञापयितुं 'यस्त्वेतमेव'मित्यादिनोक्तवैश्वानरोपासनफलान्तर्गतानिष्टनिवृत्त्यंशस्योक्ततया अङ्गिफलविरोधिफलाश्रवणेन 'तस्य ह वा' इत्यादिवाक्यप्रतिपन्नस्याङ्गिभावस्यानपोदितत्वात् । 'तस्य ह वा' इत्यादिवाक्यस्यार्थ-

७ भावप्रकाशिका ७

बर्हिः' इत्युत्तरवाक्ये उपासकोरःप्रभृतीनामेव, परामृष्टव्यत्वेन 'तस्य हवा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाः' इत्यादौ मूर्धादिशब्दैरप्युपासकमूर्धादिपरामर्शस्योचितत्वाच्च । नचैवमात्मनो वैश्वानरस्येति व्यपदेशः कथं घटतामिति वाच्यम् ; उपास्योपासकाभेदविवक्षया वैश्वानरादिशब्दप्रयोगोपपत्तेरितिभावः ॥ ( मुक्तिरेव फलमितीति ) ज्ञापयितुमुक्ततयेत्यन्वयः । यद्यपि 'सर्वेष्वात्मस्वन्नमत्ति' इत्यत्रानिष्टनिवृत्त्यंशो न कण्ठोक्तः ब्रह्मानुभवमात्रस्योक्तत्वात् . तथापि तदन्तर्गतत्वमस्तीत्यभिप्रत्याह ( फलान्तर्गतेति ) ( वाक्यप्रतिपन्नस्याङ्गभावस्येति ) यद्यपि नानेन वाक्येनाङ्गाङ्गिभावः प्रतिपाद्यते, तथापि 'उर एव वेदिर्लोमानि

नोपदिशति; यः पूर्वमुपास्यतयोपदिष्टो वैश्वानरस्तस्यावयवभूतानग्न्यादित्यादीन् सुतेजोविश्वरूपादिनामधेयानुपासकशरीरे मूर्धादिपादान्तेषु सम्पादयति । मूर्धैव सुतेजाः-- उपासकस्य मूर्धैव परमात्ममूर्धभूता द्यौरित्यर्थः । चक्षुर्विश्वरूपः आदित्य इत्यर्थः । प्राणः पृथग्वर्त्मा--वायुरित्यर्थः । सन्देहो बहुलः--उपासकस्य मध्यकाय एव परमात्ममध्यकायभूत आकाश इत्यर्थः । वस्तिरेव रयिः-- अस्य वस्तिरेव तदवयवभूता आप

* श्रुतप्रकाशिका *

माह ( यः पूर्वमिति ) अवान्तरवाक्यानि प्रत्येकं व्याचष्टे ( मूर्धेत्यादिना ) अधिकरणार्थप्रतिपत्तिसौकर्यार्थं पूर्वसूत्रविषयवाक्यार्थं क्रमप्राप्तमेतत्सूत्रार्थेन सङ्गतमुप-

७ भावप्रकाशिका ७

बर्हिः' इत्यग्निहोत्रसम्पत्तिवाक्ये 'तस्य हवा एतस्य' इत्यस्यानुकर्षात्तादर्थ्यसिद्धमिति भावः । शङ्करादिभिस्तु 'अभिव्यक्तेः' इत्यादिसूत्रचतुष्टयं मतभेदेन प्रादेशमात्रश्रुतिनिर्वाहभेदप्रदर्शनपरं व्याख्यातम्. अतिमात्रस्यापि परमात्मन उपासकानुग्रहार्थं प्रादेशमात्रतया अभिव्यक्तिसम्भवात् . द्युपृथिव्यादिप्रादेशसम्बन्धिनी प्रादेशी मात्रा परिमाणं यस्य स तथोक्तमिति योगवशात् प्रादेशमात्रत्वोपपत्तिरिति आश्मरथ्यो मन्यत इति अभिव्यक्तेरिति सूत्रार्थमाहुः । प्रादेशमात्रहृदयावच्छिन्नमनोनुसरणीयतया रूढिपूर्वकलक्षणया प्रादेशमात्रत्वमिति बादरिरिति द्वितीयसूत्रार्थमाहुः । वाजसनेयके प्रादेशमात्रे उपासकमूर्द्धचुबुकान्तराले त्रैलोक्यात्मनो वैश्वानरस्य द्युप्रभृतीनां मूर्द्धाद्यवयवानां सम्पादनात्प्रादेशमात्रत्वोपपत्तिः । एवं हि वाजसनेयके श्रूयते ;— 'प्रादेशमात्रमिव ह वै देवास्सुविदिता अभिसम्पन्नास्तथा तु एनान् वक्ष्यामि । यथा प्रादेशमात्रमिवाभिसम्पादयिष्यामीति । स होवाच मूर्द्धानमुपदिशन्नुवाच. एष वा अतिष्ठा वैश्वानर इति चक्षुषी उपदिशन्नुवाच एष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाच

इत्यर्थः । पृथिव्येव पादौ– अस्य पादावेव तत्पादभूता पृथिवीत्यर्थः । एवमुपासकस्स्वशरीरे परमात्मानं त्रैलोक्यशरीरं वैश्वानरं सन्निहितमनुसन्धाय स्वकीयान्युरोलोमहृदयमनश्चास्यानि प्राणाहुत्याधारस्य परमात्मनो वैश्वानरस्य वेदिबर्हिर्गार्हपत्यान्वाहार्यपचनाहवनीयानग्निहोत्रोपकरणभूतान् परिकल्प्य प्राणा-

* श्रुतप्रकाशिका *

न्यस्यति ( एवमित्यादिना ) अधिकरणार्थमुपसंहरति ( अत इति ) अभिव्यक्तिरनुस्मरणीयत्वं द्युप्रभृतिषु मूर्धत्वादिसम्पादनं मस्तकचिबुकान्तराले परस्य स्थिते-

* भावप्रकाशिका *

एष वै पृथग्वर्त्मा वैश्वानर इति मुख्याकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति मुख्या अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति चिबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानर इति । अयमर्थः,– प्रादेशमात्रमिव देवास्सूर्यादयः अभिसम्पन्नाः प्राप्ताः उपासनया यदा तदा ते विदिता भवन्ति । अहं केकयराजः, युष्मभ्यम् औपमन्यवादिभ्यः , एतान् देवान् , तथा वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति औपमन्यवप्रभृतीन् प्रति वक्तव्यत्वेन प्रतिज्ञाय अश्वपती राजोवाच, किं कुर्वन्नित्युक्ते अस्य मूर्द्धानमुपदिशन् कराग्रेण दर्शयन् एष वै भूरादिलोकानतीत्य तिष्ठतीत्यतिष्ठा द्यौर्वैश्वानरस्यावयव इति प्रसिद्धे मूर्द्धनि वैश्वानरस्याधिदैवं यो मूर्द्धा द्युलोकः तत् दृष्टिः कर्तव्येत्यर्थः । स्वकीये चक्षुषी दर्शयन्नाह एष वै सुतेजास्स हि सूर्योधिदैवतं वैश्वानरस्य चक्षुरितिप्रसिद्धयोश्चक्षुषोर्वैश्वानरस्याधिदैवं यदादित्याख्यं चक्षुः तद्दृष्टिरित्यर्थः । इत्यादि सर्वत्र ज्ञेयमिति, इत्थं सम्पत्तेरिति सूत्रार्थमाहुः । अस्मिन् प्रादेशमात्रे मूर्द्धचिबुकान्तराले एनं परमात्मानं जाबाला अप्यधीयते । 'एषोऽनन्तोऽव्यक्त आत्मा सोविमुक्ते प्रतिष्ठितः'' इति । सोविमुक्तः अस्मिन् प्रतिष्ठ इति वरणायान्नस्य मध्ये प्रतिष्ठित इति । का वै वरणा काच नासीति. तत्र चेमामेव नासिकां वरणा नासीति निरूप्य पुनरप्यामनन्ति । कतमच्चास्य स्थानं भवति भ्रुवोः प्राणस्य च यस्सन्धिस्स एष

हुतेश्चाग्निहोत्रत्वं परिकल्प्यैवंविधेन प्राणाग्निहोत्रेण परमात्मानं वैश्वानरमाराधयेदिति 'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यः' इत्यादिनोपदिश्यते । अतः परमात्मा पुरुषोत्तम एव वैश्वानर इति सिद्धम् ॥

इति श्रीभगवद्रामानुजविरचिते शारीरकमीमांसाभाष्ये
प्रथमस्याध्यायस्य द्वितीयः पादः ॥

* श्रुतप्रकाशिका *

श्रीबालश्रुत्या प्रतिपादनमिति अभिव्यक्तेरित्यादिसूत्रचतुष्टयार्थ इतरैरुक्तः, तन्मते सूत्राणां परिहरणीयशङ्काया अभावाद्वैयर्थ्यमेव स्यात्, अतो यथोक्त एवार्थः ॥

इति श्रीहरितकुलतिलकवाग्विजयसूनुना श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासापरनामधेयेन
श्रीमद्वरदाचार्यपादसेवासमधिगतभगवद्रामानुजविरचितशारीरकमीमांसा-
भाष्यहृदयेन श्रीसुदर्शनसूरिणा विलिखितायां श्रुतप्रकाशिकायां
प्रथमस्याध्यायस्य द्वितीयः पादः ॥ × ॥

* भावप्रकाशिका *

द्युलोकस्य परस्य सन्धिर्भवतीति । ततश्च नासिकाभ्रूमध्यप्रदेशमात्रवर्तिनि परमात्मनि प्रादेशमात्रोपपत्तिरिति चतुर्थसूत्रार्थमाहुः । तेषां मते चतुस्सूत्र्या अपि प्रादेशमात्रत्वनिर्वाहमात्रप्रदर्शनपरत्वेन असन्मत इव प्रत्येकं भिन्नभिन्ननिवृत्त्या शङ्काया अभावान् नातीव सप्रयोजनमित्याह ( अभिव्यक्तिरनुसरणीयत्वमित्यादिना ) द्युप्रभृतिमूर्द्धत्वादिसम्पादनमिति पाठः । मस्तकचिबुकान्तराल इत्येतत् काकाक्षिन्यायेनोभयत्र सम्बध्यते, मस्तकचिबुकान्तराले द्युमूर्द्धत्वादिसम्पादनं मस्तकचिबुकान्तराले परस्य स्थितेरिति चोभयत्र सम्बध्यते, श्रुत्या प्रतिपादनमित्यस्यानन्तरं प्रादेशमात्रत्वश्रुतिनिर्वाहौपयिकमिति शेषः पूरणीयः ॥

इति दशोपनिषद्भाष्यकारैः श्रीरङ्गरामानुजमुनिभिर्विरचितायां
श्रुतप्रकाशिकाव्याख्यायां भावप्रकाशिकायां
प्रथमस्याध्यायस्य द्वितीयः पादः ॥





श्रीमते रामानुजाय नमः ॥

श्रीमद्भगवद्रामानुजविरचिते

# श्रीशारीरकमीमांसाभाष्ये

## प्रथमाध्याये तृतीयः पादः ।



## द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

* श्रुतप्रकाशिका *

एवमस्पष्टजीवलिङ्गकानि वाक्यानि परमात्मपरत्वेन निर्णीतानि । अथ स्पष्टजीवलिङ्गकानि विचार्यन्त इति पादसङ्गतिः । पूर्वस्मिन्नधिकरणे द्युपृथिव्यादिसम्बन्धिनः परमात्मत्वमुक्तम् , द्युपृथिव्यादिसम्बन्धित्वं परमात्मव्यतिरिक्तस्य दृश्यते इति शङ्कया अनन्तराधिकरणारम्भ इत्यवान्तरसङ्गतिः । यद्वा 'अदृश्यत्वादिगुणक' इत्यधिकरणे त्रैलोक्यशरीरत्वेन परमात्मत्वे साधिते तच्छरीरकत्वमपरमात्मनोऽपि दृश्यत इति शङ्कायां वैश्वानराधिकरणं प्राप्तम् । अथास्यामेवोपनिषदि कतिपयवाक्यानां परमात्मव्यतिरिक्तपरत्वशङ्कायामदृश्यत्वादिगुणकचिन्तनस्यासमाप्तिबुद्ध्या तृतीयपादाद्याधिकरणारम्भ इत्यवान्तरसङ्गतिः । अत्र निरसनीयजीवलिङ्गानां स्पष्टत्वादिदमधिकरणमदृश्यत्वादिगुणकनिरूपणात्पृथक्कृत्य तृतीयपादे निवेशितम् । पादभेदस्य स्पष्टास्पष्टजीवलिङ्गतानिबन्धनत्वात् । - - ॥ द्युभ्वाद्यायतनं स्वशब्दात् ॥ द्याद्यायतनमित्येतावति वक्तव्येऽपि द्युभ्वादीत्युक्तेरयं भावः ,

५ भावप्रकाशिका ५

ननु पूर्वस्मिन्नधिकरणे द्युमूर्द्धत्वादिकमेव परमात्मलिङ्गत्वेनोपन्यस्तम्, नतु द्युप्रभृतिसम्बन्धित्वमात्रमित्यस्वरसादाह ( यद्वा अदृश्यत्वादिगुणक इतीति )

१ अधिकरणम्

आथर्वणिका अधीयते [1]"यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः। तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः" इति। तत्र संशयः-- किमयं द्युपृथिव्यादीनामायतनत्वेन श्रूयमाणो जीवः, उत परमात्मा? इति। किं युक्तम्? जीव इति। कुतः? [2]"अरा इव रथनाभौ संहता यत्र नाड्यस्स एषोन्तश्चरते बहुधा जायमानः"

* श्रुतप्रकाशिका *

ऊर्ध्वा अधराश्चेतिकोटिद्वयान्तर्गता लोकाः, तत्प्रदर्शनार्थौ द्युभूशब्दाविति। विषयमाह (आथर्वणिका इति)। (तत्रेति) किं द्युपृथिव्याद्यायतनं जीवः, उत परमात्मा? इति विचारः। तदर्थं यस्मिन्द्यौरित्यादिवाक्यजातं किमदृश्यत्वादिगुणकप्रकरणाद्भिन्नम्, उताभिन्नम्?। तदर्थं मनःप्राणादिसम्बन्धः किमुपकरणोपकरणित्वलक्षणः, उताधाराधेयभावलक्षणः?। तदर्थं द्युपृथिव्याद्यायतनत्वामृतसेतुत्वादिधर्माः किं कर्मफलभोक्तुर्जीवस्य सम्भवन्ति, उतानश्नतः? इति। यदा कर्मफलभोक्तुर्भवन्ति तदा मनआदिसम्बन्धस्य करणतद्वत्तारूपतया तस्य परप्रकरणविच्छेदकत्वेन द्युभ्वाद्यायतनं जीवस्स्यात्, यदाऽमृतसेतुत्वादयोऽनश्नतो धर्मास्तदा मनआदिसम्बन्धस्य आधाराधेयभावरूपत्वेन परप्रकरणाविच्छेदाद्द्युपृथिव्याद्यायतनं परमात्मेति फलितं स्यात्। अरा इवेत्यादेरनन्तर-

* भावप्रकाशिका *

(असमाप्तिबुध्येति) अदृश्यत्वबुध्येत्यर्थः। यद्यपि नैतदधिकरणपूर्वपक्षिणा अदृश्यत्वादिगुणकस्य परमात्मत्वमाक्षिप्यते, अपि तु तदभ्युपेत्यैव तत्प्रकरणविच्छेदेन 'यस्मिन् द्यौ'रितिमन्त्रस्य लिङ्गवशाज्जीवपरत्वमित्येव पूर्वपक्षः प्रवर्त्स्यते, तथापि यस्मिन् द्यौरितिमन्त्रस्य जीवपरत्वे अदृश्यत्वादिवाक्येपि परमात्मत्वशङ्का अङ्कुरेदिति भावः। विषयवाक्यश्रुतिक्रमस्सर्वोपि अदृश्यत्वाधिकरणे लिखितः, तत्रैव

[1] मुण्ड. २-२-५ ॥ | [2] मु २-२-६ ॥

इति परस्मिन् श्लोके पूर्ववाक्यप्रस्तुतं द्युपृथिव्याद्यायतनं 'यत्र' इति पुनरपि सप्तम्यन्तेन परामृश्य तस्य नाड्याधारत्वमुक्त्वा, पुनरपि [1]"स एषोऽन्तश्चरते बहुधा जायमानः" इति तस्य बहुधा जायमानत्वञ्चोच्यते; नाडीसम्बन्धो देवादिरूपेण बहुधा जायमानत्वञ्च जीवस्यैव धर्मः। अस्मिन्नपि श्लोके [2]"ओतं मनस्सह प्राणैश्च सर्वैः" इति प्राणपञ्चकस्य मनसश्चाश्रयत्वमुच्यमानं

* श्रुतप्रकाशिका *

श्लोकस्य द्युभ्वाद्यायतनविषयत्वं दर्शयन् जीवलिङ्गमाह (पूर्ववाक्येति) लिङ्गान्तरमाह (पुनरपि स एष इति) ततः किमित्यत्राह (नाडीसम्बन्ध इति) नाडीनामिन्द्रियसम्बन्धित्वेन जीवस्य ज्ञानप्रसरहेतुत्वात् "ताभिः प्रत्यवसृप्य पुरीतति शेते' तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति" इत्यादिश्रुतिभिर्जीवस्य नाडीसंयोगप्रसिद्धेश्च तत्सम्बन्धो जीवलिङ्गमिति भावः। देवादिरूपेणेति बहुधाशब्दविवरणम्। अन्तरादित्यविद्यायामकर्मकृतस्वेच्छागृहीतदिव्यविग्रहयोगस्समर्थितः, न तु देवादिसजातीयरूपैर्बहुधाजायमानत्वं बहुधाशब्दार्थ इति सूत्रकारेण निरूपितम्; अतस्तस्य जीवत्वशङ्का युक्तेतिभावः। "यस्मिन्द्यौ"रिति पूर्वश्लोके जीवधर्मं दर्शयति (अस्मिन्नपीति) ननु कथं मनःप्राणसम्बन्धस्य जीवत्वसाधकतयोपन्यासः, स हि परस्य सम्भवतीति 'सर्वत्र प्रसिद्धोपदेशा'दित्यत्रोक्तम्। सत्यम्; तथापि मनःप्राणैरुपकरणोपकरणित्वलक्षणसम्बन्धस्य स्वरसतः

ɸ भावप्रकाशिका ɸ

द्रष्टव्यः॥ (श्लोकस्य द्युभ्वाद्यायतनविषयत्वमिति) द्युभ्वाद्यायतनपरत्वमित्यर्थः। ननु 'अन्तस्तद्धर्मोपदेशात्' इति भाष्ये 'अजायमानो बहुधा विजायते' इति श्रुतिवशात् परमकारुणिको भगवान् स्वेच्छयैवोपासकप्रतिपत्त्यनुगुणाकारदेवमनुष्यादिसंस्थानभाग्भवतीत्यभिधानात्कथं बहुधा जायमानत्वं जीवलिङ्गमित्यत आह (अन्तरादित्यविद्यायामिति) बहुधाशब्दार्थस्तत्र सूत्रकृता न विचारित इति

१-२ मु. २-२-५,६॥

जीवधर्म एव । एवं जीवत्वे निश्चिते सति द्युपृथिव्याद्यायतनत्वादिकं यथाकथञ्चित्सङ्गमयितव्यमिति ॥

एवं प्राप्ते प्रचक्ष्महे— द्युभ्वाद्यायतनं स्वशब्दात् । द्युपृथिव्यादीनामायतनं परं ब्रह्म ; कुतः ? स्वशब्दात्— परब्रह्मासाधारणशब्दात् । [1]"अमृतस्यैष सेतुः" इति परस्य ब्रह्मणोऽसाधारणश्शब्दः । [2]"तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते" इति सर्वत्रोपनिषत्सु स एवामृतत्वप्राप्तिहेतुश्श्रूयते । सिनोतेश्च बन्धनार्थत्वात्सेतुः— अमृतस्य प्रापक इत्यर्थः । सेतुरिव वा सेतुः - नद्यादिषु सेतुर्हि कूलस्य प्रतिल-

* श्रुतप्रकाशिका *

प्रतीतेः तस्य चापवादाभावे सति कार्यकरत्वेन प्रागुक्तनिर्वाहायोगाच्च युक्ता शङ्का, अतो नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वजीवलिङ्गैः पूर्वपक्षोत्थानं युक्तम् । तत्रैव श्लोके द्युपृथिव्याद्यायतनत्वरूपपरमात्मलिङ्गं च दृश्यत इत्यत्राह (एवं जीवत्वे निश्चित इति) द्वयोरपि जीवपरयोर्लिङ्गप्रतिभासेन विरोधादन्यतरलिङ्गभङ्गेऽवश्यंभाविनि, यल्लिङ्गस्योत्तरश्लोकप्रतिपन्नलिङ्गद्वयानुगुण्यम् तल्लिङ्गानुसारिण्यर्थनिर्णये कर्तव्ये सतीत्यर्थः । (यथाकथञ्चित्सङ्गमयितव्यमिति) जीवस्य द्युपृथिव्याद्याधारत्वं स्वरूपेण वा कर्मद्वारा वा मुक्तावस्थायां विकसितेन ज्ञानेन वा सम्भवतीति भावः ॥— (द्युपृथिव्यादीनामित्यादि) सेतुशब्दस्य सलिलनिरोधके प्रसिद्धत्वेनामृतस्य निरोधकत्वप्रसङ्गेन रूढ्यर्थानुपपत्तौ सत्यामस्वारस्यसाम्यात्तमुभयथा व्याचष्टे (सिनोतेरिति, सेतुरिव वेति च) प्रथमनिर्वाहे रूढिपरित्यागाद-

* भावप्रकाशिका *

भावः । (प्रथमनिर्वाह इति) योगपक्षे यौगिकार्थस्य मुख्यत्वेपि प्रथमप्रतिपन्नरूढ्यर्थस्य सर्वात्मना त्यागो दोषः । द्वितीये तु रूढ्यर्थसदृशार्थपरिग्रहेण

---

१ मु. २-२-५ ॥ | २ पुरुषसूक्तम् ॥

म्भकः , संसारार्णवपारभूतस्यामृतस्यैव प्रतिलम्भक इत्यर्थः। आत्मशब्दश्च निरुपाधिकः परस्मिन् ब्रह्मणि मुख्यवृत्तः, आप्नोतीति ह्यात्मा , स्वेतरसमस्तस्य नियन्तृत्वेन व्याप्तिस्तस्यैव सम्भवति ; अतस्सोपि तस्यैव शब्दः। [1]"यस्सर्वज्ञस्सर्ववित्" इत्यादयश्चोपरितनाः परस्यैव ब्रह्मणश्शब्दाः। नाड्याधारत्वं तस्यापि सम्भवति [2]"सन्ततँ सिराभिस्तु लम्बत्या कोशसन्निभम्" इत्यारभ्य "तस्याश्शिखाया मध्ये परमात्मा व्यवस्थितः" इति श्रवणात्। [3]'बहुधा जायमानः' इत्यपि परस्मिन् ब्रह्मणि सङ्गच्छते। [2]"अजायमानो बहुधा विजायते। तस्य धीराः परिजानन्ति योनिम्" इति देवादीनां समाश्रयणीयत्वाय तत्तज्जातीयरूपसंस्थानगुणकर्मसम-

* श्रुतप्रकाशिका *

स्वारस्यम्, द्विर्नीये त्वगत्या रूढार्थगतगुणयोगपरत्वादस्वारस्यम्। गुणयोगफलितमर्थमाह ( संसारेति ) श्येनसादृश्याद्यागे श्येनशब्दवत् सेतुसादृश्यात्परमात्मनि सेतुशब्दः, विहङ्गयागयोर्हि निपत्यादानं साम्यम्। "अन्तः प्रविष्टश्शास्ता जनानाँ सर्वात्मा' इति श्रुत्यनुसारेणात्मशब्दं व्याचष्टे। ( आत्मशब्दश्चेति ) आत्मशब्दो न व्याप्तृमात्रवाची, किन्तु व्याप्तृविशेषवाची, योगरूढत्वात्; न हि गगनादिष्वात्मशब्दप्रयोगः, अतो नियन्तृरूपव्याप्तृविशेषवाचीत्यर्थः। 'अमृतस्यैष सेतुः' 'आत्मानम्' यस्सर्वज्ञस्सर्ववित्' इत्यादयः स्वशब्दा इत्यर्थः। परोक्तहेतुनिर्वाहमाह ( नाड्याधारत्वमित्यादिना ) नाड्याधारत्वं हृदयद्वारा परमात्मनस्सम्भवतीत्यर्थः। ( अजायमान इति ) जन्मनो हेतुविशेषः फलविशेषश्चेति भावः।

ꖴ भावप्रकाशिका ꖴ

सर्वथा रूढ्यर्थापरित्यागेपि अशक्यार्थस्वीकारो दोष इति भावः। ( हेतुविशेष

१ मु. २-२-७॥ २ तै. नारायणे १३-अनु॥ ३ मु.२-२-६॥

न्वितः स्वकीय स्वभावमजहदेव स्वेच्छया बहुधा विजायते परः पुरुष इत्यभिधानात्। स्मृतिरपि [1]"अजोपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" ॥ इति। मनःप्रभृतिजीवोपकरणाधारत्वं च सर्वाधारस्य परस्यैवोपपद्यते ॥

इतश्च परमपुरुषः —

मुक्तोपसृप्यव्यपदेशाच्च ॥ २ ॥

अयं द्युपृथिव्याद्यायतनभूतः पुरुषः संसारबन्धान्मुक्तैरपि प्राप्यतया व्यपदिश्यते। [1]"यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तथा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" [2]"यथा नद्यस्स्यन्दमानास्समुद्रे अस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इति। संसारबन्धनाद्विमुक्ता एव हि विधूतपुण्यपापा निरञ्जना नामरूपाभ्यां विनिर्मुक्ताश्च।

* श्रुतप्रकाशिका *

तद्वैशद्यायाह (स्मृतिरपीति) ॥ — ॥ मुक्तोपसृप्यव्यपदेशाच्च ॥ नामरूपप्रहाणमात्रं प्रलयदशायामप्यस्तीति तद्व्यावृत्त्यर्थं विधूतपुण्यपापत्वपूर्वकत्वं नामरूपप्रहाणस्य दर्शयितुं श्रुतिवाक्यद्वयोपादानम्. उपात्तश्रुतिवाक्ये बन्धान्मुक्त इतिशब्दस्याश्रुतत्वान्मुक्तिप्रतिपादनं दर्शयति (संसारबन्धनादिति) वाक्यद्वयोक्तविशेषणान्याह ( विधूतेति )

७ भावप्रकाशिका ७

इति ) इच्छारूपहेतुविशेषः उपासकानुग्रहरूपफलविशेषश्च सूच्यत इत्यर्थः ॥

१ गीता. ४-६ ॥ २ मु. ३-१-३ ॥ ३ मु. ३-२-८ ॥

पुण्यपापनिबन्धनाचित्संसर्गप्रयुक्तनामरूपभाक्त्वमेव हि संसारः । अतो विधूतपुण्यपापैर्निरञ्जनैः प्रकृतिसंसर्गरहितैः परेण ब्रह्मणा परमं साम्यमापन्नैः प्राप्यतया निर्दिष्टो द्युपृथिव्याद्यायतनभूतः पुरुषः परं ब्रह्मैव ॥

परब्रह्मासाधारणशब्दादिभिः परमेव ब्रह्मेति प्रसाध्य प्रत्यगात्मासाधारणशब्दाभावाच्चायं पर एवेत्याह—

नानुमानमतच्छब्दात्प्राणभृच्च ॥ ३ ॥

यथाऽस्मिन् प्रकरणे प्रतिपादकशब्दाभावात्प्रधानं न प्रतिपाद्यम्; एवं प्राणभृदपीत्यर्थः। अनुमीयत इत्यनुमानं परोक्षं प्रधानमुच्यते, अनुमानप्रमितत्वा-

* श्रुतप्रकाशिका *

मुक्तत्वमुपपादयति ( पुण्यपापेति ) वाक्यद्वयोक्तविशेषणानि विशदीकुर्वन् सूत्रार्थं परमसाध्येन घटयति ( अत इति ) निरञ्जनशब्दव्याख्यानं प्रकृतिसंसर्गरहितैरितिपदम्। (परमं साम्यमिति) येन गुणेन साम्यं तस्यापरिच्छिन्नत्वं परमसाम्यम्, न तु सर्वथा साम्यम्॥ उत्तरसूत्रमवतारयति ( परब्रह्मेति ) पूर्वमन्वय उक्तः, अथ तद्व्याख्याय व्यतिरेक उच्यत इत्यर्थः।—॥ नानुमानमतच्छब्दात्प्राणभृच्च॥ सूत्रसङ्गतेर्बुद्धिस्थत्वाय प्रथमं सङ्गच्छमानं सूत्रस्य वाक्यार्थमाह ( यथेति ) मुक्तोपसृप्यत्वेऽभिहिते प्रधानशङ्कानुदयेन तस्य व्युदसनीयत्वाभावात्तदुपन्यासो दृष्टान्ततयेति भावः । किमत्र प्रधानोपस्थापकं पदमित्याकाङ्क्षायां व्याख्येयं पदं व्याचष्टे (अनुमीयत इति) 'कृत्यल्युटो बहुल'मिति बहुलग्रहणात् कर्मणि ल्युडिति भावः। ( अनुमानेति ) " शेष " इत्यण्प्रत्यये आदिवृद्धौ च सत्यामानुमानमिति रूपं भवति। तद्व्यतिरिक्तवाचिशब्दादिति प्रतीतिशङ्कानिवृत्त्यर्थमतच्छब्दादितिपदं

७ भावप्रकाशिका ७

पदार्थकथनपूर्वकत्वात् वाक्यार्थकथनस्य व्युत्क्रमेण कथने हेतुमाह (सूत्रसङ्गतेरिति) सङ्गच्छमानम् सङ्गतिमन्तामित्यर्थः। सङ्गतिमति कथिते सङ्गतेर्बुद्धिस्थत्वादिति

**दानुमानमिति वा। अतच्छब्दात्-- तद्वाचिशब्दाभावा-दित्यर्थः। 'अर्थाभावे यदव्ययम्' इत्यव्ययीभावः ॥३॥**

**इतश्चायं न प्रत्यगात्मा—**

* श्रुतप्रकाशिका *

व्याचष्टे ( तद्वाचीति ) अर्थाभावे यदव्ययमिति न सूत्रोपादानम् । अपि त्वर्थोपादानम् ; सूत्रस्य द्राघीयस्त्वात् । अयमभिप्रायः, अतच्छब्दादिति बहुव्रीहित्वे तावदनुपपन्नः, तदा तच्छब्दरहितादिति स्यात् , ततश्च विशेष्यान्तरं हेतुतयाऽन्वेष्टव्यम् ; तच्चानुपलम्भहतम्. तत्पुरुषत्वे नञस्तत्पदेन शब्दपदेन वा समासस्स्यात् । तत्र प्रथमे असः क इत्यपेक्षायां प्रकृतात्परमात्मनोऽन्यत्प्रधानं जीवो वा यद्यतच्छब्दार्थस्तदा प्रधानपुरुषवाचिशब्दादित्युक्तं स्यात् , ततश्चासिद्धिः प्रतिज्ञातार्थविरोधश्च स्यात् । असः प्रधानादिव्यतिरिक्तः परमात्मा चेत् तद्वाचिशब्दादित्युक्ते 'स्वशब्दा' दित्यनधिकार्थत्वं स्यात् , तथा च सति नानुमानमत एव प्राणभृच्चेत्यार्जवेन शक्ये सूत्रप्रणयने कुटिलोक्तिर्विफला स्यात् । नञस्तच्छब्दपदेन समासपक्षेऽपि तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं स्यात् . तदा तच्छब्दः प्रधानजीवपरश्चेत्तद्वाचिशब्दव्यतिरिक्तशब्दादित्युक्तं भवति , तत् स्वशब्दादित्यनधिकार्थम्. तच्छब्दः परमात्मपरश्चेत् तद्वाचिशब्दव्यतिरिक्तादिति हेतुः प्रतिज्ञातार्थविरुद्धार्थः स्यात् ; अतः पारिशेष्यादर्थाभावेऽव्ययीभाव इति ॥

( इतश्चायं न प्रत्यगात्मेति ) प्राणभृत्प्रतिषेधकसूत्रानन्तर्यात्तदनन्तरसूत्रस्यापि

७ भावप्रकाशिका ७

भावः । ( सूत्रस्य द्राघीयस्त्वादिति ) ' अव्ययं विभक्ती' त्यादिसूत्रस्यातिदीर्घत्वादित्यर्थः । ( प्रकृतात्परमात्मनोऽन्यदिति ) पूर्वसूत्रे द्युभ्वाद्यायतनं परमात्मेति साध्यतया प्रकृतादित्यर्थः । ( असः प्रधानादिव्यतिरिक्त इति ) अस्मिन् सूत्रे प्रधानजीवयोः प्रकृतत्वात्तच्छब्दे तयोः परामर्शसम्भवादिति भावः । ( परमात्मा चेदिति ) यद्यपि प्रधानजीवव्यतिरिक्तः परमात्मनोऽन्योपि सम्भवति, तथापि प्रधानजीवपरमात्मनामेव प्रस्तुतत्वेन तच्छब्दस्तत्रैव पर्यवस्यति । अतएवोत्तरत्र तद्वाचिशब्दव्यतिरिक्तशब्दादित्यस्य परमात्मशब्दादित्यर्थसिद्धिमभिप्रेत्य तत्स्वशब्दादित्यनधिकार्थमिति वक्ष्यति । ( अतः पारिशेष्यादर्थाभाव इति ) अभावस्तु

## भेदव्यपदेशात् ॥ ४ ॥

"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इत्यादिभिर्जीवादिलक्षणत्वेनायं व्यपदिश्यते । अनीशया--भोग्यभूतया प्रकृत्या मुह्यमानश्शोचति जीवः, अयं यदा स्वस्मादन्यं सर्वस्येशं प्रियमाणम्, अस्य-- ईश्वरस्य महिमानं च निखिलजगन्नियमनरूपं पश्यति ; तदा वीतशोको भवति ॥ ४ ॥

* श्रुतप्रकाशिका *

प्राणभृत्प्रतिक्षेपस्साध्य इत्यर्थः । अयंशब्दो द्युभ्वाद्यायतनात्मविषयः । मुक्तोपसृप्यसूत्रविषयवाक्ये 'पश्यते रुक्मवर्णम्' इत्युक्तम् 'जुष्टं यदा पश्यती'ति तत्तुल्यार्थतया बुद्धिस्थवाक्यान्तरप्रतिपन्नहेतुमाह– ॥ भेदव्यपदेशात् ॥ 'समाने वृक्षे' इति मन्त्रे अन्यशब्दार्थो भेदव्यपदेशशब्देन विवक्षितः । अत्रान्यशब्दस्य द्युभ्वाद्यायतनविषयत्वं कथमिति शङ्कायां मन्त्रं व्याचष्टे ( अनीशयेति ) स्त्रीलिङ्गसामर्थ्यात् प्रकृतेर्विशेष्यत्वमुक्तम् । अन्यशब्दसामर्थ्यलब्धं प्रतियोगिनं निर्दिशति ( स्वस्मादिति ) ईशशब्दसामर्थ्यप्राप्तमीशितव्यं मानान्तरानुरोधेनाह ( सर्वस्येति ) जुष्टशब्दं व्याचष्टे ( प्रियमाणमिति ) आदिकर्मणि क्त इति भावः । समुच्चेतव्यसामर्थ्यप्राप्तश्चशब्द इत्यभिप्रायेणाह ( महिमानञ्चेति ) इतिशब्दार्थमाह ( निखिलजगन्नियमनरूपमिति ) इतिशब्दो बुद्धिस्थप्रकारपरः । ईशशब्दश्रवणान्नियमनरूपप्रकारो बुद्धिस्थ इति भावः । यत्तदोर्नित्यसम्बन्धादाह ( तदेति ) इतिशब्दः

* भावप्रकाशिका *

'नाव्ययीभावादतोऽम्त्वपञ्चम्या इति' इति पर्युदासान्न भवतीति रूपसिद्धिः ॥

ईशभिन्नत्वस्य जीवसाधारण्यात्कथं प्रकृतिपरत्वमित्याशङ्क्याह (स्त्रीलिङ्गसामर्थ्यादिति ) ननु भूतार्थे विहितस्य प्रीयमाणामिति वर्तमानार्थनिर्देशः कथमित्यत्राह ( आदिकर्मणि क्त इति भाव इति ) तदाशब्दस्य मन्त्रे अश्रवणादाह ( यत्तदोः

## प्रकरणात् ॥ ५ ॥

**प्रकरणञ्चेदं परस्य ब्रह्मण इति "अदृश्यत्वादिगुणको धर्मोक्तेः" इत्यत्रैव प्रदर्शितम् । नाडीसम्बन्धबहुधाजायमानत्वमनःप्राणाधारत्वैश्च प्रकरणविच्छेदाशङ्कामात्रमत्र पर्यहार्ष्म ॥ ५ ॥**

* श्रुतप्रकाशिका *

कालसम्बन्धरूपप्रकारवाची, अतस्तदर्थस्तदाशब्दविवक्षितो वा स्यात् । द्रष्टृत्वसमानाधिकरणं मुह्यमानत्वादिकं दृश्यत्वसमानाधिकरणं जुष्टत्वादिकमन्यत्वं च व्यपदिशन्तीयं श्रुतिः "तमेवैकं जानथ" इति ज्ञेयतया निर्दिष्टं द्युभ्वाद्यायतनमात्मानमन्यशब्दवाच्यत्वेन प्रत्यभिज्ञापयन्ती तस्य जीवत्वं वारयतीति वाक्यार्थः ॥

द्वितीयचतुर्थसूत्रविषयाभ्यां "यदा पश्यः पश्यते 'जुष्टं यदा पश्यती'ति वाक्याभ्यामदृश्यत्वादिगुणकविषयस्य "यद्भूतयोनिं परिपश्यन्ती"तिवाक्यस्य समानार्थत्वात् बुद्धिस्थप्रकरणमेव हेतुं स्थित्यदनाभ्यां पूर्वमेवाह— ॥ प्रकरणात् ॥ भाष्ये अस्य सूत्रस्य साध्यनिर्देशाभावः प्रकरणाख्यस्य हेतोः प्राणभृत्प्रतिक्षेपे परमात्मसाधने च सामर्थ्यात् पूर्वत्रोत्तरत्र चान्वयो भविष्यतीत्यभिप्रायनिबन्धनः । उत्तरसूत्रव्याख्याने ह्युभयमपि साध्यत्वेन निर्दिश्यते । अदृश्यत्वादीत्यस्मिन्नधिकरणे "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" इतिसूत्रव्याख्यानावसरे तथाहीत्यादिनोपसंहृतमित्यन्तेन भाष्येण प्रकरणस्य परब्रह्मपरत्वं प्रतिपादितमित्यर्थः । पूर्वमेवास्य प्रकरणस्य परमात्मपरत्वंसाधितञ्चेत्किमेतदधिकरणारम्भेणेत्यत्राह(नाडीसम्बन्धेति) प्रकरणस्य लिङ्गेन बाधः परिहृत इत्यर्थः । नाड्याधारत्वं तस्यापि सम्भवतीत्यादिना भाष्येणास्याधिकरणस्य लिङ्गबाधपरिहारपरत्वं हि दर्शितम् ॥

❀ भावप्रकाशिका ❀

रिति ) पक्षान्तरमाह ( इतिशब्द इति ) ( तदर्थस्तदाशब्दविवक्षित इति ) तदर्थ इतिशब्दार्थ इत्यर्थः । भाष्यस्थस्तथाशब्द इतिशब्दव्याख्यानमित्यर्थः । ननु भेदव्यपदेशमात्रेण कथं द्युभ्वाद्याधारस्य परमात्मत्वं जीवत्वं वा कुतो न स्यादित्यत्राह ( द्रष्टृत्वसमानाधिकरणेति ) ॥ ( पूर्वत्रोत्तरत्र चेति ) प्राणभृत्प्रतिक्षेपे पर-

## स्थित्यदनाभ्यां च ॥ ६ ॥

[1]"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इत्येकस्य कर्मफलादनम् अन्यस्य च कर्मफलमनश्नत एव दीप्यमानतया शरीरान्तस्स्थितिमात्रं प्रतिपाद्यते । तत्र कर्मफलमनश्नन्दीप्यमान एव सर्वज्ञोऽमृतसेतुस्सर्वात्मा द्युभ्वाद्यायतनं भवितुमर्हति, न पुनः

* श्रुतप्रकाशिका *

अनुक्तं प्रधानभूतं हेतुमाह— ॥ स्थित्यदनाभ्यां च ॥ "अल्पाच्तरम्" इति स्थितिशब्दस्य पूर्वनिपातः । 'अभ्यर्हितं पूर्वं प्रयोक्तव्य'मिति वा । अभ्यर्हितत्वं परमात्मप्रत्यभिज्ञापनेन प्रकरणाविच्छेदहेतुत्वात् स्थितेः । भाष्ये श्रुतिक्रमेण व्याख्यातम्, न पुनस्सूत्रक्रमेण, अस्मिन्मन्त्रे जीवस्यापि प्रस्तुतत्वात् । "यस्मिन्द्यौ"रिति मन्त्रोऽपि तत्प्रतिपादकः स्यात्, अत्रादनशब्दवाच्यभोगोपकरणमनःप्राणसम्बन्धदर्शनादित्यत्राह (तत्र कर्मफलमिति) सर्वज्ञोऽमृतसेतुरित्यादिविशेषणानि प्राकरणिकतयोक्तानि । उभयोः प्रस्तुतत्वेऽपि सार्वज्ञ्यादिसमानाश्रयत्वात् स्वयं योग्यत्वान्मनःप्राणसम्बन्धादेः परमात्मन्यमुख्यत्वाभावाच्च द्युभ्वाद्यायतनत्वं परमात्मधर्म इत्यर्थः । जीवान्वयायोग्यत्वमाह (न पुनरिति) कर्मफलमनश्नन्निति कर्मफलमदन्निति च सौत्रहेत्वनुवादः । शोचन्नित्यनेन भेदव्यपदेशादिति सौत्रहेतोरिहान्वयोऽभिप्रेतः । "शोचति

* भावप्रकाशिका *

मात्मसाधने चेत्यर्थः ॥ ( प्राकरणिकतयोक्तानीति ) न त्वेतन्मन्त्रप्रतिपाद्यानीत्यर्थः । ( सार्वज्ञ्यादिसमानाश्रयत्वादिति ) यस्सर्वज्ञस्सर्ववित् इत्यत्र प्रकरणे श्रवणात्सार्वज्ञ्यमपि प्रकृतद्युभ्वाद्यायतनविषयमिति भावः । ( स्वयं योग्यत्वादिति ) जीवस्य तु सार्वज्ञ्यामृतसेतुत्वादेरदृष्टादिद्वारा अमुख्यतया कथञ्चिन्निर्वाह्यत्वादिति भावः । नन्वस्मिन् सूत्रे श्रुत्या परमात्मपरत्वमेव साध्यते, नहि तत्र 'भेदव्यपदेशात्' इतिसूत्रोक्तहेतोरन्वयोऽस्ति, तस्य प्रत्यगात्मपरत्वप्रतिक्षेपकत्वादित्यत आह

१ श्वे. ४-७-मु. ३-१-२ ॥

* श्रुतप्रकाशिका *

मुह्यमानः'' इति हि तद्विषयवाक्यम्, तदपि प्रत्यगात्मपरत्वप्रतिक्षेपद्वारा परमात्मपरत्वसाधकम्, व्यतिरेकस्यान्वयशेषत्वादिति भावः। अस्मिन् सूत्रे परमात्मपरत्वं श्रुत्या साध्यम्, प्रत्यगात्मपरत्वप्रतिक्षेपस्त्वार्थ इति न वाक्यभेदः। ''अभिचाकशीती'ति परस्य दीप्यमानत्वे हि मन्त्रस्य तात्पर्यमवगम्यते, जीवस्यात्तृत्वं तदुपयोगितया प्रतीयते। ननु कथं 'द्वा सुपर्णे'तिमन्त्रस्य जीवपरमात्मभेदपरत्वम्? अन्तःकरणजीवपरो ह्ययं मन्त्रः। पैङ्गिरहस्यब्राह्मणेनास्य मन्त्रस्य तथा व्याख्यातत्वात्। तथा हि, तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्, अनश्नन्नन्यो अभिचाकशीतीति अनश्नन्नन्योऽभिपश्यति ज्ञः तावेतौ सत्त्वक्षेत्रज्ञावित्यत्र स्वाद्वत्तीत्येतदन्तस्य वाक्यस्य सत्त्वपरत्वम् अनश्नन्नित्यादेः क्षेत्रज्ञपरत्वं च प्रतीयते। न च सत्त्वक्षेत्रज्ञशब्दौ जीवपरमात्मपराविति वाच्यम्; तयोश्शब्दयोरन्तःकरणजीवपरतया प्रसिद्धत्वात् 'तदेतत्सत्त्वं येन स्वप्नं पश्यति अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः तावेतौ सत्त्वक्षेत्रज्ञौ'इति सत्त्वक्षेत्रज्ञशब्दयोरन्तःकरणजीवशब्दाभ्यां पैङ्गिश्रुत्यैव व्याख्यातत्वाच्च। येन पश्यतीति करणत्वप्रतीतेः सत्त्वं ह्यन्तःकरणम्, स्वप्नद्रष्टृत्वाच्च क्षेत्रज्ञो हि जीवः, अतोऽयं मन्त्रोऽन्तःकरणजीवपर इति। उच्यते; न तावज्जीवपरमात्मपरत्वमस्यापवदितुं शक्यते, अनेन मन्त्रेण तुल्यार्थतया प्रत्यभिज्ञायमाने ''समाने वृक्षे पुरुषो निमग्नः'' इत्यनन्तरे मन्त्रे जीवपरयोः प्रतिपन्नत्वादस्य मन्त्रस्य तदैकार्थ्याच्च। ''समानं वृक्षं परिषस्वजाते'' ''समाने वृक्षे पुरुषो निमग्न.'' इति तयोरैकार्थ्यं हि प्रतीयते। समाने वृक्षे इति मन्त्रे च पुरुषो जीवः,

* भावप्रकाशिका *

( तदपि प्रत्यगात्मेति ) नन्वस्मिन् सूत्रे जीवपरयोः प्रस्तुतत्वोपन्यासः कथं द्युभ्वाद्यायतनस्य परमात्मत्वे जीवत्वप्रतिक्षेपे वा उपयुज्यते, प्रत्युत विरुद्ध एव। यदि च प्राकरणिकहेत्वन्तरैः पूर्वसूत्राभिप्रेतैः परमात्मासाधारणैः परमात्मपरत्वं साध्यते, किमनेनेत्याशङ्क्य सूत्राभिप्रेतमर्थमाह ( अभिचाकशीतीति परस्येति ) ( तदुपयोगितयेति ) परमात्मनो भोक्तृत्वराहित्यप्रतिपादने प्रयुक्तोऽयं मन्त्रः, तत्र भोक्तृत्वराहित्यं द्रढयितुं लोकवेदसिद्धं भोक्तृत्वं जीवस्यैव, न तु परमात्मनश्शरीरावस्थितस्यापीति प्रतिपादयति ; अतो जीवस्य भोक्तृत्वप्रतिपादनं परमात्मनस्तदभावप्रतिपादनाय। न च परमात्मनः अभोक्तृत्वप्रतिपादनं जीवस्य भोक्तृत्वप्रति-

* श्रुतप्रकाशिका *

अन्तःकरणस्य पुरुषशब्दवाच्यत्वाभावात्, "शोचति मुह्यमानः 'पश्यति वीतशोकः" इति पदानामस्वारस्यप्रसङ्गाच्च, अन्यश्च परमात्मा ईशशब्दोक्तत्वात् स्वविषयज्ञानेन वीतशोकत्वहेतुत्वाच्च । न केवलमनन्तरमन्त्रैकार्थ्यात् 'द्वा सुपर्णे'तिमन्त्रस्य जीवपरमात्मपरत्वम्, किन्तु 'स्वाद्वत्ति अनश्नन्नन्यः' इति भोक्तृत्वाभोक्तृत्वश्रवणाच्च तदवसीयते । चक्षुःश्रोत्रादीनां द्रष्टृत्वश्रोतृत्वादिवदन्तःकरणस्यापि करणत्वादेव भोक्तृत्वं हि न सम्भवति, जीवस्य च वृक्षशब्दोक्तदेहपरिष्वङ्गदशायामेवानश्नत्वमपि नोपपद्यते। तर्हि पैङ्गिश्रुतेः कोऽर्थः? उच्यते ; सत्त्वं—बद्धजीवः । "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इतिनामानुशासनाज्जन्तुपरत्वावगतेः, जन्तुश्च चेतनः । 'प्राणी तु चेतनो जन्मी जन्तुजन्यशरीरिणः' इति नामपाठात् । "वन्यान्विनेष्यन्निव दुष्टसत्त्वान्" इति प्रयोगात् "न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिस्स्यात् त्रिभिर्गुणैः" इति दर्शनाच्च. क्षेत्रज्ञशब्दश्चात्र परमात्मपरः, अर्थान्तरप्रसिद्धाकाशप्राणादिशब्दवदर्थानुपपत्त्या परमात्मपरत्वोपपत्तेः । "विष्णोर्नामसहस्रं मे" इत्युपक्रम्य " क्षेत्रज्ञोऽक्षर एव च"इति प्रयोगात् क्षेत्रं जानातीत्यवयवार्थस्य तस्मिन्नेव पुष्कलत्वाच्च । मोक्षधर्मे " ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । प्रविशन्ति द्विजश्रेष्ठ क्षेत्रज्ञं निर्गुणात्मकम् ॥ सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः" इति । तत्रैव " विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥ क्षेत्राणि च शरीराणि ज्ञानानि च शुभाशुभे । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते" ॥ इति प्रयोगात् । तत्रैव कपिलासुरिसम्वादे "ज्ञानानामासुरे क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षकः ज्ञातृको बुध्य-

* भावप्रकाशिका *

पत्त्यर्थमिति वैपरीत्यं वक्तुं शक्यम्, प्रसिद्धं ह्यप्रसिद्धप्रतिपत्त्यर्थं भवेत्, न च परमात्मस्वरूपं जीवादपि प्रसिद्धम्, येन तथा स्यात् . नापि परमात्मप्रतिपत्त्यपेक्षयापि जीवप्रतिपत्तिः प्रयोजनवती, येन परमात्मप्रतिपादनं जीवप्रतिपत्त्यर्थं स्यात्, तस्माज्जीवभोक्तृत्वप्रतिपादनमभोक्तृपरमात्मप्रतिपत्त्यर्थम्. तस्मात्तस्मिन्मन्त्रे परमात्मा प्रतिपाद्यत इति सिद्धम् . स च मन्त्रः प्राक् प्रस्तुतद्युपृथिव्याद्याधारविषय एव . अप्रस्तुताभिधाने असङ्गतेः, तस्मात् द्युभ्वाद्यधिकरणं परमात्मेति सिद्धमिति भावः। ( पदानामस्वारस्यप्रसङ्गाच्चेति) अचेतने अन्तःकरणे शोकमोहादीनामसम्भवादिति

कर्मफलमदन् शोचन्प्रत्यगात्मा ; अतो द्युभ्वाद्यायतनं परमात्मेति सिद्धम् ॥ ७ ॥ ॥ इति द्युभ्वाद्यधिकरणम् ॥

* श्रुतप्रकाशिका *

मानाप्रतिबुद्धयोः परममृतं विदित्वा निरवयवमनामयमस्माद्दुःखाद्विमुच्यत एव" इति बुध्यमानाप्रतिबुद्धशब्दाभिहितयोश्चिदचितोः परस्य क्षेत्रज्ञशब्देनाभिधानात् । तत्रैव "पञ्चविंशतितत्त्वानि वर्गशब्देनोक्त्वा "एतस्माद्वर्गादपवृत्तोऽपवर्गदः क्षेत्रज्ञः शुचिरुपेत्तको बुध्यमानाप्रतिबुद्धयोः परस्तात्" इति। तत्रैव 'अन्यदुदकमन्यत् पुष्करपर्णं तथाऽन्यत्क्षेत्रमन्यः पुरुषः पञ्चविंशकः अन्यश्चास्मात्क्षेत्रज्ञः' इति । पुनस्तत्रैव 'एवमासुरे अन्यद्व्यमन्यः पुरुषः पञ्चविंशतितत्त्वमन्योऽस्मात्क्षेत्रज्ञः' इति पञ्चविंशात्परस्मिन् क्षेत्रज्ञशब्दप्रयोगात् । सनत्कुमारनारदसंवादे च, "पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति । पश्यन्तं पश्यपश्यत्वात्पश्यापश्ये न पश्यति" इति श्लोकमुक्त्वा 'प्रकृतिं क्षेत्रं क्षेत्रज्ञं चापरः क्षेत्रज्ञः षड्विंशकोऽवपश्यति न तु पञ्चविंशकः क्षेत्रज्ञश्च प्रकृतिर्वा परं क्षेत्रज्ञं पश्यति" इति प्रयोगाच्च । अत्र ह्यात्मशब्दवत् क्षेत्रज्ञशब्दस्य जीवपरसाधारणस्य । पञ्चविंशतिकारशब्दाविशेषितस्य जीवपरमात्मविषयत्वदर्शनाच्च । "योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मेति चोच्यते" इति मानवप्रयोगाच्च । 'येन स्वप्नं पश्यती'त्यत्र येनेतीत्थम्भावे तृतीया, येन विशिष्टः परमात्मा स्वप्नं पश्यतीत्युच्यते। ततश्च 'काठिन्यवान्यो बिभर्ती'ति पृथिवीद्वारा काठिन्यवत् स्वप्नद्रष्टृत्वं जीवद्वारा परमात्मविशेषणं भवतीति न विरोधः । शारीरशब्दश्च "तस्यैष एव शारीर आत्मा" इतिवदत्रैव स्वव्यतिरिक्तसमस्तचिदचिच्छरीरके परमात्मन्युपपद्यते । उपद्रष्टेति निरुपाधिकद्रष्टृत्वं च तस्यैवोपपद्यते। एवं शारीर उपद्रष्टेतिपदद्वयेन परस्य क्षेत्रज्ञशब्दवाच्यत्वमुपपादितं भवति । अतो द्वा सुपर्णेतिमन्त्रो जीवपरमात्मपरः । अधिकरणार्थमुपसंहरति ( अत इति ) ॥

इह कैश्चिदेवं पूर्वपक्षितम् ; द्युभ्वाद्यायतनस्य सेतुत्वश्रवणात् सेतोश्च पार-

७ भावप्रकाशिका ७

भावः । (पश्य इति) पश्यः परमात्मा, पश्यन्तं चेतनम्, अपश्यन्तमचेतनं, पश्यन्तं परमात्मानं, पश्यापश्ये चेतनोऽचेतनश्च, पश्यपश्यत्वात् परमात्मदृश्यतैकस्वरूप-

* श्रुतप्रकाशिका *

घत्त्वेन परस्य च 'अनन्तमपारम्'इत्यपारत्वश्रवणात् द्युभ्वाद्यायतनं प्रधानं वायुर्वा जीवो वा स्यात्, एषां धारकत्वयोगादिति। तदयुक्तम्; पारवदर्थोपस्थापकस्य सेतुत्वव्यपदेशस्य पूर्वपक्षहेतोरस्मिन्नधिकरणे परिहृतत्वे सत्युत्तरत्र "परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः" इत्यधिकरणे सेतुत्वव्यपदेशस्य पूर्वपक्षहेतुत्वेनोपन्यासायोगात्। न हि परिहृतस्य हेतोः पुनः परिहारो न्याय्यः, कृतकरत्वापत्तेः। अत्र सेतोः परिच्छिन्नत्वं पूर्वपक्षशङ्काबीजम्, तत्र तु कूलान्तरप्रापकत्वमिति मुखभेदोऽस्तीति चेन्न; कूलान्तरप्रापकत्वं च सेतोः कूलावधिकत्वनिबन्धनमिति परिच्छिन्नत्वे परिहृते तस्यापि परिहृतत्वात् परिहारहेतुसाम्याच्च। विधरणार्थतयैव ह्युभयत्र परिहारः, अत उत्तरत्र पूर्वपक्षबीजतयोपन्यासान्यथानुपपत्त्या अस्मिन्नधिकरणे सेतुत्वव्यपदेशः सूत्रकारेण पूर्वपक्षबीजतया विवक्षितः। प्रधानवाय्वोश्शङ्का चानुपपन्ना, "तमेवैकं जानथात्मान"मित्यात्मशब्दश्रवणात् 'गौणश्चेन्नात्मशब्दा'दित्यत्र आत्मशब्दस्याचिद्व्यावर्तकतोपपादनाच्च अचेतनशङ्कोत्थानासम्भवात्। स्वशब्दस्य 'सदायतनास्सत्प्रतिष्ठा':इति सद्विद्यावाक्यविषयत्वं चायुक्तम्, अपक्षधर्मत्वात्। सद्विद्यावाक्यं हि नात्र श्रूयते. इह तदैकार्थ्यं हेतुतया विवक्षितमिति चेत्; तर्हि विगीतस्य हेतुतयोपन्यासो न घटते। द्युपृथिव्याद्यायतनप्रतिपादकवाक्यस्य परमात्मप्रतिपादकवाक्यान्तरैकार्थ्ये हि पूर्वपक्षिणो विमतिपदम्। द्वितीयसूत्रस्य च 'अन्या वाचो विमुञ्चथ'इति श्रवणात् वाग्विमुक्तेर्ज्ञेयत्वव्यपदेशपरत्वमयुक्तम्। "नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति"इति वाक्यस्य विमुक्तिशब्दार्थस्य उपैतिशब्दार्थस्य च स्मरणतः प्रत्यभिज्ञापकत्वान्मुक्तोपसृप्यत्वव्यपदेशस्य। विमुञ्चथेति श्रुतस्य वाक्कर्मकस्य मुचिधातोः प्रत्ययाविपरिणामेन अवाक्कर्मक-

* भावप्रकाशिका *

त्वान्न पश्यत इत्यर्थः। (इह कैश्चिदित्यादि) (धारकत्वयोगादिति) इदमुपलक्षणम्. परावरत्वयोगादित्यपि द्रष्टव्यम्। ( सद्विद्यावाक्यविषयत्वं चेति ) परैर्हि स्वशब्दादित्यस्यात्मशब्दादित्यप्यर्थः, प्रकरणान्तरे आयतने सदायतना इति स्वासाधारणमच्छब्दप्रयोगात् द्युभ्वाद्यायतनं परमात्मेत्यर्थोऽपि वर्णित इति भावः। ( द्वितीयसूत्रस्य चेति ) यद्यप्यस्मिन्नपि सूत्रे अविद्याविमुक्तप्राप्यत्वव्यपदेशादिति योजनान्तरमप्युक्तम्, तथापि तस्याभिमतत्वात् विमुक्तेः ज्ञेयत्वव्यपदेशादिति

* श्रुतप्रकाशिका *

मुक्तप्रत्यभिज्ञानं ह्यस्वरसम्। उपसृप्यशब्दस्य ज्ञेयवाचित्वं चास्वारसिकम्, स्वारसिकार्थानुपपत्त्यभावे अस्वरसार्थौचित्यातिशयाभावे वा ऽस्वरसार्थस्वीकारोऽनुपपन्नः। प्राणभृच्चेतिसूत्रपृथक्करणं चायुक्तम्, हेतुवैषम्याभावात् उभयव्यावर्तकहेतूपादानवतैकेन सूत्रेणैवोभयव्युदासदर्शनाच्च। यथा 'विशेषणभेदव्यपदेशाभ्यां च नेतरौ' 'अत एव न देवता भूतं च' इति च। उपरितनसूत्रोक्तहेतूनां नानुमानमिति प्रतिज्ञायामनन्वयात् पृथग्योगकरणमिति चेन्न, नानुमानमित्युपादानस्य दृष्टान्तार्थत्वात् दृष्टान्तार्थत्वाभावेऽपि जीवव्यावर्तकानामुत्तरसूत्रहेतूनां किम्पुनर्न्यायेन प्रधानव्यावर्तकत्वाच्च। भेदव्यपदेशादितिसूत्रस्य च तमेवैकं जानथेतिवाक्यविषयत्वादपि 'जुष्टं यदा पश्यत्यन्यमीश'मितिवाक्यविषयत्वमुचितम्, व्यपदेशशब्दस्वारस्यात्। कर्मकर्तृभावो हि भेदगमकः, अन्यशब्दश्च भेदाभिधायकः। द्वा सुपर्णेतिवाक्यस्य च बुद्धिजीवपरत्वपक्षोऽनुपपन्नः, प्राणभृच्चेति जीवव्यावृत्तिं प्रतिज्ञाय बुद्धिव्यावृत्त्युपपादनस्यासङ्गतत्वात्। जीव एवोपाधिव्यवच्छेदविरहितः परमात्मा भवतीति नासङ्गतिरिति चेन्न, वृक्षशब्दविवक्षितदेहोपाधिपरिष्वङ्गवेलायामेवानश्नतोऽन्यस्य स्थितेर्हेतुतयोपन्यासायोगात्। अनश्नन्नित्यनेन प्रतीयमानस्याप्युपाधिपरिष्वङ्गस्यापारमार्थ्यं विवक्षितमिति चेत्; तर्ह्यनेन वाक्येन अपरमार्थोपाध्य-

* भावप्रकाशिका *

योजनान्तरमेव स्वानभिमततया दूष्यत इति द्रष्टव्यम्। वाक्कर्तृकमुक्तप्रत्यभिज्ञानमिति पाठस्समीचीनः। वाग्विमुक्तेरिति परैरुक्तेरिति द्रष्टव्यम्। तत्र च प्रत्ययविपरिणामेनेत्यस्य वाच इति द्वितीयाया विपरिणामेनेत्यर्थः। वाक्कर्तृकेतिपाठे मुक्तेत्यत्रादिकर्मणि क्तः कर्तरीति कर्तरि क्तप्रत्ययः। वाग्रूपं कर्म वाक्कर्मकप्रत्ययः स्वार्थिकः द्वितीयेति योगविभागात्समासः। प्रत्ययविपरिणामेनेत्यस्य आदिकर्मणि क्त इति क्तप्रत्ययविपरिणामेनेत्यर्थः। ( जीवव्यावृत्तिं प्रतिज्ञायेति ) स्थित्यदनाभ्यां चेतिसूत्रेण प्राणभृदित्यस्यैव साध्यत्वादिति भावः। ( बुद्धिव्यावृत्त्युपपादनस्येति ) अत्तृत्वानत्तृत्वाभ्यां जीवव्यावृत्तेरेवोपन्यसनीयत्वादिति भावः। ( परमात्मा भवतीति ) ततश्च प्राणभृन्न भवतीत्यस्यान्तःकरणाद्युपाधिसम्पिण्डितचैतन्यं न भवतीत्येवार्थः, न तु उपाधिविनिर्मुक्तजीवचैतन्यमपि न भवतीत्यर्थः, येनासङ्गतिस्स्यादिति भावः। ( हेतुतयोपन्यासायोगादिति ) उपाधिसंयोग-

* श्रुतप्रकाशिका *

न्वयो न प्रतिषिद्धः स्यात्, किन्त्वनुमतस्स्यात् । द्युभ्वाद्यायतनं न प्राणभृत् स्थित्य-दनाभ्यामित्युक्ते परमार्थतोऽनश्नत्तया स्थितेरपरमार्थतोऽनृत्वाच्चेत्युक्तं भवति, अपरमार्थोपाध्यवच्छिन्नात्मत्वमेव हि त्वन्मते जीवत्वम्, ततश्च जीवव्यावृत्तिं प्रति-ज्ञाय जीवत्वाविरुद्धतदुपपादकहेतूपन्यासो न घटते। उपाधिमिथ्यात्वमेवाधिकरण-प्रतिपाद्यमिति चेत्; तर्हि स्वशब्दमुक्तोपसृप्यत्वभेदव्यपदेशादिहेतवो न घटन्ते, तेषां मिथ्यात्वसाधकत्वाभावात् भवत्पक्षे विश्वमिथ्यात्वस्य प्रथमाधिकरणसिद्धत्वेन इहोपाधिमिथ्यात्ववर्णनवैयर्थ्याच्च। द्वासुपर्णेतिमन्त्रार्थस्य च हेतुत्वोक्तिरयुक्ता, अत्रो-पाधिमिथ्यात्वाप्रतीतेः । न ह्येकवृक्षाधिरूढयोः पक्षिणोर्मिथो विरुद्धाकारयोर्भे-देऽभिहिते वृक्षमिथ्यात्वमुक्तं भवति । यदपि कैश्चिदुत्प्रेक्षितं द्युभ्वाद्यायतनमि-त्यादिसूत्रद्वयमात्मविषयत्वप्रतिपादकम्, नानुमानमतच्छब्दादिति प्रधानव्युदासक-मिति। तदयुक्तम्. तथा हि, आद्यस्य सूत्रद्वयस्य निरसनीयशङ्काभावात्तत्प्रणयनवैयर्थ्यं स्यात्। न च तृतीयसूत्रं प्रधानव्यावृत्तिपरम्, मुक्तोपसृप्यतया व्यपदिष्टस्यात एव जीवादपि व्यावृत्तस्य प्रधानत्वशङ्कानुदयात्; अत आनुमानोपादानं दृष्टान्तार्थम्; अत एव पृथग्योगकरणं चानुपपन्नमित्युक्तम्। अतस्तृतीयसूत्रं व्यतिरेकेण जीवव्यावृ-त्त्युपपादनपरम्। 'तद्विज्ञानेन परिपश्यन्ति धीराः आनन्दरूपममृतं यद्विभाति' 'यद-दात्मविदो विदु'रितिभेदव्यपदेशेन मुक्तव्यावृत्तिपरं चतुर्थसूत्रमित्यप्ययुक्तम्, मुमु-क्षुभिर्ज्ञातव्यत्वं मुक्तव्यावर्तकम्, न वा? । प्रथमे तमेवैकं जानथेतिवाक्यादेव मुक्तव्या-वृत्तिसिद्धेः भेदव्यपदेशादिति वाक्यान्तरविषयसूत्रप्रणयनवैयर्थ्यम् । द्वितीये सुतरां वैयर्थ्यम्, तमेवैकं जानथेतिवाक्योदितज्ञातृज्ञेयभाववत् परिपश्यन्तीत्यादिवाक्यो-क्तद्रष्टृदृश्यभावस्यापि मुक्तव्यावर्तनासामर्थ्यात्, अतो यथोक्त एव सूत्राणामर्थः ॥

ॐ भावप्रकाशिका ॐ

दशायां कल्पितस्य भोक्तृत्वस्य निष्कृष्टचैतन्येपि सत्त्वात्, इतरथा च कर्तृत्वादि-बन्धस्य मोक्षस्य च वैयधिकरण्यप्रसङ्गादिति भावः । द्वासुपर्णावित्यस्य विशिष्ट-निष्कृष्टचैतन्यविषयत्वे गृहान्तःप्रविष्टे एकस्मिन् पुरुषे द्वौ पुरुषावित्यपि व्यप-देशप्रसङ्गात्. विशिष्टनिष्कृष्टभेदेन द्वित्वसम्भवादिति भावः । (व्यतिरेकेण जीवव्यावृत्तीति) भवच्छब्दादिति व्यतिरेकेणेत्यर्थः ॥

छान्दोग्ये सप्तमप्रपाठके—"अधीहि भगव इति होपससाद सनत्कुमारं नारदः ।

# भूमा सम्प्रसादादध्युपदेशात् ॥ ७ ॥

२ अधिकरणम्

इदमामनन्ति च्छन्दोगाः 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्'

* श्रुतप्रकाशिका *

॥ भूमा सम्प्रसादादध्युपदेशात् ॥ परमात्मप्रकरणाविच्छेदेन परमात्मपरत्वं साधितम्, तर्हि जीवप्रकरणाविच्छेदेन जीवपरत्वमिति शङ्कोत्थानात् सङ्गतिः, इयं प्रमाणद्वारिका. पूर्वम् 'ओतं मनस्सह प्राणैश्च सर्वैः' इति प्राणसम्बन्धिनः परमात्मत्वमुक्तम्, अत्र प्राणसम्बन्धिन एव हिंसायोग्यत्वश्रवणाज्जीवत्वं प्रतीयत इत्यर्थद्वारा च सङ्गतिः । विषयमाह ( इदमिति ) भूमशब्दस्य रूढितोऽवयवशक्त्या वा जीवपरमात्मोपस्थापकत्वसम्भवे हि प्रत्यगात्मा वा परमात्मा वा भूमशब्दवाच्य इति संशयोदयः, अन्यथा भूमशब्दस्य कोऽर्थ इति हि वक्तव्यम्; अतो विशेषविषयसंशयसम्भवप्रदर्शनाय भूमशब्दव्युत्पत्तिप्रकारमनुसरन्विचार-

७ भावप्रकाशिका ७

तँ होवाच् यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति" इति एतावज्ज्ञान इत्युक्त्वा मदुपासनं कुर्वित्यर्थः । 'स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सोहं भगवो मन्त्रविदेवास्मि नात्मवित् । श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदिति । सोहं भगवश्शोचामि। तन्मा भगवान् शोकस्य पारं तारयत्विति। तँ होवाच नामोपास्वेति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति । यो नाम ब्रह्मेत्युपास्ते अस्ति भगवो नाम्नो भूय इति नाम्नो वा व भूयोस्तीति तन्मे भगवान् ब्रवीत्विति, वाग्वा व नाम्नो भूयसी वाचमुपास्वेति । अस्ति भगवो वाचो भूय इति। वाचो वा व भूयोस्तीति तन्मे भगवान् ब्रवीत्विति । मनो वाव वाचो भूयः। अस्ति भगवो मनसो भूय इति मनसो वा व भूयोस्तीति तन्मे भगवान् ब्रवीत्विति सङ्कल्पो वा व मनसो भूयान् अस्ति भगवस्सङ्कल्पाद्भूय इति सङ्कल्पाद्वा व भूयोस्तीति तन्मे भगवान् ब्रवीत्विति चित्तं वा व सङ्कल्पाद्भूयः अस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोस्तीति तन्मे भगवान् ब्रवीत्विति ध्यानं वाव चित्ताद्भूयः विज्ञानं वाव ध्यानाद्भूयः अन्नं वाव बलाद्भूयः आपो वा वान्नाद्भूयस्तेजो वावाद्भ्यो भूयः आका-

इति । अत्रायं भूमशब्दो भावप्रत्ययान्तो व्युत्पाद्यते । तथा हि; पृथ्वादिषु बहुशब्दः पठ्यते, ततः "पृथ्वादिभ्य

* श्रुतप्रकाशिका *

विषयसंशयसिद्धिं दर्शयति ( अत्रायं भूमशब्द इति ) भावप्रत्ययान्तत्वमुपपादयति ( तथा हीति ) आकृतिगणत्वव्यावृत्त्यर्थं पठ्यत इत्युक्तम् । ( बहोरित्यादि ) बहुशब्दात्परस्य प्रत्ययस्यादेरचो लोपः, "आदेः परस्य" इति सूत्रवशात् बहुशब्दस्य भूशब्दादेशश्चेत्येवं प्रकृतिप्रत्यययोर्विकारः । 'बहवः पुरुषा राजन्नुताहो एक एव नु" "द्व्येकयोर्द्विवचनैकवचने" "बहुषु बहुवचनम्" इतिसङ्ख्यायामपि प्रयोगो दृश्यते ।

७ भावप्रकाशिका ७

शो वाव तेजसो भूयान् स्मरो वावाकाशाद्भूयान्, आशा वा व स्मराद्भूयसी" इत्यादिप्रश्नप्रतिवचनानन्तरं प्राणो वाशाया भूयान्, यथा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्. प्राणः प्राणेन याति प्राणः प्राणं ददाति, प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः, प्राणो ब्राह्मणः, स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वा आचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह, धिक् त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमसि आचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति । अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासंव्यतिषं दहेत्, नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति । प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन् एवंविदेवंमन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीति अतिवाद्यसीति ब्रूयान्नापह्नुवीत । एष तु वा अतिवदति यस्सत्येनातिवदति सोऽहं भगवस्सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति । यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति यदा वै मनुतेऽथ विजानात्यथ मनुते मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति । यदा वै श्रद्दधाति अथ मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति । यदा निस्तिष्ठत्यथ श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास

इमनिज्वा" इति इमनिच्प्रत्यये कृते "बहोर्लोपो भू च बहोः" इति प्रकृतिप्रत्यययोर्विकारे भूमेति भवति । भूमा– बहुत्वमित्यर्थः । अत्र चायं बहुशब्दो वैपुल्यवाची, न सङ्ख्यावाची; 'यत्रान्यत्पश्यति तदल्पम्'

* श्रुतप्रकाशिका *

"अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यत्" इति वैपुल्येपि प्रयोगोऽस्ति; तस्मात् सङ्ख्याव्यावृत्त्यर्थमाह (अत्र चायमिति) कथं वैपुल्यपरत्वमित्यत्राह (यत्रान्यदिति)। ननु सङ्ख्यावाचिशब्दप्रतियोगित्वादल्पशब्दोऽपि सङ्ख्यापरः स्यात्। नैवम्; बहुशब्दस्य सङ्ख्याविपुलत्वयोः प्रयोगदर्शनादल्पशब्दस्य सङ्ख्यायां प्रयोगादर्शनाच्चानन्यथासिद्धाल्पशब्दानुगुणार्थो बहुशब्द इति । धर्मिपरत्वमुपपादयति

७ भावप्रकाशिका ७

इति। यदा वै करोत्यथ निस्तिष्ठति। यदा वै सुखं लभते अथ करोति सुखं भगवो विजिज्ञास इति यो वै भूमा तत्सुखं भूमानं भगवो विजिज्ञास इति यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा । अथ यत्रान्यत्पश्यत्यन्यच्छृणोति अन्यद्विजानाति तदल्पम्. यो वै भूमा तदमृतम् अथ यदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नीति। यदि वा न महिम्नीति, गो अश्वमिह महिमेत्याचक्षते, हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति, नाहमेवं ब्रवीमीति होवाच । अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति। स एवाधस्तात्स उपरिष्टात्सपश्चात्स पुरस्तात्स दक्षिणतस्स उत्तरतस्स एवेदँ सर्वमित्यथातोऽहङ्कारादेश एव. अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणत अहमुत्तरत अहमेवेदं सर्वमिति। अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति, स एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दस्स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति, अथ येऽन्यथातो विदुरन्यराजानस्तेऽक्षय्यलोका भवन्ति तेषाँ सर्वेषु लोकेषु कामचारो भवति । तस्य हवा एतस्यैवं पश्यत एवंमन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशा आत्मतः कर्माणि आत्मत एवेदँ सर्वमिति। तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखतां सर्वं ह पश्यः पश्यति

इत्यल्पप्रतियोगित्वश्रवणात । अन्यशब्दनिर्दिष्टधर्मिप्रतियोगिप्रतिपादनपरत्वादेव धर्मिपरश्च निश्चीयते; न धर्ममात्रपरः । तदेवं भूमेति विपुल इत्यर्थः । वैपुल्यविशेष्यश्चेहात्मेत्यवगतः "तरति शोकमात्मवित्"इति प्रक्रम्य भूमविज्ञानमुपदिश्य- "आत्मैवेदं सर्वम्"इति तस्यैवोपसंहारात् । अत्र संशय्यते, किमयं भूमगुण-

* श्रुतप्रकाशिका *

( अल्पेति ) धर्मवाचिभूमशब्दप्रतियोगित्वादल्पशब्दोऽपि धर्मपरः स्यादिति चेन्न; तत्रापि धर्मिवाचिषष्ठ्यन्तशब्दान्तराभावात् 'यत्र नान्यत् पश्यती'तिश्रुतेश्च । न हि धर्ममात्रे ज्ञाते धर्मिस्वरूपं ज्ञातं भवतीति । एवं सिद्धमर्थमाह ( तदेवमिति ) वैपुल्यविशेष्यः क इत्याकाङ्क्षायामाह ( वैपुल्येति ) कथमात्मनो विशेष्यत्वमित्यत्राह ( तरतीति ) उपक्रमोपसंहारयोरात्मशब्ददर्शनादित्यर्थः । ( अत्रेति ) किं भूमा प्रत्यगात्मा? उत परमात्मा?। तदर्थं किं प्राणशब्दनिर्दिष्टे प्रत्यगात्मनि प्रश्नप्रतिवचनसमाप्त्या भूमशब्दस्तत्र पर्यवसितः, उतातिरिक्तविषयः?। किम् 'एष तु वा अतिवदति यस्सत्येनातिवदति' इति प्राणातिवादिनोऽङ्गतया सत्यवचनं विधत्ते? उत सत्यशब्दवाच्यपरोपासकस्यातिवादित्वं वदति?। किमस्मिन् वाक्ये प्राणातिवादिनः प्रत्यभिज्ञास्ति, नेति?। तुशब्दः किं प्रत्यभिज्ञाविरोधी, नेति। यदा तुशब्दः प्रत्यभिज्ञाविरोधी न भवति तदा प्राणातिवादिनः प्रत्यभिज्ञासम्भवात् 'एष तु वा'

* भावप्रकाशिका *

सर्वमाप्नोति सर्वशः"इति। हिंसायोग्यत्वश्रवणाज्जीवत्वमित्यस्यानन्तरं सिद्धवत्कृत्य पूर्वोत्तरपक्षौ प्रवर्त्येते इत्यर्थद्वारा सङ्गतिरिति ग्रन्थोपेक्षितः, इतरथा प्राणसम्बन्धिनो जीवत्वस्य पक्षद्वयाभ्युपेतत्वेन प्राणसम्बन्धिनो जीवत्वं पूर्वपक्षीक्रियत इति वा सिद्धान्तीक्रियत इति वा वक्तुं शक्यत्वात्. ततश्च पूर्वं प्राणसम्बन्धिनः परमात्मत्वं समर्थितम्, इह प्राणसम्बन्धिनो भूमत्वं पूर्वपक्षीकृत्य निरस्यत इति पर्यवसितोऽर्थः। ननु धर्मिवाचिषष्ठ्यन्तशब्दान्तरनिर्देशाभावेपि धर्मवाचिभूमशब्दप्रतियोगितया निर्देशादेव धर्मपरत्वमस्त्वित्यस्वरसादाह (यत्र नान्यत्पश्यतीति श्रुतेश्चेति)

विशिष्टः प्रत्यगात्मा, उत परमात्मा? इति। किं युक्तम्? प्रत्यगात्मेति। कुतः? 'श्रुतं ह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मवित्' इत्यात्मजिज्ञासयोपसेदुषे नारदाय नामादिप्राणपर्यन्तेषु उपास्यतयोपदिष्टेषु 'अस्ति भगवो नाम्नो भूयः' 'अस्ति भगवो वाचो भूयः' इत्यादयः प्रश्नाः, "वाग्वा व नाम्नो भूयसी" 'मनो वाव वाचो भूयः" इत्यादीनि च प्रतिवचनानि प्राणात् प्राचीनेषु दृश्यन्ते; प्राणे तु न पश्यामः, अतः प्राणपर्यन्त एवायमात्मोपदेश इति प्रतीयते, तेनेह प्राणशब्दनिर्दिष्टः प्राणसहचारी प्रत्यगात्मैव, न वायुविशेषमात्रम्।

* श्रुतप्रकाशिका *

इतिवाक्यं तदङ्गभूतसत्यवचनविधिपरमिति प्राणातिरिक्तवस्त्वभावात् भूमशब्दः प्राणे पर्यवसित इति भूमा प्रत्यगात्मेति पूर्वः पक्षः। यदा तुशब्दः प्रत्यभिज्ञाविरोधी भवति तदा प्राणातिवादिनः प्रत्यभिज्ञानाभावेन 'सत्येनातिवदती'तिवाक्यस्य सत्योपासकातिवदनपरत्वेन प्राणातिरिक्तवस्तुसद्भावेन प्रश्नप्रतिवचनसमाप्तावपि भूमशब्दस्य प्राणपर्यवसितत्वाभावात् भूमा परमात्मेति राद्धान्तः। (तेनेति) तेन— आत्मजिज्ञासया प्रक्रान्ते प्रकरणे प्राणपर्यन्तोपास्योपदेशेन हेतुनेत्यर्थः। प्राणशब्दः कथमात्मनि वर्तत इत्यत्राह (प्राणसहचारीति) इतरव्याख्यातृषु कैश्चित् पञ्चवृत्तिः प्राणः प्राणशब्दवाच्य इत्युक्त्वा तत्प्रकरणाविच्छेदेन भूमा प्राण इति पूर्वपक्षं कृत्वा प्रकरणविच्छेदेन भूमा परमात्मेत्युक्तम्। कैश्चिच्च पञ्चवृत्तिप्राणस्य प्राणशब्दवाच्यत्वमभ्युपगम्य पूर्वपक्षे सिद्धान्ते च तत्प्रकरणविच्छेदं वदद्भिः भूमा प्रत्यगात्मेति पूर्वपक्षं कृत्वा परमात्मेति सिद्धान्तितम्। तदुभयमाशङ्क्याह (न वायु-

* भावप्रकाशिका *

सप्राणनिष्प्राणविषयोपमर्दतदभावयोरिति पाठः क्वचिद्दृश्यते, सप्राणनिष्प्राणविषयोपमर्दयोरितिपाठस्समीचीनः। सप्राणविषयोपमर्दे सजीवशरीरोपमर्दनिमित्त-

'प्राणो ह पिता प्राणो ह माता' इत्यादयश्च प्राणस्य चेतनतामवगमयन्ति ; 'पितृहा मातृहा' इत्यादिना सप्राणेषु पितृप्रभृतिषूपमर्दकारिणि हिंसकत्वनिमित्तोपक्रोशवचनात्तेष्वेव विगतप्राणेष्वत्यन्तोपमर्दकारिण्यप्युपक्रोशाभाववचनाच्च हिंसायोग्यश्चेतन एव प्राणशब्दनिर्दिष्टः । अप्राणेषु स्थावरेष्वपि चेतनेषूपमर्दभावाभावयोर्हिंसातदभावदर्शनादयं हिंसायोग्यतया

* श्रुतप्रकाशिका *

विशेषमात्रमिति ) उपक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वसिद्धेः प्राणस्य चात्मत्वयोगादिति भावः । हेत्वन्तरमाह (प्राणो हेति ) न हि केवलं देहस्य वायुविशेषस्य वा पितृत्वादिकं वेदान्तिषु कश्चिदभ्युपगच्छति । हेत्वन्तरमाह ( पितृहेति ) अत्र प्रकरणे सप्राणेषु हिंसके हिंसानिमित्तोपक्रोशवचनं दृश्यते, अप्राणेषु हिंसके हिंसानिमित्तोपक्रोशाभावश्च दृश्यते, लोके च सजीवनिर्जीवशरीरयोरुपमर्दकारिषूपक्रोशतदभावौ दृश्येते, न हि निष्क्रष्टात्मनः केवलस्य शरीरस्य वा हिंस्यत्वम्, अपि त्वचिद्विशिष्टस्यैव चेतनस्य, तस्मात्सप्राणनिष्प्राणविषयोपमर्दतदभावयोः सजीवनिर्जीवशरीरोपमर्दनिमित्तहिंसातदभावश्रवणाद्धिंसाकर्मत्वं प्राणशब्दवाच्यस्य जीवत्वसाधकमित्यर्थः । उपक्रोशतदभावौ पञ्चवृत्तिप्राणवत्त्वतद्रहितत्वनिबन्धनौ स्याताम्, न तु सजीवत्वनिर्जीवत्वकृतावित्यत्राह, ( अप्राणेष्विति ) ( स्थावरेष्वपि चेतनेष्विति ) " ओषधिवनस्पतयो यच्च किञ्चित् प्राणभृत् स आत्मानमा-

* भावप्रकाशिका *

हिंसाया निष्प्राणशरीरोपमर्दे निर्जीवशरीरोपमर्दनिमित्तहिंसाभावस्य च श्रवणादिति तस्यार्थः । ( अप्राणेष्वितीति ) ननु मूलनिषिक्तसलिलदोहलपार्थिवधातूनामभ्यादानादचेतनेष्वपि प्राणोऽस्त्येव, उक्तं च न्यायसिद्धाञ्जने 'स्थावरेष्वपि तत्सत्त्वम्" अतः कथमेतदिति चेत् . सत्यं, प्राणोऽस्त्येव. अथापि 'भेदश्रुतेर्वैलक्षण्यात्' इतिसूत्रप्रतिपादितं पञ्चधा विभज्य शरीरधारणरूपं यत्प्राणासाधारणकार्यं तदभावादप्राणत्वोक्तिः । अत एव 'नतु दृष्टान्तभावा'दिति सूत्रभाष्ये स्थावरेषु प्राण-

निर्दिष्टः प्राणः प्रत्यगात्मैवेति निश्चीयते, अत एव च अरनाभिदृष्टान्ताद्युपन्यासेन प्राणशब्दनिर्दिष्टः पर इति न भ्रमितव्यम्। परस्य हिंसाप्रसङ्गाभावात्, जीवादितरस्य तद्भोग्यभोगोपकरणभूतस्य कृत्स्नस्याचिद्वस्तुनो जीवायत्तस्थितित्वेन प्रत्यगात्मन्येवारनाभिदृष्टान्तोपपत्तेश्च। अयमेव च प्राणशब्दनिर्दिष्टो भूमा, 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य 'अदो वाव

* श्रुतप्रकाशिका *

विस्तरां वेद' 'शरीरजैः कर्मदोषैर्याति स्थावरतां नरः' इत्यादिश्रुतिस्मृतिभिः स्थावराणां ज्ञातृत्वकर्मफलभोक्तृत्वावगमात्तेषां चेतनत्वं वेदान्तान् स्मृतिवचनानि च प्रमाणयद्भिरभ्युपेत्यमिति भावः। प्रक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वं मातृत्वपितृत्वादिकं हिंसायोग्यत्वं चेति त्रितयं जीवत्वसाधकं पूर्वपक्षे, सिद्धान्ते तु पितृत्वादिकं हिंसाकर्मत्वं च द्वयमेव जीवत्वसाधकमिति भिदा। अरनाभिदृष्टान्तपूर्वकसर्वाधारत्वोपन्यासेन प्राणशब्दनिर्दिष्टः परमात्मेति प्रतीयत इत्यत्राह (अत एवेति) दृष्टान्तादीत्यादिशब्देन धारकत्वम्. प्राणशब्दनिर्दिष्टस्य मुख्यप्राणत्वशङ्कानिरासहेतुरेव परमात्मत्वशङ्काया अपि निरासहेतुरिति सूचयत्येवकारः। कुत इत्यत्राह (परस्येति) हिंसाया अभावो मुक्तस्याप्यस्तीति तद्व्यावृत्त्यर्थं हिंसाप्रसङ्गाभावादित्युक्तम्। तर्ह्यरनाभिदृष्टान्तः कथमित्यत्राह (जीवादितरस्येति) एवं हिंसायोग्यत्वं पञ्चवृत्तिप्राणात् परमात्मनश्च व्यावर्तकमित्युक्तं भवति; एवं जीवः प्राणशब्दवाच्योऽस्तु, ततः किं भूमविशिष्टस्य जीवत्व इत्यत्राह (अयमेव चेति) प्रकरणाविच्छेदं हेतुमाह (अस्ति भगव इति) प्रश्नप्रतिवचनाभावः प्रकरणा-

ও भावप्रकाशिका ও

सद्भावेपि तस्य पञ्चधावस्थाय शरीरधारकत्वेनावस्थानं नास्तीति वक्ष्यते। आविस्तरां वेद– सम्यग्वेदेत्यर्थः। ननु प्रक्रान्तस्यात्मोपदेशस्य प्राणपर्यन्तत्वात्प्राणः प्रत्यगात्मेति सिद्धान्तिना अनभ्युपेतत्वात्सिद्धान्ते प्राणः प्रत्यगात्मा न स्यादित्यत आह (प्रक्रान्तस्यात्मोपदेशस्येत्यादिना) (धारकत्वमिति) विवक्षितमिति शेषः।

प्राणाद्भूयः' इति प्रतिवचनस्य चाभावाद्भूमसंशब्दनात्प्राक्प्राणप्रकरणस्याविच्छेदात्। किञ्च प्राणवेदिनोऽतिवादित्वमुक्त्वा तमेव 'एष तु वा अतिवदति' इति प्रत्यभिज्ञाप्य 'यस्सत्येनातिवदति' इति तस्य सत्यवदनं प्राणोपासनाङ्गतयोपदिश्य उपादेयस्य सत्यवदनस्य शेषितया पूर्वनिर्दिष्टप्राणयाथात्म्यविज्ञानं 'यदा वै विजानात्यथ सत्यं वदति' इत्युपदिश्य तत्सिद्ध्यर्थं च मननश्रद्धानिष्ठाप्रयत्नानुपदिश्य तदारम्भाय च प्राप्यभूतप्राणशब्दनिर्दिष्टप्रत्यगात्मस्वरूपस्य सुखरूपताज्ञानमुपदिश्य तस्य च सुखस्य विपुलता "भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्यते। तदेवं प्रत्यगात्मन एवाविद्यावियुक्तं रूपं विपुलसुखमित्युपदिष्टमिति 'तरति शोकमात्मवित्' इत्युपक्रमाविरोधश्च; अतो भूमगुणविशिष्टः प्रत्यगात्मा-यत एवं भूमगुणविशिष्टः प्रत्यगात्मा अत एवाहमर्थे प्रत्यगात्मनि 'अहमेवाधस्तादहमुपरिष्टात्'

* श्रुतप्रकाशिका, *

विच्छेदहेतुः, तदविच्छेदो भूमविशिष्टस्य जीवत्वहेतुरित्यर्थः। तुशब्दस्य प्रकरणविच्छेदकत्वमाशङ्क्याह (किञ्चेति) 'एष तु वा अग्निहोत्री यस्सत्यं वदति' इत्यत्र अग्निहोत्रिवत् प्राणातिवादिनः प्रत्यभिज्ञानाच्चस्यैव तदङ्गतया सत्यकथनमुक्तमित्यर्थः। कथं जीवस्वरूपस्य विपुलसुखत्वम्? तद्धि शोकप्रचुरमित्यत्राह (अविद्यावियुक्तं रूपमिति) उपक्रमे 'तरति शोकमात्मवि'दिति शोकाविष्टत्वं जीवस्य प्रतिपन्नम्, तत्कथं विपुलसुखत्वमित्यत्राह (उपक्रमाविरोधश्चेति) बद्धो हि सशोकः, मुक्तस्वरूपं विपुलसुखमित्यर्थः। अहंशब्दनिर्देशं च हेतुमाह (यत एवमिति) कथमहंशब्दनिर्देशः प्रत्यगात्मत्वसाधक इत्यत्राह (अहमर्थे प्रत्यगात्मनीति) अहम-

इत्यारभ्य 'अहमेवेदं सर्वम्'इति प्रत्यगात्मनो वैभवमुपदिशति। एवं प्रत्यगात्मत्वे निश्चिते सति तदनुगुणतया वाक्यशेषो नेतव्य इति॥

एवं प्राप्तेऽभिधीयते-- भूमा सम्प्रसादादध्युपदेशात्। भूमगुणविशिष्टो न प्रत्यगात्मा, अपि तु परमात्मा। कुतः? सम्प्रसादादध्युपदेशात्-- सम्प्रसादः प्रत्यगात्मा, 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्युपनिषत्प्रसिद्धेः। संप्रसादात्-प्रत्यगात्मनोऽधिकतया भूमविशिष्टस्य सत्यशब्दाभिधेयस्योपदेशादित्यर्थः। सत्यशब्दाभिधेयं च परं

* श्रुतप्रकाशिका *

र्थस्य प्रत्यगात्मत्वादित्यर्थः। (तदनुगुणतयेति) स्वमहिमप्रतिष्ठितत्वादिपराणि वाक्यान्यस्वरसं योजनीयानीत्यर्थः॥-सूत्रं व्याचष्टे (भूमेति) शुद्धस्वरूपाभिप्रायेण सूत्रे सम्प्रसादनिर्देशः कृतः। सम्प्रसादशब्दस्य प्रत्यगात्मपरत्वं कथमित्यत्राह (एष इति) हेतुवाचिपदेषु सम्प्रसादशब्दो व्याख्यातः, पदान्तरद्वयं व्याचष्टे (संप्रसादादिति) न हि प्राणकथनानन्तरं भूमविशिष्टस्याधिक्त्वं श्रूयत इत्यत्राह (सत्यशब्दाभिधेयस्येति) सत्यशब्दात् पश्चात्प्रकरणविच्छेदाभावेन सत्यशब्दवाच्य एव भूमविशिष्ट इति भावः। भूमविशिष्टः सत्यशब्दाभिधेयोऽस्तु, ततः किं तस्य भूम्नः परमात्मत्वसिद्धेरित्यत्राह (सत्यशब्दाभिधेयं चेति) सत्यशब्दाभिधेयस्य तुशब्दोपेतातिवादिशब्देनाधिकतयोपदेशोऽस्तु, आधिक्यस्य च प्राणशब्दवाच्यजीवप्रतियोगिकत्वं कथम्? न हि 'मनो वाव वाचो भूयः' इत्यादिवत् पञ्चम्यन्तः प्राणशब्दः श्रुतः, अतो न सत्यस्य प्राणशब्दवाच्याज्जीवादर्थान्तरत्वम्, अपि तु पूर्वनिर्दिष्टाया आशाया अधिकतयोपदिष्टः प्राण एव सत्यवाच्यः,

७ भावप्रकाशिका ७

(हेतुवाचिपदेष्विति) 'सम्प्रसादादध्युपदेशात्' इति त्रिषु पदेषु मध्य इत्यर्थः।

ब्रह्म । एतदुक्तं भवति, यथा नामादिषु प्राणपर्यन्तेषु पूर्वपूर्वाधिकतयोत्तरोत्तराभिधानात्पूर्वेभ्य उत्तरेषा-मर्थान्तरत्वम् ; एवं प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽधिकतया निर्दिष्टस्सत्यशब्दाभिधेयस्तस्मादर्थान्तर-भूत एव ; सत्यशब्दनिर्दिष्ट एव भूमेति सत्याख्यं परं ब्रह्मैव भूमेत्युपदिश्यत इति । तदाह वृत्तिकारः "भूमा त्वेवेति भूमा ब्रह्म नामादिपरम्परया आत्मन ऊर्ध्व-

* श्रुतप्रकाशिका *

परिशुद्धप्रत्यगात्मस्वरूपस्यापि 'सत्यं चानृतं च सत्यमभवत्'इत्यादाविव सत्य-शब्दवाच्यत्वं सम्भवेदित्यत्राह ( एतदुक्तं भवतीति ) पूर्वनिर्दिष्टादूर्ध्वमभिधानं हि पूर्वनिर्दिष्टप्रतियोगितयोत्तरोत्तरेषामधिकतयाऽर्थान्तरत्वे हेतुः । तस्य हेतोः सपक्षे व्याप्तिं दर्शयति ( यथेति ) एवंशब्देन हेतुरभिप्रेतः, उत्तरोत्तरनिर्दिष्टानां पूर्वपूर्व-निर्दिष्टादधिकतया अर्थान्तरप्रतिपादनप्रकरणत्वात् प्राणशब्दनिर्दिष्टादूर्ध्वं निर्दि-ष्टस्सत्यशब्दवाच्यस्तस्मात् प्राणादधिकतया अर्थान्तरभूत एवेत्यर्थः । ततः किं भूम-शब्दवाच्यस्य परमात्मत्व इत्यत्राह ( सत्यशब्देति ) अनेन पूर्वं सूत्राक्षर-योजनायामुक्तस्य सत्यशब्दाभिधेयस्येतिपदस्याभिप्रायो विवृतो भवति । ( तदा-हेति ) पूर्वनिर्दिष्टादधिकतयोत्तरोत्तरनिर्देशप्रकरणत्वात् प्राणशब्दवाच्याज्जीवा-दूर्ध्वमुक्तः सत्यशब्दवाच्य उपास्यो भूमा ततोऽधिकं परं ब्रह्मेति वृत्तिकारग्रन्थ-स्यार्थः । 'आत्मन ऊर्ध्व'मित्यनेन प्राणशब्दनिर्दिष्टस्य जीवात्मत्वं वृत्तिकाराभिम-तम्, न तु पञ्चवृत्तिप्राणपरत्वमित्यवगतम्, अतः प्राणशब्दवाच्यस्य जीवत्वमा-श्रित्यैव पूर्वपक्षसिद्धान्तवर्णनं वृत्तिकाराभिमतमिति ज्ञापनं वृत्तिकारग्रन्थोपादान-

* भावप्रकाशिका *

( पूर्वनिर्दिष्टादूर्ध्वमभिधानं हीति ) यद्यपि पूर्वत्र अदो वा वास्माद्भूयः इति कण्ठ-तोऽभिधानमस्ति, न प्रकृते ; तथापि आधिक्यस्य प्रतियोग्यपेक्षायाम् उपरितेषा-मितानभिकरणन्यायेनाव्यवहितप्राणस्यैवावधित्वेन ग्रहणमिति भाष्याभिप्राय इति भावः । ( अभिप्रायो विवृतो भवतीति ) स्वरूपस्वभावविकारशून्यतया परमात्मन

मस्योपदेशात्" इति । प्राणशब्दनिर्दिष्टादधिकतया सत्यस्योपदेशः कथमवगम्यत इति चेत् "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति" इति प्राणविदोऽतिवादित्वमुक्त्वा "एष तु वा अतिवदति यस्सत्येनातिवदति' इति सत्यवेदित्वेनातिवादिनं तुशब्देन पूर्वस्मादतिवादिनो व्यावर्तयति । अत एव 'एष तु वा अतिवदति'इत्यत्र प्राणातिवादिनो न प्रत्यभिज्ञा, अतोऽस्यातिवादित्वनिमित्तं सत्यं पूर्वातिवा-

* श्रुतप्रकाशिका *

फलम्; एवमधिकतयोपदेशसिद्धवत्कारेण सत्यस्य प्राणादधिकतया अर्थान्तरत्वमुक्तम् । अथ प्राणप्रतियोगिकार्थान्तरत्वहेतुत्वेनोक्तोऽधिकतयोपदेश एव कथम्? सत्यवचनं हि प्राणोपासनाङ्गतयोपदिष्टमित्युक्तमिति पराभिप्रायं शङ्कते (प्राणशब्देति) तुशब्देन प्रकरणविच्छेदान्नाङ्गविधिरिति प्रतिवदति (स वा एष इति) व्यावर्तयति— अधिकतया व्यावर्तयतीत्यर्थः । पूर्वनिर्दिष्टादुत्तरनिर्दिष्टस्याधिकत्वोपदेशपरप्रकरणत्वादिति भावः । उपासकाधिक्यात्तन्निमित्तोपास्याधिक्यं वक्तुं तुशब्दस्वारस्येनोपासकवैलक्षण्यमुक्तम्, तुशब्दो ह्यसङ्कुचितवृत्तिः धर्मधर्मिणोरविशेषेण भेदकः । ननु कथं तुशब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिः? एतच्छब्दसामर्थ्येन पूर्वातिवादी हि प्रत्यभिज्ञायत इत्यत्राह (अत एवेति) प्रकृतप्रकरिष्यमाणसाधारण एतच्छब्दः, नायमेकान्ततः प्रकृतमभिनिविशते, पाश्चात्ययद्वृत्तप्रतिनिर्देशरूपत्वाच्च नायं प्रकृतपरः, तुशब्दस्वारस्यं च प्रकरणविच्छेदकम्, अतः पूर्वातिवादिनः प्रत्यभिज्ञा नास्तीत्यतिवाद्यन्तरं प्रतिपन्नमित्यर्थः । अतिवाद्यन्तरप्रतिपत्तिरस्तु, ततः किं सत्यस्य प्राणशब्दवाच्यादधिकत्व इत्यत्राह (अतोऽस्येति)

* भावप्रकाशिका *

एव सत्यशब्दाभिधेयत्वमित्यभिप्रायो विवृतो भवतीत्यर्थः । ननु तुशब्दस्य विशेषार्थकस्य व्यावर्तकत्वमेव लभ्यते, न त्वधिकतया व्यावर्तकत्वमित्याशङ्क्य सत्यं तुशब्दस्य विशेषमात्रप्रदर्शकत्वम्, तथापि प्रकरणवशादाधिक्यसिद्धिरित्याह (पूर्वनिर्दि-

दित्वनिमित्तात्प्राणादधिकमिति विज्ञायते ॥ ननु च प्राणवेदिन एव सत्यवदनमङ्गत्वेनोपदिष्टम् ; अतः प्राणप्रकरणाविच्छेद इत्युक्तम् । नैतद्युक्तम् ; तुशब्देन ह्यतिवाद्यन्यः प्रतीयते, न तु तस्यैवातिवादिनः सत्यवदनाङ्गविशिष्टतामात्रम् । "एष तु वा अग्नि-होत्री यस्सत्यं वदति" इत्यादिष्वग्निहोत्र्यन्तराप्रतीतेः प्रतीतस्यैवाग्निहोत्रिणस्सत्यवदनाङ्गविधानमिति क्लिष्टा गतिराश्रीयते, अत्र त्वतिवाद्यन्तरत्वनिमित्तं सत्यश-

* श्रुतप्रकाशिका *

तुशब्दः पूर्वातिवादिनोऽतिशयितोपास्यान्तरविशिष्टमेवातिवाद्यन्तरं भिनत्ति, स्वोपास्यवस्त्वाधिक्यं ह्यतिवादनिमित्तम् । अतः प्राणातिवादिनोऽतिवदननिमित्तात्तदुपास्यात् प्राणादपि तदुत्तरवाक्यनिर्दिष्टस्य सत्यातिवादिनोऽतिवदननिमित्तं तदुपास्यं सत्यमधिकमित्यर्थः । अग्निहोत्रिवाक्यदृष्टान्ते तुशब्दस्य व्यभिचारं हृदि निधायातिवाद्यन्तराप्रतिपत्तिमुखेन चोदयति ( ननु चेति ) परिहरति ( नैतद्युक्तमिति ) अग्निहोत्रिवैषम्यं वक्ष्यंस्तुशब्दस्वारस्यादतिवाद्यन्तरप्रतिपत्तिमाह ( तुशब्देनेति ) अग्निहोत्रिवाक्यदृष्टाद्दार्ष्टान्तान्तिकस्य सत्यातिवादिवाक्यस्य वैषम्यं वक्तुं दृष्टान्ते स्वारस्यहानिमाह ( एष त्विति ) (अग्निहोत्र्यन्तराप्रतीतेरिति) अतिवादिस्थानीयोऽग्निहोत्री, उपासनस्थानीयमग्निहोत्रम्, द्रव्यदेवतास्थानीयमुपास्यम्। अत्र अग्निहोत्र्यन्तराप्रतीतिरग्निहोत्रान्तराप्रतीतेः, सा च द्रव्यदेवताविशेषाप्रतीतेः, सा च सत्यवचनशब्दस्य दध्यादिद्रव्यदेवताविशेषोपस्थापनासामर्थ्यात् ; एवमग्निहोत्र्यन्तरसमर्पकशब्दाभावात्तत्र तुशब्दस्वारस्यं भग्नमित्यर्थः । इहापि तर्ह्यतिवाद्यन्तराप्रतीतेरग्निहोत्रीन्यायो भवतीत्यत्राह ( अत्र त्विति ) अत्र त्वतिवाद्यन्तरत्वनिमित्तमुपासनान्तरं तद्धेतुभूतमुपास्यान्तरं च प्रतीयते, इह तत्समर्पणसमर्थस्य

* भावप्रकाशिका *

ह्यादुत्तरनिर्दिष्टस्येति ) ननु तुशब्देनोपासकाधिक्योक्तावपि उपास्याधिक्यस्यानुक्तेः कथमुपास्याधिक्यं सिध्येदित्यत आह ( तुशब्दो हीति ) ( नहि तुहोत्यादिपदा-

ब्दाभिधेयं परं ब्रह्म प्रतीयते । सत्यशब्दश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिषु परस्मिन् ब्रह्मणि प्रयुक्तः, अतस्तन्निष्ठस्यातिवादिनः पूर्वस्मादधिकत्वं सम्भवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यम् । अति-

* श्रुतप्रकाशिका *

सत्यशब्दस्य सद्भावात्तुशब्दस्वारस्यं न भञ्जनीयम्, अतः अतिवाद्यन्तरं सिद्धमित्यर्थः । किञ्च न परं द्रव्यदेवतोपस्थापकशब्दाभावादग्निहोत्रान्तराप्रतीतिः, किन्तु कर्मस्वरूपोपस्थापकशब्दाभावाच्च। न हि जुहोत्यादिपदान्तरं श्रूयते, न च श्रूयमाणो वदतिशब्दो जुहोत्यर्थः, अतश्चाग्निहोत्रान्तराप्रतीतेरग्निहोत्रशब्दः सजातीयव्यक्तिमलभमानः प्रकृतमेवाग्निहोत्रमवलम्बते, इह तु न परमुपास्यान्तरसमर्पणक्षमस्सत्यशब्द एव, 'सत्यं त्वेव विजिज्ञासितव्य'मित्युपासनान्तरोपस्थापकशब्दश्च श्रूयते, अत उपासनान्तरप्रतीतेरुपासकान्तरप्रतीतिसद्भावादतिवादिशब्दस्तद्विषयो भवितुमर्हतीति तुशब्दस्वारस्यं न भञ्जनीयम्, अतः प्रकरणविच्छेद इति चाभिप्रायः। तुशब्दस्य धर्मिभेदकत्वे सिद्धे सत्यशब्दस्योपास्यान्तरसमर्पकत्वम्, सत्यशब्दस्योपास्यान्तरसमर्पकत्वे तुशब्दस्य धर्मिभेदकत्वमित्यन्योन्याश्रयमाशङ्क्य सत्यशब्दस्योपास्यान्तरपरत्वप्रसिद्धिं दर्शयति (सत्यशब्दश्चेति) ततः किमित्यपेक्षायां तुशब्दस्वारस्यफलितमर्थमाह (अत इति) न हि तुशब्दस्य धर्मिभेदकत्वस्वारस्यं सत्यशब्दापेक्षम् सत्यशब्दस्योपास्यान्तरसमर्पणक्षमत्वं श्रुतिसिद्धम् न तुशब्दापेक्षम्. सत्यशब्दस्य न जीवपरसाधारण्यम्, परस्यैव निरुपाधिकसत्यत्वात्. साधारण्येऽपि विलक्षणोपास्यवाचकत्वमति, सम्भवेपि तथा सति न तुशब्दस्वारस्यभङ्गः, अतोऽन्योन्यसापेक्षत्वाभावान्नान्योन्याश्रय इत्यभिप्रायेण पूर्वस्मादधिकत्वं सम्भवतीति वाक्यस्वरससिद्धमन्यत्वं न बाधितव्यमित्युक्तम्। प्राणोपासकस्यासाधारणमतिवादित्वं नातिवाद्यन्तरं सहते, अतोऽतिवादिशब्दस्वारस्यार्थं तुशब्दस्वारस्यभङ्ग इत्यत्राह ( अतिवादित्वं हीति ) न हि प्राणातिवादिन्येवातिवादिशब्दो रूढः, क्लृप्तावयवशक्त्यैव

* भावप्रकाशिका *

न्तरं श्रूयत इति ) यद्यप्यग्निहोत्रजुहोतिपदयोर्न विशेषः, तथाप्याख्यातश्रवणे विधिसम्भवात्. विहितस्य विधानासम्भवात् कर्मान्तरत्वशङ्कासम्भव इति भावः ।

वादित्वं हि वस्त्वन्तरात्पुरुषार्थतया अतिक्रान्तस्वोपास्यवस्तुवादित्वम्; नामाद्याशापर्यन्तोपास्यवस्त्वतिक्रान्तस्वोपास्यप्राणशब्दनिर्दिष्टप्रत्यगात्मवादित्वात्प्राणविदोऽतिवादित्वम्; तस्यापि सातिशयपुरुषार्थत्वान्निरतिशयपुरुषार्थतयोपास्यपरब्रह्मवादिन एव साक्षादतिवादित्वमिति 'एष तु वा अतिवदति यस्सत्येनातिवदति' इत्युक्तम्। सत्येनेतीत्थम्भूतलक्षणे तृतीया; सत्येन–परेण ब्रह्मणोपास्येनोपलक्षितो योऽतिवदतीत्यर्थः। अत एवैवं शिष्यः प्रार्थयते "सोऽहं भगवस्सत्येना-

* श्रुतप्रकाशिका *

लब्धे स्वार्थावबोधने। नष्टावयवनामत्वं प्रत्याचष्टे हि सूत्रकृत्॥" इति दर्शितात् 'प्रोक्षणीष्वर्थसंयोगा'दिति सूत्रितात् प्रोक्षणीनयादवयवशक्त्या स्वार्थबोधे सम्भवति रूढिकल्पनाऽयोगात्, अतो न प्राणातिवादिन्येवातिवादिशब्दस्वारस्यमित्यर्थः। अतिक्रान्तस्वोपास्यवस्तुवादित्वमतिवादिशब्दप्रवृत्तनिमित्तमितीममर्थं प्राणातिवादिनि दर्शयति (नामादीति) अस्य प्रवृत्तिनिमित्तस्य परमात्मोपासक एव पुष्कलत्वात्तस्मिन्नेव अतिवादिशब्दो मुख्य इति 'यस्सत्येनातिवदति' इति वदत आचार्यस्याभिप्राय इत्याह (तस्यापीति) तुशब्दस्यातिवादिशब्दस्योभयस्याप्यस्मत्पक्ष एव स्वारस्यमिति भावः। सत्यमुपास्यं चेत् 'स वा एष एवं पश्यन्' इतिवत् सत्यं पश्यन्नतिवदतीति वक्तव्यम्, न तु सत्येनेति शङ्कायां तृतीयाया अर्थमाह (सत्येनेति) सत्यवदनपक्ष एव तृतीयानुपपत्तिः उपसर्गवैयर्थ्यं चेतिभावः। उपास्यान्तरत्वमुपपादयति (अत एवैवमिति) अत एव–सत्यशब्दस्योपास्यान्तरपरत्वादेव। 'सोऽहं भगवस्सत्येनातिवदानि' इति शिष्यः प्रार्थयते, न तु प्राणेनाति-

* भावप्रकाशिका *

भाष्ये–इत्थम्भूतलक्षणे तृतीयेति। ब्रह्मोपासनोपलक्षित इत्यर्थः। इदमुपलक्षणम्, ब्रह्मणोऽतिवदननिमित्तत्वरूपकरणत्वसम्भवेन करकविभक्तित्वमप्युपपद्यत इति द्रष्टव्यम्। (सत्यवदनपक्ष एवेति) पूर्वपक्ष्यभिमत इति शेषः। वाक्यस्वरससिद्ध-

तिवदानि" इति । आचार्यश्च 'सत्यं त्वेव विजिज्ञासितव्यम्" इत्याह। "आत्मनः प्राणः" इति च प्राणशब्दनिर्दिष्टस्यात्मन उत्पत्तिरुच्यते; अतः 'तरति शोकमात्मवित्' इति प्रक्रान्त आत्मा प्राणशब्दनिर्दिष्टादन्य

* श्रुतप्रकाशिका *

वदानीतीत्यर्थः। (आचार्यश्चेति) 'सत्यं त्वेव विजिज्ञासितव्य'मित्याह, न तु प्राण एवेतीत्यर्थः । यद्वा अतिवादिशब्दस्य यौगिकत्वमुपपादयति—अत एवैवमिति । अतिवादिशब्दस्य यौगिकत्वादेव हि अतिवदानीत्याख्यातनिर्देश इत्यर्थः । यद्वा अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैवातिवादिशब्दप्रवृत्तिनिमित्तत्वादेव हि शिष्यप्रार्थनमित्यर्थः । अयमर्थः पूर्वोक्तार्थफलम् । आचार्यश्चेति । अत एवेत्यनुषङ्गः । अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैव प्रवृत्तिनिमित्तत्वादेव हि सत्यशब्दाभिधेयम्, 'सत्यं त्वेव विजिज्ञासितव्य'मित्युपास्यतयोक्तमित्यर्थः । किञ्च सत्यवदन-

* भावप्रकाशिका *

मन्यत्वं न बाधितव्यमित्यस्य विप्रकृष्टतया अतश्शब्दस्यासन्निहितोपाध्यन्तरपरामर्शित्वं क्लिष्टमित्यस्वरसादाह (यद्वा अतिवादिशब्दस्येति) यौगिकत्वायौगिकत्वविवादस्य कण्ठतः प्रस्तुतत्वाभावादाह ( यद्वा अतिक्रान्तेति ) ननु अतिवादित्वं हि वस्त्वन्तरात्पुरुषार्थतया अतिक्रान्तस्वोपास्यवस्तुवादित्वमित्युक्तत्वेऽपि अतिक्रान्तस्वोपास्यवस्तुवादित्वमतिवादिशब्दप्रवृत्तिनिमित्तमित्येवं प्रागनिर्दिष्टतया कथमतश्शब्देन प्रवृत्तिनिमित्तत्वस्य परामर्श इत्याशङ्क्यातिवादित्वमतिक्रान्तस्वोपास्यवस्तुवादित्वमित्युक्तत्वेऽतिवादिशब्दस्य तदेव प्रवृत्तिनिमित्तमित्यस्यार्थस्य फलिततया फलितस्यार्थस्यातश्शब्दपरामर्श उपपन्न इत्याह ( अयमर्थः पूर्वोक्तार्थफलमिति ) फल इति पुल्लिङ्गपाठस्साधुः । तस्यायमर्थः,– अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यातिवादिशब्दप्रवृत्तिनिमित्तत्वरूपोऽर्थः पूर्वोक्तयौगिकार्थफल इति ; एवञ्चातिक्रान्तस्वोपास्यवादित्वोपपादनं यौगिकत्वोपपादकतया पर्यवस्यतीति अत एवेत्यादिवाक्यस्य यौगिकत्वोपपादनपरत्वं युक्तमिति भाव इति वदन्ति । ( अतिक्रान्तस्वोपास्यवस्तुवादित्वस्यैव प्रवृत्तिनिमित्तत्वादेव हीति ) सत्यशब्दार्थस्य ब्रह्मण एव निरतिशयपुरुषार्थतया तद्वेदिन एवातिक्रान्तस्वापोस्यवस्तुवादित्वमस्तीति

इति गम्यते॥ 'यत्तूक्तम् 'अस्ति भगवः प्राणाद्भूयः' इति प्रश्नस्य 'अदो वाव प्राणाद्भूयः' इति प्रतिवचनस्य चादर्शनात्प्रक्रान्त आत्मोपदेशः प्राणोपदेशपर्यवसानो गम्यत इति। तदयुक्तम्, न हि प्रश्नप्रतिवचनाभ्यामेवार्थान्तरत्वं गम्यते; प्रमाणान्तरेणापि तत्सम्भवात्। उक्तं च प्रमाणान्तरम्। 'अस्ति भगवः प्राणाद्भूयः' इत्यपृच्छतोऽयमभिप्रायः – नामादिष्वाशापर्यन्तेष्वचे-

* श्रुतप्रकाशिका *

मङ्गतया विहितं चेत् सत्यं सम्पाद्यमित्युक्तं स्यात्, तदानीं विजिज्ञासितव्यशब्दास्वारस्यं भवेत्, सत्यं विजिज्ञासितव्यम्, वदनार्थं ज्ञातव्यमित्यर्थ इति चेत् अध्याहारप्रसङ्ग इति भावः। सूत्राभिप्रेतेन हेत्वन्तरेणाप्यधिकतयोपास्यान्तरत्वमुपपादयन् सम्प्रसादादध्युपदेशं विवृणोति– आत्मन इति। पूर्वपक्षयुक्तिमनुवदति (यत्त्विति) परिहरति (तदयुक्तमिति) (उक्तं चेति) प्रश्नप्रतिवचने हि लिङ्गम्, तदभावेऽपि तुशब्दश्रुतिरात्मनः प्राणोत्पत्तिश्च लिङ्गमिति प्रमाणान्तरमुक्तमित्यर्थः। तत्र प्रश्नाभावः किंनिबन्धन इत्यत्राह (अस्तीति) पुरुषार्थभूयस्त्वाति-

* भावप्रकाशिका *

'सत्यं त्वेव विजिज्ञासितव्यम्' इति सत्यशब्दाभिधेयं ब्रह्मैवोपास्यतयोक्तम्. न तु वेदितव्यतयेत्यर्थः। (विजिज्ञासितव्यशब्दास्वारस्यं भवेदिति) ननु विज्ञानमिति श्रद्धाकृतिषु 'विज्ञानं त्वेव विजिज्ञासितव्यं विज्ञानं भगवो विजिज्ञास' इत्यादिष्विवात्रापि सम्पादनीयमित्येवार्थोऽस्तु, नच विज्ञानादिषु विजिज्ञासितव्यमित्यस्य सम्पादितव्यमित्येवार्थोऽवश्यं वाच्यः, अग्रे 'यदा वै मनुते अथ विजानाति यदा श्रद्दधाति अथ मनुते' इति तदुपायकीर्तनदर्शनादत एव सत्यव्यतिरिक्तविषयाणि जिज्ञासितव्यपदानि सम्पाद्यवाचीनीत्युत्तरत्र वक्ष्यतीति वाच्यम्. तर्हि सत्येपि तथैवार्थोऽस्तु। अग्रे यदा वै विजानाति अथ सत्यं वदतीति तदुपायकीर्तनदर्शनादिति चेत्. परमात्मनि प्रसिद्धस्य सत्यशब्दस्य परमार्थप्रतिपादके वचसि लक्षणया प्रयोगस्यायुक्तत्वात्. सत्येनातिवदानीति तृतीयाया अयुक्तत्वात् अतीत्युपसर्गवैयर्थ्यात्

तनेषु पुरुषार्थभूयस्तया पूर्वपूर्वमतिक्रान्तेष्वप्युत्तरोत्तरेषूपदिष्टेषु तत्तद्वेदिन आचार्येणातिवादित्वं नोक्तम्, प्राणशब्दनिर्दिष्टप्रत्यगात्मयाथात्म्यवेदिनस्तु पुरुषार्थभूयस्त्वातिशयं मन्वानेन "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति" इत्यतिक्रांतवस्तुवादित्वमुक्तम्; अतोऽत्रैवात्मोपदेशस्समाप्त इति मत्वा शिष्यो भूयो न पप्रच्छ। आचार्यस्त्विदमपि सातिशयं मत्वा निरतिशयपुरुषार्थभूतं सत्यशब्दाभिधेयं परं ब्रह्म "एष तु वा अतिवदति यस्सत्येनाति वदति" इति स्वयमेवोपचिक्षेप। शिष्योऽपि परमपुरुषार्थरूपे परस्मिन् ब्रह्मण्युपक्षिप्ते तत्स्वरूपतदुपासनयाथात्म्यबुभुत्सया 'सोऽहं भगवस्सत्येनातिवदानि' इति प्रार्थयामास। ततो

* श्रुतप्रकाशिका *

शयं मन्वानेन– आत्मोपदेशस्य तत्पर्यन्तत्वं मन्वानेनेत्यर्थः । ( स्वयमेवोपचिक्षेपेति ) भगवद्गीतायामपि "तस्माद्योगी भवार्जुन" इति जीवात्मयोगं परिसमाप्य 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः' इति परमात्मोपासनं भगवानेव ह्युपक्षिप्तवान्, तद्वदिति भावः। (ततो ब्रह्मेति) ब्रह्मसाक्षात्कारनिमित्तेत्यनेन 'यदा वै विजानात्यथ सत्यं वदती'त्यस्य वाक्यस्यार्थ उक्तो भवति। विजानातिशब्दः साक्षात्कारपरः, न तु शास्त्रजन्यज्ञानपरः "यदा वै मनुते अथ विजानाती'तिजानात्यर्थस्य मननसाध्यत्वावगमात्। सत्यं वदति सत्यमतिवदतीत्यर्थः। अतिवादस्य प्रकृतत्वात्। यदा ब्रह्म साक्षात्करोति तदाऽतिवदति, तस्माद-

ꣳ भावप्रकाशिका ꣳ

तुशब्दस्वारस्य.च सत्यं भगवो विजिज्ञास इत्यत्रापि सत्यवदनं सम्पादनीयमित्यर्थाश्रयणस्य क्लिष्टत्वाच्चेत्यादिदूषणे तात्पर्यात् । ( प्रमाणान्तरमुक्तमिति ) प्रमाणशब्देन श्रुतिलिङ्गे विवक्षिते । ( ब्रह्मसाक्षात्कारनिमित्तेत्यनेनेति ) यदा वै

ब्रह्मसाक्षात्कारनिमित्तातिवादित्वसिद्धये ब्रह्मसाक्षात्कारोपायभूतं ब्रह्मोपासनम् 'सत्यं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य तदुपायभूतं ब्रह्ममननं 'मतिस्त्वेव विजिज्ञासितव्या' इत्युपदिश्य श्रवणप्रतिष्ठार्थत्वान्मननस्य मननोपदेशेन श्रवणमर्थसिद्धं मत्वा श्रवणोपायभूतां ब्रह्मणि श्रद्धां 'श्रद्धा त्वेव विजिज्ञासितव्या' इत्युपदिश्य तदुपायभूतां च तन्निष्ठां 'निष्ठा त्वेव विजिज्ञासितव्या' इत्युपदिश्य तदुपायभूतां तदुद्योगप्रयत्नरूपां कृतिमपि

* श्रुतप्रकाशिका *

तिवादित्वनिमित्ततत्साक्षात्काराय तदुपायभूतं सत्योपासनं कुर्यादित्यर्थः । ( श्रवणोपायभूतां ब्रह्मणि श्रद्धामिति ) श्रवणमनननिदिध्यासनप्राप्तिविषयो हि ब्रह्म, तद्विषयश्रद्धा च तच्छ्रोतुं मन्तुं द्रष्टुं प्राप्तुं च भवति, तत्र श्रवणोपायभूतां श्रद्धामित्यनेन श्रोतुं श्रद्धा विवक्षिता; श्रद्धा- त्वरा. ( तदुपायभूतां च तन्निष्ठामिति ) तस्मिन् ब्रह्मणि निष्ठा तन्निष्ठा. ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायो निष्ठा श्रोतव्यत्वनिश्चये हि श्रोतुं त्वरा भवति । ( तदुद्योगप्रयत्नरूपां कृतिमिति ) उद्योगशब्द-

* भावप्रकाशिका *

विजानातीत्यस्य वाक्यस्य साक्षात्कारित्वनिमित्तातिवादित्वप्रतिपादनपरतया ग्रन्थकृतैव व्याख्यायमानत्वादिति द्रष्टव्यम् । ( तदुपायभूतं सत्योपासनं कुर्यादित्यर्थ इति ) सत्यं त्वेव विजिज्ञासिव्यमितिवाक्यस्येतिशेषः । ननु यदा वै विजानात्यथ सत्यं वदति नाविजानन् सत्यं वदतीत्यादिवाक्यं सत्यं त्वेव विजिज्ञासितव्यमित्यस्यानन्तरखण्डे पठ्यते. प्रकरणं चोत्तरोत्तरस्य पूर्वपूर्वं प्रति हेतुत्वप्रतिपादनपरम् , नतूत्तरोत्तरस्य पूर्वपूर्वसाध्यत्वप्रतिपादनपरम् ; ततश्च पूर्वखण्डे सत्यं त्वेव विजिज्ञासितव्यमित्युपासनं विधाय तत्साध्यसाक्षात्कारं तदुत्तरखण्डे कथं प्रतिपादयतीति चेत्? उच्यते; पूर्वखण्डे सत्यं त्वेव विजिज्ञासितव्यमिति अतिवादित्वसिद्धये ब्रह्मोपासनं विहितम्. तत्र चातिवादित्वे सत्योपासनस्य साक्षात्कारद्वारा हेतुत्वमिति प्रतिपाद्यते द्वितीयखण्डे. ततश्च खण्डद्वयेनापि अतिवादित्वनिमित्तेन

"कृतिस्त्वेव विजिज्ञासितव्या' इत्युपदिश्य श्रवणाद्युपक्रमरूपकृतिसिद्धये प्राप्यभूतस्य सत्यशब्दाभिहितस्य ब्रह्मणः सुखरूपता ज्ञातव्येति' 'सुखं त्वेव विजिज्ञासितव्यम्' इत्युपदिश्य निरतिशयविपुलमेव सुखं परमपुरुषार्थरूपं भवतीति तस्यैव ब्रह्मणः सुखरूपस्य निरतिशयविपुलता ज्ञातव्येति "भूमा त्वेव विजिज्ञासितव्यः" इत्युपदिश्य निरतिशयविपुलसुखरूपस्य

* श्रुतप्रकाशिका *

वाच्यप्रयत्नरूपां कृतिमित्यर्थः । सा च श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसो नियमनरूपा. अन्यस्मिन्नुपादेयबुद्ध्या प्रवणमनस्कस्य हि ब्रह्मैव श्रोतव्यं नान्यदित्यध्यवसायो न भवति । ( श्रवणादीति ) जिज्ञासितव्यपुरुषार्थत्वे तस्य निरतिशयत्वे च ज्ञाते सति मनसः सातिशयपुरुषार्थान्तरवैमुख्यकरणं सम्भवतीत्यभिप्रायः । निरतिशयपुरुषार्थत्वावगमश्च शास्त्रादेवापातप्रतीतिदशायां भवति, यादृच्छिकसज्जनसंवादादिना च सिध्यति ; 'यदा वै श्रद्दधात्यथ मनुते यदा वै निस्तिष्ठत्यथ श्रद्दधाति यदा वै करोत्यथ निस्तिष्ठति' इति मननादीनां श्रद्धाद्यानन्तर्यश्रवणात् भाष्ये तेषामुपायोपेयभाव उक्तः । 'यदा वै सुखं लभते' इति श्रुतौ लाभशब्दो बुद्धिवाची, लभतेः प्राप्त्यर्थत्वादित्यभिप्रायेण सुखरूपता ज्ञातव्येत्युक्तम् । न हि श्रवणादेः पूर्वमेव निरतिशयसुखप्राप्तिरुपपद्यते. सत्यव्यतिरिक्तविषयाणि जिज्ञासितव्यपदानि सम्पाद्यत्ववाचीनि । यत्र नान्यदिति वाक्येऽन्यदर्शनश्रवणादिनिषेधात्

* भावप्रकाशिका *

साक्षात्कारहेतूपासनं विधीयते, तदुत्तरखण्डैरुपासनोपयोगिमननादयो विधीयन्त इति भाष्यकाराभिप्राय इति भावः । ( यादृच्छिकेति ) जानश्रुतेर्हंससंवादादिना ब्रह्मणि निरतिशयपुरुषार्थत्वावगमस्य दृष्टत्वात्. महाभागवतसंवादादिना च ब्रह्मणि निरतिशयपुरुषार्थत्वावगमस्य दर्शनादित्यर्थः । ( लभतेः प्राप्त्यर्थत्वादिति ) ज्ञानस्यापि प्राप्तिरूपत्वादिति भावः । मुख्यप्राप्तिपरत्वेऽनिष्टमाह ( नहि श्रवणादेरिति ) ( सत्यव्यतिरिक्तविषयाणीति ) 'विज्ञानं विजिज्ञासितव्यं मति-

ब्रह्मणो लक्षणमिदमुच्यते "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति। अयमर्थः, अनवधिकातिशयसुखरूपे ब्रह्मण्यनुभूयमाने ततो-

* श्रुतप्रकाशिका *

दृश्यमिथ्यात्वशङ्का स्यादिति तद्व्युदासाय तस्य वाक्यस्यार्थमाह ( अयमर्थ इति ) अर्थस्वभावादनुभूयमान इत्यध्याहारः कृतः, न हि ब्रह्मसद्भावाद्दुःखरूपवस्त्वन्तरादर्शनं भवति। ततोऽन्यत्– सुखरूपात् ब्रह्मणोऽन्यत्। न पश्यति–दुःखरूपं तद्व्यतिरिक्तं च किञ्चिन्न पश्यतीत्यर्थः । 'यो वै भूमा तत्सुख'मित्युक्तनिरतिशयसुखरूपब्रह्मलक्षणपरत्वाद्वाक्यस्य, तत्र दुःखदर्शनाभावहेतुरनवधिकातिशयसुखरूपत्वम्. अनवधिकातिशयसुखरूपत्वाद्दुःखं न पश्यतीत्यर्थः । अन्यदर्शनाभावे हेतु-

* भावप्रकाशिका *

स्त्वेव विजिज्ञासितव्या' इत्यादावुपासनार्थत्वासम्भवादिति भावः । ( दृश्यमिथ्यात्वशङ्का स्यादितीति ) ब्रह्मव्यतिरिक्तदर्शनाभावो हि दृश्यव्यतिरेकाद्वा स्यात् दृशिव्यतिरेकाद्वा, तस्य दृशि स्वरूपस्य नित्यतया दृश्यव्यतिरेक एव पर्यवस्यतीति दृश्यमिथ्यात्वं सिध्यतीति परेषामाशय इति भावः । भाष्ये– अनवधिकातिशयस्वरूप इति । यद्यपि 'यत्र नान्य'दिति भूमलक्षणवाक्ये यत्र नान्यत्पश्यतीत्यस्य लक्षणवाक्य इवानिर्धारितवस्तुपरामर्श एवोचितः । न त्वनवधिकत्वादिविशिष्टपरामर्शः, अत एवान्यदर्शनाभावादेस्तद्धललभ्यत्वकथनमप्यनुचितम् । नहि यः सास्नावान् स हि गौरित्यत्र यच्छब्देन गोत्वविशिष्टपरामर्शात् सास्नावत्त्वलाभ इति सङ्गतम्. तथापि जन्मादिसूत्रे यतस्सर्वज्ञादिति सकलभाष्यकृतां व्यवहारात् समाधानसम्भवादिति द्रष्टव्यम्। ततोऽन्यदिति व्याख्येयं पदम्. ( दुःखरूपं तद्व्यतिरिक्तं च किञ्चिन्न पश्यतीत्यर्थ इति ) दुःखरूपम् दुःखत्वमित्यर्थः । 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम्। सर्वं ह पश्यः पश्यति' इति साक्षितयोदाहरिष्यमाणश्लोकानुसारेण नान्यत्पश्यतीत्यत्र यत्र यत इति द्वयमपि योज्यम्, ततश्च यस्मिन्ननुभूयमाने तद्विरुद्धं दुःखत्वं यस्मिन्न पश्यति यतोऽन्यच्च न पश्यति स भूमेत्यर्थः । ( तत्र दुःखदर्शनाभावहेतुरिति ) विभूतिगुणविशिष्टे ब्रह्मणि दुःखरूपत्वदर्शनाभावहेतुरित्यर्थः । ( दुःखं न पश्यतीत्यर्थ इति ) विभूतिगुण-

ऽन्यत्किमपि न पश्यत्यनुभविता, ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वाच्च कृत्स्नस्य वस्तुजातस्य ; अत ऐश्वर्यापर-

* श्रुतप्रकाशिका *

माह ( ब्रह्मस्वरूपेति ) ( कृत्स्नस्य वस्तुजातस्येति ) स्वरूपान्तर्गताः ज्ञानादिगुणाः, विभूत्यन्तर्गतं जगदखिलमित्यभिप्रायः , अभिप्रेतहेतुसमुच्चयार्थश्चशब्दः । ननु यत्रेतिपदं ब्रह्मपरम् , न तु विभूतिपरम्, न च तद्विषयं पदान्तरमस्ति; अतो ब्रह्मस्वरूपतद्विभूत्यन्तर्गतत्वादित्ययुक्तम्. अस्तु वा तद्वाचिशब्दः, नान्यत् पश्यतीत्ययुक्तम् , विभूतिर्हि ब्रह्मणोऽन्येति शङ्कायामुक्तं विवृणोति ( अत ऐश्वर्येति ) अतः—ब्रह्मणः सुखरूपतायाः कृत्स्नविभूतेस्तदन्तर्भावस्य च प्रामाणिकत्वात् । विभूतिविषयो गुणः विभूतिगुणः, स एव ऐश्वर्यापरपर्यायं नियमनम्, तद्विशिष्टं ब्रह्म. न हीशितव्यज्ञानं विनैश्वर्यविशिष्टानुभवसम्भवः, निरूपकेण विना निरूप्यज्ञानायोगादिति भावः । यद्वा अत्रैवोपनिषदि "स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि प्रतिष्ठित इति यदि वा न महिम्नीति गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानि नाहं ब्रवीम्यन्यो ह्यन्यस्मिन् प्रतिष्ठित" इति श्रूयते । अत्र स्वे महिम्नि प्रतिष्ठित इत्युक्ते हस्त्यादीनां नियाम्यानां महिमशब्दवाच्यत्वात् तत्प्रतिष्ठितत्वशङ्कायां 'यदि वा न महिम्नीति हस्तिहिरण्यादिमहिमनिष्ठत्वं निषिद्धम् ,

* भावप्रकाशिका *

विशिष्टे ब्रह्मणि दुःखरूपतां न पश्यतीत्यर्थः । (स्वरूपान्तर्गताः ज्ञानादिगुणा इति) ज्ञानानन्दादीनां स्वरूपनिरूपकत्वादिति भावः । ( अभिप्रेतहेतुसमुच्चयार्थ इति ) दुःखदर्शनाभावहेतोरनवधिकातिशयसुखरूपत्वस्यानवधिकातिशयसुखरूप इति विशेषणेनाभिप्रेतस्य समुच्चयार्थ इति भावः । (विभूतिर्हि ब्रह्मणोऽन्येति शङ्कायामिति) यत्र यद्विभूतौ चानुभूयमाने यतोऽन्यन्न पश्यतीत्युक्ते यच्छब्दद्वयेनापि ब्रह्मण एव परामृष्टतया विभूतेरपि तदनन्यत्वादित्यर्थः । ऐश्वर्यापरपर्यायविभूतिगुणविशिष्टम्— इतिभाष्यस्य विभूतिविषयो गुणो विभूतिगुणः, ऐश्वर्यापरपर्यायविभूतिगुण इति वा, विभूतिश्चासौ गुणश्च विभूतिगुणः, ऐश्वर्यापरपर्यायश्चासौ विभूतिगुणश्च ऐश्वर्यापरपर्यायविभूतिगुण इति वा ऐश्वर्यापरपर्यायविभूत्या गुणैश्च विशिष्ट इति वेत्यर्थत्रयमभिप्रेत्य व्याचष्टे (विभूतिविषयो गुण इत्यादिना) । ( यच्छब्द एव विशिष्ट ब्रह्मपर इति

पर्यायविभूतिगुणविशिष्टं निरतिशयसुखरूपं ब्रह्मानुभवँस्तद्व्यतिरिक्तस्य वस्तुनोऽभावादेव किमप्यन्यन्न पश्यति, अनुभाव्यस्य सर्वस्य सुखरूपत्वादेव दुःखं च न पश्यति; तदेव हि सुखम् यदनुभूयमानं पुरुषानुकूलं

* श्रुतप्रकाशिका *

तदेव शङ्काबीजमुपन्यस्य व्युदस्यति—गो अश्वमित्यादिना । "अस्य महिमानमिति वीतशोकः' 'एतां विभूतिं योगं च" इत्यादिश्रुतिस्मृतिषु परमात्मनो महिमवत्त्वावगमादिह न महिमनिषेधः, अपि तु विभूतिरूपमहिमप्रतिष्ठितत्वनिषेध इत्यवगम्यते, अतो महिमविभूत्यादिशब्दाश्च न स्वरूपमात्रपराः, "विभूतिर्भूतिरैश्वर्यम्" इत्यैश्वर्यपर्यायत्वादिति महिमापह्नवशङ्काव्युदासाय ऐश्वर्यापरपर्यायेत्युक्तम् । इदानीं विभूतिरेव गुणः । गुणशब्दो विभूतेरपृथक्सिद्ध्यभिप्रायः, विभूत्या गुणैश्चेतिवार्थः । ( विभूतिगुणविशिष्टेति ) यच्छब्द एव विशिष्टब्रह्मपर इति भावः । पूर्वं विभूत्यन्तर्गतत्वादिति अन्वयहेतुरुक्तः, व्यतिरेकरूपं हेतुमाह (तद्व्यतिरिक्तस्येति) विशिष्टब्रह्मणोऽन्यदर्शनं निषिध्यते, न त्वन्यदर्शनमित्यर्थः । विभूतिविशिष्टं ब्रह्मानुभाव्यं चेद्विभूतेः दुःखरूपत्वदर्शनाद्दुःखादर्शनमनुपपन्नमित्यत्राह ( अनुभाव्यस्येति) सर्वस्य—सर्वविभूतिकस्येत्यर्थः । पूर्वाभिप्रेतादेव हेतोरित्येवकाराभिप्रायः । सर्वस्य सुखरूपत्वं कथम्? आत्मगुणविशेषो हि सुखमित्यत्राह ( तदेव हि सुखमिति ) अनुकूलत्वं नाम स्वत इष्टत्वम् , तच्चानिष्टनिवृत्तिरूपतयेष्टसाधनतया च विना-

☙ भावप्रकाशिका ☙

भाव इति ) यदि विशेष्यस्वरूपमात्रस्यैव भूमत्वमाचक्ष्महे तदा यत्र नान्यत्पश्यतीतिलक्षणस्याव्याप्तिस्स्यात् , विभूतिवाचकशब्दश्च मृग्येत, अपि तु विभूतिगुणविशिष्टमेव भूमशब्दार्थः , न विशेष्यमात्रम्. ततश्च यच्छब्दोपि लक्ष्यत्वेनाभिमतं विशिष्टमेव परामृशेत् , अतो न काप्यनुपपत्तिरिति भावः । न च विशिष्टस्यैव भूमशब्दार्थत्वे विशिष्टस्याहमर्थशरीरकत्वात्मत्वयोरभावेन 'अथातोऽहङ्कारादेशः' इत्यादिना भूम्न अहङ्ग्रहोपासनात्मत्वोपदेशो न स्यादिति वाच्यम् ; विशेष्यांशाभिप्रायेणाहङ्ग्रहात्मत्वोपदेशसम्भवादिति द्रष्टव्यम् । (न त्वन्यदर्शनमित्यर्थ इति) न तु विशेष्यान्यदर्शनमपीत्यर्थः । ( दुःखादर्शनमनुपपन्नमिति ) दुःखरूपत्वदर्शनम-

भवति ॥ ननु चेदमेव जगद्ब्रह्मणोऽन्यतया अनुभूयमानं दुःखरूपं परिमितसुखरूपं च भवत्कथमिव ब्रह्मविभूतित्वेन तदात्मकतया अनुभूयमानं सुखरूपमेव भवेत् ? उच्यते; कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत्तत्तत्कर्मानुरूपं दुःखं च परिमितसुखं च भवति· अतो ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखत्वेन च जगदनुभवस्य कर्मनिमित्तत्वात्कर्मरूपाविद्याविमुक्तस्य तदेव जगद्विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति। यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति, तदेव पयः पित्तानुपहतस्य सुखायैव भवति; यथैव

* श्रुतप्रकाशिका *

पीष्टत्वम् । अनुभवविरोधेन चोदयति ( ननु चेति ) न ह्येकमेकदैव सुखदुःखात्मकविरुद्धस्वभावालिङ्गितमिति युज्यते, न हि निम्बपत्रं कस्यचिन्मधुरं भवति, न च सर्पः कस्यचिदनुकूलबुद्धिबोध्यो भवति, न च जगतश्शक्यं दुःखरूपत्वमपह्नोतुम्, तस्य सर्वैरभ्युपगन्तव्यत्वात्, इतरथा तज्जिहासया ब्रह्मजिज्ञासानुपपत्तेः, अतः परिशेषात् सुखरूपत्वमेवेत्युक्तमित्यभिप्रायः। स्वतोऽपरिच्छिन्नसुखरूपस्याप्युपाधितोऽन्यथारूपसम्भवादविरोध इति परिहरति ( उच्यत इति ) कर्म तत्तिरोधानकृतम् अब्रह्मात्मकत्वज्ञानं चोपाधिः। ततः किमित्यत्राह ( अतो ब्रह्मण इति ) स्वतो मधुरस्यापि दोषसम्बन्धादननुकूलत्वे अनुकूलबुद्ध्यविषयस्य केनचित् सम्बन्धित्वज्ञानादनुकूलत्वे च दृष्टान्तद्वयमाह ( पित्तोपहतेनेति ) दार्ष्टान्तिकेऽपि तादृ-

ॐ भावप्रकाशिका ॐ

नुपपन्नमित्यर्थः। सर्वस्येति व्याख्येयं पदम्। ( दार्ष्टान्तिकेपि तादृक्त्वमाहेति ) यद्यपि भाष्ये द्वितीयदृष्टान्तसाधर्म्यमेव कण्ठत उक्तम्, तथापि प्रथमदृष्टान्तसाधर्म्यमप्यभिप्रेतं द्रष्टव्यम्। एतदिति व्याख्येयं पदम्। औपाधिकेत्यादि व्याख्यानम्। सुकृतम्,

राजपुत्रस्य पितुर्लीलोपकरणमतथात्वेनानुसन्धीयमानं प्रियत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवति; तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं चानुसन्धीयमानं जगन्निरतिशयप्रीतये भवत्येव; अतो जगदैश्वर्यविशिष्टमनवधिकातिशयसुखरूपं ब्रह्मानुभवँस्ततोन्यत्किमपि न पश्यति, दुःखं च न पश्यति । एतदेवोपपादयति वाक्यशेषः "स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषां सर्वेषु लोकेष्वकामचारो भवति" इति । स्वराट्–अकर्मवश्यः ।

* श्रुतप्रकाशिका *

क्तुमाह ( तथेति ) यत्र नान्यदितिवाक्यस्यार्थं निगमयति ( अत इति ) एतत– औपाधिकदुःखरूपतायास्तद्विगमेऽनवस्थानम् । ( स वा एष इति ) रत्यादिशब्दानां प्रीतिपरत्वे व्यधिकरणबहुव्रीहिः, अनुकूलविषयपरत्वे साक्षाद्बहुव्रीहिः' आत्मशब्दो विभूतिगुणविशिष्टब्रह्मपरः । रतिः– स्रक्चन्दनादिजन्या प्रीतिः । क्रीडा–उद्यानादिजन्या । मिथुनम् स्त्रीसम्भवा । आनन्दः–विभूतिजन्यः । एवं सर्वविधसुखानुभव उक्तः "स्वराड् भवति अन्यराजानस्ते क्षय्यलोकाः" इति च परमात्मप्रतिक्षेपः प्रतीयत इत्याशङ्क्याह ( स्वराडिति ) अन्यराजानः स्वराडितिपदद्वयेन उपाधितद्विगमौ दर्शितौ । दुःखरूपतया प्रतिपन्नस्यापि स्वतः सुखरूपत्वे श्रुतिमाह ( न पश्य

७ भावप्रकाशिका ७

'रसो वै सः' इति कार्यावस्थोच्यते । "आनन्दाद्ध्येव खलु' इति कारणावस्थोच्यते ॥

अन्यराजानः– कर्मवश्याः । तथा 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् । सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति च । निरतिशयसुखरूपत्वं च ब्रह्मणः 'आनन्दमयोऽभ्यासात्' इत्यत्र प्रपञ्चितम् । अतः प्राणशब्दनिर्दिष्टात्प्रत्यगात्मनोऽर्थान्तरभूतस्य सत्यशब्दाभिधेयस्य ब्रह्मणो भूमेत्युपदेशाद्भूमा परं ब्रह्म ।

धर्मोपपत्तेश्च ॥ ८ ॥

अस्य भूम्नो ये धर्मा आम्नायन्ते तेऽपि परस्मिन्नेवोपपद्यन्ते । 'एतदमृतम्' इति स्वाभाविकममृतत्वम्, 'स्वे महिम्नि' इत्यनन्याधारत्वम्, 'स एवाधस्तात्' इत्यादि 'स एवेदं सर्वम्' इति सर्वात्मकत्वम्, 'आत्मनः प्राणः' इत्यादिप्राणप्रभृतिसर्वस्योत्पादकत्वमित्यादयो हि धर्माः परमात्मन एव । यत्तु 'अहमेवाधस्तात्' इत्यादिना सर्वात्मकत्वमुपदिष्टम्, तद्भूमविशिष्टस्य ब्रह्म-

---

* श्रुतप्रकाशिका *

इति ) सर्वं पश्यति न तत्र दुःखतां पश्यति, सुखरूपतामेव पश्यतीत्यर्थः । उदाहृतवाक्ये विभूत्यादिविशिष्टस्यानन्दरूपत्वमस्पष्टमिति तद्वैशद्यायाह ( निरतिशयेति ) "तदात्मानँ स्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वैतत्सुकृतं । रसो वै सः । रसँ ह्येवायं लब्ध्वाऽऽनन्दी भवति" आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते" इति च वाक्येषु कार्यकारणावस्थविभूत्यादिविशिष्टस्यैव आनन्दत्वं हि स्फुटतरम् । सूत्रार्थमुपसंहरति ( अत इति ) ॥ धर्मोपपत्तेश्च ॥ कस्य धर्मा इत्याकाङ्क्षां पूरयन् व्याचष्टे ( अस्येति ) पूर्वपक्षयुक्तिं परिहरति ( यत्त्विति ) अहङ्ग्रहेणोपासनम्– अहमर्थशब्दयोः परमात्मपर्यन्तत्व-

णोऽहंग्रहेणोपासनमुपदिश्यते 'अथाऽतोऽहङ्कारादेशः' इत्यहंग्रहोपदेशोपक्रमात् । अहमर्थस्य प्रत्यगात्मनोऽपि ह्यात्मा परमात्मेत्यन्तर्यामिब्राह्मणादिषूक्तम्; अतः प्रत्यगर्थस्य परमात्मपर्यवसानादहंशब्दोऽपि परमात्मपर्यवसायीति प्रत्यगात्मशरीरकत्वेन परमात्मानुसन्धानार्थोऽयमहंग्रहोपदेशः । परमात्मनः सर्वशरीरतया सर्वात्मत्वात् प्रत्यगात्मनोऽप्यात्मा परमात्मा । तदेव 'अथात आत्मादेशः' इत्यादिना 'आत्मैवेदं सर्वम्' इत्यन्तेनोच्यते । एतदेवोपपादयितुं प्रत्यगात्मनोऽप्यात्मभूतात्

* श्रुतप्रकाशिका *

बुद्ध्योपासनम् । तद्व्यतिरिक्तस्मिंस्तद्बुद्धिः स्यादित्यत्राह ( अहमर्थस्येति ) न केवलमन्तर्यामिब्राह्मणादिषु अस्मिन् प्रकरणेऽपि सर्वात्मत्वमुक्तमिति दर्शयिष्यन् तत्प्रतिपादकस्य 'अथात आत्मादेश' इतिवाक्यस्यार्थमाह ( परमात्मन इति ) उपासकात्मनोऽप्यात्मत्वं फलितमित्युक्तम् । अथ कण्ठोक्तमिति दर्शयितुं कण्ठोक्तिमद्वाक्यस्यार्थमाह ( एतदेवेति ) विजानत इतिपदस्य षष्ठ्यन्तत्वज्ञापनाय व्याचष्टे

७ भावप्रकाशिका ७

भाष्ये— अथातोऽहङ्कारादेश इत्यहङ्ग्रहोपक्रमादिति । जीवस्वरूपोपदेशपरत्वे अथातोहमुपदेश इति स्यात्. अतोऽहङ्कारशब्दो बुद्धिपर इति भावः । ( अस्मिन् प्रकरणेऽपि सर्वात्मत्वमुक्तमिति दर्शयिष्यन्निति) यद्यपि 'स एवाधस्तात्'इत्यादिना भूम्नस्सर्वात्मकत्वं प्रागप्युक्तम्, तथापि सर्वात्मकत्वदृढीकरणायोत्तरत्रापि दर्शयिष्यन्नित्यर्थः । एतच्चोपलक्षणम् । अथात आत्मादेश इत्यस्याभावे 'तरति शोकमात्मवित्' इत्युपक्रान्तस्यात्मोपदेशस्यापर्यवसानात् अन्यदुपक्रान्तमन्यदापतितमितिशङ्का स्यात्, अतो भूमैवात्मेतिदर्शयितुमात्मोपदेश इत्यादिसन्दर्भ इति द्रष्टव्यम् । ( आत्मत्वं फलितमित्युक्तमिति ) सर्वात्मत्वे कथिते उपासकात्मत्वमपि फलितमित्यभिप्रेत्य अथात आत्मादेश इति वाक्यमुदाहृतमित्यर्थः । ( कण्ठोक्ति-

परमात्मनस्सर्वस्योत्पत्तिरुच्यते "तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राण आत्मत आकाशः" इत्यादिना । उपासकस्यान्तर्यामितया अवस्थितात्परमात्मनः सर्वस्योत्पत्तिरित्यर्थः । अतः परमात्मनः प्रत्यगात्मशरीरकत्वज्ञानप्रतिष्ठार्थमहंग्रहोपासनं कर्त्तव्यम् । तस्माद्भूमविशिष्टः परमात्मेति सिद्धम् ॥ ७ ॥ .... .... .... ....

* श्रुतप्रकाशिका *

( उपासकस्येति ) पूर्वपक्षयुक्तिं परिहरन्निगमयति ( अत इति ) अधिकरणार्थमुपसंहरति ( तस्मादिति ) ॥ .... .... .... ....

७ भावप्रकाशिका ७

मद्वाक्यस्येति ) तस्य ह वा एतस्येतिवाक्यस्येत्यर्थः । भाष्ये– उपासकस्यान्तर्यामितयावस्थितत्वादिति । विजानत आत्मत इति श्रुतेरुपासकस्यान्तर्यामिण इत्यर्थ इति भावः । यदत्र विवरणकारेणोक्तम् अहङ्कारस्यात्मैकत्वेन प्रत्यक्षसिद्धस्याथातोहङ्कारादेशः । अथात आत्मादेश इति पृथगुपदेशो भेदार्थः, भूमात्मनोर्भिन्नत्वेन प्रसिद्धयोः पृथगुपदेश ऐक्यार्थः । द्वयोस्सार्वात्म्यायोगादिति तदसारम् । अहमर्थादन्यस्यात्मनो भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात् तयोरुपदेशो भेदार्थः, अहमर्थस्य तु ब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात्तयोरुपदेश ऐक्यार्थ इति वैपरीत्यस्यापि सुवचत्वात् । न चाहमर्थस्य जडरूपस्यान्तःकरणस्य भूमाभेदबोधनं बाधितम् . नात्मनस्तथेतिवाच्यम्; तस्य तन्मतश्रद्धालुमात्रहृदयङ्गमत्वात्, अतस्स एवाधस्तादित्यादिना सर्वात्मत्वेनोपदिष्टे भूम्नि अथातोहङ्कारादेश इति अहङ्ग्रहोपासने विहिते तस्य दृष्टिविधित्वशङ्कावारणाय प्रागुपक्षिप्तसर्वात्मकत्वं द्रढीकुर्वन्नुपक्रान्तात्मोपदेशस्य तत्रैव पर्यवसानं च दर्शयति अथात आत्मादेश इत्यादिना इत्येव युक्तमिति द्रष्टव्यम् ॥ .... .... .... ....

७ इति भूमाधिकरणम् । ७

## अक्षरमम्बरान्तधृतेः ॥ ९ ॥

३ अधिकरणम्

वाजसनेयिनो गार्गिप्रश्ने समामनन्ति 'सहोवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायम्' इत्यादि।

* श्रुतप्रकाशिका *

॥ अक्षरमम्बरान्तधृतेः ॥ पूर्वाधिकरणे स्वे महिम्नि प्रतिष्ठितत्वमुक्तम्, तत्तु

७ भावप्रकाशिका ७

गार्गिब्राह्मणम्—"अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदँ सर्वमप्स्वोतं च प्रोतञ्च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायुरोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि मातिप्राक्षीर्मा ते मूर्द्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि मातिप्राक्षीरिति ततोह गार्गी वाचक्नव्युपरराम। वाचक्नवी—वाचक्नव्या दुहितेत्यर्थः। अनतिप्रश्न्याम्—विजिगीषुकथायां प्रश्नायोग्यामित्यर्थः। तदनन्तरमुद्दालकप्रश्नः। "अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमौ द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ सा होवाच अहं वै याज्ञ्यवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वा उपतिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ सा होवाच यदूर्ध्वं याज्ञ्यवल्क्य दिवो यदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चे-

* श्रुतप्रकाशिका *

परमात्मव्यतिरिक्तस्य श्रूयत इति शङ्कया सङ्गतिः ॥ वर्णो वा परमेश्वरो वेति विचार इति परैर्यदुक्तम् तदयुक्तम्; वर्णानामह्रस्वत्वादीर्घत्वाद्यनुपपत्तेः स्नेहलौहित्यच्छायादिधर्माप्रसङ्गाच्चेत्यभिप्रायेणाच्छायमित्यन्तं विषयवाक्यमुपात्तम्। प्रसङ्गाभावेऽपि

७ भावप्रकाशिका ७

त्याचक्षते। आकाश एव तदोतं च प्रोतं चेति। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। स होवाचैतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति किञ्चन॥ एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः। एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्रा अर्धमासा मासा ऋतवस्संवत्सरा इति विधृतास्तिष्ठन्ति। एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्यो नद्यस्स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः॥ यो वा एतदक्षरं गार्ग्यविदित्वा अस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणोथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः। तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्तविज्ञातं विज्ञातृ नान्यदतोस्ति द्रष्टृ नान्यदतोस्ति श्रोतृ नान्यदतोस्ति मन्तृ नान्यदतोस्ति विज्ञात्रेतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति। सा होवाच ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम॥ न वै जात्वित्यादि। युष्माकं मध्ये कश्चिदपीमं याज्ञवल्क्यं ब्रह्मोद्यं ब्रह्मवादं प्रति जेता नेत्यर्थः। काश्यो वैदेहः-- काशीराजो विदेहराजः। उज्ज्यम्—अवरोपितज्यमित्यर्थः। अपरस्मै धारयस्वेति— द्वितीयप्रश्नाय सन्नद्धो भवेत्यर्थः। श्वेतेभ्यः पर्वतेभ्यः—हिमवदादिभ्यः। बहुमन्येध्वम्—किं तत्? यदस्माद्याज्ञवल्क्यान्नमस्कारं कृत्वा निर्गमनम्, जयस्त्वस्य मनसापि नाशङ्कनीय इति भावः। (तत्तु परमात्मव्यतिरिक्तस्येति) इह हि द्वेधा पूर्वपक्षिणो गतिः। 'यदूर्ध्वं गार्गि दिवो यदर्वाक्' इतिवाक्ये

तत्र संशयः, किमेतदक्षरं प्रधानम्, जीवो वा; उत परमात्मा? इति । किं युक्तम्? प्रधानमिति । कुतः "अक्षरात्परतः परः" इत्यादिष्वक्षरशब्दस्य प्रधाने प्रयोगदर्शनादस्थूलत्वादीनां च तत्र समन्वयात् । 'यया तदक्षरमधिगम्यते' इत्यादिषु परस्मिन्नप्यक्षरशब्दो दृश्यत

* श्रुतप्रकाशिका *

प्रतिषेधस्सम्भवति, यथा 'नान्तरिक्षे न दिवि' इत्यग्निचयननिषेध इति चेन्न, निषेधस्य प्रसक्तविषयताया एव स्वतः प्राप्तत्वात्, गत्यन्तराभावे ह्यप्रसक्तविषयत्वाश्रयणम्, नान्यदा ॥ संशयमाह (तत्रेति) अक्षरं प्रधानं वा जीवो वा परमात्मा वेति संशयः । तदर्थं लौकिकप्रमाणविषये शब्दप्रतीतिशैघ्र्यमस्ति, नेति । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्राकाशशब्दनिर्दिष्टः किं भूताकाशः? उताव्याकृताकाशः? इति । धारणं च किं सत्तामात्रेण? उत प्रशासनेन? इति च । यदा प्रतीतिशैघ्र्यमस्ति, आकाशशब्दवाच्यश्च भूताकाशः, धारणं च सत्तया स्यात् तदा तद्धारणस्य प्रधानेऽसम्भवात्तद्धारकमक्षरं प्रधानम्, यदा आकाशशब्दवाच्योऽव्याकृताकाशः धारणं च सत्तामात्रेण तदा जीवेऽपि तत्सम्भवात्तद्धारकमक्षरं जीवः । यदा शब्दप्रतीतिशैघ्र्यस्य लौकिकप्रमाणगोचरत्वमप्रयोजकम्, आकाशशब्दवाच्यश्चाव्याकृताकाशः, धारणं प्रशासनेन तदा तस्य जीवेष्वसम्भवात्तदाधारभूतमक्षरं परमात्मेति राद्धान्ते फलफलिभावः । सिद्धान्ती शङ्कते (यया तदक्षरमिति) अथवा पार्श्वस्थचोद्यम् । तदा परस्मिन्नित्युपलक्षणं

* भावप्रकाशिका *

आकाशशब्देन भूताकाश एवोच्यते, तदाधारतया अक्षरमव्याकृतमाकाशमुच्यत इति, अथवा आकाशशब्देनाव्याकृताकाश एवोच्यते. तदाधारतया निर्दिश्यमानमपि तदेव, स्वे महिम्नि प्रतिष्ठित इतिवदिति भावः । (नान्तरिक्ष इति) 'न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि तस्माद्धिरण्यं निधाय चेतव्यम्' इति विधिशेषः । परस्मिन्नक्षरशब्दो दृश्यत इतिवाक्यस्वारस्यपर्यालोचनायां प्रधानपूर्वपक्षोपमर्दमात्रकृतसंरम्भस्य वाक्यमिवाभातीत्यस्वरसादाह (अथवा पार्श्वस्थचोद्य-

इति चेत्– न, प्रमाणान्तरप्रसिद्धश्रुतिप्रसिद्धयोः प्रमाणान्तरप्रसिद्धस्य प्रथमप्रतीतेः, प्रतीतपरिग्रहे विरोधाभावात्। किञ्च 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्याः' इत्यारभ्य सर्वस्य कालत्रितयवर्तिनः कारणभूताकाशाधारत्वे प्रतिपादिते 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इत्याकाशस्यापि कारणं तदाधारभूतं किमिति पृष्टे प्रत्युच्यमानमक्षरं सर्वविकारकारणतया तदाधारभूतं प्रमाणान्तरप्रसिद्धं प्रधानमिति प्रतीयते, अतोऽक्षरं प्रधानम् ॥

इति प्राप्त उच्यते-- अक्षरमम्बरान्तधृतेः। अक्षरम् परं ब्रह्म। कुतः? अम्बरान्तधृतेः, अम्ब-

* श्रुतप्रकाशिका *

जीवेऽपीति द्रष्टव्यम्, "कूटस्थोऽक्षर उच्यते" इत्यादिदर्शनात्। परिहरति ( न प्रमाणान्तरेति ) अनुमानस्य प्रत्यक्षमात्रापेक्षा, श्रुतेस्तु व्युत्पत्त्यादौ उभयापेक्षाऽस्ति, अत आनुमानिकादक्षराच्छ्रुतिप्रतिपन्नस्य विलम्ब इति लौकिकालौकिकयोर्लौकिकस्य प्रसिद्धिप्राथम्यात्प्राबल्यम्. श्रुतिलिङ्गादिष्वपि हि शीघ्रधीहेतुत्वात् प्राबल्यमिति भावः। ननु "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यत्र आकाशशब्दस्य भूताकाशे प्रसिद्धिप्राचुर्येऽपि ब्रह्मविषयत्वं दर्शितम्, अत्राप्यक्षरशब्दे तथा किं न स्यादित्यत्राह ( प्रतीतेति ) अक्षरशब्दस्य प्रधाने प्रयोगदर्शनात् अस्थूलत्वाद्यन्वयात् परब्रह्मणि प्रसिद्धत्वे सत्यपि प्रमाणान्तरप्रसिद्ध्या प्रथमप्रतीतस्य परिग्रहे विरोधाभावादाकाशकारणप्रश्नस्योत्तरत्वेनोच्यमानत्वाच्च प्रधानपरत्वमित्यर्थः॥ राद्धान्तमाह ( अक्षरमित्यादिना ) अम्बरान्तशब्दं केचित् बहुव्रीहितया व्याचक्षते, अम्बरम्–आकाशः, अन्तः–अवसानम् एषां तेषां पृथिव्यादीनां धृतेरिति हेत्वर्थ इति। तत्प्रधानव्यतिरेकप्रतिज्ञायामकिञ्चित्करमित्यभिप्रायेण षष्ठीतत्पुरुषं व्याचष्टे ( अम्बरस्य आकाशस्येति ) अन्तशब्दोऽवधिव-

रस्य-- आकाशस्य अन्तः पारभूतम् अव्याकृतमम्बरान्तः, तस्य धृतेः तदाधारतयाऽस्याक्षरस्योपदेशादिति यावत् । अयमर्थः 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्यत्राकाशशब्दनिर्दिष्टं न वायुमदम्बरम्, अपि तु तत्पारभूतमव्याकृतम् , अतस्तस्याऽव्याकृतस्याप्याधारत्वेनोच्यमानमक्षरं नाव्याकृतं भवितुमर्हतीति । नन्वाकाशशब्दनिर्दिष्टो न वायुमानिति कथमवगम्यते ? उच्यते ; 'यदूर्ध्वं गार्गि दिवो यदर्वाक्

* श्रुतप्रकाशिका *

चनः । कार्यस्याम्बरस्य देशतः कालतश्चावधिः कारणम् , नियतपूर्वभाविनः कारणत्वात्कार्यं प्रति कारणतत्त्वानामावरणतया बहिर्विद्यमानत्वाच्च; अतोऽम्बरान्तशब्दोऽव्याकृतवाचीति भावः । न ह्यत्राम्बरान्तवाचिशब्दः श्रूयत इत्यत्राह ( अयमर्थ इति ) ( नन्विति ) व्युत्पत्तिसिद्धार्थलङ्घनमयुक्तम् , अपवादाभावादित्यर्थः । परिहरति ( ( उच्यत इति ) अर्थविरोधान्न वायुमदम्बरग्रहणमित्यर्थः । नहि स्वयं विकारान्तर्भूतः कृत्स्नविकारजातस्याधारो भवितुमर्हति । यस्त्वित्यादिना पूर्वपक्ष-

छ भावप्रकाशिका छ

मिति) (अन्तशब्दोऽवधिवचन इत्यादि) इदमुपलक्षणम्. अन्तो हि लयः, स च कारणावस्थाप्राप्तिवचनेनान्तशब्देन कारणं लक्ष्यत इत्यपि द्रष्टव्यम् । ( कृत्स्नविकारजातस्याधारो भवितुमर्हतीति ) ननु वायुमदाकाशस्यावकाशप्रदानद्वारा सङ्कुचितसकलविकाराश्रयत्वमाकाशस्य सम्भवति । असङ्कुचितसकलविकाराश्रयत्वं तु प्रधानस्यापि न सम्भवति , तस्य जीवगतविकारानाश्रयत्वात्; अतो व्यर्थ आकाशशब्दस्य रूढित्याग इति चेन्न ; 'यदन्तरा द्यावापृथिव्योरिमे' इति द्यावापृथिव्योरन्तरालवर्तिनः कार्यजातस्य निर्देशात् , तत्र च वायुमदाकाशस्य सङ्ग्रहावश्यम्भावात् , तदाधारत्वं भूताकाशस्य न सम्भवतीति भावः । ननु 'यदूर्ध्वं याज्ञवल्क्य दिवो यदर्वाक् पृथिव्याः' इति प्रश्नस्य तत्प्रतिवचनस्य कथं प्रधानविषयत्वम् ? पूर्वसन्दर्भविरोधात्. एवं ह्युपाख्यायते बृहदारण्यके,– जनकयज्ञे कुरुपाञ्चाल-

ॐ भावप्रकाशिका ॐ

देशागतेषु ब्राह्मणेषु क्रुद्धेषु तमश्वलः पप्रच्छ, त्वं नु खलु याज्ञवल्क्य ब्रह्मिष्ठोऽसीति नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयम् इति स्म याज्ञवल्क्यस्योक्तिभङ्गया तस्य ब्रह्मिष्ठत्वाभिमानमधिकं सन्तमवधार्य तद्विजिगीषया अश्वलादिषु केषुचित्तत्स्पृष्टवत्सु तेन सदुत्तरोक्त्या जितेषु अथ हैनं गार्गि पप्रच्छेत्यादि गार्गि ब्राह्मणं प्रवृत्तम्, तत्र गार्ग्या 'यदिदं सर्वमप्स्वोतं च प्रोतं च' इत्यादिना तत्तदुत्तरानन्तरं पुनः पुनः पृष्टस्य याज्ञवल्क्यस्य क्रमेण ब्रह्मलोकेषु गार्गीत्युत्तरे सति 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति पुनः पृष्टेन याज्ञवल्क्येन गार्गि मातिप्राक्षीर्माते मूर्द्धा व्यपतत् अनतिप्रश्न्यां वै देवतामति पृच्छसि मातिप्राक्षीरिति सक्रोधमुक्ते भीता गार्गी उपरराम। तत उद्दालके प्रसिद्धे ब्रह्मविदि सूत्रमन्तर्यामिणं च पृष्टवति याज्ञवल्क्येन जिते पुनर्गार्गी सर्वेषां ब्राह्मणानां पराजयो जायत इति शङ्कया याज्ञवल्क्यस्य क्रोधं ब्राह्मणानामनुज्ञयैवाकिञ्चित्करतामापाद्य प्राक् मातिप्राक्षीरिति निवारितं प्रश्नं पुनः करिष्यामीत्याशावती 'ब्राह्मणा भगवन्तोऽहमिमं द्वौ प्रश्नं प्रक्ष्यामि तौ चे मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति तेषामनुज्ञां याचित्वा पृच्छेति तैरनुज्ञाता प्रश्नद्वयं पप्रच्छ 'यदूर्ध्वं याज्ञवल्क्येत्यादिना। अत्र च पूर्वम् अनतिप्रश्न्यां वै देवतामतिपृच्छसि' इति गार्गिब्राह्मणान्ते याज्ञवल्क्येन सक्रोधं यः प्रश्नो निवारितस्स एव खलु गार्ग्या सर्वेषां पराजयो भविष्यतीति भीतया तस्य क्रोधमविगणय्य पुनः प्रश्नोऽवतारितः, तस्य च परमात्मनि पर्यवसानं गार्गिब्राह्मण एवानतिप्रश्न्यां वै देवतामतिपृच्छसीति याज्ञवल्क्यवचनेन स्फुटमिति तदनुसारेण तदुत्तरप्रश्नस्यापि परमात्मनि पर्यवसानं युक्तम्, न प्रधानपरत्वमिति चेन्न; अनतिप्रश्न्यां देवतामतिपृच्छसीति परदेवताविषयप्रश्ननिवारणम्, एकान्तरितप्रश्नः परदेवताविषयो भविष्यतीति दूरदृष्टिमता याज्ञवल्क्येन तत्रैव कृतमित्युपपत्तौ तस्य प्रश्नस्य परमात्मविषयत्वे प्रमाणाभावात्. अत एवाक्षरब्राह्मणारम्भे द्वितीयप्रश्न एव परमात्मविषयो भविष्यतीति जानत्या– चिकीर्षितस्य तस्य निवारणपरिजिहीर्षया युगपत्प्रश्नद्वयानुज्ञा पृष्टेत्युपपत्तेः। प्रथमप्रश्नस्य देवताविषयत्वे प्रमाणाभावादाकाशशब्दस्याव्याकृतपरत्वेनानुपपत्तिरिति द्रष्टव्यम्। ननु अक्षरशब्दस्याव्यक्तपरमात्मनो रूढत्वेऽत्रोभयत्र यौगिकत्वेपि वा व्युत्पत्तिदशायां प्रमाणान्तरसापेक्षत्वेपि प्रतिपादनदशायां तदनपेक्षत्वादिति परिहारस्यैव समाश्रय-

पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं च", इत्युक्ते त्रैकाल्यवर्त्तिनो विकारजातस्याधारतया निर्दिष्ट आकाशो न वायुमदाकाशो भवितुमर्हति, तस्यापि विकारान्तर्गतत्वात्, अतोऽत्राकाशशब्दनिर्दिष्टं भूतसूक्ष्ममिति प्रतीयते। ततस्तस्यापि भूतसूक्ष्मस्याधारभूतं किमिति पृच्छ्यते "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति। अतस्तदाधारतया निर्दिश्यमानमक्षरं न प्रधानं भवितुमर्हति। यत्तु श्रुतिप्रसिद्धात् प्रमाणान्तरप्रसिद्धं प्रथमं प्रतीयत इति· तन्न, अक्षरशब्दस्यावयवशक्त्या स्वार्थप्रतिपादने प्रमाणान्तरानपेक्षणात्· सम्बन्धग्रहणदशायामर्थस्वरूपं येन प्रमाणे-

* श्रुतप्रकाशिका *

युक्तिमनूद्य परिहरति (तन्नेति) रूढिशक्त्या अवयवशक्त्या वा शब्देन स्वार्थप्रतिपादनं स्यात्, तत्र वक्ष्यमाणपरिहारस्य पक्षद्वयसाधारण्येऽपि 'प्रोक्षणीष्वर्थसंयोगा'दिति न्यायेन अवयवशक्त्या अर्थप्रतिपादनसम्भवे समुदायशक्तिकल्पनाऽयोगात् अयमक्षरशब्दो न रूढ्या वर्तत इत्यभिप्रेत्य यौगिकत्वपक्षे परिहार उच्यते, तत्र व्युत्पन्नानां पदावयवानां संहत्य स्वार्थप्रतिपादने किं प्रमाणान्तरापेक्षा, उत तत्तत्पदावयवव्युत्पत्तिवेलायामिति विकल्पं हृदि निधाय प्रथमे कल्पे परिहारमाह (अक्षरशब्दस्येति) अवयवशक्तिरेवार्थप्रतीतिकारणमिति न प्रमाणान्तरमपेक्षितम्, न हि दण्डिशब्दः स्वार्थप्रतिपादने दण्डदेवदत्तग्राहिप्रत्य-

* भावप्रकाशिका *

णीयत्वात्. अक्षरशब्दस्याधुना यौगिकत्वप्रतिपादनं मिथ्येत्याशङ्क्य वस्तुस्थितिमनुसरता भगवता भाष्यकृता अक्षरशब्दस्योभयत्र यौगिकत्वमुपन्यस्तम्, न तु प्रकृतोपयोगित्वेनेत्याह (रूढिशक्त्या वा अवयवशक्त्या वेत्यादिना) (विशेष-

नावगम्यते, न तत्प्रतिपादनदशायामपेक्षणीयम् ॥ ६ ॥

* श्रुतप्रकाशिका *

क्षापेक्षः । द्वितीयं परिहरति (सम्बन्धेति) पदावयवानां व्युत्पत्तौ प्रमाणान्तरापेक्षाऽस्त्येव, प्रतिपादनदशायां तु न तदपेक्षा, यथा चक्षुरादीनां तिमिरादिदोषापनयनस्यौषधाद्यपेक्षत्वेऽपि घटादिपरिच्छित्तौ न भेषजग्राहिप्रमाणापेक्षा, यथाहुः "अर्थबोधेऽनपेक्षत्वान्मानान्तरमनादृतम् । व्युत्पत्त्युपायभूतं यत्तच्च तन्मात्रवर्ति तु" इति व्युत्पन्नानां पदावयवानां प्रतिपादनकालेऽपि व्युत्पत्त्यपेक्षितमानान्तराकाङ्क्षाऽस्ति चेत् दण्डिनमाहूय गामानयेत्यादिवाक्यानामसन्निकृष्टार्थविषयाणां प्रत्यक्षसाचिव्याभावेन स्वार्थाप्रतिपादकतया गवानयनादिप्रवृत्त्युच्छेदप्रसङ्गः, अलौकिकार्थप्रतिपत्त्यनुपपत्त्या शास्त्रवैयर्थ्यप्रसङ्गाच्च, अतो मानान्तरापेक्षाभावात्तन्निबन्धनमर्थप्रतिपत्तौ प्राथम्यचारम्यरूपवैषम्यं नास्तीत्यर्थः । किञ्च यौगिकानां शब्दानामवयवार्थयोगिवस्तुसामान्यप्रतिपादने किं मानान्तरापेक्षा ? उत विशेषपर्यवसान ? इति विकल्पे प्रथमे शिरसि परिहारोऽक्षरशब्दस्येतिग्रन्थेन फलितः । द्वितीये तु विशेषपर्यवसानस्य प्राकरणिकलिङ्गाद्यधीनत्वान्न मानान्तरापेक्षेति च सम्बन्धेत्यादिग्रन्थेऽर्थसिद्धम्, न तत्प्रतिपादनदशायामपेक्षणीयमिति ह्युक्तम्. विशेषपर्यवसाने सति हि प्रतिपादनं निराकाङ्क्षं भवति । अत्र परमात्मलिङ्गं दर्शितम् । अपि च अवयवार्थपौष्कल्यं यत्र सम्भवति तदेव यौगिकशब्देन स्वरसतः प्रतीयते, यथेश्वरशब्दो लौकिकपार्थिवादिषु सत्स्वप्यलौकिकमीश्वरं शीघ्रं प्रत्याययति, अतश्च न क्षरतीत्यवयवशक्तिः परमात्मानमेव शीघ्रमुपस्थापयति । एतदुक्तं भवति ; प्रतिपाद्यस्य लौकिकालौकिकप्रमाणगोचरत्वं शाब्दप्रतीतिविलम्बयोरप्रयोजकं धर्माधर्मेश्वरादिशब्दैः शौक्ल्यादिभ्यः पार्थिवादिभ्योऽप्यलौकिकार्थे प्रतिपत्तिशैघ्र्यस्य

ꣳ भावप्रकाशिका ꣳ

पर्यवसाने सति हीति ) यदि व्युत्पत्तिग्राहकप्रमाणमनपेक्ष्यैव शब्दस्य विशेषपर्यवसानं स्यात् तदैव न तत्प्रतिपादनदशायामपेक्षितमिति भाष्योक्तं वाक्यार्थप्रतिपादनस्य निराकाङ्क्षत्वं युज्यते, अतस्तस्य भाष्यस्य विशेषपर्यवसानेपि निराकाङ्क्षत्वमभिप्रेतमिति भावः । ननु किमत्र ब्रह्मणि विशेषपर्यवसाने प्राकरणिकं लिङ्गमित्यत आह ( अत्र परमात्मलिङ्गं दर्शितमिति ) ( धर्माधर्मेति ) धर्मशब्देन

एवं तर्ह्यक्षरशब्दनिर्दिष्टो जीवोऽस्तु, तस्य भूतसूक्ष्मपर्यन्तस्य कृत्स्नस्याचिद्वस्तुन आधारत्वोपपत्तेः, अस्थूलत्वाद्युच्यमानविशेषणोपपत्तेश्च। 'अव्यक्तमक्षरे लीयते' "यस्याव्यक्तं शरीरं यस्याक्षरं शरीरम्" "क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" इत्यादिषु प्रत्यगात्मन्यप्यक्षरशब्दप्रयोगदर्शनादित्यत्रोत्तरम्—

* श्रुतप्रकाशिका *

दर्शनात्, अत एव प्रयोगप्राचुर्याद्यधीनं प्रसिद्धितारम्यमेव तयोः प्रयोजकम्, यौगिकशब्दानां च असङ्कुचितावयवार्थगोचरत्वेन स्वतो वासितत्वात् तद्वत्येव प्रसिद्ध्यतिशयात् प्रतीतिशैघ्र्यमिति। नन्ववयवशक्त्याऽर्थप्रतिपादनेऽपि प्रधानस्यानेकप्रमाणगम्यतया अभ्यस्तत्वादस्ति प्रथमावगतिः यथा गोशब्दस्य सामान्यनिमित्तत्वेऽपि गोशब्दोच्चारणात् स्वाभ्यस्तायामेव गवि प्रथममेव प्रतीतिः। तदसत्; प्रधानस्यानेकप्रमाणगम्यत्वानभ्युपगमात्। न हि प्रत्यक्षेण जगत्कारणभूतं सूक्ष्मं वस्तु निरीक्ष्यते, नापि श्रुतिविरोधिनोऽनुमानस्य तत्र प्रामाण्यं सम्भवतीति वक्ष्यते, ततश्च श्रुतिरेव तत्रापि प्रमाणं वक्तव्यम्, तथाच श्रुतिप्रसिद्धात् परमात्मनः प्रमाणान्तरप्रसिद्धस्य प्रधानस्य प्रथमप्रतिपत्तिरित्यसिद्धम्। किञ्च प्रथमप्रतीतस्यापि प्रधानस्य विरोधेन त्यक्तव्यतैव, विरोधश्चात्र स्पष्टः, एकस्यैवाधाराधेयभावानुपपत्तेः॥

उत्तरसूत्रशङ्कामाह (एवं तर्हीति) अव्यक्तमक्षर इत्यव्यक्तस्य पृथगुपादानादक्षरशब्दो जीवपरः, न प्रधानपर इति ज्ञापनायाव्यक्तमुपात्तम्॥

卐 भावप्रकाशिका 卐

लौकिकशौक्ल्यलौहित्यादिलक्षणघटादिधर्मापेक्षया अलौकिकस्यादृष्टरूपस्य धर्मस्य प्रतिपत्तेश्शैघ्र्यदर्शनात्, एवमधर्मशब्देनापि घटत्वादिधर्मभिन्नघटादिस्वरूपलौकिकार्थापेक्षया अलौकिकस्यादृष्टरूपस्याधर्मस्य प्रतिपत्तेश्शैघ्र्यदर्शनात्। ईश्वरशब्देनापि लौकिकपार्थिवापेक्षया अलौकिकेऽर्थे प्रतीतिशैघ्र्यदर्शनादित्यर्थः। (स्वाभ्यस्तायामेव गवीति) चिरपरिचितगोव्यक्तेरेव प्रथमप्रतीतिरिति भावः। (प्रामाण्यं सम्भवतीति वक्ष्यत इति) रचनानुपपत्तेरित्यधिकरण इति शेषः। (अक्षर-

## सा च प्रशासनात् ॥ १० ॥

सा चाम्बरान्तधृतिरस्याक्षरस्य प्रशासनादेव भवतीत्युपदिश्यते "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्द्धमासा मासा ऋतवस्सम्वत्सरा इति विधृतास्तिष्ठन्ति" इत्यादिना । प्रशासनम्—प्रकृष्टं शासनम् । न

* श्रुतप्रकाशिका *

॥ सा च प्रशासनात् ॥ ननु नात्राम्बरान्तधृतेः परमात्मप्रशासनाधीनत्वं साक्षाच्छ्रुतमिति शङ्कां परिजिहीर्षन् कतिपयवस्तुशासनस्य जीवेऽपि सम्भवाद्व्यावृत्तिं च दर्शयन् प्रशासनशब्दं व्याचष्टे ( प्रकृष्टमिति ) क्वचिदप्यप्रतिहतत्वेन विषयप्रकर्षाच्छासनस्य प्रकर्षः, प्रकर्षस्य निवारकाभावाच्छासनस्याम्बरान्तविषयत्वमपि सिध्यतीति हृदयम् । ततः किमित्यपेक्षायां प्रकृतेः परमात्मशासनकर्मत्वे हेत्वन्तरं च द्योत-

७ भावप्रकाशिका ७

शब्दो जीवपर इति ) अत्र न्यायसिद्धाञ्जने वेदान्ताचार्यैः 'सा च समत्रैगुण्या मूलप्रकृतिः तस्यामपि मात्रया भेदमालम्ब्य अव्यक्ताक्षरविभक्ताविभक्ततमोरूपावस्थाचतुष्टयमामनन्ति । यत्तु भाष्यादिषु अव्यक्तसहपठितस्याक्षरशब्दस्य चेतनविषयतया बहुश उपादानम्. तत्परव्याख्यानप्रकारमनुरुध्य वा स्वरूपतो निर्विकारेऽपि जीवे सृज्यत्ववचनात् । चिद्रूपविकारवत्त्वेपि यथाक्षरशब्दप्रवृत्तिः तथा परब्रह्मेतरविषयस्याक्षरशब्दस्याचिदवस्थाविशेषेपि शक्तिकल्पनोपपद्यत इति प्रतिपादयितुं वा क्वचित्क्वचित् क्षरे प्रकृतिविशेषे अक्षरशब्दस्य मुख्यत्वायोगात् परब्रह्मरूपाक्षरसम्बन्धेन लक्षणायां प्रयोजनाभावात्, जीवसम्बन्धेन त्वजहल्लक्षणया लयविशेषादिप्रतिपादनौचित्यात् 'उभावेतौ लीयेते परमात्मनी'ति द्वयोरपि लयाद्यभिधानाच्च । अत्राजहल्लक्षणैव युक्तेत्यभिप्रायाद्वेति न कश्चिद्विरोध इत्युक्तम्. तद-

**चेदृशं स्वशासनाधीनसर्ववस्तुविधरणं बद्धमुक्तोभयावस्थस्यापि प्रत्यगात्मनः सम्भवति, अतः पुरुषोत्तम एव प्रशासित्रक्षरम् ॥ १० ॥**

* श्रुतप्रकाशिका *

यत् जीवव्यावृत्तिसिद्धं दर्शयति ( न चेदृशमिति ) ( **स्वशासनाधीनसर्ववस्तुविधरणमिति** ) अयमभिप्रायः,— न केवलं शासनप्रकर्षादनपोदितात्प्रकृतेः प्रशासनकर्मत्वसिद्धिः, किन्तु "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति" इत्यादिश्रुत्यन्तरेषु शासनकर्मोपस्थापकसर्वशब्दासङ्कोचाच्च तत्सिद्धिः । किञ्च सत्यशब्दनिर्वचने "तानि ह वा एतानि त्रीण्यक्षराणि सत्यमिति तद्यत्सत्तदमृतम् अथ यत्ति तन्मर्त्यम् अथ यद्यं तेनोभे यच्छति'इति मर्त्यशब्दवाच्याचेतनस्य तन्नियाम्यत्वं च प्रतीयते . मर्त्यशब्दो ह्यवयवशक्त्या पूर्वपूर्वावस्थाभाज्यचेतने वर्तते, न शरीरमात्रे, द्यावापृथिव्यादीनां तन्नियाम्यत्वाभावप्रसङ्गात् । किञ्च 'यस्याव्यक्तं शरीरं यस्याक्षरं शरीरं यस्य मृत्युश्शरीर'मिति प्रधानस्य परशरीरत्वश्रवणादत्यन्तनियाम्यस्यैव शरीरत्वाच्च नियाम्यत्वसिद्धिः । इह च 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चे'ति पृष्टे 'एतद्वैतदक्षरं गार्गी'त्यारभ्य 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश

* भावप्रकाशिका *

श्चानुसन्धेयम् ॥ ननु नात्र 'अम्बरान्तधृतेः परमात्मप्रशासनाधीनत्व'मिति परमात्मशब्दोऽक्षरपरः । 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' इत्यादिश्रवणेपि अम्बरान्तशब्दस्यात्राश्रवणादिति भावः । विषयप्रकर्षात्— विषयासङ्कोचादित्यर्थः । ( श्रुत्यन्तरेष्विति ) ननु श्रुत्यन्तरे शासनाधीनसर्वाधारकत्वस्य परमात्मधर्मत्वेन श्रुतत्वेपि अक्षरब्राह्मणे तादृशपरमात्मासाधारणधर्मश्रवणं नेति चेदुच्यते, 'एतस्य वा अक्षरस्य प्रशासने गार्गि' इत्यत्र वैशब्दस्य प्रमाणान्तरप्रसिद्धिद्योतकतया प्रापकमानान्तरमदर्शनस्यापेक्षितत्वात् . अनुवादवाक्यस्य प्रापकवाक्यानुसारेणार्थस्य वर्णनीयत्वात्पुरोवादवाक्ये असङ्कोचेन सर्वप्रशासनश्रवणादनुवादकमपि वाक्यं तदर्थकमित्यभिप्रायेण तदुदाहृतमिति द्रष्टव्यम् । ननु द्यावापृथिव्यादीनां तन्नियोज्यत्वाभावप्रसङ्गे इष्टापत्तावापादितायां प्रमाणान्तरस्यैव शरणीकरणीयतया तदेवोपन्यस्यतां किं तदपेक्षेणानेनेत्यस्वरसादाह ( किञ्च

## अन्यभावव्यावृत्तेश्च ॥ ११ ॥

अन्यभावः– अन्यत्वम्, प्रधानादिभावः। अस्याक्षरस्य परमपुरुषादन्यत्वं वाक्यशेषे व्यावर्त्यते 'तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इति। अत्र

* श्रुतप्रकाशिका *

ओतश्च प्रोतश्चे'त्यक्षरेणाव्याकृतस्य धारणं श्रूयते, अतः शासनस्य प्रकर्षाच्छ्रुत्यन्तरानुग्रहाच्चाम्बरान्तधृतिरपि प्रशासनाधीनेति। सौत्रश्चशब्दो ह्यर्थतया हेतुवाचीत्यभिप्रायेणाह ( अत इति ) अम्बरान्तधृतिः प्रशासनादेव सिध्यतीति यतः तत एवेत्यर्थः। ''प्रशासितारं सर्वेषाम् 'विद्यात्तु पुरुषं परमिति ''उत्तमः पुरुषस्त्वन्यः" इत्यादिवचनाभिप्रायेण पुरुषोत्तम एव प्रशासित्रक्षरमित्युक्तम्॥ एवं प्रधानपुरुषव्यतिरेकौ सूत्रद्वयेन पृथगुपपादितौ। अथैकसूत्रेण प्राकरणिकचरमवाक्यविषयेणोभयव्यतिरेकमाह– अन्यभावव्यावृत्तेश्च ॥ व्यावर्त्यते निवर्त्यते, निवर्तकधर्मः प्रतिपाद्यत इत्यर्थः। ततश्च सूत्रस्थव्यावृत्तिशब्दो व्यावर्तकधर्मपर इति दर्शितं स्यात्, तेन विषयवाक्यानुगुण्यं सूत्रस्य स्यात् तत्र ह्यन्यनिवर्तकधर्मो द्रष्टृत्वादिरवगम्यते। द्वितीययोजनाया अपेक्षितत्वात् नान्यदतोऽस्तीत्यादिकमुदाहृतम्। अस्मिन्वाक्ये प्रधानव्यावृत्तिसिद्धिं दर्शयति (अत्रेति) अत्र–अदृष्टमितिवाक्ये। द्रष्ट्रादिशब्दाः रूप-

* भावप्रकाशिका *

यस्येत्यादिना ) ( अव्याकृतस्य धारणं श्रूयत इति ) ततश्चाव्याकृतस्य धारणं प्रतिपाद्य कथं तस्याव्याकृतस्य धारणमित्याकाङ्क्षायां शासनाधीनं धारणमिति प्रतिपादनाय 'एतस्य वा अक्षरस्य प्रशासने'त्यादिसन्दर्भः प्रवृत्तः, तस्य ह्ययमभिप्रायः, सूर्याचन्द्रमःप्रभृति सर्वपदार्थजातं शासनेन धारयतोऽक्षरस्य परब्रह्मणः प्रशासनेन धारणे को भार इति। 'ततश्च एतस्य वा अक्षरस्य प्रशासने' इति सन्दर्भस्याम्बरान्तधृतिप्रकारोपपादनार्थत्वात् अम्बरान्तधारणमपि शासनाधीनं सिध्यतीति भावः॥

द्रष्टृत्वश्रोतृत्वाद्युपदेशादस्याक्षरस्याचेतनभूतप्रधानभावो व्यावर्त्यते ; सर्वैरदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युप-

* श्रुतप्रकाशिका *

शब्दप्रभृतिबाह्यविषयाणां मन्तव्याध्यवसेयाद्यन्तःकरणविषयाणां च साक्षात्कर्तृवाचकाः, शासनस्य शासितव्यवस्तुदर्शनसाकाङ्क्षत्वात् 'न दृष्टेर्द्रष्टारम्' 'न श्रुतेः श्रोतारम्' 'न मतेर्मन्तारम्'' इत्यादिना परस्य श्रवणमननादिकर्तृत्वनिषेधेन तेषामयोग्यत्वात् 'पश्यत्यचक्षुः स शृणोत्यकर्णः' इति रूपादिसाक्षात्कर्तृत्वश्रवणाच्च। जीवव्यावृत्तिं दर्शयति ( सर्वैरिति ) सर्वैः— योगिभिः। ( सर्वस्येति ) रूपतदाश्रयादिष्वेकैकवर्गकार्त्स्न्यपरस्सर्वशब्दः , अस्यासङ्कुचितवृत्तितया द्रष्टृशब्देन सर्वसाक्षात्कारस्याभिहितत्वे सत्यादिशब्दोपात्तश्रोतृत्वादीनां निर्विषयत्वप्रसङ्गात् । सर्वैरदृष्टत्वादिमात्रं प्रधानादीनामपि सम्भवतीति तद्व्यावृत्त्यर्थमदृष्टस्यैव सतस्सर्वस्य द्रष्टृत्वाद्युपदेशाच्चेत्युक्तम् । अदृष्टत्वादिविशेषितं द्रष्टृत्वादिकं प्रत्यगात्मव्यावर्तकमित्यर्थः । प्रत्यगात्मानः सर्वे प्रत्येकं स्वस्वाहम्प्रत्ययवेद्याः रूपादिविज्ञातारश्च, परन्तु रूपादिज्ञानवेलायां योगिभिरपि स्वस्वरूपवद्रूपादिवच्च न ज्ञायते। निष्ठान्तैः

* भावप्रकाशिका *

ननु द्रष्टृत्वं चक्षुर्जन्यज्ञानवत्त्वम्, श्रोतृत्वं श्रोत्रजन्यज्ञानवत्त्वम्. नचैतत् परमात्मनि करणशून्ये सम्भवतीत्यत आह ( द्रष्ट्रादिशब्दा इति ) रूपसाक्षात्कर्ता द्रष्टा, शब्दसाक्षात्कर्ता श्रोता , मन्तव्यसाक्षात्कर्ता मन्ता, अध्यवसेयसाक्षात्कर्ता विज्ञातेत्यर्थः । द्रष्ट्रादिपदैः रूपादिसाक्षात्कर्तृत्वार्थकथनस्य प्रकृतशासनोपयोगं दर्शयति ( शासनस्येति ) ( तेषामयोग्यत्वादिति ) चक्षुश्श्रोत्रमनआदिजन्यज्ञानरूपाणां दर्शनश्रवणमननादीनामयोग्यत्वादित्यर्थः,। ननु परमात्मनोऽपि योगिभिर्नित्यमुक्तैस्स्वेनापि दृष्टत्वादाह ( सर्वैः—योगिभिरिति ) सर्वशब्दस्यैकैकवर्गकार्त्स्न्यपरत्वे हेतुमाह ( अस्यासङ्कुचितवृत्तितयेति ) ( अदृष्टत्वादिविशेषितं द्रष्टृत्वादिकं प्रत्यगात्मव्यावर्तकमित्यर्थ इति ) अयोगिभिरदृष्टत्वादिविशेषितमित्यर्थः । ( प्रत्यगात्मन इति ) ननु परमात्मापि स्वाहंप्रत्ययवेद्य एव दृष्ट इति न विशेष इति चेन्न; अयोगिभिरदृष्ट इत्यत्र तात्पर्यात् । ( स्वस्वरूपवदिति ) प्रत्यगात्मस्वरूपवदित्यर्थः । नन्वदृष्ट इत्यादौ अदृष्टत्वद्रष्टृत्वादीनामेव प्रत्येकं धर्मतया भवणात्

**देशाच्च प्रत्यगात्मभावो व्यावर्त्यते, अत इयमन्यभावव्यावृत्तिरस्याक्षरस्य परमपुरुषतां द्रढयति । एवं वाऽन्यभावव्यावृत्तिः,– अन्यस्य सद्भावव्यावृत्तिरन्यभावव्यावृत्तिः, यथैतदक्षरमन्यैरदृष्टं सदन्येषां द्रष्टृ च**

* श्रुतप्रकाशिका *

पदैः तत्तद्विषयप्रतिपत्तिवेलायां परमात्मनोऽनवगतत्वं विवक्षितम् । अश्रुतम्–शब्दश्रवणदशायामज्ञातम् । अमतम्–स्थाणुपुरुषाद्यर्थविचारदशायां तद्विषयवदप्रतिपन्नम् । अविज्ञातम्–अध्यवसायदशायां घटादिवत् स्वस्वरूपवत्त्वानवगतम् । अत एव हि विशेषितं द्रष्टृत्वादिकं परमात्मासाधारणम् । यद्वा रूपशब्दाद्यर्थवेदिभिस्सर्वैरवेद्यत्वेन विशेषितं तत्तदर्थद्रष्टृत्वं समुच्चित्य चिदचिद्व्यावर्तकमित्यर्थः । अन्यभावव्यावृत्तेरित्युक्तहेतोस्साध्याविशिष्टत्वशङ्कां च शमयन्निगमयति ( अत इति ) इयं व्यावर्तकधर्मान्वयरूपा व्यावृत्तिः परमपुरुषत्वं साधयति, अतः साध्याविशिष्टत्वव्युदासः, अस्यां योजनायां प्रधापुनरुषव्यावर्तकसकलधर्मवाचिवाक्यानि विषयीभूतानीति चिदचिद्व्यावृत्तिः कण्ठोक्ता स्यात् । चशब्द उक्तहेतुसमुच्चये । मुखान्तरेण सूत्रं योजयति ( एवं वेति ) अक्षरार्थमाह ( अन्यस्येति ) नान्यदित्यादिवाक्यस्य सूत्रविषयत्वं हृदि निधाय तस्यार्थमाह ( यथैतदिति ) यथा 'अस्मिन् ग्रामे देवदत्त एव पुरुषो नान्य' इत्युक्ते न पुरुषमात्रनिषेधः, अपि तु प्रस्तुततुल्यपुरुषान्तर-

ꕥ भावप्रकाशिका ꕥ

कथमदृष्टत्वविशेषितद्रष्टृत्वेन प्रत्यगात्मव्यावृत्तिलाभ इत्याशङ्क्याऽदृष्टं सत् द्रष्टृ इति श्रुत्यर्थलाभाद्विवक्षितसिद्धिरित्यभिप्रयन्नाह ( निष्ठान्तैः पदैरिति ) ननु विशेषितस्यैव धर्मत्वे द्रष्टृत्वं प्रधानव्यावर्तकमदृष्टत्वविशेषितं प्रत्यगात्मव्यावर्तकमिति विभज्योक्तिरयुक्ता, विशेषितस्यैव धर्मत्वात्. किञ्चायोगिभिरिति सङ्कोचोऽपि व्यर्थः । इतराद्दश्यत्वविशेषितद्रष्टृत्वस्यैव तथात्वादित्यस्वरसादाह ( यद्वा रूपशब्दाद्यर्थवेदिभिरिति ) ( अस्यां योजनायामिति ) द्वितीययोजनायां तु 'नान्यदतः' इत्यादिवाक्यस्यैव विषयत्वमिति भावः । ( कण्ठोक्ता स्यादिति ) द्वितीययोजनायामर्थसिद्धत्वमुत्तरत्र स्पष्टम्. चशब्द उक्तहेतुसमुच्चय इति योजनान्तरे त्वनुक्तहेतुसमुच्चयपरत्वमुत्तरत्र स्पष्टम् । ( प्रस्तुततुल्यपुरुषान्तरेति ) 'इषुर्विष्णुतिस्ससाहं

## सत् स्वव्यतिरिक्तस्य समस्तस्याधारभूतम्, एवमनेना- दृष्टमेतस्य द्रष्टृ च सदेतस्याधारभूतमन्यन्नास्तीति वदन्

* श्रुतप्रकाशिका *

निषेधः स्यात्, पुरुषान्तराणां प्रमाणसिद्धतया निषेद्धुमशक्यत्वात्, एवमिहापि द्रष्ट्राद्यन्तराणां प्रामाणिकत्वात् प्रकृततुल्यद्रष्ट्रादिनिषेधपरमिदं वाक्यमित्यभिप्रायेण प्रकृतगुणविशिष्टत्वमुक्तम्। (आधारभूतमिति) समस्तस्य प्रशासनेनाधारभूतमित्यर्थः। निषेधविषयं दर्शयति (एवमिति) एतस्य–अक्षरस्य। आधारभूतम्–प्रशासनेन धारकम्। एवं परमात्मनो नियन्तृतया आधारभूतद्रष्ट्रन्तराभावादधिकनिषेधपरमिदं वाक्यं व्याख्यातम्। एवं वा; एतस्येतिपदं व्यतिरिक्तस्य समस्तस्येतिपदप्रकृतजगत्परम्। अक्षरादन्यत् समस्तजगतः प्रशासनेन धारकं तेनादृष्टं द्रष्टृ नास्तीत्यर्थः। तदा समनिषेधपरो वाक्यशेषः स्यात्। ननु नान्यदतोऽस्ति द्रष्ट्रितिवाक्यं द्रष्टॄणां पुरुषाणां ब्रह्मतादात्म्येन अतदात्मकत्वनिषेधपरं किं न स्यात्? न; ऐक्यविधानस्याप्रकृतत्वात्. ऐक्यविधिशेषो हि भेदनिषेधः, व्यतिरेकस्यान्वयशेषत्वात्। यदि कचिदैक्यविधानाभावेऽपि भेदनिषेधस्सम्भवति, तत्र तु निर्वाहान्तरासम्भवादभ्युपगन्तव्यः, इह तु गत्यन्तरसम्भवादैक्यविध्यभावे भेदनिषेधपरत्वाश्रयणमयुक्तम्। किञ्च 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' इत्युपक्रम्य 'एत-

* भावप्रकाशिका *

भवति समानमितरच्छ्येनेन' इत्यत्रेतरशब्दस्य पूर्वानिर्दिष्टसदृशश्येनवैशेषिकाङ्गपरत्वमिति सप्तमे स्थापितत्वादिति भावः। एतस्याधारभूतमितिभाष्ये एतच्छब्दस्याक्षरपरामर्शित्वमपि सम्भवेत् जगत्परामर्शित्वमपि सम्भवेत्, उभयोरपि प्राक् प्रस्तुतत्वात् ' तथा चाक्षरपरामर्शित्वे अक्षरस्य धारकं,किमपि नास्तीत्युक्त्या अधिकनिषेधः कृतः स्यात् . पक्षान्तरे तु समनिषेध इत्यभिप्रेत्य व्याचष्टे ( एतस्याक्षरस्येत्यादिना ) ' यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति। एकधैवानु द्रष्टव्यम्, 'नेह नानास्ति किञ्चन। मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति कठवल्लीबृहदारण्यकादाविव भेदनिषेधसम्भवे ब्रह्मणस्समाभ्यधिकनिषेधपरत्वाश्रयणे को हेतुरिति शङ्कते (ननु नान्यदित्यादिना) ( यदि कचिदिति ) 'यत्र हि द्वैतमिव भवति 'इत्यादाविति भावः। यत्र यदि

'नान्यदतोऽस्ति द्रष्टृ' इत्यादिवाक्यशेषोऽन्यस्य सद्भावं व्यावर्तयन्नस्याक्षरस्य प्रधानभावं प्रत्यगात्मभावं च

* श्रुतप्रकाशिका *

स्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' इत्युपक्रमोपसंहाराभ्यां प्रकरणस्य परमात्मनो विश्वाधारकताप्रतिपादनपरत्वमवगम्यते, न त्वैक्यपरत्वम्, धारकत्वे अभिहिते तस्यापि धारकान्तरशङ्का स्यात्, लोके धारकाणामपि धार्यत्वदर्शनात्. यथा कारणानामपि कार्यत्वदर्शनेन परमात्मनोऽपि जगत्कारणत्वेनान्यकार्यत्वशङ्कायां तद्व्यावर्त्तनेन परमकारणत्वसिद्धये "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति कारणान्तरनिषेधः परमकारणत्वापेक्षितत्वात् क्रियते; एवमिहापि परमात्मनः परमाधारत्वसिद्धये धारकरूपद्रष्ट्रन्तरनिषेधोऽपेक्षितः, भेदनिषेधस्तु प्रकृतार्थानपेक्षितः, अपेक्षितविधेरनपेक्षितविधानदौर्बल्यमविगीतम्। किञ्च 'नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ' इति द्रष्टृश्रोत्रादीनां पृथक् पृथग्भेदनिषेधश्च विफलः, द्रष्टुरेव श्रोतृत्वसम्भवात्। यथा "तदेवाग्निस्तद्वायुः" "ज्योतींषि विष्णुर्भुवनानि विष्णुः" इत्यादिष्वग्निवायुज्योतिर्भुवनवनगिरिदिगादीनामन्योन्यभिन्नजातीयतया तेष्वन्यतमस्य ब्रह्मात्मकत्वोपदेशेऽपि तदन्यस्य ब्रह्मात्मकत्वासिद्ध्या प्रत्येकं ब्रह्मात्मकत्वोपदेशस्सफलः, एवं द्रष्टृश्रोतृमन्त्रादीनां भिन्नजातीयत्वाभावात् पृथग्भेदनिषेधवैयर्थ्यम्। न च वाच्यं 'ब्रह्मदाशा ब्रह्मदासाः' इत्यादौ दाशेष्वेव दासत्वकितवत्वादिसम्भवेऽपि पृथक् तादात्म्योपदेशवदिहाप्युपपद्यत इति। दाशेभ्यो भिन्नजातीयानामपि दासकितवादीनां सम्भवेन श्रुतिवाक्यस्थपदानां तद्विषयत्वोपपत्तेः, अन्यथा तत्रापि वैयर्थ्यप्रसङ्गस्य दुर्निवारत्वात्; अत इदं वाक्यं प्रकृततुल्यद्रष्ट्रन्तरनिषेधपरम्। (अन्यस्य सद्भावं व्यावर्तयन्निति) सूत्रस्थैरन्यभावव्यावृत्तिशब्दैः श्रुतिवाक्यस्था अन्यदस्ति नेतिशब्दाः प्रत्यभिज्ञाप्यन्त इति भावः। व्यावर्तयन्नित्यन्तेनाक्षरार्थ उक्तः। फलितमाह (अस्याक्षरस्येति)

५ भावप्रकाशिका ५

सम्भवतीत्यनेन तत्रापि सुदूरं गत्वा ऐक्यविधिशेषत्वमेवेति भावः। (अत इदं वाक्यं प्रकृततुल्यद्रष्ट्रन्तरनिषेधपरमिति) नास्मिन्नपि पक्षे पूर्वोक्तदोषतादवस्थ्यम्, द्रष्टुरेव श्रोतृताया नान्यदतोऽस्ति द्रष्ट्रित्यनेनैव सिद्धतया प्रत्येकनिषेध-

प्रतिषेधति । किञ्च "एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः' इति श्रौतं स्मार्तञ्च यागदानहोमादिकं सर्वं कर्म यस्याज्ञया प्रवर्तते, तदक्षरं परब्रह्मभूतः पुरुषोत्तम एवेति विज्ञायते। अपि च 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः अथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मणः' इति यदज्ञानात्संसारप्राप्तिः यज्ज्ञानाच्चामृतत्वप्राप्तिस्तदक्षरं परं ब्रह्मैवेति सिद्धम् ॥ ११ ॥

* श्रुतप्रकाशिका *

अस्यां योजनायां सूत्रान्तरानुरूप्यं दर्शितम् । नियन्तृरूपधारकान्तरराहित्यमेव कण्ठोक्तं भवति, चिदचिद्व्यावृत्तिरर्थसिद्धा स्यात् । चशब्दः पूर्ववन्नोक्तसमुच्चयपरः, अपि त्वनुक्तसमुच्चयपर इत्यभिप्रायेण चशब्दार्थमाह ( किञ्चेति ) अन्वायत्ता इति पदं देवमनुष्यपितृसाधारणम् । अन्वायत्ताः– अनुवशा इत्यर्थः । द्वितीयान्तपदानां प्रशंसन्तीत्यनेनान्वयः । वाक्यप्रतिपन्नार्थस्य परमात्मलिङ्गतां दर्शयति ( श्रौतं स्मार्तं चेति ) चशब्दः समुच्चेतव्यं हेत्वन्तरमाह' ( अपि चेति ) उदाहृतवाक्यसिद्धं हेतुं वदन्नधिकरणार्थमुपसंहरति ( यदज्ञानादिति ) ॥ नान्यदतोऽस्ति द्रष्टृति

* भावप्रकाशिका *

वैयर्थ्यादिति वाच्यम्; द्रष्टृत्वश्रोतृत्वादीनामनतिरिक्तवृत्तित्वेऽपि तुल्यो द्रष्टा नास्तीत्युक्ते द्रष्टृत्वांशे साम्यं नास्तीति प्रतीतावपि श्रोतृत्वांशे अस्तीति शङ्कायाः सम्भवात् साफल्यमिति भावः । प्रशासने ददतः, प्रशासन इति निमित्तसप्तमी तदाज्ञया ददतो जनान् मनुष्याः प्रशंसन्ति, तदाज्ञया यागं कुर्वन्तं देवाः प्रशंसन्ति , तदाज्ञया प्रवृत्तं दर्वीहोमं पितरः प्रशंसन्तीत्यर्थः । ( अनु-

## ईक्षतिकर्मव्यपदेशात्सः ॥ १२ ॥




## आथर्वणिकास्सत्यकामप्रश्नेऽधीयते

* श्रुतप्रकाशिका *

वाक्यस्य ब्रह्मव्यतिरिक्तद्रष्टृमात्रनिषेधपरत्वमयुक्तम्, तथा सति हि ब्रह्मैव द्रष्टृ नान्यदित्युक्तं स्यात्, तत् परमते विरुद्धम्, ब्रह्मणो द्रष्टृत्वानभ्युपगमात्। तन्मते नैतदक्षरं द्रष्टृिति हि वक्तव्यम्। यदि द्रष्टृमिथ्यात्वमात्रपरं तदा अतोऽन्यदिति निर्देशवैयर्थ्यम्, द्रष्टृ नास्तीत्येतावता तन्मिथ्यात्वसिद्धेः। ननु ब्रह्मैव द्रष्टृित्यर्थः, ततश्च ब्रह्मणि द्रष्टॄणां कल्पितत्वं सिध्यतीति चेन्न; अयमेव पुरुषः नान्योऽतोऽस्ति पुरुष इत्युक्ते पुरुषत्वमस्मिन् कल्पितमित्यर्थाप्रतीतेः। एतत्तुल्यपुरुषान्तरनिषेधो हि प्रतीयते; अतो ब्रह्मणोऽन्यो द्रष्टृवर्गो मिथ्येत्यर्थ इति चेन्न, अदृष्टं द्रष्टृिति पूर्ववाक्ये ब्रह्मण एव द्रष्टृत्वप्रतिपादनात् ब्रह्मव्यतिरिक्तस्यैव द्रष्टृत्वमिति वक्तुमयुक्तत्वात् द्रष्टृमिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वप्रसङ्गात् तस्मिन् परिजिहीर्षिते सति 'अदृष्टं द्रष्टृ'ति पूर्ववाक्यप्रतिपाद्यस्याब्रह्मत्वप्रसङ्गाच्च। ब्रह्मणो द्रष्टृत्वेऽपि ब्रह्मव्यतिरिक्तत्वाभावान्न मिथ्यात्वमिति चेत् तर्हि परमार्थतो ज्ञातृत्वमभ्युपगतं स्यात्॥ यत्तु भास्करेणोक्तम्, प्रधानव्यावृत्तिरनेन सूत्रेण क्रियते, प्रधानस्य शासितृत्वसम्भवेऽपि द्रष्टृत्वाभावात् प्रधानव्यावृत्तिरिति। तदयुक्तम्; द्रष्टृविशेषो हि प्रशासिता, शिंशुपात्वसम्भवेऽपि वृक्षत्वासम्भववत् प्रशासितृत्वसम्भवेऽपि द्रष्टृत्वासम्भवः कथमुच्यते? प्रधानस्येश्वरत्वसम्भवेऽपि क्षेत्रज्ञत्वं न सम्भवतीत्यनुन्मतः कोऽब्रवीति॥ ....

॥ ईक्षतिकर्मव्यपदेशात्सः ॥ अत्र स इत्युक्तिरस्मिन् पादे सर्वाधिकरणेषु

❁ भावप्रकाशिका ❁

वशा इत्यर्थ इति ) अनुवशाः— उपजीविन इत्यर्थः। देवपित्रादय ईश्वरास्सन्तोऽन्यथापि जीवितुमुत्सहन्तः कृपणां वृत्तिं यत्प्रशासनादास्थिता इत्यर्थः ( तस्मिन् परिजिहीर्षित इति ) यदि ब्रह्मणो मिथ्यात्वं परिजिहीर्षितम् तदा ब्रह्मणो द्रष्टृभेदस्यैवाभ्युपगन्तव्यतया अदृष्टं द्रष्टृितिवाक्यप्रतिपाद्यत्वं ब्रह्मणो न स्यादित्यर्थः। ( प्रधानस्येश्वरत्वेति ) प्रशासितृत्वस्येश्वरत्वपर्यवसन्नत्वात् द्रष्टृत्वस्य क्षेत्रज्ञत्वे पर्यवसन्नत्वादिति भावः॥ ॥ ७ ॥ इत्यक्षराधिकरणम् ॥ ७ ॥

प्रश्नोपनिषदि— "अथ हैनं शैब्यस्सत्यकामः पप्रच्छ। स यो ह वै तद्भग-

"यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नः । यथा पादोदरस्त्वचा विनिर्मुच्यते एवं ह वै स पाप्मना विनिर्मुक्तः

* श्रुतप्रकाशिका *

साध्यप्रतिज्ञानुवृत्त्यर्था, यथा प्रथमपादे 'भेदव्यपदेशाच्चान्यः' इत्यन्यशब्दोक्तिः 'यथा च द्वितीये "अत एव च स ब्रह्म' इति ब्रह्मशब्दोक्तिः, यथा चतुर्थे "वदतीति चेन्न प्राज्ञो हि प्रकरणात्' इति प्राज्ञशब्दोक्तिश्च तद्वत्। पूर्वम् 'अदृष्टं द्रष्टृ' इति परमात्मनो द्रष्टृत्वमुक्तं तर्हीक्षतिकर्मत्वेनोक्तो न परमात्मेति शङ्कया सङ्गतिः । यद्वा पूर्वाधिकरणे अर्थविरोधेनाकाशशब्दस्याम्बरान्तपरत्वमुक्तं तथा अन्तरिक्षशब्दस्य न मुख्या-

ᛞ भावप्रकाशिका ᛞ

वन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत। कतमं वाव स तेन लोकं जयतेति ॥ १ ॥ तस्मै स होवाच । एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीति ॥ २ ॥ स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसम्पद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया सम्पन्नो महिमानमनुभवति ॥ ३ ॥ अथ यदि द्विमात्रेण मनसि सम्पद्यते सोऽन्तरिक्षं युजुर्भिरुन्नीयते स सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥ यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये सम्पन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तस्ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते । तदेतौ श्लोकौ भवतः ॥ ५ ॥ तिस्रो मात्रा मृत्युमत्यःप्रयुक्ताः अन्योन्यसक्ता अनभिप्रयुक्ताः । क्रियासु बाह्यान्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः ॥ ६ ॥ ऋग्भिरेतं यजुर्भिरन्तरिक्षं सामभिर्यत्तत्कवयो वेदयन्ते । तमोङ्कारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति ॥ ७ ॥ असंवेदितः—अनुगृहीतः, मनसि सम्पद्यते— मनसा ध्यायतीत्यर्थः । मृत्युमत्यःप्रयुक्ताः— मृत्युमीतमर्त्यप्रयुक्ताः । अन्योन्यसक्ताश्चेदनभिप्रयुक्तास्स्युः । सम्यक्प्रयुक्तासु मात्रासु सतीषु न कम्पते ज्ञ इत्यर्थः । अदृष्टो द्रष्टेति परमात्मनो दृष्टत्वमुक्तमितिपाठो लेखकस्खलनदोषायत्तः । अक्षरब्रह्मणो अदृष्टं द्रष्टृ इति नपुंसकपाठ-

ससामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति । अत्र ध्यायतीक्षतिशब्दावेकविषयौ, ध्यानफलत्वादीक्षणस्य; "यथा क्रतुरस्मिँल्लोके पुरुषः' इति न्यायेन ध्यानविषयस्यैव प्राप्यत्वात् 'परं पुरुषम्' इत्युभयत्र कर्मभूतस्यार्थस्य

* श्रुतप्रकाशिका *

न्तरेण निर्वाहस्सुवच इति शङ्कया सङ्गतिः । यद्वा आकाशशब्दस्य अम्बरान्तपरत्ववत् ब्रह्मलोकशब्दस्य नान्यथा निर्वाहोऽस्तीति शङ्कया सङ्गतिः । "ससामभिरुन्नीयते' एतत्साम गायन्नास्ते" इतिवत् सामगानसहितैरित्यर्थः । यद्वा सान्त्ववादयुक्तैरातिवाहिकैरुन्नीयत इत्यर्थः ॥ परैरीक्षतिकर्मणः परमात्मत्वं व्यवस्थाप्य ध्यायतेस्ततो भिन्नविषयतया पूर्वपक्षं कृत्वा एकविषयतया सिद्धान्त उक्तः, तदनुपपन्नमित्यभिप्रायेणाह ( अत्र ध्यायतीति ) यथोपासनफलप्राप्तिन्यायात् ध्यायतिकर्मैवेक्षतिकर्म. एकत्र 'परं पुरुषम्' अन्यत्र 'परात्परं पुरुष'मिति च श्रूयते. अतो न विषयैक्यमित्यत्राह ( परं पुरुषमिति ) यत्र पञ्चम्यन्तपदं नास्ति तत्राप्यर्थ-

७ भावप्रकाशिका ७

स्यैव सत्त्वादिति द्रष्टव्यम् । विषयवाक्यस्थब्रह्मलोकशब्दस्यैवान्यथा निर्वाहो दुर्वच इति वक्तुं शक्ये अन्तरिक्षशब्दस्य दुर्निर्वहत्वोक्तिरयुक्तेत्यस्वरसादाह ( यद्वा आकाशशब्दस्येति ) ( ससामभिरुन्नीयते ) इदमेकं पदम्. तच्छब्दान्तरश्रवणादित्यभिप्रेत्य व्याचष्टे ( सामगानसहितैरित्यर्थ इति ) आतिवाहिकानां मुक्तानाम् 'एतत्साम गायन्' इत्यस्यासम्भवादाह ( सान्त्ववादयुक्तैरिति ) नच तमृचो मनुष्यलोकमुपनयन्ते यजुर्भिरुन्नीयते सोमलोकमिति ऋग्यजुःप्रायपाठात् सामपदस्य वेदपरत्वमेवाश्रयितुं युक्तमिति वाच्यम्; ऋगादिस्थलेपि वेदस्य नेतृत्वासम्भवात्, तत्रापि लक्षणादिक्लेशस्याश्रयणीयत्वेन प्रायपाठो नास्तीति भावः । ( परमात्मत्वं व्यवस्थाप्येति ) यद्यपि नच तत्त्वविषयमेव सर्वं दर्शनम्; अतत्त्वविषयस्यापि दर्शनादिति वाचस्पत्ये ईक्षणमपि परमात्मविषयमिति पूर्वपक्षस्य दर्शनादीक्षतिकर्मणः परमात्मत्वनियमः पूर्वपक्षिणा नाभ्युपगतः । तथापीक्षति-

प्रत्यभिज्ञानाच्च । तत्र संशय्यते; किमिह 'परं पुरुषम्' इति निर्दिष्टो जीवसमष्टिरूपोऽण्डाधिपतिश्चतुर्मुखः, उत सर्वेश्वरः पुरुषोत्तमः? इति। किं युक्तम्? समष्टि-क्षेत्रज्ञ इति। कुतः? "स यो ह वैतद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयति" इति प्रक्रम्यैकमात्रं प्रणवमुपासीनस्य मनुष्य-लोकप्राप्तिमभिधाय, द्विमात्रमुपासीनस्यान्तरिक्षलोक-प्राप्तिमभिधाय, त्रिमात्रमुपासीनस्य प्राप्यतया अभि-

* श्रुतप्रकाशिका *

सामर्थ्यात्तत्प्राप्नोतीति भावः ॥ यादवप्रकाशीये तु जीवो हि ध्यातव्यः, तस्मात् पर ईक्षितव्यस्तु मुक्तजीव इति पूर्वपक्षितम्. तदप्यनेनायुक्तमिति दर्शितम्, अभि-ध्यातव्याज्जीवात् परो मुक्तजीव इत्युक्ते बद्धजीवो ध्यातव्य इत्युक्तं स्यात्, बद्धाव-स्थजीवध्यानान्मुक्तावस्थस्य प्राप्तिरित्यनुपपन्नम्, तस्मात् ध्यायतीक्षत्योरुभयोरपि चतु-र्मुखविषयत्वमेव पूर्वपक्षीकर्तुं युक्तम् ॥ संशयमाह (तत्रेति) किं ध्यायतीक्षति-कर्म चतुर्मुखः, उत परमात्मा? । तदर्थं शान्तत्वाजरत्वादयः किं मुख्याः, उता-मुख्याः? । तदर्थं किं जीवघनशब्देन चतुर्मुखव्यतिरिक्तस्य ग्रहणम्, उत तस्या-ऽपि ग्रहणम्? इति। किमत्र ब्रह्मलोकशब्दश्चतुर्मुखस्थानपरः, उत परमव्योमपरः?। किमीक्षतिकर्मविषये वाक्ये "यत्तत्कवयो वेदयन्ते" इति वैष्णवं पदं प्रत्यभिज्ञाप्यते, न? इति । यदा प्रत्यभिज्ञानासम्भवात् ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वम् यदा च जीवघनशब्देन चतुर्मुखस्याग्रहणं तदा शान्तत्वादीनाममुख्यत्वात् ध्याय-तीक्षतिकर्म चतुर्मुखः स्यात्, यदा वैष्णवपदप्रत्यभिज्ञानेन ब्रह्मलोकशब्दः परम-व्योमवाची यदा च जीवघनशब्देन चतुर्मुखस्यापि ग्रहणं तदानीं शान्तत्वाजरत्वा-

* भावप्रकाशिका *

कर्मणः परमात्मत्वमङ्गीकृत्य ध्यायतेस्ततो भिन्नविषयत्वमिति पूर्वपक्षस्यापि प्रव-र्तनात् तदभिप्रेत्यैनदुक्तमिति द्रष्टव्यम् । (तत्प्राप्नोतीति) पञ्चम्यन्तपदं प्राप्नो-

धीयमानो ब्रह्मलोकोऽन्तरिक्षात्परो जीवसमष्टिरूपस्य चतुर्मुखस्य लोक इति विज्ञायते; तद्गतेन चेक्ष्यमाणस्तल्लोकाधिपतिश्चतुर्मुख एव । 'एतस्माज्जीवघनात्परात्परम्' इति च देहेन्द्रियादिभ्यः पराद्देहेन्द्रियादिभिस्सह घनीभूताज्जीवव्यष्टिपुरुषाद्ब्रह्मलोकवासिनः समष्टिपुरुषस्य चतुर्मुखस्य परत्वेनोपपद्यते । अतोऽत्र निर्दिश्यमानः परः पुरुषः समष्टिपुरुषश्चतुर्मुख एव । एवं चतुर्मुखत्वे निश्चिते अजरत्वादयो यथा कथञ्चिन्नेतव्याः ॥

इति प्राप्ते प्रचक्ष्महे- ईक्षतिकर्मव्यपदेशात्सः ।

* श्रुतप्रकाशिका *

दीनां मुख्यत्वाद्ध्यायतीक्षतिकर्म परमात्मेति सिद्धान्तः । ( चतुर्मुखस्येति ) भूम्यन्तरिक्षक्रमप्राप्तश्चतुर्मुखलोक इत्यर्थः । ततः किमित्यत्राह ( तद्गतेन चेति ) 'जीवघनात्परात्परम्' इति निर्देशः कथमुपपद्यत इत्यत्राह ( एतस्मादिति ) जीवघनपरशब्दयोः सामानाधिकरण्येनोपपद्यत इत्यर्थः । ब्रह्मणः समष्टिपुरुषत्वं देवतिर्यग्भावाद्यपेक्षया । ( अजरत्वादयो यथाकथञ्चिन्नेतव्या इति ) चिरकालस्थायित्वाभिप्रायेण वा चतुर्मुखस्यैव परिशुद्धावस्थस्वरूपपरत्वेन वा निर्वाह इति भावः । अत एवोपक्रमे "परं चापरं च" इति निर्देशश्च कृतनिर्वाहः ॥ सिद्धान्ते

* भावप्रकाशिका *

तीत्यर्थः । ( देवतिर्यग्भावापेक्षयेति ) द्रष्टव्यमितिशेषः । ननूपक्रम एव परं चापरं च ब्रह्मेति द्वेधा विभज्य परं पुरुषमभिध्यायीत, परात्परं पुरिशयं पुरुषमीक्षते' इति परत्वेन विशेषणाच्च परमेव ब्रह्मेत्यस्य सिद्धत्वात्परत्वविशेषितपुरुषशब्दस्यासाधारणत्वाच्छान्तत्वाजरत्वादीनां श्रवणाच्च, अनेकब्रह्मलिङ्गविरोधे मनुष्यादिलोकप्रायपाठमात्रेण लिङ्गबाधायोगात्कथं पूर्वपक्ष इति चेदुच्यते; प्रायपाठावगतचतुर्मुखलोकगतपुरुषनिरीक्षमाणत्वस्य लिङ्गस्यानन्यथासिद्धत्वादिति पूर्वपक्ष्यभिमानात् ।

ईक्षतिकर्म सः— परमात्मा । कुतः ? व्यपदेशात्; व्यपदिश्यते हीक्षतिकर्म परमात्मत्वेन । तथा हि; ईक्षतिकर्मविषयतयोदाहृते श्लोके 'तमोङ्कारेणैवायतनेनान्वेति विद्वान् यत्तच्छान्तमजरममृतमभयं परं च' इति । परं शान्तमजरमभयममृतमिति हि परमात्मन एवैतद्रूपम् "एतदमृतमेतदभयमेतद्ब्रह्म" इत्येवमादिश्रुतिभ्यः । "एतस्माज्जीवघनात्परात्परम्" इति च परमात्मन एव व्यपदेशः, न चतुर्मुखस्य, तस्यापि जीवघनशब्दगृहीतत्वात् । यस्य हि कर्मनिमित्तं देहित्वं स जीवघन इत्युच्यते, चतुर्मुखस्यापि तच्छ्रूयते "यो ब्रह्माणं विद-

* श्रुतप्रकाशिका *

( परमात्मन एवैतद्रूपमिति ) एतद्रूपम्— नपुंसकान्तशब्दनिर्दिष्टं स्वरूपम् । चतुर्मुखपरत्वे हि पुंल्लिङ्गान्तता स्यात् । यद्वा एतद्रूपम्— एतद्वाक्यप्रतिपादितं रूपम् । एवमर्थद्वयेऽप्यनुगुणं श्रुत्यन्तरवाक्यमाह ( एतदमृतमिति ) अनेन स इति सौत्रपदस्य प्रयोजनं दर्शितं भवति, अधिकारादेव साध्यप्रतिज्ञासिद्धेस्तस्य प्रयोजनं हि वक्तव्यम्, 'शान्तमजरममृतमभय'मिति व्यपदेशस्य कथं परमात्मसाधकत्वमित्यपेक्षायां श्रुत्यन्तरेषु परमात्मनः तादृक्त्वेन प्रसिद्धेरिति वक्तव्यम्, अतस्तथात्वेन श्रुत्यन्तरप्रसिद्धिद्योतनं स इतिपदस्य प्रयोजनमिति । व्यपदेशशब्दविवक्षितं हेत्वन्तरमाह ( एतस्मादिति ) कथं चतुर्मुखस्यैतद्व्यपदेशासम्भव इत्यत्राह ( तस्यापीति ) कथं तस्य जीवघनशब्दगृहीतत्वमित्यत्राह ( यस्य हीति ) कर्मकृतदेहं दर्शयति ( चतुर्मुखस्यापीति ) सशरीरत्वादेव हि चतुर्मुखत्वमिति भावः ।

ॐ भावप्रकाशिका ॐ

( नपुंसकान्तशब्दनिर्दिष्टमिति ) एतच्छब्देन नपुंसकपदनिर्दिष्टत्वं परामृश्यत इति भावः । भाष्ये— कर्मनिमित्तं देहित्वमिति । 'मूर्तौ घनः' इति मूर्तौ घनशब्दो निपातितः । मूर्तिः काठिन्यमिति व्याख्यातम् । जीवस्य काठिन्यं देहद्वारकं देहि-

धाति पूर्वम्' इत्यादौ । यत्पुनरुक्तमन्तरिक्षलोकस्यो-परिनिर्दिश्यमानो ब्रह्मलोकश्चतुर्मुखलोक इति प्रतीयते,

* श्रुतप्रकाशिका *

ननु कथं "यो ब्रह्माण'मिति श्रुत्या चतुर्मुखदेहस्य कर्मनिमित्तत्वावगमः ? न ह्यत्र कर्मसम्बन्धः श्रूयते । उच्यते, कारणवाक्येषु " ब्रह्म वा इदमेक एवाग्र आसीत्" इत्यारभ्य "यान्यन्यानि देवक्षत्राणि इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः" इति सृज्यतया श्रुतानामिन्द्रवरुणसोमयमादीनां कर्मवश्यत्वमवतिष्ठते, एवमेव चतुर्मुखस्याप्यपवादश्रुत्यभावात्सृज्यत्वेन स्वतः प्राप्तकर्मवश्यत्वमवतिष्ठत इति । आदिशब्देन "यो वै वेदांश्च प्रहिणोति तस्मै" इतिपादोपि विवक्षितः, तेनोपदेशसापेक्षज्ञानप्रसरतया सङ्कुचितज्ञानत्वं स्वतः प्राप्तम् , इन्द्रविरोचनादीनामुपदेशसापेक्षतया हि सङ्कुचितज्ञानत्वावगमः, भगवतस्सान्दीपनिप्रभृतिगुरूपदेशसापेक्षत्वं लीलात्ववचनैरपादितत्वान्न ज्ञानसङ्कोचसाधकम् , इन्द्रविरोचनादीनामिव चतुर्मुखस्याप्यपवादरहितमुपदेशसापेक्षत्वं सङ्कुचितज्ञानत्वसाधकमिति तेनापि सङ्कोचककर्मसम्बन्धसिद्धिः, एवं सृज्यत्वादुपदेशसापेक्षज्ञानप्रसरत्वाच्च कर्मवश्यत्वाच्चतुर्मुखस्य जीवघनशब्दगृहीतत्वसिद्धिः । यत्पुनरित्यनूदितं पूर्वपक्षहेतुं परि-

❀ भावप्रकाशिका ❀

त्वादेव कर्मकृतत्वमपि सिध्यतीति भावः । ( सशरीरत्वादेव हीति ) आत्मनश्चतुर्णां मुखानां सम्भवादित्यर्थः । भाष्ये – न क्षयिष्णुश्चतुर्मुखलोक इति । ननु ब्रह्मलोकशब्देन परब्रह्मलोकपरामर्शे चतुर्मुखस्य प्रागनिर्दिष्टत्वादेतस्माज्जीवघनादित्येतच्छब्दस्य प्रकृतपरामर्शित्वं न स्यात् । अतश्शाङ्करादिरीत्या ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वमेवाभ्युपगम्य एतस्मादित्येतच्छब्देन च ब्रह्मलोकशब्दान्तर्गतब्रह्मशब्दनिर्दिष्टचतुर्मुखपरामर्शो वक्तव्य इत्येवाभ्युपेत्यमिति चेन्न ; ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वेपि चतुर्मुखस्य समासे न्यग्भूतस्य परामर्शासम्भवात्. नच प्राधान्येन निर्दिष्टस्य चतुर्मुखलोकस्यैव परामर्शस्स्यादिति वाच्यम् ; तत्र जीवघनशब्दस्याप्रवृत्तेः । कथञ्चिद्वृत्तावाश्रितायामपि चेतनस्याचेतनात् चतुर्मुखलोकादुत्कर्षप्रतिपादनस्यायुक्तत्वाच्च. तस्मादेतच्छब्दस्य अथैष ज्योतिरित्यादिवत्प्रस्तोष्यमाणजीवघनपरामर्शित्वं युक्तमिति द्रष्टव्यम् । ( आदिशब्देनेत्यादि ) यद्यप्यादि-

अतस्तत्रस्थश्चतुर्मुख इति। तदयुक्तम्; "यत्तच्छान्तमजरममृतमभयम्" इत्यादिनेक्षतिकर्मणः परमात्मत्वे निश्चिते सति ईक्षितुः स्थानतया निर्दिष्टो ब्रह्मलोको न क्षयिष्णुश्चतुर्मुखलोको भवितुमर्हति। किञ्च "यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः ससामभिरुन्नीयते ब्रह्मलोकम्" इति सर्वपापविनिर्मुक्तस्य प्राप्यतयोच्यमानं न चतुर्मुखस्थानम्; अत एव चोदाहरणश्लोके इममेव ब्रह्मलोकमधिकृत्य श्रूयते "यत्तत्कवयो वेदयन्ते" इति। कवयः-- सूरयः। सूरिभिर्दृश्यं च वैष्णवं पदमेव, "तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः" इत्येवमादिभ्यः। न चान्तरि-

* श्रुतप्रकाशिका *

इतीति (तदयुक्तमिति) परमात्मलोकत्वे हेतुत्रयमाह (यत्तदित्यादिना) (कवयः सूरय इति) कवयः-क्रान्तदर्शिनः। अकर्मवश्यत्वादसङ्कुचितज्ञानाः, सूरयश्च ज्ञानाधिकाः प्रसिद्धाः, अतोऽर्थवशात्सूरिप्रत्यभिज्ञानमित्यर्थः। ततः किमित्यत्राह (सूरिभिरिति) (एवमादिभ्य इति) आदिशब्देन "तद्विप्रासो विपन्यवः' "यत्र ऋषयः प्रथमजा ये पुराणाः' 'यत्र पूर्वे साध्याः सन्ति देवाः" इत्यादिवाक्यानि विवक्षितानि, अजरत्वादिभिर्निश्चितपरमात्मभावस्य स्थानत्वात् सर्वकर्मविनिर्मुक्तस्य प्राप्यस्थानत्वात् सूरिभिर्दृश्यत्वप्रत्यभिज्ञानाच्च न चतुर्मुखलोक इत्यर्थः। लोकक्रमप्रत्यभिज्ञानभङ्गस्यास्वरसत्वमाशङ्क्याह (नचेति) अस्वारस्यं तुल्यमित्यर्थः। ननु नास्माकं व्यवहितत्वादस्वारस्यम्, अन्तरिक्षशब्दस्य ब्रह्मलोकादर्वाचीनलोकानां प्रदर्शनार्थत्वात्। ब्रह्मलोकश्च प्राकृतलोकद्वयसाहचर्यात् प्राकृतलोक

७ भावप्रकाशिका ७

शब्दार्थतया प्रदर्शितेषु वाक्येषु सूरिदृश्यत्वं न प्रतीयते, अपितु सूर्याधारत्वमेव। 'तद्विप्रासो विपन्यवः' इत्यत्रापि, विपन्यवः– स्तुतिशीलाः, जागृवांसः–अस्खलि-

चात्परश्चतुर्मुखलोकः, मध्ये स्वर्गलोकादीनां बहूनां सद्भावात्, अतः "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायनेनैकतरमन्वेति' इति प्रतिवचने यदपरं कार्यं ब्रह्म निर्दिष्टं तदैहिकामुष्मिकत्वेन द्विधा विभज्यैकमात्रं प्रणवमुपासीनानामैहिकं मनुष्यलोकावाप्तिरूपं फलमभिधाय द्विमात्रमुपासीनानामामुष्मिकमन्तरिक्षशब्दोपलक्षितं फलं चाभिधाय

* श्रुतप्रकाशिका *

एव स्यादित्यत्राह ( अत एतद्वै सत्यकामेति ) अतः—उदाहृतबहुवाक्यस्वारस्यानुगुण्यात् । "परं चापरं च ब्रह्म यदोङ्कारः" इति सामानाधिकरण्यं वाच्यवाचकभावनिबन्धनम् । ओङ्कारवाच्यं परापररूपं ब्रह्मेति वा परापररूपब्रह्मवाचक ओङ्कार इति वार्थः, अनन्तरम् एतेन एकतरमितिपदाभ्यामोङ्कारस्य ब्रह्मणश्च निर्देशात् । अयनेन—उपायभूतेन । एकतरम्—कार्यकारणब्रह्मणोरन्यतरत् । ( यदपरं कार्यं ब्रह्मेति) चतुर्मुखलोकस्यापरब्रह्मशब्दवाच्यत्वमेव युक्तम्, न तु परब्रह्मलोकत्वं, "कार्यं बादरिः" कार्यात्यये' परं जैमिनिः" इति तस्य कार्यलोकत्वव्यपदेशात् ततः पृथगेव परब्रह्मव्यपदेशाच्चेति दर्शितं कार्यब्रह्मशब्देन । ( ऐहिकामुष्मिकत्वेन द्विधा विभज्येति ) उपरि पृथक्फलत्वेन कीर्तनाद्विभागोऽभिप्रेत इत्यर्थः । परापरशब्दयोः कार्यकारणपरत्वात् कार्यलोकस्य प्राकृतत्वं सिद्धमिति कारणब्रह्मलोकस्याप्राकृतत्वमकार्यत्वादेव सिद्धम्, अतः प्राकृताप्राकृतरूपेण प्राप्यलोकविभागः, प्राकृते चैहिकामुष्मिकरूपेण विभागश्च श्रुत्यभिप्रेतः, उपरि पृथक्फलत्वेन कीर्तनाविशेषात् . अतः ऐहिकामुष्मिकविभागोक्तिः प्राकृताप्राकृतविभागस्य प्रदर्शनार्थत्वमाह (आमुष्मिकमिति )चतुर्मुखलोकस्याप्यन्तरिक्षशब्दोपलक्ष्यत्वे सङ्ग्राहकमामुष्मिकत्वमस्ति, चतुर्मुखलोकव्यतिरिक्तोपलक्षणे सङ्ग्राहकाकारो नास्तीति वैषम्यमभिप्रेतम् । ( अन्तरि-

* भावप्रकाशिका *

तज्ज्ञानाः । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति वेदार्थसङ्ग्रहे व्याख्यातत्वात्, तथापि सूरिस्थानभूतस्य सूरिदृश्यत्वमप्यर्थसिद्धमित्यभिप्रेत्योक्तमिति द्रष्ट-

त्रिमात्रेण परब्रह्मवाचिना प्रणवेन परं पुरुषं ध्यायतां परमेव ब्रह्म प्राप्यतयोपदिशतीति सर्वं समञ्जसम्। अतः ईक्षतिकर्म परमात्मा ॥

* श्रुतप्रकाशिका *

क्षशब्दोपलक्षितमिति) उपलक्षणतया व्यवधानपरिहारस्तुल्यः, सङ्ग्राहकलाभो ऽधिक इति भावः। (परं पुरुषं ध्यायतामिति) 'परं पुरुषमभिध्यायीत' इतिवाक्यं स्मारितम्. तेन चतुर्मुखलोकप्राप्तेस्तत्क्रतुन्यायविरोधः सूचितः। (परमेव ब्रह्मेति) चतुर्मुखलोकस्य प्राप्यत्वे 'परात्परं पुरिशयं पुरुषमीक्षते' इति फलवचनस्थ पुरुषशब्दविरोध एवकाराभिप्रेतः, एवं कार्यब्रह्मान्तर्गतस्य चतुर्मुखलोकस्य ततः पृथक्करणं परब्रह्मशब्दाविषयस्य तस्य परमात्मप्राप्तुः प्राप्यत्वाश्रयणं तत्क्रतुन्यायविरोधः फलवचनविरोधश्चेत्यनेकयुक्तिभिः प्राकृतलोकद्वयसाहचर्यं निरस्तम्, आदावेव 'परं चापरं च' इति प्राप्यविभागस्याभिहितत्वात् प्राकृतसाहचर्ययुक्तिरुपक्रमोन्मीलिता चेत्युक्तं भवति। (सर्वं समञ्जसमिति) परपक्षस्थानुपपत्तयः स्वपक्षे न सन्ति, उपलक्षणतया व्यवधानपरिहारः समानः 'अजरमभयम्" "परात्परं पुरिशयं पुरुषम्" "यथा पादोदरस्त्वचा विनिर्मुक्तः" 'यत्तत्कवयो वेदयन्ते" इत्यादीनि च वाक्यानि स्वरसानीति वैषम्यमित्यर्थः। अधिकरणार्थमुपसंहरति (अत इति) ॥ ५ ॥

* भावप्रकाशिका *

च्यम्। यदपरं कार्यब्रह्मेति भाष्ये कार्यब्रह्मशब्देन चतुर्मुखलोकस्यापरब्रह्मपदवाच्यत्वमेव युक्तम्, ननु परब्रह्मलोकत्वमितिदर्शितमिति योजना। (उपलक्षणतयेति) अन्तरिक्षशब्दमुख्यार्थस्वीकारे पक्षद्वयेपि व्यवधानविशिष्टम्. यदि च व्यवधानपरिहारायान्तरिक्षशब्दस्य चतुर्मुखलोकाधस्तनलोकमात्रोपलक्षकत्वमाश्रित्य व्यवधानपरिहारः तर्हि अन्तरिक्षशब्दस्यामुष्मिकमात्रोपलक्षकत्वमाश्रित्य व्यवधानपरिहारस्समान इति भावः। (सङ्ग्राहकलाभ इति) भूलोकब्रह्मलोकमध्यवर्तित्वरूपं सङ्ग्राहकं सुवचम्. तथापि तस्य सङ्ग्राहकस्य गुरुत्वेन न सुलभप्रतिपत्तिकत्वमिति भावः। फलवचनविरोधः— फलवाक्यपुरुषशब्दविरोध इत्यर्थः ॥

* ईक्षतिकर्माधिकरणं समाप्तम् *

## दहर उत्तरेभ्यः ॥ १३ ॥

५ अधिकरणम्

इदमामनन्ति च्छन्दोगाः "अथ यदिद-

* श्रुतप्रकाशिका *

॥ दहर उत्तरेभ्यः ॥ पूर्वाधिकरणे 'परात्परं पुरिशयं पुरुष'मित्युक्तस्य परमा-

७ भावप्रकाशिका ७

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्त-स्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तं चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्म-पुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः किं तदत्र विद्यते, यदन्वेष्टव्यम् यद्वाव विजिज्ञासितव्यमिति स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसा-वुभौ । विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति तं चेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः यदे-तज्जरावाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते । एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिताः । एष आत्मा अपहतपाप्मा विरजो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पो यथा ह्येव प्रजा अन्वाविशन्ति । यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जन-पदं यं क्षेत्रभागं तं तमेवोपजीवन्ति एवमेवामुत्र पुण्यचितो लोकः क्षीयते । तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेष्वकामचारो भवति । अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति" । उदाहृतश्रुतिवाक्येषु तत्र तत्रास्पष्टार्थः परीत्या विविच्यते। सिद्धान्ताभिमतार्थस्तु उत्तरत्र स्पष्टः । तं चेद्ब्रूयुः– तं चेदेवमुक्तवन्तमा-चार्यम्। यदि ब्रूयुः–अन्तेवासिनश्चोदयेयुः, कथं यदिदमस्मिन् ब्रह्मपुरे परिच्छिन्ने अन्तः दहरमल्पं पुण्डरीकं वेश्म ततोऽप्याकाशस्तत्र किं विद्यते, न किंचिदपी-त्यर्थः । यदि नाम बदरमात्रं किञ्चिद्विद्येत किं तस्यान्वेषणेन ? विजिज्ञासनेन वा प्रयोजनमिति, इत्थमुक्त आचार्यो ब्रूयात्, यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति वैपुल्यप्रतिपादनेनाक्षेपबीजभूतमल्पत्वं व्यावर्त्यते । किं तत्र विद्यते इत्याक्षेपस्योत्तरमुच्यते–उभे अस्मिन्नित्यादिना । तदन्तर्वर्तिमध्येऽन्वेष्टव्यमुपदि-

* श्रुतप्रकाशिका *

रमत्वं साधितम्, अत्र पुरिशयस्याकाशशब्दवाच्यस्यापरमात्मत्वं निरस्यते इति सङ्गतिः । पूर्वं ब्रह्मलोकशब्दस्य परमात्मस्थानपरत्वमुक्तम् , तद्वदिहापि

७ भावप्रकाशिका ७

श्यते– यच्चास्येहास्तीत्यादिना । अस्यायमर्थः, यदस्य देहिन इह लोके विद्यते, यच्चेह लोके इदानीं न विद्यते, नष्टं भविष्यच्च तत्सर्वमस्मिन् दहराकाशे समाहितमिति । तच्चात्र दहरोपासनया ब्रह्मलोकं प्राप्तस्य अग्रे स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्तीत्यादिना वर्णयिष्यमाणं स्वसङ्कल्पसमुत्थितप्राचीनानन्तजन्मसम्बन्धिदिदृक्षितपितृमातृभ्रातृपुत्रकलत्रगीतवादित्रादिभोग्यवस्तुजातमेव । तं चेद्ब्रूयुरस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानीत्यादेरयमर्थः,– कुसूलादौ जीर्णे भारधारणाक्षमे सति तदन्तर्निहितं व्रीह्यादिकं किमपि यथा नावतिष्ठते, एवमाधारभूते ब्रह्मपुरशब्दिते शरीरे जरादिस्पृष्टे तदन्तर्वर्तिद्यावापृथिव्यादिकं नावशिष्यत इत्याक्षेपाभिप्रायः, शरीरे नष्टे दहराकाशान्तर्वर्तिद्यावापृथिव्यादिकं नश्येदित्यस्य कोवाऽभिप्रायः। शरीरे नष्टे तदाधारकदहराकाशस्यापि नाशावश्यम्भावात् तदाधारकद्यावापृथिव्यादिनाशस्स्यादिति वा, आहोस्वित् विद्यमानस्यापि दहराकाशस्य कुसूलाकाशवत् भारधारणाप्रयोजकतया कुसूलस्थानीयस्य शरीरस्यैव धारकत्वेन तस्मिन्नष्टे द्यावापृथिव्यादिनाशस्स्यादिति वेति विकल्पं हृदि निधाय प्रथमं प्रत्याचष्टे–नास्य जरयेति । द्वितीयं दूषयति–एतत्सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिता इति । ततश्च कुसूलाकाशविलक्षणस्य ब्रह्मरूपस्य दहराकाशस्यैव सर्वकामसमाधानाधारत्वात् शरीरस्याप्रयोजकत्वेन तन्नाशेऽपि द्यावापृथिव्यादिनाशप्रसङ्ग इति हि तस्याभिप्रायः । सत्यकामस्सत्यसङ्कल्पः— अवितथकामोऽवितथसङ्कल्प इत्यर्थः । कामसङ्कल्पयोश्च हेतुहेतुमद्भावान्न पौनरुक्त्यम् । यथा ह्येवेह प्रजा अन्वाविशन्तीत्यादेरयमर्थः,– यथा इह लोके प्रजा अन्यं स्वामिनं मन्यमानास्तस्य स्वामिनो यथा यथानुशासनं तथा तथान्वाविशन्ति अनुवर्तन्ते स्वाभिमतार्थांश्च लभन्ते । एवं पुण्यकृतोपि परशासनानुवर्तनेन तत्फलभाजो भवन्तीत्यभिप्रेतार्थः । राजसेवार्जितफलस्यैव पुण्यार्जितफलस्यापि क्षयित्वमाह तद्यथेहेत्यादिना। शिष्टं स्पष्टम्* ( पुरिशयस्येति ) यद्यपि छान्दोग्ये 'अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति ब्रह्मपुरे विद्यमानत्वमात्रं श्रूयते,

मस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वा व विजिज्ञासितव्यम् " इति । तत्र सन्देहः, किमसौ हृदयपुण्डरीकमध्यवर्ती दहराकाशो महाभूतविशेषः, उत

* श्रुतप्रकाशिका *

ब्रह्मलोकशब्दब्रह्मपुरशब्दयोः स्थानपरत्वं स्यादिति शङ्कया सङ्गतिः, पूर्वत्रान्तरिक्षशब्दस्य प्रसिद्धान्तरिक्षपरत्वं व्यावर्त्तितम् ; एवं दहराकाशशब्दस्य प्रसिद्धाकाशादन्यपरत्वमुच्यत इति सङ्गतिः । तर्हि 'अक्षरमम्बरान्तधृते'रित्यस्यानन्तरं दहराधिकरणं प्राप्तम्, उभयत्राकाशशब्दस्य विषयवाक्येषु श्रुतत्वात् । ईक्षतिकर्मेत्यधिकरणं दहराधिकरणानन्तर्यमर्हति, तत्र ह्यन्तरिक्षशब्दः श्रूयते, न त्वाकाशशब्द इति चेन्न ; अक्षरेक्षतिकर्माधिकरणयोः आकाशान्तरिक्षशब्दवाच्यादर्थान्तरस्य परमात्मत्वनिर्णयेन परस्परसङ्गत्यतिशयात् । दहराधिकरणे त्वाकाशशब्दवाच्यस्यैव परमात्मत्वं विवक्षितमित्यस्य पूर्वाधिकरणद्वयानन्तरत्वं युक्तम् । विषयादिकं दर्शयति ( इदमित्यादिना ) परस्मिन्नन्वेष्टव्यान्तरप्रतीत्यनुपपत्तेः पक्षान्तरद्वयेऽप्युपमानोपमेयभावाद्यनुपपत्तेश्च संशयः । किं दहराकाशो भूताकाशः , उत जीवः , अथ परमात्मा ? इति । तदर्थमन्वेष्टव्यान्तरनिर्देशः किं दहराकाशस्य परमात्मत्वविरोधि , उत न ? । तस्मिन्यदन्तरिति निर्देशः किं दहराकाशस्य गुणजात-

* भावप्रकाशिका *

न शयनम्, तथापि समानप्रकरणे वाजसनेयके 'य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते' इति शयनश्रवणादत्रापि पुरिशयत्वं फलितमिति द्रष्टव्यम् । (आकाशशब्दवाच्यस्यापरमात्मत्वं निरस्यत इति ) पुरिशयस्याकाशशब्दवाच्यत्वपरमात्मत्वं निरस्यत इत्यर्थः । ( ब्रह्मलोकब्रह्मपुरशब्दयोरिति ) 'एतं ब्रह्मलोकं न विन्दन्ति' एतत्सत्यं ब्रह्मपुरम्' इति शब्दयोरित्यर्थः ( प्रसिद्धान्तरिक्षेति ) परमात्मस्थानाधस्तनलोकपरत्वसमर्थनादिति भावः । ( तर्ह्यक्षरमिति ) अप्रसिद्धार्थकल्पकत्वरूपप्रत्यासक्तेस्त्रयाणां तुल्यत्वेपि अन्तरिक्षशब्दाप्रसिद्धार्थकल्पेक्षतिकर्माधिकरणापेक्षया आकाशशब्दाप्रसिद्धार्थमकल्पकत्वेनाक्षरदहराधिकरणयोः प्रत्यासत्त्यतिशया दित्यर्थः ! ( सङ्गत्यतिशयादिति ) ननु आकाशवाचिशब्दस्य प्रसिद्धार्थातिरि-

**प्रत्यगात्मा, अथ परमात्मा? इति । किं तावत्प्राप्तम्? महाभूतविशेष इति । कुतः? आकाशशब्दस्य भूताकाशे प्रसिद्धिप्रकर्षात्, 'तस्मिन् यदन्तस्तदन्वेष्टव्यम्' इत्यन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्च ॥**

* श्रुतप्रकाशिका *

विषयः, उतार्थान्तरपरः? एष आत्मेतिवाक्योक्तमपहतपाप्मत्वादिकं किं प्रजापतिवाक्योक्तजीवधर्मः, उत न? । जीवधर्मत्वेऽपहतपाप्मत्वादिश्रुतिस्वारस्यमस्ति, न? इति विचारः । यदा तस्मिन्यदन्तरितिनिर्देशोऽर्थान्तरपरः तदाऽन्वेष्टव्यशब्दस्य विषयत्वाभावेन दहराकाशस्य भूताकाशत्वं स्यात्, यदा एष आत्मेति वाक्योक्तगुणाष्टकस्य प्रजापतिवाक्योक्तजीवधर्मत्वे स्वारस्यमस्ति तदानीम् एष आत्मेतिवाक्यस्य जीवविषयतया दहराकाशो जीवः स्यादिति पूर्वपक्षे फलफलिभावः । यदा तस्मिन्यदन्तरिति गुणजातविषयोक्तिः तदा अन्वेष्टव्यशब्दस्य गुणजातविषयत्वाद्दहराकाशो भूताकाशातिरिक्त इति स्यात्, यदा 'एष आत्मा' इतिवाक्यस्य प्रजापतिवाक्योक्तजीवधर्मविषयत्वे स्वारस्यं नास्ति तदा स्वरसतो गुणाष्टकविशिष्टपरमात्मप्रतिपादकतया दहराकाशः परमात्मा स्यादिति राद्धान्ते फलफलिभावः । आकाशशब्दस्य क्वचित्परमात्मपरत्वं दृष्टमिति तद्व्यावृत्त्यर्थं प्रसिद्धिप्रकर्षादित्युक्तम् । "एष आत्माऽपहतपाप्मा" इत्यादिभिरस्याकाशस्य परमात्मगुणेषु श्रूयमाणेषु सत्सु कथं प्रसिद्धिप्राचुर्यात भूताकाशत्वेन प्रत्यवस्थानमित्यत्राह (तस्मिन् यदन्तरिति) एतच्चोत्तरत्राथ स्यादित्यादिना व्यक्तीभविष्यति ॥

* भावप्रकाशिका *

क्तार्थकत्वसमर्थनपरत्वं त्रयाणां साधारणधर्मः । अक्षरेक्षतिकर्माधिकरणयोराकाशशब्दवाच्यस्य प्रसिद्धार्थातिरिक्तार्थकत्वसमर्थनमुखेन विप्रतिपन्नस्य परमात्मत्वसमर्थकत्वं साधारणो धर्मः । अन्तरिक्षशब्दस्यापि आकाशवाचिशब्दत्वात्. तथा च किमत्र विनिगमकमिति चेत्. यदि न वैषम्यमित्यभिमानः तदा अक्षराधिकरणे 'अदृष्टं द्रष्टृ' इत्यदृष्टत्वश्रवणात् ईक्षतिकर्मत्वं न सम्भवतीत्याक्षेपसङ्गतेरप्यधिकायास्सत्त्वादीक्षतिकर्माधिकरणस्याक्षराधिकरणानन्तर्यं युज्यत इति मन्तव्यमायुष्मता । (क्वचित्परमात्मपरत्वमिति) 'आकाशादेव समुत्पद्यन्ते' इत्यादा-

इत्येवं प्राप्तेऽभिधीयते– दहर उत्तरेभ्यः। दहराकाशः परं ब्रह्म। कुतः? उत्तरेभ्यो वाक्यगतेभ्यो हेतुभ्यः। 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः' इति निरुपाधिकात्मत्वमपहतपाप्मत्वादिकं सत्यकामत्वं

* श्रुतप्रकाशिका *

राद्धान्तमाह (एवं प्राप्त इति) न हि परमात्मधर्माणामुत्तरत्वाधरत्वादिकमस्ति, तस्माद्धेतोरुत्तरत्वं वाक्यद्वारकमित्याह (वाक्यगतेभ्य इति) उत्तरेभ्य इत्युक्ते चतुर्थ्यन्तत्वशङ्का माभूदिति पञ्चमीस्फुटीकरणाय हेतुभ्य इत्युक्तम्। "षष्ठी हेतुप्रयोगे" इति नियमः प्रयोजनतया, हेतुत्वविवक्षायम् न सर्वदा; यथा "अल्पस्य हेतोर्बहु हातुमिच्छन्" इति। उत्तरवाक्यगतहेतून् दर्शयति (एष इत्यादिना) (निरुपाधिकात्मत्वमिति) जीवस्यापि व्यावर्तनक्षममात्मत्वमित्यभिप्रायेण निरुपाधिकशब्दः। देवादिकतिपयशरीरविशेषानवच्छिन्नत्वं निरुपाधिकत्वम्, अप-

* भावप्रकाशिका *

वित्यर्थः॥ (वाक्यद्वारकमिति) उत्तरेभ्य इत्यस्य उत्तरवाक्यगतेभ्य इत्यर्थ इति भावः। (पञ्चमीस्फुटीकरणायेति) ततश्च हेतुभ्य इत्येतत्पदं उत्तरेभ्य इत्यत्र विभक्त्यर्थस्फोरकमिति भावः। (षष्ठी हेतुप्रयोगनियम इति) "षष्ठी हेतुप्रयोगे 'सर्वनाम्नस्तृतीया च" इत्युत्तरशब्दस्य सर्वनामत्वात् षष्ठी वा तृतीया वा स्यात्, नतु पञ्चमीत्याक्षेपाभिप्रायः। इदं च 'निमित्तकारणहेत्वर्थेषु सर्वासां प्रायदर्शनम्' इति वार्तिकानादरेणोक्तमिति द्रष्टव्यम्। (प्रयोजनतयेति) ननु वृत्त्यादिग्रन्थेष्वेवमव्याख्यातत्वात् विद्याया हेतोर्यश इत्यादौ विद्यायशःप्रयोजकत्वाभावेन षष्ठ्यनुपपत्तिप्रसङ्गाच्च नेदं समञ्जसमिति चेन्न; शाब्दिकग्रन्थेषु अन्नस्य हेतोर्वसतीत्यादेरेवोदाहृतत्वात् विद्याया हेतोर्यश इत्यादिप्रयोगस्यासम्प्रतिपन्नत्वात्. षष्ठीहेतुप्रयोग इत्यस्य प्रयोजनतया हेतुत्वविषयत्वाभावे हेताविति सूत्रस्य निर्विषयत्वप्रसङ्गाच्च। नच हेतुशब्दप्रयोगविषयं षष्ठीहेतुप्रयोग इति सूत्रमिति वाच्यम्; हेतुशब्दप्रयोगे 'हेतौ द्योत्ये वा' इति कौमुद्यामुक्तत्वात्। तस्याश्च सम्प्रतिपन्नत्वान्न काचिदनुप-

सत्यसङ्कल्पत्वं चेति दहराकाशे श्रूयमाणा गुणा दहराकाशं परं ब्रह्मेति ज्ञापयन्ति । "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामाँस्तेषां सर्वेषु लोकेषु कामचारो भवति" इत्यादिना "यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते" इत्यन्तेन दहराकाशवेदिनः सत्यसङ्कल्पत्वप्राप्तिश्चोच्यमाना दहराकाशं परं ब्रह्मेत्यवगमयति । "यावान्वा

* श्रुतप्रकाशिका *

हतपाप्मत्वादेरपि निरुपाधिकत्वमभिप्रेतम् । यद्वा आकाशस्यापि स्वकार्यव्याप्त्या यौगिक आत्मशब्द उपपन्न इति शङ्काव्यावृत्त्यर्थो निरुपाधिकशब्दः । यौगिकत्वाश्रयणं च क्लिष्टम् , स्वतः शरीरप्रतिसम्बन्धिनियन्तृरूपव्यासरि आत्मशब्दप्रयोग इति भावः । अपहतपाप्मत्वादिकमित्यादिशब्देन सत्यकामत्वादिग्रहणे शक्येऽपि गुणानां विधिनिषेधरूपेण द्वैविध्यज्ञापनाय सत्यकामत्वादेः पृथगुपादानम् । (उपमानेति ) एकस्यैवोपमानोपमेयभावो न घटत इत्यर्थः । उपमानोपमेयभावस्य

* भावप्रकाशिका *

पत्तिरिति केचिद्वदन्ति । ननु जीवव्यावृत्तेः प्रस्तोष्यमाणत्वेन भूताकाशव्यावृत्तेरेव प्रस्तुतत्वादात्मत्वमात्रेण च भूताकाशव्यावृत्तिसिद्धेर्निरुपाधिकत्वकीर्तनं मुधेत्यस्वरसादाह ( यद्वा आकाशस्यापीति ) ( स्वतश्शरीरप्रतिसम्बन्धीति ) स्वत इत्यस्य प्रयोग इत्यनेनान्वयः । स्वतःप्रयोगो मुख्यप्रयोग इत्यर्थः । भाष्ये—अथ य इहात्मानमित्यादि । अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामाँस्तेषां सर्वेषु लोकेषु कामचारो भवति स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते, एवमेव मातृलोकभ्रातृलोकस्वसृलोकसखिलोकगन्धमाल्यलोकान्नपानलोकगीतवादित्रादिलोकस्त्रीलोकपर्याया द्रष्टव्याः । अनन्तरं 'यं यमन्तमभिकामो भवति' 'यं यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते" इति श्रूयते, इत्येवं श्रुतिक्रमो द्रष्टव्यः । ( एकस्यैवेति ) अत एव 'श्येनेनाभिचरन् यजेत' इत्यत्र गुणविधिपक्षे

अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्युपमा- नोपमेयभावश्च दहराकाशस्य भूताकाशत्वेनोपपद्यते। हृदयावच्छेदनिबन्धन उपमानोपमेयभाव इति चेत्; तथा सति हृदयावच्छिन्नस्य द्यावापृथिव्यादिसर्वाश्रय- त्वं नोपपद्यते॥ ननु च दहराकाशस्य परमात्मत्वेऽपि बाह्याकाशोपमेयत्वं न सम्भवति "ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्" इत्यादौ सर्वस्माज्ज्यायस्त्वश्रव-

* श्रुतप्रकाशिका *

हृदयावच्छेदनिबन्धनत्वमाशङ्क्य परिहरति (हृदयेत्यादिना) अत एवेदमपि नाशङ्कनीयम् "रामरावणयोर्युद्धं रामरावणयोरिव" इतिवदुपमानशून्यताज्ञानपरं वाक्यमिति, यावच्छब्दानुपपत्तेः अंशभेदोक्तेश्च। न्यूनपरिमाणस्येव अधिकपरि- माणस्यापि न मध्यमपरिमाणेन साधर्म्यं युक्तमिति चोदयति (ननु चेति)

७ भावप्रकाशिका ७

'यथा वै श्येनो निपत्यादत्त' इति वाक्यशेषे निबध्यमानं श्येनस्य श्येनसादृश्यं नान्वेतीति नामत्वमाश्रितमिति भावः। (हृदयावच्छेदेति) उपमानोपमेययोर- भेदेऽपि उपमानतावच्छेदकोपमेयतावच्छेदकभेदसत्त्वे उपमा सम्भवत्येव, अत एव 'उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम्। स तद्दुकूलादविदूर- मौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे" इत्यत्रैकस्यैव हरस्योत्तमाङ्गपतद्गङ्गाप्रवाहत्वच्छत्रदु- कूलसन्निकृष्टमौलित्वरूपोपमानोपमेयतावच्छेदकभेदसत्त्वेनालङ्कारिकैरुपमाप्रभेदत्व- मङ्गीकृतमिति भावः। (उपमानशून्यतेति) 'रामरावणयोर्युद्धम्' इत्यादौ उपमा- नोपमेयभेदसापेक्षसादृश्यस्य वास्तवौपाधिकभेदद्वयाभाववत्यसम्भवादनन्वयाल- ङ्कारः। तत्र चानन्वितं स्वस्मिन्निबध्यमानं स्वसादृश्यमनुपमत्वद्योतनफलकमेव। यथा स्वमहिमप्रतिष्ठितत्वमनन्याधारत्वद्योतनफलकं तद्वदिति भावः। (याव- च्छब्देति) यत्रोपमानतावच्छेदकोपमेयतावच्छेदकयोरुपमानोपमेययोश्चैक्यम् तत्रै- वानन्वयः। प्रकृते च यावत्त्वान्तर्हृदयावस्थितत्वरूपावच्छेदकद्वयभेदसत्त्वात् आन्तरबाह्याकाशांशानां परस्परभिन्नत्वेनोपमानोपमेयभेदसत्त्वाच्च नानन्वय इति

णात्- नैवम्; दहराकाशस्य हृदयपुण्डरीकमध्यवर्त्ति-त्वप्राप्ताल्पत्वनिवृत्तिपरत्वादस्य वाक्यस्य; यथा अधि-कजवेऽपि सवितरि 'इषुवद्गच्छति सविता' इति वचनं गतिमान्द्यनिवृत्तिपरम्। अथ स्यात् "एष आत्माऽप-हतपाप्मा' इत्यादिना दहराकाशो न निर्दिश्यते "दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्ट-व्यम्" इति दहराकाशान्तर्वर्तिनस्ततोऽन्यस्यान्वेष्ट-

* श्रुतप्रकाशिका *

अन्यूनपरिमाणत्वमात्रं साधर्म्यमिति परिहरति (नैवमिति) (अथ स्यादिति) यद्यपि 'यावान्वा अयमाकाशः" इति मध्यगतवाक्यस्थाकाश एव प्रथमानिर्दिष्ट-त्वादासन्नत्वाच्च एष इति परामर्शनीयः, तथाऽप्युपक्रमे "तस्मिन् यदन्तस्तदन्वेष्ट-व्यम्" इत्यन्वेष्टव्यतया प्राधान्येनावगमत्वात् " आत्मा वा अरे द्रष्टव्यः 'सोऽन्वे-ष्टव्यः" इत्यादिष्वात्मनोऽन्वेष्टव्यत्वनिश्चयादिहाप्यन्वेष्टव्यस्य तदन्तर्वर्तिनः आत्मत्वावगमात् "एष आत्मा" इति तदन्तर्वर्तिनोऽन्वेष्टव्यस्यात्मनः परामर्शः, अत आत्माधिकरणतयाऽवगतत्वेन तद्व्यतिरिक्तत्वाद्युपपत्त्यनुरोधेन भूताकाश

❀ भावप्रकाशिका ❀

भावः। (मध्यगतवाक्येति) "तस्मिन् यदन्तस्तदन्वेष्टव्यम्' एष आत्मा" इति वाक्यद्वयमध्यगतेत्यर्थः। ननु प्रथमानिर्दिष्टत्वेन एष आत्मेत्यनेन विभक्त्यैकरूप्यं तदन्वेष्टव्यमित्यत्रापि अस्तीत्यत्राह (आसन्नत्वाच्चेति) यद्यपि ब्रह्मपुरमित्यत्र ब्रह्मशब्देन तदाधेयब्रह्मणोप्यासन्नत्वमस्तीति दहराकाशातिरिक्तब्रह्मवादिनोऽप्या-सन्नत्वं सुवचम्, तथापि ब्रह्मशब्दस्य षष्ठ्यन्ततया विभक्त्यैकरूप्यस्याभावात्. ब्रह्मपुरशब्दनिर्दिष्टस्याकाशस्य ततोऽपि सन्निहितत्वाच्चाकाशस्यैव एष इति परामर्श उचित इति यद्यपीत्यादेराभिप्रायः। (अन्वेष्टव्यस्यात्मनः परामर्श इति) ततश्च 'एष आत्मापहतपाप्मा' इतिवाक्ये एष आत्मेत्येतावानंशोऽनुवाद इति भावः। (अत आत्माधिकरणतयेति) अपहतपाप्मत्वादिलिङ्गानां तदन्तर्वर्तिगतत्वेनो-पक्रमावगतदहराकाशब्रह्मत्वस्य साधकाभावादिति भावः। ननु प्रक्रम एव

व्यत्वेन प्रकृतत्वादिह "एष आत्माऽपहतपाप्मा" इति तस्यैवान्वेष्टव्यस्य निर्देष्टुं युक्तत्वात्; स्यादेतदेवम्, यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च व्यभाङ्क्ष्यत् व्यभांक्षीत्तु सा, तथा हि "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्यम्" इति ब्रह्मपुरशब्देनोपास्यतया सन्निहितपरब्रह्मणः पुरत्वेनोपासकशरीरं नि-

* श्रुतप्रकाशिका *

एवायं दहराकाश इत्यर्थः। पूर्वपक्षेऽन्वेष्टव्यान्तरस्याधारतया प्रतीतेश्चेत्यनेन वाक्येनाभिप्रेतोऽर्थ इहाथ स्यादित्यादिना कण्ठोक्तो भवति। परिहरति (स्यादेतदिति) ब्रह्मपुरशब्दार्थमाह (उपास्यतयेति) न केवलं ब्रह्मणः सर्वव्यापित्वाच्छरीरेण साधारणं सम्बन्धमात्रम्, अपि तूपासनस्थानभूतहृदयाधारत्वात् सम्बन्धविशेषश्च विद्यते, ब्रह्मशब्दश्च परस्मिन्मुख्यः, अतो ब्रह्मपुरं शरीरमित्यर्थः। अत्रेदमप्यर्थसिद्धम्; दहराकाशो जीव इति पूर्वपक्षस्य साधकतया

ϧ भावप्रकाशिका ϧ

दहराकाशान्तर्वर्तिनः आत्मत्वनिश्चये तदत्र विद्यत इति प्रश्नस्य वा तदुत्तरसन्दर्भस्य वा कथमुपपत्तिरिति चेदुच्यते, दहराकाशान्तर्वर्तिब्रह्मवादिनो ह्ययमभिप्रायः,— तस्मिन् यदन्तस्तदन्वेष्टव्यमित्यत्रैव दहराकाशातिरिक्तमन्वेष्टव्यम्. तच्च श्रुत्यन्तरपर्यालोचनया आत्मरूपमित्यवगतम्। तथापि किं तदत्र विद्यते इति तदात्मवस्तु किंप्रकारकमिति प्रश्नः यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश इति। अस्य चायमर्थः, यावानयमाकाशोऽतिविपुलो वर्तते एष आकाशस्सर्वोऽप्यन्तर्हृदये, हृदयशब्दः परमात्मपरः। 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदय'मित्यत्रैव श्रवणात्। ततश्च हृदये ब्रह्मणि अन्तस्सर्वोऽप्याकाशो वर्तते, द्यावापृथिव्यादिकं चेत्यर्थः। एतत्सत्यं ब्रह्मपुरमिति पूर्ववाक्ये अन्तर्वर्तिब्रह्मैव प्राधान्येन प्रथमानिर्दिष्टत्वात्सन्निहितत्वाच्च। एष आत्मेत्यत्रैतच्छब्देन तस्यैव परामर्शसम्भवात्, यद्यपि 'यावान्वा अयमाकाशः'

दिश्य तन्मध्यवर्ति च तदवयवभूतं पुण्डरीकाकारमल्पपरिमाणं हृदयं परस्य ब्रह्मणो वेश्मतया अभिधाय सर्वज्ञं सर्वशक्तिमाश्रितवात्सल्यैकजलधिमुपासकानुग्रहाय तस्मिन्वेश्मनि सन्निहितं सूक्ष्मतया ध्येयं दहरा-

* श्रुतप्रकाशिका *

ब्रह्मपुरशब्दनिर्देशः परैरुक्तः, तदयुक्तमिति । कथम्? उच्यते ; ब्रह्मणः सर्वविकारसाधारणत्वादसाधारणेन व्यपदेशस्य युक्तत्वाज्जीवस्य भोगोपकरणतया सम्बन्धविशेषसद्भावाज्जीवशरीरमेव ब्रह्मपुरमिति तद्विधेयपुराधिपो जीव इति शङ्कितम्. तदयुक्तम् ; मुख्यार्थस्य स्वतो ग्राह्यत्वात् परमात्मन उपास्यत्वाय शरीरान्तरवस्थानस्य "निचाय्यत्वादेवम्" इत्यत्रदर्शिततया सम्बन्धविशेषसद्भावाच्च जीवसाध-

ঞ भावप्रकाशिका ঞ

इतिवाक्येत्यादिचोद्यस्यापि नावकाश इति द्रष्टव्यम् । भाष्ये— स्यादेतदेवं यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभाङ्क्षीत् व्यभाङ्क्षी तु सा— इति पाठः । विभजनस्यैव प्रकृते विवक्षितत्वात् । ननु स्यादेतदेवमित्यत्रापि लिङ्निमित्ते लृङ्क्रियातिपत्ताविति अभविष्यदेतदेवम्. यदि श्रुतिरेव दहराकाशं तदन्तर्वर्तिनं च न व्यभाङ्क्षीत् इत्येव स्यादिति चेन्न ; विभाषा या तौ सम्भावनवचने यदीत्यादिलिङ्निमित्तान्तरस्य सम्भवान्नोभयत्रापि लृङ्प्रसङ्ग इति द्रष्टव्यम् । (असाधारणेन व्यपदेशस्येति) क्षितिसलिलपवनादिसमवधानजन्मनोप्यङ्कुरस्य शाल्यङ्कुर इति असाधारणशालिबीजेनैव व्यवहारदर्शनादित्यर्थः । (तद्विधेयपुराधिपतिरिति) तत्स्वामिकपुरवासी जीव इत्यर्थः । उपक्रम एव 'अथ यदिदमस्मिन् ब्रह्मपुरे' इति जीवस्वामिकपुरप्रतीतेः, तत्स्वामिके पुरे तदवस्थानस्यैवोचितत्वादिति भावः । तद्विधेयपुरवासी जीव इति पाठस्तु सुगम एव, उक्तं च शाङ्करभाष्ये 'तत्र पुरस्वामिनः पुरैकदेशेऽवस्थानं दृष्टं यथा राज्ञः' इति । भामत्यां च— स्यादेतत् जीवस्य पुरं भवतु शरीरम्, पुण्डरीकदहरगोचरता तु अन्यस्य भविष्यति, वत्सराजस्य पुर इव उज्जयिन्यां मैत्रेयस्य सद्मेति मैवं वेश्मखल्वधिकरणमनिर्दिष्टाधेयमाधेयविशेषापेक्षायां पुरस्वामिनः प्रकृतत्वात्. तेनैवाधेयेन सम्बन्धं सन्नाधेयान्तरसम्बन्धं कल्पयतीत्युक्तम् । (मुख्यार्थस्येति) ब्रह्मपुर इत्यत्र षष्ठ्यपेक्षया

काशशब्देन निर्दिश्य तदन्तर्वर्त्ति चापहतपाप्मत्वादिस्वभावतो निरस्तनिखिलहेयत्वसत्यकामत्वादिस्वाभाविकानवधिकातिशयकल्याणगुणजातं च ध्येयं 'तदन्वेष्टव्यम्' इत्युपदिश्यते। अत्र 'तदन्वेष्टव्यम्' इति

* श्रुतप्रकाशिका *

कत्वशङ्कानुत्थानादिति। अल्पपरिमाणमित्यनेन 'दहरं पुण्डरीक'मित्यत्र दहरशब्दो व्याख्यातो भवति। सत्यकामत्वसत्यसङ्कल्पत्वसिद्धान् गुणानाह ( स्वाभाविकेति ) ननु आकाशशब्दवाच्यस्य गुणित्वेन तस्य ध्येयत्वं वक्तव्यम् , तेन विना गुणध्यानायोगात् तच्छब्दस्य तदन्तर्वर्तिपरत्वान्नाकाशाभिधायित्वम् . गुणिनो ध्येयत्वे कथिते गुणानां ध्येयत्वमर्थसिद्धं स्यात् , न तु गुणानां ध्येयत्वे कथिते गुणिनोऽन्तर्भावः, अतोऽन्वेष्टव्यमितिपदं गुणिपरम् , न तु गुणपरमित्यत्राह (अत्रेति) तच्छब्द एवोभयपरामर्शीत्यर्थः । ननु यच्छब्दनिर्दिष्टं हि तच्छब्देन परामृश्यते। यच्छब्दस्त्वन्तर्वर्तिपरः, नाकाशपरः , तत्कथमुभयपरामर्शित्वं तच्छब्दस्येति शङ्कायामस्य वाक्यस्य परोक्तार्थपरत्वं च व्युदस्यन् तच्छब्दस्य उभय-

ঞ भावप्रकाशिका ঞ

प्रातिपदिकस्य मुख्यतया षष्ठ्यर्थीभूतस्वस्वामिभावलक्षणसम्बन्धस्वारस्यापेक्षया ब्रह्मशब्दप्रातिपदिकार्थस्वारस्यमेवादर्तव्यम् . ततश्च ब्रह्मशब्देन परमात्मन एव ग्रहणमुचितम् . षष्ठ्यर्थसम्बन्धस्तु साधारणोऽसाधारणो वा यः कश्चिद्भविष्यतीति भावः । ननु सत्यकामस्सत्यसङ्कल्प इति गुणद्वयस्यैवाभिधानाद्गुणजातमिति गुणबहुत्वाभिधानमसङ्गतमित्यत आह (सत्यकामत्वसत्यसङ्कल्पत्वेति) ( तेन विना गुणध्यानायोगादिति ) ननु यदि गुणध्यानमन्तरेण गुणिध्यानायोगाद्गुणध्यानस्यावश्यकत्वम् , तदाक्षेपादेव तदुपासनस्यापि सिद्धतया नात्रानुपपत्तिरिति चेन्न ; आक्षेपतः प्राप्तादाभिधानिकस्य ग्राह्यत्वमितिन्यायेन गुणिनोऽपि ध्येयत्वस्याभिधानिकत्वसम्भवे तत्परित्यागायोगात् 'य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामा'निति फलनिर्देशवाक्ये गुणांशे अभिधानतः प्राप्तानुवादो गुण्यंशे आक्षेपतः प्राप्तानुवाद इति वैरूप्याश्रयणस्यापन्याय्यत्वाच्च । ( अर्थसिद्धं स्यादिति ) गुणानां गुण्यन्तर्भूतत्वेन गुणिध्याने विहिते गुणध्यानं विहितं

तच्छब्देन दहराकाशम् , तदन्तर्वर्तिगुणजातं च परामृश्य तदुभयमन्वेष्टव्यमित्युपदिश्यते ; "यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यनूद्य तस्मिन्

* श्रुतप्रकाशिका *

परामर्शित्वमाह ( यदिदमस्मिन्निति ) तस्मिन् दहरपुण्डरीकवेश्मनि यदन्तर्गतं दहराकाशाख्यं वस्तु तदन्वेष्टव्यम्—इति परैरुच्यते , तद्व्युदस्यति ( यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्मेत्यनूद्येत्यादिना ) अयमर्थः, यदिदं दहरं पुण्डरीकं

ध भावप्रकाशिका ध

स्यादित्यर्थः। न त्वाक्षेपलभ्यं स्यादित्यर्थ इति न भ्रमितव्यम्। तथात्वे गुणानां ध्येयत्वे कथितेपि गुणिध्यानस्याक्षेपलभ्यत्वसम्भवेन, नतु गुणानां ध्येयत्वे कथित इत्युत्तरवाक्यासामञ्जस्यप्रसङ्गात् । गुणध्याने विहिते गुणिध्यानाक्षेपस्य तेन विना गुणध्यानायोगादिति पूर्वग्रन्थे अङ्गीकृतत्वाच्चेति द्रष्टव्यम् ।( अन्वेष्टव्यमितिपदं गुणिपरमिति ) दहराकाशान्तर्वर्तिगुणिपरमित्यर्थः। तत्र दहराकाशो भूताकाश एव, नतु परमात्मेति भावः। ( अनूद्येत्यन्तेनेति ) ननु दहरं पुण्डरीकं वेश्मेति एतावता पुण्डरीकवेश्मनो ब्रह्मपुराख्यशरीराधारकत्वे प्रतिपादितेपि आकाशस्य हृदयपुण्डरीकाधारकत्वस्याप्रतिपादनात् कथं वेश्मेत्यनूद्येत्यन्तेन परमतनिरासः। नच दहरोस्मिन्नन्तर आकाशः' इत्येतावत्पर्यन्तो ग्रन्थसन्दर्भोपि तत्र विवक्षितः। ततश्चाकाशे पुण्डरीकाधारकत्वस्यापि प्रतिपादितत्वादनूदितस्य तस्मिन् यदन्तरित्यनुवादो व्यर्थ इति परमतदूषणसूचकत्वमुपपद्यत इति वाच्यम्; तथासति 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्यनूद्येतिभाष्यस्य दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाश इत्येतावत्पर्यन्तग्रन्थसन्दर्भकथनपरत्वाश्रयणे तस्मिन् दहरपुण्डरीकवेश्मनीत्युत्तरभाष्यस्य दहरोऽस्मिन्नन्तर आकाश इति वाक्यार्थकथनपरत्वं न स्यात्. पूर्वमेव तद्वाक्यार्थस्याप्युपन्यस्तत्वात्. ततश्च तस्मिन् यदन्तरितिवाक्यार्थकथनपरत्वमेव स्यात् , न चेष्टापत्तिः, तस्मिन् यदन्तरिति तच्छब्दस्य परमतव्यवहितपुण्डरीकपरत्वाभावात् । दहरोस्मिन्नितिवाक्यं व्याचष्ट इत्युत्तरत्र ग्रन्थकृतैव वक्ष्यमाणत्वाच्चेति चेत्. सत्यम् ; अथापि अनूद्येत्येतदनूदितस्यार्थस्य पुनरनुवादे प्रयोजनं नास्तीत्यर्थसूचकमित्यत्र तात्पर्यम् । अनूद्येत्यादिनेतिपाठस्तु सुगम एव ।

* श्रुतप्रकाशिका *

वेश्म तस्मिन् दहराकाश इति दहराकाशस्य पुण्डरीकवेश्माधारत्वस्योक्तत्वात् पुनरपि 'तस्मिन् यदन्त'रिति आकाशस्य पुण्डरीकवेश्माधारत्वकथनवैयर्थ्यं स्यादिति। तस्मिन् यदन्तरिति गुणविषयत्वे तु न वैयर्थ्यम्, पूर्वमनुक्तत्वात्, अतोऽपेक्षितविधेरनपेक्षितविधानं दुर्बलम्। अत्र दूषणान्तराण्यप्यभिप्रेतानि. अव्यवहितदहराकाशं विहाय व्यवहितपुण्डरीकवेश्मपरामर्शोऽनुपपन्नः। किञ्च पुल्लिङ्गशब्दनिर्दिष्टस्य दहराकाशस्य यदिति नपुंसकलिङ्गान्तपदेन परामर्शानुपपत्तिश्च। तस्मिन् यदन्तरितिवाक्यं दहराकाशस्य पुण्डरीकवेश्माधारकत्वप्रतिपादनपरं चेत्, अनन्तरवाक्यस्य तदाक्षेपपरतया व्याख्यानं चानुपपन्नम्. परमात्मनोऽन्तर्वर्ति तत्कारणं सूक्ष्मं किमपि

७ भावप्रकाशिका ७

( वैयर्थ्यं स्यादिति ) न च तस्मिन् यदन्तरित्यनुवादस्य तदन्तर्वर्तिकामविशिष्टतयाऽन्वेष्टव्यत्वसिद्धिः प्रयोजनमिति वाच्यम्; पुनरनुवादेन तादृशप्रयोजनसिद्धौ प्रमाणाभावात्। ( व्यवहितेति ) सर्वनाम्नामव्यवहितपरत्वसम्भवे व्यवहितपरत्वकल्पनाया अन्याय्यत्वात्, अत एव साकमेधे 'एतद्ब्राह्मण एककपालः' इत्यत्रैतत्पदमव्यवहितवारुणप्रघासिकैककपालपरामर्शी, नतु व्यवहितवैश्वदेविकैककपालपरामर्शीति सप्तमे स्थितम्. गौश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च तिलाश्च माषाश्च तस्य द्वादश शतं दक्षिणेत्यत्र तु माषद्वादशशतमात्रस्यानतिकरत्वासम्भवात् बहुवचनान्तानां माषाणां तस्येत्येकवचनेन परामर्शस्यायुक्तत्वाच्चाव्यवहितमाषाणां परामर्शेऽनुपपत्तिसत्त्वात् व्यवहितगोपरामर्शित्वम्, न चेह तथा बाधकमस्तीति भावः। ( परमात्मन इति ) परमात्मनोऽन्तर्वर्ति तत्कारणं सूक्ष्मं किमपि न सम्भवतीति किं तत्र विद्यत इति वाक्येनाक्षिप्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति हि परैर्वर्ण्यत इति पाठो बहुषु कोशेषूपलभ्यते, अस्य ग्रन्थस्य च सर्वकारणान्तर्वर्ति कारणं न सम्भवतीत्याक्षेपाभिप्रायः। सकलकारणभूते परमात्मनि कारणान्तरस्यासम्भवेपि द्यावापृथिव्यादिकार्यसम्भवान्न दोष इति समाधानाभिप्राय इति परैर्वर्ण्यत इत्यर्थो झटिति प्रतीयते, परैश्च नैवमाक्षेपसमाधानप्रकरणौ वर्णितौ, अपि तु दहरपुण्डरीकमेव तावत्सूक्ष्मतरम्, तदवरुद्धमाकाशं ततोपि सूक्ष्मतमम्. तस्मिंश्च सूक्ष्मतमे आकाशे किमपि मातुं न शक्नोतीति किमन्वेष्टव्यं स्यादित्याक्षेपाभिप्रायः, दहराकाशस्य बाह्याकाशवद्विपुलत्वेन

दहरपुण्डरीकवेश्मनि यो दहराकाशः यच्च तदन्तर्वर्ति गुणजातम् तदुभयमन्वेष्टव्यमिति विधीयत इत्यर्थः।

* श्रुतप्रकाशिका *

न सम्भवतीति किं तत्र विद्यत इति वाक्येनाक्षिप्य द्यावापृथिव्यादिकार्यस्य तदन्तर्वर्तितया समाधानमिति हि परैर्वर्ण्यते, दहराकाशः पुण्डरीकवेश्मवर्तीत्युक्ते किमत्राक्षेप्यम्. तथा 'अस्मिन् कामाः समाहिताः' "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इति गुणानां तदन्तर्वर्तित्वमुक्त्वा गुणगुणिनोरुभयोरप्युपासनतत्फलप्रतिपादकोपरितनवाक्यस्वारस्यभङ्गश्च भवेत्; अतः परोक्तार्थोऽनुपपन्न इत्यभिप्रायः॥ दहरोऽस्मिन्निति वाक्यं व्याचष्टे (तस्मिन् दहरेति) पुंल्लिङ्गयच्छब्दाध्याहारेण योजनायां यच्छब्दद्वयनिर्दिष्टमुभयं तच्छब्देन प्रतिनिर्दिश्यत इत्यभिप्रायेण यो दहराकाशः यच्च तदन्तर्वर्ति गुणजातं तदुभयमित्युक्तम्। यद्वा पुंल्लिङ्गयच्छब्दानध्याहारेण दहरोऽस्मिन्नित्यादेरेकवाक्यत्वं मन्वान आह—तस्मिन् दहरेति। श्रुतिवाक्ये अन्तःशब्दोऽन्तर्वर्तिपरः। अस्मिन् वर्तमानो दहराकाश-

ॐ भावप्रकाशिका ॐ

सूक्ष्मतमत्वनिबन्धनानुपपत्त्यभावात्. तत्र द्यावापृथिव्यादिसर्वविधभोग्यजातसमवधानं तदन्वेष्टव्यत्वं च सम्भवतीति समाधानाभिप्राय इत्येवोक्तम्, नतूक्तप्रकारेण; तस्मात्पुरोवादिवाक्यानुसारेणानुवादिवाक्यार्थस्य वर्णनीयत्वात्. अस्यापि ग्रन्थस्य स एवार्थः। परमात्मनोऽन्तर्वर्तिनः कस्याप्यभावादित्युपरितनानुवादस्याप्ययमेवार्थः। (पुंल्लिङ्गयच्छब्दाध्याहारेणेति) तस्मिन् यदन्तरिति वाक्य इति शेषः, नतु दहरोऽस्मिन्निति वाक्ये. तस्मिन् वाक्ये यच्छब्दाध्यारे दहरोऽस्मिन्नित्यादेरेकवाक्यत्वप्रसङ्गात्. यत्पदघटितवाक्यस्य तत्पदघटितवाक्येनैकवाक्यतावश्यम्भावात्. न चेष्टापत्तिः, उत्तरपक्ष एव एकवाक्यत्वाश्रयणस्य वक्ष्यमाणत्वादिति द्रष्टव्यम्। केचित्तु 'दहरोऽस्मिन्नन्तर आकाशः' इत्यत्रैव यच्छब्दाध्याहारः, दहरोऽस्मिन्नित्यादेरेकवाक्यता च पक्षद्वयेप्यविशिष्टैव पुंल्लिङ्गयच्छब्दाध्याहारानध्याहाराभ्यामेव वैषम्यमित्यप्याहुः। अत्र पक्षद्वयेऽपि चशब्दाध्याहारस्समानो द्रष्टव्यः। भाष्ये—यच्च तदन्तर्वर्तिगुणजातम्—इत्यत्रान्तर्वर्तीत्येतच्छ्रुतिगतान्तश्शब्दव्याख्यानमिति, दर्शयति

दहराकाशशब्दनिर्दिष्टस्य परब्रह्मत्वं 'तदस्मिन् यदन्तः' इति निर्दिष्टस्य च तद्गुणत्वम् तच्छब्देनोभयं परामृश्योभयस्याप्यन्वेष्टव्यतया विधानं च कथमवगम्यत इति चेत्, तदवहितमनाः शृणु "यावान्वा अयमाकाश-

---

* श्रुतप्रकाशिका *

स्तदन्तर्वर्ति च यत्तदुभयमन्वेष्टव्यमितिवाक्यस्यार्थ इत्यर्थः। "त्यदादीनि सर्वैर्नित्यम्" इति पुँल्लिङ्गनपुंसकलिङ्गयोर्यच्छब्दयोरेकशेषः। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति नपुंसकान्तत्वमेकवचनान्तत्वं च, तस्मादाकाशतदन्तर्गतान्वेष्टव्यगुणपरं पुन्नपुंसकान्तयच्छब्दद्वयार्थविषयं तदितिपदमित्यभिप्रायः। एवं 'तदन्वेष्टव्य'मिति तत्पदेनैवात्मनोऽप्युक्तत्वादन्वेष्टव्यतया प्राधान्यावगतिरन्वेष्टव्यस्यात्मत्वप्रसिद्धिश्चोपपन्ने इति चोद्यपरिहारसिद्धिः। (दहराकाशेति) विवक्षितार्थस्य प्रामाणिकत्वे सिद्धे हि क्लिष्टनिर्वाहाश्रय उपपद्यते, तस्मात् दहराकाशस्य परब्रह्मत्वे तदन्तर्वर्तिनो गुणजातत्वे तयोरन्वेष्टव्यत्वे च प्रमाणं वक्तव्यमित्यर्थः। प्रतिवक्ति (तदवहितेत्यादिना) "तदन्वेष्टव्यम्' 'यावान्वा अयमाकाश इति वाक्ययोर्मध्ये 'किं तदत्र विद्यते' इति वाक्यं श्रूयते. परमात्मनोऽन्त-

* भावप्रकाशिका *

( श्रुतिवाक्य इति ) नन्वाकाशतदन्तर्वर्तिनोर्द्वयोः कथमेकेन शब्देन परामर्शसम्भव इत्यत आह ( त्यदादीनि सर्वैरिति ) ननु त्यदादीनीत्येकशेषे सति कथमेकवचनम्? नच 'एकवच्चान्यतरस्याम्' इत्येकवचनमिति वाच्यम्। 'नपुंसकमनपुंसकेन' इतिसूत्रस्थखण्डकृतैकशेषस्यैवास्येति सौत्रपदेन परामृष्टतया सूत्रान्तरकृतैकशेषस्यातथात्वादिति चेत्. 'व्यत्ययो बहुलम्' इति वा 'सुपां सुलुक्' इति वा यदिति रूपसम्भवात्। यद्वा 'कर्मणो रोमन्थतपोभ्याम्' इतिवत्प्रत्येकमेकस्वाभिप्रायेणैकवद्भावस्य द्विगुरेकवचनमितिवल्लिङ्गसामान्यविवक्षया नपुंसकत्वस्याप्युपपत्तेः। अत्रैव 'गतिशब्दाभ्यां तथा हि दृष्टम्' इति सूत्रे पुल्लिङ्गद्विवचनान्तगतिशब्दविशेषणस्य नपुंसकलिङ्गैकवचनान्तस्य दृष्टमित्यस्योक्तेनैव प्रकारेण निर्वाह्यत्वाच्च। एवमानेकस्वारस्यं यच्छब्दविषयेत्यादिनिवर्तकसूत्रस्याप्रवृत्तिं च हृदि निधाय पक्षान्तरमाह ( नपुंसकमनपुंसकेनेति ) अत्र च वाशब्दोऽपे-

स्तावानेषोऽन्तर्हृदय आकाशः" इति दहराकाशस्याति-
महत्तामभिधाय "उभे अस्मिन् द्यावापृथिवी अन्तरेव
समाहिते । उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ ।

* श्रुतप्रकाशिका *

र्वर्तिनः कस्यचिदसम्भवात् किं तदत्र विद्यते इति वाक्यमाक्षेपपरमित्याहुः परे । प्रश्नपरमिदं वाक्यमित्युचितम् । बुभुत्साख्यापनमात्रं प्रश्नः । अनुपपत्त्युद्घाटनेनार्थाक्षेपपूर्वकं परिहारबुभुत्साख्यापनं चोद्यम्. अबुभुत्सितपरिहारेण वक्त्रा प्रतिषेधः प्रतिक्षेपः, 'कुतस्तु खलु सोम्य' इतिवत् । न प्रतिक्षेपपरमिदम्, परिहारस्य वक्ष्यमाणत्वात् । न केवलः प्रश्नः, अनुपपत्तेर्विद्यमानत्वात् । सर्वान्तरस्य परमात्मनो ह्यन्तरभूतं तत्त्वान्तरमसम्भावितम् । अनुपपत्त्युद्घाटनमुखेनाक्षेपस्य कण्ठोक्त्यभावान्न केवलं चोद्यमित्यप्युचितम्, अतो विनयं प्रकाशयता शिष्येणानुपपत्तिमभिप्रेत्य तामस्फुटं ब्रुवता बुभुत्साख्यापनं क्रियत इति प्रश्नवाक्यतुल्यं फलतश्चोद्यपरमिदं वाक्यम् । तच्छब्दनिर्दिष्टयोराकाशतदन्तर्वर्तिनोरन्तर्वर्तिविशेषानवगमादुक्तानुपपत्तिगर्भस्तदन्तर्वर्त्यंशविषयः प्रश्नः किं तदत्रेति । स ब्रूयात्— आचार्यो ब्रूयादित्यर्थः । प्राकरणिकानामिदमेतच्छब्दानामाकाशपरामर्शपरत्वार्थं तस्याव्यवहितत्वज्ञापनार्थं शब्दतोऽर्थतश्चाकाशस्य प्राधान्यज्ञापनार्थं च यावान्वा अयमित्यादि प्रदर्श्यते, इदं वाक्यं

* भावप्रकाशिका *

क्षितोऽध्याहर्तव्यः । ( सर्वान्तरस्य परमात्मन इति ) सूक्ष्मपुण्डरीकवर्तिनि सूक्ष्मे आकाशे किं विद्येतेत्यनुपपत्तिरित्यर्थः । अत्र परमात्मन इत्येतद्वस्तुतस्सिद्धान्तन्यायेन तस्य परमात्मत्वमस्तीत्यभिप्रायेणोक्तम्, ननु परमात्मत्वमाक्षेपबीजम् । 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तर आकाशः' इत्येतावन्मात्रं श्रुतवतां शिष्याणां परमात्मत्वविरोधिन्याकाशशब्दे जाग्रत्के दहरत्वान्वेष्टव्यत्वान्तराधारत्वादिविरोधिलिङ्गे च जाग्रति ब्रह्मलिङ्गेषु चानुपन्यस्तेषु परमात्मत्वनिश्चयस्य वा तदुपजीव्याक्षेपप्रवृत्तेर्वा असम्भवादिति द्रष्टव्यम् । ( आकाशतदन्तर्वर्तिनोरिति ) निर्द्धारणे षष्ठी, आकाशस्य ज्ञातत्वादित्यर्थः । ( प्राधान्यज्ञापनार्थं चेति ) भाष्यकृतेतिशेषः , ननु श्रुत्येति । ततश्च प्राकरणिकानामिदमेतच्छब्दानामाकाशपरामर्शित्वप्रभृतेस्सर्वस्यापि 'उभे अस्मिन्नाकाशे द्यावापृथिवी अन्त-

विद्युन्नक्षत्राणि" इति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय "यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्त्समाहितम्" इति पुनरप्यस्मिन्निति तमेव दहराकाशं परामृश्य तस्मिन्नस्योपासकस्येह लोके यद्भोग्यजातमस्ति यच्च मनोरथमात्रगोचरमिह नास्ति सर्वं तद्भोग्यजातमस्मिन् दहराकाशे समाहितमिति निरतिशयभोग्यत्वं दहराकाश-

* श्रुतप्रकाशिका *

दहराकाशस्याल्पत्वनिवृत्तिपरमित्यभिप्रायेणातिमहत्तामित्युक्तम् । ( प्रकृतमेवेति ) अन्तर्वर्त्यन्वेष्टव्यम् आकाशशब्दव्यवहितत्वान्नेदं शब्दविषय इति भावः । दहराकाशस्यानुगत्यविच्छेदं दर्शयति ( तमेवेति ) अस्येति व्याख्येयम् , उपासकस्येति व्याख्यानम् । इदंशब्दः षष्ठयन्तो बुद्धिस्थपर इत्यर्थः । अन्वेषणविजिज्ञासयोः कर्तृत्वेन उपासको हि बुद्धिस्थः । अस्येहास्ति नास्तीति अस्तित्वनास्तित्वयोः सप्रतियोगिकत्वावगमानन्तरं चोदयितुरनुभाषणवाक्ये 'सर्वे च कामाः' इत्यनुभाषणाद्यच्छब्दो भोग्यजातपर इत्यभिप्रायः । फलितमर्थमाह ( निरतिशयभोग्यत्वमिति ) यथा समुद्रे गोष्पदपल्वलादीनामन्तर्भाववचनात् समुद्रस्यानवधिकजलौघत्वं

* भावप्रकाशिका *

रेव समाहिते' इत्येकाकाशपदप्रक्षेपेणैव सिद्धिसम्भवात् 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः' इत्येतावतस्सन्दर्भस्य वैयर्थ्यमिति दूषणं नावकाशं लभत इति द्रष्टव्यम् । ( आकाशशब्दव्यवहितत्वादिति ) यावान्वा अयमाकाश इत्याकाशशब्दस्य व्यवहितत्वादित्यर्थः । ( अस्तित्वनास्तित्वयोस्सप्रतियोगित्वावगमादिति ) कस्यास्तित्वं कस्य नास्तित्वमित्यपेक्षायामित्यर्थः । किमस्ति किं नास्तीत्यपेक्षायां चोदयितुरनुभाषणवाक्ये सर्वेपि कामा इत्यनुभाषणात् यच्छब्दो भोग्यजातपर इति निर्णीयत इति भावः । ( चोदयितुरिति ) यद्यपि तं चेद्ब्रूयुरिति चोदयितॄणां बहुत्वमवगम्यते तथापि तदविवक्षयैवैकवचनं प्रयुक्तमिति द्रष्टव्यम् । ( अनुभाषणवाक्य इति ) 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं

* श्रुतप्रकाशिका *

सिद्ध्यति, एवं 'सर्वं तदस्मिन् समाहित'मित्यनेन निरतिशयभोग्यत्वसिद्धिरित्यर्थः । ननु कथमस्य वाक्यस्यामुख्यार्थत्वमाश्रीयते ? जीवभोग्यवस्तूनामाधारत्वमुक्तं किं न स्यात् ? उच्यते; अस्येतिपदं तावन्न ब्रह्मपरम्, यच्चास्य नास्ति सर्वमस्मिन् समाहितमिति व्याघातात् । न च जीवमात्रपरम्, जीवविशेषस्योपासकस्य बुद्धिस्थत्वात् । उपासकस्य स्वर्गपश्वादिकं न भोग्यमिति तदाधारत्वकथनमनुपपन्नम्, तस्य च ब्रह्मैव प्राप्यं तस्यापरिच्छिन्नत्वमितरफलान्तवत्त्वं चेहैवानन्तरमुच्यते, अतो निरतिशयभोग्यतापरत्वम्; अन्वेष्टव्यतोपयुक्तत्वाच्च निरतिशयभोग्यतापरत्वं युक्तम् । नन्वानन्दत्वस्य स्वरूपनिरूपकधर्मतया सर्वविद्यानुयायित्वादर्थसिद्धमिति निरतिशयभोग्यत्वं न पृथग्वाच्यम् । नैवम्; स्वरूपनिरूपकस्य सत्यत्वस्यात्र पृथगुक्तत्वात् अपेक्षितेष्वर्थेषु अनुक्तस्य ह्यन्यतो ग्राह्यत्वम्, न तूक्तपरित्यागेनान्यतो ग्राह्यत्वं युक्तम्, अतो यथोक्त एवार्थः । "अथ तं चेद्ब्रूयु'रित्यादिचोद्यपरिहारवाक्यानामर्थं इति

* भावप्रकाशिका *

सर्वाणि च भूतानि सर्वे कामाः' इत्यनुभाषणवाक्य इत्यर्थः । ( निरतिशयभोग्यतापरत्वं युक्तमिति ) ननु 'ये चास्येह जीवा ये च प्रेताः यच्चान्यदिच्छन् न लभते सर्वं तदत्र गत्वा विन्दते, अत्र ह्यस्यैते सत्याः कामास्स यदि पितृलोककामो भवति' इत्याद्युत्तरसन्दर्भप्रतिपाद्यस्वसङ्कल्पमात्रसमुत्थितप्राचीनानन्तजन्मसम्बन्धिदिदृक्षितपितृमातृभ्रातृस्वसृसखिगन्धमाल्यान्नपाननृत्तगीतादिसम्पत्तेस्तात्त्विकत्वाभ्युपगमात् 'सङ्कल्पादेव तच्छ्रुतेः' इत्यत्र तस्य तात्त्विकत्वमभ्युपगम्य सङ्कल्पमात्रसमुत्थितत्वप्रतिपादनाच्च यथाश्रुतार्थं विहाय निरतिशयभोग्यतामात्रे तात्पर्यमिति कुतोऽङ्गीकार्यमिति चेत्. सत्यम्; भोग्याधारत्वमेव प्रतिपाद्यते, अथापि उपपिपादयिषिते ब्रह्मणोऽन्वेष्टव्यत्वे तदाश्रितपित्रादीनां भोग्यत्वप्रतिपादनस्यात्यन्तानुपयुक्तत्वात् । यच्चास्येहास्तीत्यादिवाक्यमपि पित्रादिसर्वभोग्याधारत्वप्रतिपादनमुखेन ब्रह्मणो निरतिशयभोग्यत्वप्रतिपादनपरमिति पित्रादिभोग्याधारत्वे तात्पर्यसत्त्वेपि ब्रह्मणो निरतिशयभोग्यत्वे परमतात्पर्यमिति भाष्याभिप्राय इत्यत्रैवाचार्याणां संरम्भ इति न काचिदनुपपत्तिः । ( निरतिशयभोग्यत्वं न पृथग्वाच्यमिति ) न चानन्दत्वमात्रस्य स्वरूपनिरूपकत्वेपि निरतिशयानन्दत्वं न स्वरूपनिरूपकमिति वाच्यम्; निरुपाधिकत्वादेव निरतिशयभोग्यत्वस्यापि सिद्धेरित्यत्र तात्पर्यात् । ( अथ तं चेद्ब्रू-

स्याभिधाय तस्य दहराकाशस्य देहावयवभूतहृदया-न्तर्वर्त्तित्वेऽपि देहस्य जराप्रध्वंसादौ सत्यपि परम-

* श्रुतप्रकाशिका *

निधायाह ( तस्य दहराकाशस्येति ) अस्मिंश्च यदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि भूतानि सर्वे च कामाः यदैनं जराऽवाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यते' इति चोद्यम्, किं तदत्र विद्यत इति प्रश्नस्य प्रतिवचनम् अस्मिन् कामाः समाहिता इति वक्ष्यते। मध्ये चोद्यान्तरमिदमुत्थितम्, शरीरान्तर्वर्तिनि दहराकाशे सर्वं द्यावापृथिव्यादिकं स्थितं चेद्देहप्रध्वंसे तदन्तर्गतस्याकाशस्यापि हृत्पुण्डरीकस्येव प्रध्वंससम्भवात् तस्य द्यावापृथिव्याद्याश्रयत्वमनुपपन्नम्, देहप्रध्वंसेऽपि द्यावापृथिव्याद्यवस्थानात्, अस्थिरत्वादेव निरतिशयभोग्यत्वं च अनुपपन्नमिति, एवं चोद्योत्थानबीजं सूचयति ( देहावयवभूतहृदयान्तर्वर्तित्वेऽपीति ) 'यदैनं जराऽवाप्नोति' इत्येतच्छब्दः पूर्वप्रकृतं व्यवहितमपि ब्रह्मपुराख्यं शरीरं परामृशति,

७ भावप्रकाशिका ७

रित्यादिचोद्यपरिहारवाक्यानामिति ) अत्राथेत्येतन्न श्रुतिवाक्यम्, अपि तु ग्रन्थकारवाक्यमिति द्रष्टव्यम्। ननु किं तदत्र विद्यत इति प्रश्नप्रतिवचनसमाप्तेः प्रागेव कथमस्य चोद्यस्यावकाश इत्यत आह ( किं तदत्र विद्यत इति प्रश्नस्य प्रतिवचनमित्यादिना ) द्यावापृथिव्याद्यवस्थानादिति पूर्वेणान्वयः। ततश्च दहराकाशनाशेपि अवतिष्ठमानानां द्यावापृथिव्यादीनां दहराकाशाश्रयत्वं न सम्भवतीति भावः। ( व्यवहितमपि ब्रह्मपुराख्यमिति ) नन्वस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः यदेनञ्जरावाप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यते' इति हि श्रुतिवाक्यम्. नात्र वाक्ये दहराकाशनिर्देशोऽस्ति, अतः कथं दहराकाशापेक्षया ब्रह्मपुरशब्दितशरीरस्य व्यवहितत्वमभ्युपगम्याक्षेपसमाधानयोः प्रवृत्तिरितिचेत् अस्मिंश्चेदिदं समाहितमिति सर्वशब्देन दहराकाशस्यापि क्रोडीकारसम्भवात्। नच दहराकाशस्यापि सर्वशब्देन परामर्शे सर्वशब्देन भोग्यभोगोपकरणादि प्रतिपाद्यत इत्युत्तरग्रन्थविरोधः। तस्य दहराकाशोपलक्षणत्वेनादोषात्; अत आकाशशब्दस्य ब्रह्मपुरापेक्षया अव्यवहितत्वमस्तीति ग्रन्थकृदाशयः। यद्वा 'अस्मिंश्चेदिदं ब्रह्मपुरे' इति सन्निहितब्रह्मपुर-

* श्रुतप्रकाशिका *

जरादिस्पर्शाभिधानात् । न तु तदन्तर्वर्तिपरामर्शी, तस्य सत्यत्वस्य वक्ष्यमाणत्वादित्यभिप्रायेण देहावयवेत्युक्तम्। चोद्यपरे श्रुतिवाक्ये 'सर्वं समाहित'मिति द्यावापृथिव्याद्युपलक्षितभोग्यभोगोपकरणभोगस्थानाधारत्वमनूदितम्, सर्वाणि भूतानीति सूर्याचन्द्रमोनक्षत्रोपलक्षितभोक्तृवर्गाधारत्वमनूदितम्, सर्वे च कामा इति निरतिशयभोग्यत्वमनूदितम्, पुरोवादिवाक्यानुगुणत्वादनुवादिवाक्यस्य। ननु सर्वशब्दसङ्कोचेन जीवभोग्याधारपरमिदं वाक्यम्, मुख्यत्वोपपत्तेरिति। नैवम्; अमुख्यत्वं सोढव्यम्, प्रथमश्रुतसर्वशब्दसङ्कोचस्यायुक्तत्वात् पुरोवादानुरूप्यसिद्धेरुपासकफलस्य निरतिशयतया वक्ष्यमाणत्वानुगुणत्वाच्च। न च गुणाष्टकविषयोऽयं चोद्य-

* भावप्रकाशिका *

शब्दस्य तस्य दहराकाशलक्षकत्वमभिप्रेत्यैतदुक्तमिति द्रष्टव्यम्। नचास्मिन् पक्षे अव्यवहितब्रह्मपुरशब्देन शरीरस्याप्रकृततया न प्रकृतं शरीरमित्यभिप्रायः इत्युत्तरग्रन्थविरोध इति वाच्यम्; लक्ष्योपस्थितिद्वारतया मुख्यार्थस्यापि प्रकृतत्वादिति भावः। (सत्यत्वस्य वक्ष्यमाणत्वादिति) यद्यपि सत्यत्वस्य वक्ष्यमाणत्वं न प्राक्तनमाक्षेपं प्रतिबध्नाति, तथाप्यभ्युच्चयोक्तितयोपन्यस्तमिति द्रष्टव्यम्। (ननु सर्वशब्दसङ्कोचेनेति) 'यथा सर्वेभ्यः कामेभ्यो ज्योतिष्टोमस्सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यत्र सर्वत्वमाधिकारिकमिति अर्थवादाधिकरणसूत्रोक्तन्यायेन सर्वेभ्यः कामेभ्य इत्यस्य वेदप्रतिपाद्यप्रकृतपशुपुत्रवृष्ट्यन्नपानादिपरत्वमेव, न त्वप्रकृताकाशगाम्यमरकन्यालाभादिपरत्वमपि सर्वनाम्ना प्रकृतिपरामर्शित्वस्वारस्यात्; तथात्रापि सर्वकामशब्दस्य 'स यदि पितृलोककामो भवती'त्यादिना वर्णयिष्यमाणपितृमातृगन्धमाल्यनृत्तगीतवनितादिपरामर्शित्वमेवोचितम्, न तु सर्वविधभोग्यतापरत्वम्, कामशब्दस्य भोग्यतापरत्वे अस्वारस्यादिति शङ्काभिप्रायः। (प्रथमश्रुतेति) नच प्रथमश्रुतस्य सङ्कोचप्रसङ्गेन चरमश्रुतकामशब्दस्यामुख्यार्थपरिग्रहे सर्वे ब्राह्मणास्समागता इत्यत्र प्रथमश्रुतसर्वशब्दासङ्कोचाय ब्राह्मणशब्दस्य शूद्रपरत्वमपि स्यादिति वाच्यम्; ब्राह्मणशब्दवत्कामशब्दस्य जीवभोग्यगन्धमाल्यादिमात्रे रूढत्वाभावात्. इयांस्तु विशेषः,— यज्जीवभोग्यगन्धमाल्यादिषु कामशब्दस्यात्यन्तप्रसिद्धिः भोग्यतायां तु प्रसिद्धिमात्रं नात्यन्तप्रसिद्धिरिति; अतो न कश्चिद्दोषः। (वक्ष्यमाणत्वानुगुणत्वाच्चेति) सर्वेषु लोकेषु कामचारो

कारणतया अतिसूक्ष्मत्वेन निर्विकारत्वमुक्त्वा "तत एवैतत्सत्यं ब्रह्मपुरम्" इति तमेव दहराकाशं सत्यभूतं ब्रह्माख्यं पुरं निखिलजगदावासभूत-

* श्रुतप्रकाशिका *

वाक्यस्थः कामशब्दः, अस्मिन् कामा इति तस्य वक्ष्यमाणस्य पूर्वमुक्तत्वायोगात् उक्तानुभाषणरूपत्वाच्चास्य वाक्यस्य, अतः सर्वे च कामा इति निरतिशयभोग्यत्वानुवादः । 'न जीर्यति न हन्यते, इत्यनेन प्रतिवचनवाक्येनार्थसिद्धमाकारमाह (परमकारणतयाऽतिसूक्ष्मत्वेनेति) कार्याद्वाय्वादेः कारणमाकाशादिकं हि सूक्ष्मम्, तत एव वाय्वादिविकारेऽप्याकाशस्य न तादृशविकारसम्भव इति तत्तत्कारणतत्त्वान्तरात्मनो निरतिशयसूक्ष्मत्वान्निर्विकारत्वमिति भावः । (तत एवेति) श्रुतिवाक्यस्थसत्यशब्दस्य निर्विकारत्वमर्थ इति भावः । षष्ठीतत्पुरुषव्यावृत्त्यर्थमाह (ब्रह्माख्यमिति) सत्यशब्दसामानाधिकरण्यान्न प्राकृतशरीरमि-

ঌ भावप्रकाशिका ঌ

भवतीत्युपासनफलस्य यन्निरतिशयत्वं वक्ष्यति तस्यानुगुणत्वाच्चेत्यर्थः । (अर्थसिद्धमाकारमाहेति) ननु 'एतत्सत्यं ब्रह्मपुर'मितिवाक्यश्रवणात्प्रागेव नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' इत्येतावन्मात्रश्रवणात्परमकारणतयातिसूक्ष्मत्वं कथमर्थसिद्धं स्यादिति चेत्. अत्र केचित्— भाष्ये एतत्सत्यं ब्रह्मेत्यन्तस्य श्रुतिवाक्यस्य निर्विकारत्वमुक्त्वेत्यन्तेन भाष्येण व्याख्यानम्, तत एवेत्युत्तरसन्दर्भेण तु श्रुतिवाक्यस्थपुरशब्दस्यैव व्याख्यानम्, एवञ्च ब्रह्मशब्देन तल्लक्षणीभूतजगज्जन्मादिहेतुत्वस्य सूचनसम्भवात्, सत्यशब्देन निर्विकारत्वस्य कण्ठोक्तत्वाच्च नानुपपत्तिः। इतरथा 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' इत्यनेनैव निर्विकारत्वसिद्धौ पुनरप्येतत्सत्यमिति सत्यशब्देन निर्विकारत्वप्रतिपादनं विफलमेव स्यात्। किञ्च अत एवेतिभाष्ये निर्विकारत्वस्यैव सत्यशब्दार्थीभूतान्निर्विकारहेतुत्वेन परामर्शात्साध्याविशेषश्च दुर्वारः । न च सत्यशब्दस्य निर्विकारत्वबलप्राप्तसततैकरूपत्वमर्थः, अतो न सत्यशब्दवैफल्यम्. नवा साध्याविशेष इति शङ्क्यम्. श्रुतिवाक्यस्थसत्यशब्दस्य निर्विकारत्वमर्थ इति भाव इत्युत्तरग्रन्थविरोधात्; तस्मादुक्तैव सरणिरनुसरणीयेति वदन्ति । (सत्यशब्दसामानाधिकरण्यादिति) ततश्च

मित्युपपाद्य 'अस्मिन्कामास्समाहिताः' इति दहरा-
काशमस्मिन्निति निर्दिश्य काम्यभूतांश्च गुणान्

* श्रुतप्रकाशिका *

त्यभिप्रायः । पुरशब्दविषयत्वहेतुं गुणमाह (निखिलजगदिति) 'सत्यं ब्रह्म-
पुर'मित्यन्तमवान्तरचोद्यपरिहारपरम्, अस्मिन् कामा इति तु प्रथमचोद्यप्रतिवच-
नम्। (दहराकाशमस्मिन्निति निर्दिश्येति) अव्यवहितैतत्सत्यं ब्रह्मपुरमित्या-

ध भावप्रकाशिका ध

यदिदं ब्रह्मपुरमित्याद्यभ्यस्तब्रह्मपुरशब्दार्थवैरूप्यमपि सोढव्यमिति भावः ।
(अस्मिन् कामा इति तु प्रथमचोद्यप्रतिवचनमिति) अत्र केचित्— 'यच्चास्येहास्ति
यच्च नास्ति' इत्येव किं तदत्र विद्यत इति प्रश्नस्य प्रतिवचनम्. तदेवास्मिंश्चेदिदं
ब्रह्मपुरे सर्वं समाहितं सर्वाणि भूतानि सर्वे च कामा इत्यनुभाषणवाक्ये काम-
शब्देनानूद्यते, तदेव च 'एतत्सत्यं ब्रह्मपुरम् अस्मिन् कामास्समाहिताः य इहात्मान-
मनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्, त इमे सत्याः कामाः' इति कामशब्दे-
नापि परामृश्यते, कामशब्दानां प्रत्यभिज्ञायमानत्वाच्च. अपहतपाप्मत्वादीनामन्य-
विशेषणतया प्रतीयमानानामेतांश्च सत्यान् कामानित्येतच्छब्देन परामर्शस्य क्लिष्ट-
त्वाच्चेति. तदयुक्तम्; कामशब्दप्रत्यभिज्ञामात्रेणैक्याभ्युपगमे ब्रह्मपुरशब्दप्रत्यभिज्ञा-
बलेन अथ यदिदमस्मिन् ब्रह्मपुरे एतत्सत्यं ब्रह्मपुरमित्यनयोरप्यैक्यापत्त्या सारूप्य-
मात्रस्याप्रयोजकत्वात्. अन्यविशेषणतया प्रतीतानामपहतपाप्मत्वादीनामेतांश्च
सत्यान् कामानिति एतच्छब्देन परामर्शो न सम्भवतीत्यप्ययुक्तम्. अस्मिन्
कामास्समाहिता इति प्राधान्येन निर्दिष्टानामेव एतांश्च सत्यान् कामानिति
परामर्शसम्भवात्. नच अस्मिन् कामास्समाहिता इत्यत्रापि सर्वे च कामा इत्यनुभा-
षणवाक्यप्रत्यभिज्ञानात् द्यावापृथिव्यादय एवोच्यन्ते, न त्वपहतपाप्मत्वादय इति
शङ्क्यम्. तथात्वे अपहतपाप्मेत्यादिसन्दर्भस्य वैयर्थ्यप्रसङ्गात्, तत्र हि अपहतपाप्म-
त्वादिमत्त्वात् कामसमाधानाधारत्वं सम्भवतीत्युक्तिभङ्ग्या अपहतपाप्मत्वादिषु
कामशब्दार्थसमर्पणपरत्व एव सार्थक्यम्. इतरथा स्वरूपनिर्देशमात्रस्यानति-
प्रयोजनत्वादिति न कश्चिद्दोषः। (अव्यवहितैतत्सत्यमिति) अत्र एतत्सत्यं ब्रह्म-
पुरमित्येतावतोऽप्यनुकरणशब्दतया सुब्लोपाभावः। अवयवशक्त्येत्यर्थ इतिभाष्ये

कामा इति निर्दिश्य तेषां दहराकाशान्तर्वर्तित्वमुक्त्वा तदेव दहराकाशस्य काम्यभूतकल्याणगुणविशिष्टत्वं तस्यात्मत्वं च 'एष आत्माऽपहतपाप्मा' इत्यादिना 'सत्यसङ्कल्पः' इत्यन्तेन स्फुटीकृत्य 'यथा ह्येवेह प्रजा

* श्रुतप्रकाशिका *

दिशब्दोपस्थापितत्वादस्येति भावः । गुणानां कामशब्दवाच्यत्वमुपपादयति (काम्यभूतानिति) अवयवशक्त्येत्यर्थः । समाहिता इतिपदस्यार्थमाह (दहराकाशान्तर्वर्तित्वमिति) एवं दहराकाशस्य कामवैशिष्ट्यमुक्तम् । (तदेवेति) को दहराकाशः ? स च कैः कामैर्विशिष्टः ? इत्यपेक्षायाम् 'एष आत्मा' इति वाक्यं गुणविशेषविशिष्टधर्मिविशेषप्रतिपादकमित्यर्थः । अपहतपाप्मेत्यादिवाक्ये सत्यकामशब्दो न कामनायास्सत्यत्वपरः, अमोघात्वस्य सत्यसङ्कल्पशब्देनापि सिद्धत्वात् । नापि भोगानां सत्यत्वपरः, इच्छाविशेषवाचकतया व्युत्पन्नस्य कामशब्दस्य भोगवाचित्वाभावात् । नापि काम्यन्त इति व्युत्पत्त्या गुणमात्रपरः, कतिपयगुणान्तराणां पृथगुक्तत्वात् असङ्कुचितावयवार्थसम्भवे गोबलीवर्दन्यायेनानुक्तगुणविषयतया सङ्कोचायोगाच्च, अतो भोग्यभोगोपकरणभोगस्थानरूपा नित्याः काम्या अस्य सन्तीत्युच्यते 'तदक्षरे परमे व्योमन्' इत्युक्तनित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थः । (स्फुटीकृत्येति) आकाङ्क्षितगुणगुणिविशेषप्रदर्शनं स्फुटीकारः । गुणगुणिनोरुभयोरप्युपास्यत्वं फलवाक्ये दर्शयिष्यन्मध्यगतवाक्यानामर्थं वदति (यथा ह्येवेति) 'यथा ह्येवेह प्रजा अन्वाविशन्ति यथाऽनुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति तद्यथेह कर्मचितो

* भावप्रकाशिका *

अवयवशक्त्या निर्दिश्येत्येवं शेषः पूरणीय इति भावः । (सत्यसङ्कल्पशब्देनापि सिद्धत्वादिति) न च कामस्सङ्कल्पो विचिकित्सा इत्यादाविव कामसङ्कल्पयोर्भेदनिर्देशस्य सार्थक्यमिति वाच्यम्; तथापि फलत एकत्वेनानतिप्रयोजनत्वात् । (कतिपयगुणान्तराणां पृथगुक्तत्वादिति) यद्यपि पृथगुक्तेष्वेव गुणेषु निर्विशेषब्रह्मवादनिराकरणाय सत्यत्वं प्रतिपाद्यत इति वैयर्थ्यम्, अथापि मार्गान्तरस्य मार्गान्तराद्दृढत्वादित्यत्र तात्पर्यम् । (नित्यविभूतिविशिष्टत्वं सत्यकामशब्दार्थ

अन्वाविशन्ति' इत्यारभ्य 'तेषां सर्वेषु लोकेष्व- कामचारो भवति' इत्यन्तेन तदिदं गुणाष्टकं तद्वि- शिष्टं दहराकाशशब्दनिर्दिष्टमात्मानं चाविदुषामेत- द्व्यतिरिक्तभोग्यसिद्धये च कर्म कुर्वतामन्तवत्फलावाप्ति-

* श्रुतप्रकाशिका *

लोकः" इत्यादि, प्रथमस्य यथाशब्दस्य तथोपजीवन्तीत्यन्वयः । इह लोके प्रजाः यथाऽनुशासनम् राजशासनं यथा तथा अन्वाविशन्ति लभन्ते । किमित्यत्राह— यं यमन्तमिति । अन्तः फलम्। साधनानुष्ठानावसानभावित्वात् । यं यमन्तम्—फलं क्षेत्रजनपदादिकं प्रति, अभिकामाः अभ्यर्थिनो भवन्ति तत्तत्फलं तथोपजीवन्तीति लौकिकराजसेवादिप्रवृत्त्या लौकिकफलभोगावुक्तौ । तस्य क्षयित्वमाह— तद्यथेह कर्मचितो लोक इति । अलौकिकफलस्यापि तद्वत्क्षयित्वमाह— एवमेवामुत्रेति । दहराकाशतद्गुणानुपासकानामन्तवत्फलभाक्त्वमाह— तद्य इहात्मानमननुविद्ये- त्यादिवाक्येन । अननुविद्य अनुपास्य। व्रजन्ति परलोकमिति शेषः। भाष्ये ( कर्म कुर्वतामिति ) तद्यथेह कर्मचित इत्यादिश्रुत्यर्थोऽभिप्रेतः । अकामचारशब्दार्थ-

* भावप्रकाशिका *

इति ) सत्यशब्दस्य नित्यत्वमर्थः, कामशब्दस्य कामनाविषयीभूतभोग्यभोगोपक- रणादिकमर्थ इति भावः । ननु प्रजापतिवाक्यगतसत्यकामशब्दस्यापि नित्यवि- भूतिमत्त्वमर्थस्स्यादिति चेत्. इष्टापत्तेः , मुक्तस्याप्यप्राकृतविग्रहादिमत्त्वेन तत्स्वा- मित्वसम्भवात् ( प्रथमस्य यथाशब्दस्येति ) अयमिहान्वयक्रमः,—इह प्रजा यं यमन्तं जनपदं क्षेत्रभागमभिकामा भवन्ति तं तं यथा राजशासनं राजशासनानु- सारेण, यथान्वाविशन्ति लभन्ते, तथा तं तमेवोपजीवन्ति भुञ्जत इति, यथा राज- सेवाफलस्य राजशासनानुवर्तित्वम् एवं तत्फलभोगस्यापीत्युक्तं भवति । ( राज- शासनं यथेति ) यद्यपि यथानुशासनमित्यत्र यथाशब्दस्य पदार्थानतिवृत्त्यर्थक- तया तस्य च नित्यसमासत्वेन स्वपदविग्रहो न भवति । तथाशब्दप्रतिनिर्देशापे- क्षापि नास्ति, नहि यथाविधि करोतीत्यादौ तथाशब्दाकाङ्क्षास्ति, तथापि सादृश्या- र्थकयथाशब्दमादाय फलतस्समासार्थकथनम्. अत एव तथाशब्दप्रयोगोपपत्ति- श्चेति द्रष्टव्यम् । श्रुतिगतत्वभ्रान्तिं व्युदस्यति ( भाष्य इति ) ( ननु सत्यकाम-

मसत्यसङ्कल्पत्वं चाभिधाय "अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति' इत्यादिना दहराकाशशब्दनिर्दिष्टमात्मानं तदन्तर्वर्तिनश्च काम्यभूतानपहतपाप्मत्वादिकान् गुणान् विजानतामुदारगुणसागरस्य तस्य परमपुरुषस्य प्रसादादेव सर्वकामावाप्तिस्सत्यसङ्कल्पता चोच्यते; अतो दहराकाशः परं ब्रह्म, तदन्तर्वर्ति चापहतपाप्मत्वादि

* श्रुतप्रकाशिका *

माह ( असत्यसङ्कल्पत्वञ्चेति ) अनाविर्भूतगुणाष्टकत्वं विवक्षितम् । ( अथ य इहात्मानमनुविद्येति ) अत्रात्मानमेतांश्च सत्यान् कामानिति दहराकाशतदन्तर्वर्तिशब्दार्थानुवादः, कामचारो भवतीति सत्यसङ्कल्पत्वपर्यन्तगुणाष्टकाविर्भावो विवक्षितः। एतांश्च सत्यान्कामानितिवाक्ये कामशब्दोऽपहतपाप्मत्वादिगुणाष्टकपरः, न तु सत्यकामपदोक्तकामपरः, एतांश्चेत्येतच्छब्दस्य प्रकृतगुणविषयतया कामशब्दस्य काम्यन्त इत्यवयवशक्त्या वृत्त्युपपत्तेः, अस्मिन् कामाः समाहिता इति वाक्यस्थकामशब्दैकार्थ्याच्च । सत्यशब्दविशेषितत्वं प्राक्तननिर्विशेषकामशब्दार्थप्रत्यभिज्ञाविरोधि सत्यकामपदवाच्यप्रत्यभिज्ञापकं चेति चेन्न ; ततः पूर्वं श्रुतस्यैतच्छब्दस्य प्रकृतगुणपरामर्शक्षमतया पश्चाच्छ्रुतस्य सत्यशब्दस्य तदनुविधायित्वात्, त इमे सत्याः कामा इति प्रकृतानां कामानां सत्यशब्दविशेषितत्वाच्च ; अनेन श्रुत्यर्थोपन्यासेन पूर्वप्रस्तुतशङ्कायाः परिहृतत्वं दर्शयति ( अतो दहराकाश इति ) ननु उपक्रमानुगुणमुपसंहारो वर्णनीयः , तत्कथमुपसंहारानुगुणमुपक्रमार्थवर्णनमिति

७ भावप्रकाशिका ७

पदोक्तकामपर इति ) नित्यविभूतिपरो न भवतीत्यर्थः । ( प्रकृतगुणविषयतयेति ) अस्मिन् कामास्समाहिता इति प्रकृतसर्वगुणविषयतयेत्यर्थः । शङ्कते ( सत्यशब्दविशेषितत्वमिति ) ( ततः पूर्वमिति ) सत्यशब्दात्पूर्वमित्यर्थः । ( सत्यशब्दविशेषितत्वाच्चेति ) नचैवमाक्षिपतस्तदपि विप्रतिपन्नमिति वाच्यम् ; अपहतपाप्मत्वादीनामपि अनृतापिधानत्वप्रतिपादनस्यावश्यकतया तन्मात्रसङ्कोचे प्रमाणा-

काम्यगुणजातम् तदुभयमन्वेष्टव्यं विजिज्ञासितव्यमिति चोच्यत इति निश्चीयते । तदेतद्वाक्यकारोऽपि स्पष्टयति "तस्मिन्यदन्तरिति कामव्यपदेशः" इत्यादिना। अत एतेभ्यो हेतुभ्यो दहराकाशः परमेव ब्रह्म ॥

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १४ ॥

इतश्च दहराकाशः परं ब्रह्म "तद्यथा हिरण्यनिधिं नि-

* श्रुतप्रकाशिका *

चेन्न ; उपक्रमावगतस्य तदन्तर्वर्तिनोऽन्वेष्टव्यत्वस्य बाधाभावात् । उपसंहारावगतस्य आत्मनोऽप्यन्वेष्टव्यत्वस्य उपक्रमे विवक्षितत्वमात्रं युक्तम्, न तु उपक्रमावगतप्रहाणम् । ननु उपक्रमवाक्यमन्तर्वर्तिन एव अन्वेष्टव्यत्वपरं स्यात्, आत्मनोऽन्वेष्टव्यत्वं तु उपसंहारवाक्यादेव अवगतं स्यात् । किं क्लिष्टनिर्वाहेणेति चेन्न ; फलवाक्यगतोपासनानुवादस्य पुरोवादस्य चैकरूपताया अवश्याभ्युपगन्तव्यत्वात् । न ह्यप्राप्तं गुण्युपासनमनुवदितुं शक्यम्, न च "अथ य इहात्मान'मितिवाक्यं विशिष्टविधिपरम्, गुणांशस्य प्राप्तत्वात्, नापि गुणानुवादेन गुण्युपासनविधायकम्, उभयानुवादेन फलप्रतिपादनपरत्वात् ; अतोऽप्राप्तस्यानुवादायोगात् फलवाक्यानूदितस्य गुण्युपासनस्य गुणोपासनस्येव तदन्वेष्टव्यमितिवाक्येनैव विहितत्वमवश्याभ्युपगन्तव्यमिति दहराकाशगुणाष्टकयोरुभयोरप्युपासनं तदन्वेष्टव्यमिति विहितम्। अथान्तर्वर्तिनः कामत्वं सम्प्रदायतो दृढयति ( तदेतदिति ) सूत्रार्थमुपसंहरति ( अत एतेभ्य इति ) ॥ गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ अह-

छ भावप्रकाशिका छ

भावादिति भावः । ( एकरूपतया अवश्याभ्युपगन्तव्यत्वादिति ) ततश्च क्लिष्टनिर्वाह आश्रयणीय इति भावः । तस्मिन् यदन्तरितिवाक्ये क्लिष्टनिर्वाहमनभ्युपगच्छतः कोऽभिप्रायः ? किं य इहात्मानमित्युपसंहारवाक्ये गुणगुण्युपासनयोर्द्वयोरप्यनुवादः, उत विशिष्टविधानमाश्रित्य द्वयोरपि विधानम्, उत गुण्यंशे फलसम्बन्धविशिष्टोपासनविधिः, गुणांशे तु फलसम्बन्धमात्रविधिः ? इति त्रेधा विकल्पं हृदि निधाय क्रमेण दूषयति ( न ह्यप्राप्तं गुण्युपासनमित्यादिना ) भाष्ये—

हितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' इति । एतमिति प्रकृतं दहराकाशं निर्दिश्य तत्राहरहस्सर्वेषां क्षेत्रज्ञानां गमनम्, गन्तव्यस्य तस्य दहराकाशस्य ब्रह्मलोकशब्दनिर्देशश्च दहराकाशस्य परब्रह्मतां गमयतः । कथमनयोरस्य परब्रह्मत्वसाधकत्वमित्यत आह– तथा हि दृष्टमिति । परस्मिन् ब्रह्मणि सर्वेषां क्षेत्रज्ञानामहरहस्सुषुप्तिकाले गमनमन्यत्राभिधीयमानं दृष्टम् [1]"एवमेव खलु सोम्येमास्सर्वाः प्रजास्सति सम्पद्य न विदुस्सति सम्पत्स्यामह इति" इति [2]"सत आगम्य न विदुस्सत आगच्छामह इति" इति च । तथा ब्रह्मलोकशब्दश्च परस्मिन् ब्रह्मणि दृष्टः [3]"एष ब्रह्मलो-

* श्रुतप्रकाशिका *

रहर्गच्छन्त्य इति सुषुप्तौ गमनं विवक्षितम्, तच्च पृथक्प्रतिपत्तिव्यवहारानर्हतया स्थितिः । निर्गमनं पृथक् प्रतिपत्त्यर्हतापत्तिः । (कथमनयोरिति) कथम् श्रुतिषु परमात्मधर्मत्वेन अन्वयदर्शनाद्वा जीवादिप्रतिपादकवाक्येष्वदर्शनेन जीवादिष्वसम्भावितत्वाद्वा गतिशब्दयोः परमात्मसाधकमित्यर्थः । तथा हि दृष्टमिति सूत्रखण्डं परमात्मपरसपक्षभूतवाक्येष्वन्वयदर्शनभूतपरं व्याचष्टे (तथा हीति) गतेः श्रुत्यन्तरप्रसिद्धिं दर्शयति (परस्मिन्निति) शब्दस्यान्यत्र प्रसिद्धिं दर्शयति (तथेति) लिङ्गं चेति सूत्रखण्डं जीवादिप्रतिपादकविपक्षभूतवाक्येष्वदर्शनरूपव्यतिरेकाद्गतिशब्दयोः

ㄅ भावप्रकाशिका ㄅ

स त आगम्येति श्रुत्युपन्यासात्सौत्रगतिशब्देन निर्गमनमपि विवक्षितमिति भाष्यकृतोऽभिसन्धिरिति मत्वा निर्गमनशब्दार्थमाह (निर्गमनं पृथक्स्थित्यर्हतापत्तिरिति) (शब्दस्यान्यत्र प्रसिद्धिमिति) गतिशब्दाभ्यामित्यत्र गतेरन्यत्र प्रसिद्धि-

१ छां. ६-९-२ ॥ | २ छां. ६-१०-२ ॥ | ३ बृ. ६-३-३३ ॥

कस्सम्राडिति होवाच" इति। माभूदन्यत्र ब्रह्मणि गमनदर्शनम्; एतदेव तु दहराकाशे सर्वेषां चेत्रज्ञानां प्रलयकाल इव निरस्तनिखिलदुःखानां सुषुप्तिकालेऽवस्थानं श्रूयमाणमस्य परब्रह्मत्वे पर्याप्तं लिङ्गम्, तथा ब्रह्मलोकशब्दश्च समानाधिकरणवृत्त्या अस्मिन् दहराकाशे प्रयुज्यमानोऽस्य ब्रह्मत्वे प्रयोगान्तरनिरपेक्षं पर्याप्तं लिङ्गमित्याह– लिङ्गं चेति । निषादस्थपतिन्यायाच्च षष्ठीसमासात्समानाधिकरणसमासो न्याय्यः ॥

* श्रुतप्रकाशिका *

साध्यसाधकत्वपरं व्याचष्टे ( माभूदिति ) तत्र गतेः श्रुत्यन्तरेऽन्वयदर्शननैरपेक्ष्येण साधकत्वमाह ( एतदेव त्विति ) ( श्रूयमाणमिति ) निषिद्दष्टान्तसचिवमिति भावः । तद्यथेत्यादेर्वाक्यस्योदाहृतत्वादत्र निषिद्दष्टान्तस्य श्रुतत्वान्निषिद्दष्टान्तावगतपरमपुरुषार्थभावस्येति योजनान्तरे अनन्तरगेवोच्यमानत्वाच्च । निषिद्दष्टान्तश्च परमपुरुषार्थत्वज्ञापकः, अतो दृष्टान्तानुगृहीतमहरहर्गमनमेकं पर्याप्तं लिङ्गमित्यर्थः । शब्दस्य च न्यायविशेषानुगृहीतस्य श्रुत्यन्तरेऽन्वयनिरपेक्षं साध्यसाधकत्वमाह ( तथा ब्रह्मलोकेति ) ननु कथं ब्रह्मलोकशब्दस्य समानाधिकरणवृत्तित्वावगमः ? व्यधिकरणवृत्तावपि तदेव हि शब्दरूपमिति शङ्कायां विवक्षितमनुग्राहकं दर्शयति (निषादेति) 'एतया निषादस्थपतिं याजयेत' इत्यत्र कर्मधारयपरिग्रहे निषादजातीयस्य स्थपतेरग्निविद्ययोरसम्भवेन स्वतो निरधिकारत्वात् षष्ठीसमासपरिग्रहे च त्रैवर्णिकान्तर्भूतस्थपतिकटाक्षेणापि निषादस्थपतिशब्दनिर्वाहसम्भवात् षष्ठीसमासपरिग्रहेणापशूद्राधिकरणन्यायानुरोधो युक्त इति प्राप्तेऽभिहितं "स्थपतिर्निषादः

* भावप्रकाशिका *

मुपपाद्य शब्दस्य प्रसिद्धिमुपपादयतीत्यर्थः । ( निषिद्दष्टान्तसचिवमिति भाव इति ) ततश्च हृदयपुण्डरीकावच्छिन्नभूताकाशे सुषुप्तौ अहरहर्गमनसम्भवात्, नाहरहर्गमनं परमात्मत्वसाधकमिति न शङ्क्यम. निध्युपमालब्धपरमपुरुषार्थत्व-

**अथवा "अहरहर्गच्छन्त्यः" इति न सुषुप्तिविषयं गमनमुच्यते ; अपि त्वन्तरात्मत्वेन सर्वदा वर्तमानस्य**

* श्रुतप्रकाशिका *

स्यात्छब्दसामर्थ्यात्" इति। अयमर्थः, षष्ठीसमासपक्षे निषादसम्बन्धविशिष्टोऽभिधेयः, कर्मधारयपक्षे निषादत्वविशिष्टः। तत्र षष्ठ्या अश्रवणान्निषादप्रातिपदिकेन विभक्त्यर्थो लक्षणीयः। न चेदं युक्तम्, श्रौतार्थपरिग्रहे विरोधाभावात्। न चाग्निविद्याराहित्यं दोषः, द्रव्यवदेतदुपयोग्यग्निविद्ययोरपि यथाकथञ्चिदार्जनस्य विध्यनुमतिसम्भवात्, तस्मात् कर्मधारय एव न्याय्य इति ; एतन्न्यायानुगृहीतो ब्रह्मलोकशब्दः श्रुत्यन्तरेऽन्वयनिरपेक्षः परमात्मत्वसाधक इत्यर्थः। तर्हि "स सामभिरुन्नीयते ब्रह्मलोक"मित्यत्र कथं ब्रह्मलोकशब्दस्य वैयधिकरण्यम्? उच्यते ; नयतिः प्राप्तिवचनः। नित्यप्राप्तस्य ब्रह्मणः प्राप्तिर्नामानुभवः, स च 'परात्परं पुरुषमीक्षते' इत्युक्तः, अतो ब्रह्मानुभवः पुनर्न वक्तव्य इति उन्नीयत इत्युत्पूर्वनयतिरुपरिस्थितप्राप्तिवाची, न बुद्धिवाची, प्राप्यश्च लोक इति वैयधिकरण्यम्, अत्र तु तादृशानुपपत्त्यभावात्सामानाधिकरण्यमिति। ब्रह्मलोकशब्दस्य चतुर्मुखलोकपरत्वशङ्कानिवर्तकलिङ्गमहरहर्गमनम्, न हि प्रजाः प्रत्यहं चतुर्मुखलोकं गच्छन्तीत्येदर्थं परं लिङ्गं चेति सूत्रखण्डमन्यैर्व्याख्यातम्, तदानीं गतिशब्दयोः परम्परोपपाद्योपपादकभावेन समुच्चित्य परमात्मत्वसाधकत्वं स्यात्, न त्वेकैकस्य. ततोऽपि परं प्रत्येकं पर्याप्तलिङ्गसिद्धिरित्यभिप्रायेण तदनादृत्यैवं व्याख्यातम्। गतिशब्दमात्रस्य योजनान्तरमाह (अथवेति) पूर्वयोजनायां दृष्टान्त एवोपरिशब्दान्वयः, अत्र तु

‡ भावप्रकाशिका ‡

विशिष्टगन्तव्यत्वस्य हृदयपुण्डरीकावच्छिन्नभूताकाशे अभावादिति भावः। स्थपतिर्निषादस्स्यात् शब्दसामर्थ्यादिति सूत्रपाठः। (सम्बन्धविशिष्टोऽभिधेय इति) प्रतिपिपादयिषित इत्यर्थः (तत्र षष्ठ्या अश्रवणादिति) तत्र षष्ठीसमासपक्ष इत्यर्थः। (तदनादृत्यैवं व्याख्यातमिति) न च चतुर्मुखलोकपरतया प्रसिद्धे ब्रह्मलोकशब्दे नरपतिराजकुमारादिशब्देष्विव निषादस्थपतिन्यायानवतारात् तद्व्यावृत्तिसिद्ध्यर्थं पररीतिरेवाश्रयणीयेतिवाच्यम्; 'एष ब्रह्मलोकस्सम्राट्' इतिब्रह्मलोकशब्दस्य ब्रह्मण्यपि प्रसिद्धतया तन्न्यायानवतारशङ्कानुदयात्। (दृष्टान्त एवो-

दहराकाशस्य परमपुरुषार्थभूतस्योपर्युपर्यहरहर्गच्छ-न्त्यः सर्वस्मिन् काले वर्तमानाः तमजानन्त्यस्तं न विन्दन्ति– न लभन्ते ; यथा हिरण्यनिधिं निहितं तत्स्थानमजानानास्तदुपरि सर्वदा वर्तमाना अपि न लभन्ते तद्वदित्यर्थः । सेयमेवमन्तरात्मत्वेन स्थितस्य दहराकाशस्योपरि तन्नियमितानां सर्वासां प्रजानामजानतीनां सर्वदा गतिरस्य दहराकाशस्य परब्रह्मतां गमयति । तथा ह्यन्यत्र परस्य ब्रह्मणोऽन्तरात्मतयाऽवस्थितस्य स्वनियाम्याभिः स्वस्मिन् वर्तमानाभिः प्रजाभिरवेदनं दृष्टम् । यथा अन्तर्यामिब्राह्मणे "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" इति, 'अदृष्टो

* श्रुतप्रकाशिका *

दार्ष्टान्तिकेऽपि ( दहराकाशस्योपरीति ) धर्म्यैक्याभिप्रायेणैवमुक्तम्, अन्तरात्मतया स्थितत्वेन ह्याधारः, न तु उपासकानुग्रहतया स्थितत्वेन। ( उपरि तन्नियमितानामिति ) अस्मिन् प्रकरणे सत्यशब्दनिर्वचनावगतं हि चेतनाचेतनयोर्नियन्तृत्वं परस्य 'य आत्मानमन्तरो यमयती'त्यादिश्रुत्यन्तरप्रसिद्धं चेत्यभिप्रेतम् । अस्य पर-

* भावप्रकाशिका *

परिशब्दान्वय इति ) सुषुप्तिविषयगमनं हि पृथक्प्रतिपत्तिव्यवहारानुगुणतयाऽवस्थितिभेदप्रहाणरूपा, अतस्तत्र दार्ष्टान्तिके अहरहरुपरि गच्छन्त्य इत्युपरिशब्दान्वय इति भावः । नन्वन्तर्यामिरूपब्रह्मण्येवावस्थितिः, न दहराकाशरूपब्रह्मणि. ततश्च कथं दहराकाशस्य उपरीति भाष्यमित्यत आह ( धर्म्यैक्याभिप्रायेणैवमुक्तमिति ) ( सत्यशब्दनिर्वचनावगतमिति ) तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सत्यमिति । अथ यत् सत् तदमृतम् अथ यत्ति तन्मर्त्यम् अथ यद्यं तेनोभे यच्छति' इति निर्वचनावगतमित्यर्थः ॥

द्रष्टा अश्रुतः श्रोता" इति च । माभूदन्यत्र दर्शनम्; स्वयमेव त्वियं निधिदृष्टान्तावगतपरमपुरुषार्थभावस्यास्य हृदयस्थस्योपरि तदाधारतयाऽहरहस्सर्वदा सर्वासां प्रजानामजानतीनां गतिरस्य परब्रह्मत्वे पर्याप्तं लिङ्गम् ॥

इतश्च दहराकाशः परं ब्रह्म—

धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १५ ॥

[1]"अथ य आत्मा" इति प्रकृतं दहराकाशं निर्दिश्य "स सेतुर्विधृतिरेषां लोकानामसम्भेदाय" इत्यस्मिन् जगद्विधरणं श्रूयमाणं दहराकाशस्य परब्रह्मतां गमयति; जगद्विधरणं हि परस्य ब्रह्मणो महिमा, [2]"एष सर्वेश्वर एष सर्वभूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय" इति, [3]"एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिभ्यः । स चायं तस्य परस्य ब्रह्मणो धृत्याख्यो महिमाऽस्मिन् दहराकाश उपलभ्यते; अतो दहराकाशः परं ब्रह्म ॥ १५ ॥

* श्रुतप्रकाशिका *

ब्रह्मत्वे पर्याप्तं लिङ्गमिति लिङ्गमित्यस्यैवार्थः ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ अस्य– परमात्मनः महिमा धृतिः । तस्यास्मिन्– दहराकाशे उपलब्धेरित्यर्थः । धृतिः–विधृतिः । ( अतो दहराकाशः परं ब्रह्मेति ) भूताकाशादन्यत्वे तात्पर्यम्, भूताकाशत्वं प्रतिक्षिप्तमिति हि वक्ष्यते, स एव वस्तुगत्या परमात्मेति परं ब्रह्मे-

* भावप्रकाशिका *

( भूताकाशान्यत्वे तात्पर्यमिति ) जीवपूर्वपक्षस्याप्यद्याप्यनिरस्तत्वादिति भावः ॥

१ छां. ८-४-१ ॥ | २ बृ. ६-४-२२ ॥ | ३ बृ. ५-८-९ ॥

प्रसिद्धेश्च ॥ १६ ॥

आकाशशब्दश्च परस्मिन् ब्रह्मणि प्रसिद्धः "को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात्" "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते" इत्यादिषु; अपहतपाप्मत्वादिगुणसनाथा प्रसिद्धिर्भूताकाशप्रसिद्धेर्बलीयसीत्यभिप्रायः ॥

एवं तावद्दहराकाशस्य भूताकाशत्वं प्रतिक्षिप्तम् । अथेदानीं दहराकाशस्य प्रत्यगात्मत्वमाशङ्क्य निराकर्तुमुपक्रमते—

इतरपरामर्शात् स इति चेन्नासम्भवात् ॥ १७॥

यदुक्तं वाक्यशेषवशाद्दहराकाशः परं ब्रह्मेति । तदयुक्तम्; वाक्यशेषे परस्मादितरस्य जीवस्यैव साक्षा-

* श्रुतप्रकाशिका *

त्युक्तम् ॥ प्रसिद्धेश्च ॥ प्रसिद्धिप्राचुर्ये हि भूताकाश इत्यत्राह ( अपहतेति ) ॥ पूर्वसूत्रचतुष्टयकृत्यं वदन्नुत्तरेषां सूत्राणां कर्तव्यमाह ( एवं तावदिति ) पूर्वोक्तहेतूनां स्वरसतो जीवव्यावर्तनक्षमत्वेऽपि वक्ष्यमाणशङ्काप्रतिक्षेपानन्तरमेव स्वारस्यस्यानपोद्यत्वसिद्धिः, अतो भूताकाशत्वव्युदसने तात्पर्यमिति भावः । तत्परत्वे व्युदस्ते इत्यनन्तरेण जीवपरत्वमाशङ्क्योक्तहेतुभिरेव तन्निरासः क्रियतेऽनन्तरसूत्रेण । उपक्रमत इत्यनेन अनन्तरसूत्रं नाधिकरणान्तरमिति सूचितम्, अविच्छेदप्रतीतेः ॥ इतरपरामर्शात्स इति चेन्नासम्भवात् ॥ इतरशब्दस्य प्रतिसम्बन्धिसापेक्षत्वादाह ( परस्मादिति ) ( जीवस्यैवेति ) दहराकाशस्य परमात्मत्वं वदतोऽपि अस्य वाक्यस्य जीवपरत्वं सम्प्रतिपन्नमिति एवकाराभिप्रायः । ( साक्षात्परामर्शादिति )

७ भावप्रकाशिका ७

( पूर्वोक्तहेतूनामिति ) बाह्याकाशोपमानोपमेयभावादीनां च चतुस्सूत्रीप्रतिपादितानामित्यर्थः । ( उपक्रमत इत्यनेनेति ) दहराकाशस्य प्रत्यगात्मतत्त्वमाशङ्क्य

त्परामर्शात् “अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म’ इति। यद्यपि ‘दहरोऽस्मिन्नन्तर आकाशः’ इति हृदयपुण्डरीकमध्यवर्तितयोपदिष्टस्याकाशस्योपमानोपमेयभावाद्यसम्भवाद्भूताकाशत्वं न सम्भवति, तथापि वाक्यशेषवशात् प्रत्यगात्मत्वं युक्तमाश्रयितुम्। आकाशशब्दोऽपि प्रकाशादियोगाज्जीव एव वर्तिष्यत इति चेत्. अत्रोत्तरम्-- नासम्भवादिति। नायं जीवः, न ह्यपहतपाप्मत्वादयो गुणा जीवे सम्भवन्ति ॥ १७ ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १८ ॥

उत्तरात्- प्रजापतिवाक्यात् जीवस्यैवापहतपाप्म-

* श्रुतप्रकाशिका *

न जीवसम्बन्धिलिङ्गद्वारा परामर्शः, किन्तु तद्वाचकशब्देन परामर्शः तस्मादित्यर्थः। ‘अथ य एष’ इत्येतच्छब्दो हि प्रकृतपरामर्शी, अतः पूर्ववाक्येष्वपि जीव एव प्रतिपाद्यत इति परामर्शशब्दाभिप्रायः। जीवपरामर्शसहकारिणी तदन्तर्वर्त्यन्वेष्टव्यान्तरप्रतीतिश्च जीवत्वहेतुरनुसन्धेयः, अणोर्जीवस्य विपुलतरप्रसिद्धाकाशोपमेयत्वसर्वाधारत्वाद्यनुपपत्तेर्भूताकाशप्रतिक्षेपयुक्तिभिरेव जीवत्वशङ्कापि प्रतिक्षिप्तेत्यत्राह (यद्यपीति) उपमानोपमेयभावाद्यस्वारस्यं वाक्यशेषवशात्सोढव्यमिति भावः। (न ह्यपहतेति) परामर्शान्यथासिद्धेर्वक्ष्यमाणत्वादपहतपाप्मत्वादिश्रुतिस्वारस्यमनपोदितमिति भावः॥ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ सूत्रे शङ्काखण्डस्यान्तरार्थमाह (उत्तरादिति) उत्तरवाक्यानुसारेण दहरवाक्येऽपि जीवस्यैवेति

७ भावप्रकाशिका ७

निराकर्तुमुपक्रमत इति दहराविच्छेदप्रतीतेर्नाधिकरणान्तरमिति सूचितमिति

त्वादिगुणयोगो निश्चीयत इति चेत्, एतदुक्तं भवति ; प्रजापतिवाक्यं जीवपरमेव। तथाहि "य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानाति." इति प्रजापतिवचनमैतिह्यरूपेणोपश्रुत्यान्वेष्टव्यात्मस्वरूपजिज्ञासया प्रजापतिमुपसेदुषे मघवते प्रजापतिर्जागरितस्वप्नसुषुप्त्यवस्थं

* श्रुतप्रकाशिका *

निश्चीयत इत्यर्थः । किमिदं प्रजापतिवाक्यं तत्रापहतपाप्मत्वादिः प्रतीतोऽपि परमात्मन एव स्यादित्यत्राह (एतदुक्तमिति) (जीवपरमेवेति) 'स उत्तमः पुरुषः' इत्यनेन परमात्मपरत्वं न शङ्क्यम्, तदुक्तिः प्रासङ्गिकीति भावः। (मघवत इति) यद्यपि विरोचनोऽपि प्रजापतिमुपासदत् तथापि छायापुरुषाधिगममात्रतृप्ततया अपक्रान्तोऽतस्तदनुक्तिः, इन्द्र एवार्थतत्त्वबुभुत्सया स्थित इति सच्छिष्यत्वात्तन्निर्देशः । खण्डपञ्चकस्यार्थं सङ्क्षेपेणाह (जागरितेति) 'नाहमत्र

* भावप्रकाशिका *

भावः, तत्प्रक्रमत इत्येतावतैव तत्सूचनं तावन्मात्रेण तथा अप्रतीतेरिति द्रष्टव्यम्॥ (यद्यपि विरोचनोऽपीति) इत्थं हि समाम्नायते - "य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यः सर्वान् लोकानाप्नोति स सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच। तद्धोभये देवा अनुबुबुधिरे—कर्णाकर्णिकया श्रुतवन्त इत्यर्थः। 'ते होचुः। हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति। इन्द्रो ह वै देवानामभि प्रवव्राज विरोचनोऽसुराणाम्। तौ हासंविदानावेव' असंविदानौ— परस्परस्यया स्वाभिप्रायमप्रकाशयन्तावित्यर्थः। समित्पाणी प्रजापतिसकाशमाजग्मतुः। तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः। तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति" अवास्तम्— उषितवन्तावित्यर्थः। 'तौ हो-

जीवात्मानं सशरीरं क्रमेण शुश्रूषुयोग्यतापरिचिचि-षयोपदिश्य तत्र तत्र भोग्यमपश्यते परिशुद्धात्मस्वरू-पोपदेशयोग्याय तस्मै मघवते "मघवन् मर्त्यं वा इदं

* श्रुतप्रकाशिका *

भोग्यं पश्यामी'त्यस्यार्थमाह ( तत्र तत्र भोग्यमपश्यत इति ) 'य आत्मे'त्यादिप्रजापतिवाक्यं परिशुद्धजीवस्वरूपाभिप्रायम् , तच्छ्रुत्वा पश्चादुपसन्नयोरिन्द्रविरोचनयोः प्रजापतिरुपदिशति ' य एषोऽक्षिणि पुरुषो दृश्यत' इति । नेहाक्षिपुरुषः परमात्मा,

७ भावप्रकाशिका ७

चतुर्थे आत्माऽपहतपाप्मा विरजो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यस्सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वाचो वेदयन्ते तमिच्छन्तावववास्तामिति । तौ ह प्रजापतिरुवाच । य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मेति" एवं प्रत्यगात्मनि प्रजापतिना उपदिष्टे छायापुरुष आत्मेत्युपदिष्ट इति भ्रान्त्वा स्वगृहीतच्छायापुरुषात्मत्वद्रढीकरणाय जलादर्शादिप्रतिबिम्बोपि अक्षिप्रतिबिम्बाभिन्न आत्मैव, उत तद्भिन्नोऽनात्मेत्यभिप्रायेण 'अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति पप्रच्छतुः । एवं ताभ्यां पृष्टस्तयोर्भ्रान्तिमनिराकुर्वन्नेव 'एष उ एव सर्वेष्वन्तेषु परिख्यायत इति होवाच । यश्चक्षुषि दृश्यत्वेन मयोक्तस्स सर्वान्तरो जलादिष्वपि न भिद्यत इत्युत्तरं ददावित्यर्थः । शिष्यभ्रान्तिमनिराकृत्य तद्भ्रान्तिद्रढीकरणायेत्थमुत्तरं ददत आचार्यस्यायमभिप्रायः, सुरासुरेन्द्राविन्द्रविरोचनौ स्वात्मन्यध्यारोपितपाण्डित्यमहत्त्वातिशयौ तथैव जगति प्रसिद्धौ च, तद्यदि युवां भ्रान्ताविति ब्रूयात् तदा चित्तावसादात्पुनः प्रश्नग्रहणधारणेषु भग्नोत्साहौ स्याताम् . अतो यथाश्रुतप्रश्नमात्रस्योत्तरमिदानीं वक्तव्यम् । अनेन चोत्तरेण पूर्वोत्पन्नः प्रतिबिम्बात्मभ्रमो द्रढीभवति चेत् भवतु, द्रढीभूतोपि केनचिदुपायेनापनेष्यत इति । प्रथमः खण्डः । अत एव तद्भ्रमापनयनार्थमाह– 'उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीतस्तन्मे ब्रूतमिति । तौ होदशरावे आत्मानमवेक्षाञ्चक्राते, तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुस्सर्वमेवेदमावां भगव आत्मानं पश्यावः, आलोमभ्य आन-

* श्रुतप्रकाशिका *

"एतत्त्वेव ते भूयोऽनु व्याख्यास्यामि" इत्युपक्रम्य स्वप्नाद्यवस्थाभिधानात् न चेह जीवस्याक्षिणि स्थितिरुपदिश्यते, किन्तु अक्षिविकाराविकाराभ्यां जीवस्य स्थितिगती निश्चीयेते, अतोऽक्ष्णोः जीवस्थितिगतिसूचकत्वादक्षिणि दृश्यत इत्युक्तम्,

७ भावप्रकाशिका ७

त्मेभ्यः प्रतिरूपमिति । एवं द्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूतनखलोमादियुक्तच्छाया-पुरुषदर्शनानन्तरं तौ ह प्रजापतिरुवाच । साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षाञ्चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुर्यथैवेदमावां भगवस्साध्वलङ्कृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवस्साध्वलङ्कृतौ सुवसनौ परिष्कृताविति । अत्रैवं नियुञ्जानस्य प्रजापतेरयमभिसन्धिः, आगमापायिकेशनखालङ्कारादिदोषगुणायुक्ताव्यवस्थितदेहानुकारिदोषगुणवत्त्वात् देहवत्तत्प्रतिबिम्बोऽप्यनात्मेति जानीताभिति । एवं सत्यपि तावनिवृत्तभ्रमौ किं पश्यथ इति प्रजापतिना पृष्टावपि यथादृष्टं कथयित्वा तूष्णीं बभूवतुः, ततः प्रजापतिर्भ्रान्तिनिवारणार्थं मया कृतस्य द्विविधप्रतिबिम्बदर्शनस्याभिप्रायमिमावप्रक्षीणकल्मषत्वान्नावगच्छतः, प्रत्यक्षञ्च युवां भ्रान्ताविति वक्तुमर्हौ न भवतः, तदिदानीमेतदीयहृदयानुरोधेन प्रतिबिम्बमेव निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय एष आत्मेत्युपदेशेनैतयोराकाङ्क्षां निवर्तयिष्यामि, कालेन कल्मषे प्रक्षीणे मद्वचनसन्दर्भस्य सर्वस्याप्यभिप्रायं स्वयमेवावगमिष्यतः । विचिकित्समानौ वा मत्समीपमागमिष्यत इति मत्वा एष आत्मेति होवाच एतदमृतमेतदभयमेतद्ब्रह्मेति । तौ ह शान्तहृदयौ--निवृत्ताकाङ्क्षावित्यर्थः । तौ हान्वीक्ष्य प्रजापतिरुवाच. एवं प्रतिनिवृत्तयोः प्रजापतिर्भ्रान्तिगृहीतार्थश्रद्धया इमौ विनष्टौ माभूताम्. इदमपि मम वचनं य आत्मेतिवचनवत्कर्णाकर्णिकया शृणुतामित्यभिप्रेत्योवाचेत्यर्थः । अनुपलभ्यात्मानमननुविद्य व्रजतः यतर एतदुपनिषदो भविष्यन्ति । यतरे--य इत्यर्थः । देवा वा असुरा वा ते पराभविष्यन्तीति, स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाच । विरोचनः प्राजापत्यस्य द्विविधदेहच्छायादर्शननियोगस्य देहानुकारित्वाच्छायाया देह आत्मेति सूचने तात्पर्यम्. अलङ्कृतदेहच्छायां निर्दिश्य एष आत्मेत्युपदेशस्य नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्महार्हमितिवचनस्य छायानिमित्ते

* श्रुतप्रकाशिका *

अस्मिन् कर्मणि अस्य सामर्थ्यं दृष्टमितिवत् । ततश्च गृहे स्थित्वा निर्गच्छन् पुरुषो यथा गृहादन्यः, एवं शरीरे स्थितिगतिमानात्मा देहातिरिक्त इत्युक्तं भवति । 'अमृत'मिति निरतिशयसुखस्वरूपत्वम्, अभयमिति दुःखासम्भिन्नत्वम्, ब्रह्मेत्यसङ्कु-

* भावप्रकाशिका *

बिम्बे वाससीव अलङ्कृते देहे तात्पर्यमिति मन्वानो देह एवात्मालङ्कारादिभिः परिचरणीय इति निश्चित्य राज्यं प्राप्यासुरेभ्यस्तथैवोपदेष्टुमुपचक्रम इत्यर्थः । आत्मैवेह महीयः, पूज्य इत्यर्थः । आत्मा परिचर्यः, आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं च तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरसुरो बतेति । यागदानादिकर्मशून्यमद्यापि शिष्टा असुर इति प्राहुरित्यर्थः । असुराणां ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालङ्कारेण संस्कुर्वन्ति । भिक्षया—भिक्षित्वापीत्यर्थः । एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते । एतेन—शरीरालङ्कारेणेत्यर्थः । अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श । यथैव खल्वयमस्मिन् शरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः, यस्य चक्षुर्नासिका वा सदा स्रवति स स्रामः । छिन्नाङ्गः परिवृक्णः । अस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तँ ह प्रजापतिरुवाच मघवन् शान्तहृदयः प्राव्राजीस्सार्धं विरोचनेन किमिच्छन् पुनरागम इति । आगतवानसीत्यर्थः । यथैव खल्वयं भगवो अस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृतः एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति एवमेवैष भगवन्निति होवाच । एतत्त्वेव ते भूयोऽनु व्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणि स हापराणि द्वात्रिंशतं वर्षाण्युवास तस्मै होवाच य एष स्वप्ने महीयानन्तश्चरति एष आत्मेति होवाचैतदमृतमेतदभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श, तद्यद्यपीदं शरीरमन्धं भवति अनन्धस्स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दूष्यति न वधेनास्य हन्यते नास्य स्रामेण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्ति वा अप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय, तँ ह प्रजापतिरुवाच मघवन्

* श्रुतप्रकाशिका *

चितज्ञानतया बृहत्त्वं ब्रह्मात्मकत्वं वोक्तम् । एवं प्रजापतिहृदयानभिज्ञानेन छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः कतम एष इत्यादिना, सर्वेष्वेतेषु

५ भावप्रकाशिका ५

शान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच तद्यद्यपीदं भगवन् शरीरमन्धं भवतीत्यनन्धस्स भवति अपि रोदितीव नाहमत्र भोग्यं पश्यामीति एव-मेवैष मघवन्निति होवाच एतं त्वेव ते भूयोऽनु व्याख्यास्यामि वसापराणि द्वात्रिं-शतं वर्षाण्युवास तस्मै होवाच । तद्यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नस्स्वप्नं विजानाति एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज सहाप्राप्यैव देवानेतद्भयं ददर्श, नाहं खल्वयं भगवस्सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति स समि-त्पाणिः पुनरेयाय तँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच नाहं खल्वयं भगवस्सम्प्रत्यात्मानं जानामि नाहमत्र भोग्यं पश्यामीति एवमेवैष मघवन्निति होवाच एतं त्वेव ते भूयो नु व्याख्यास्यामि नो एवान्यत्रैतस्माद्वसात्रापराणि पञ्चवर्षाणीति स हापराणि पञ्चवर्षाण्युवास तान्ये-कशतं सम्पेतुरेतत्तद्यदाहुरेकशतं वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच पुनरपि द्वात्रिंशतं वर्षाण्युषितवते मघवते स्थूलशरीरदोषाननुविधायिनं स्वप्नावस्थं जीवात्मानमुपदिदेश । इन्द्रस्तत्रापि हन्यमानत्वद्राव्यमाणत्वबन्धुजनन-मरणाद्यप्रियद्रष्टृत्वरोदितृत्वादिप्रतिभासेन दोषं पश्यन्नुक्तार्थानुपपत्तिमनुसन्दधानः प्रजापतिं पुनरुपससाद । प्रजापतिः पूर्ववदुक्त्वा तथैव द्वात्रिंशतं वर्षाणि उषितवते तस्मै स्वाप्नवधादिप्रतिभासप्रयुक्तभयशोकादिरहितं सुषुप्तावस्थं जीवात्मानमुपदि-देश । इन्द्रस्तस्मिन् विशेषविज्ञानरहिते विनष्टप्रायत्वेनापुरुषार्थतां मन्यमानः प्रागु-क्तानुपपत्त्यनुसन्धानेन पुनरपि प्रजापतिमुपससाद । प्रजापतिरेतं त्वेव ते भूयो नु व्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्चवर्षाणीत्युक्त्वा तावत्कालमुषित-वते एकशतवर्षब्रह्मचर्यवासेन सम्यक्प्रक्षीणकल्मषायेन्द्रायोपदेष्टुमुपचक्रम इत्यर्थः । "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरी-

* श्रुतप्रकाशिका *

नेत्रादिस्थानेषु परिख्यायते कतम एष इत्यर्थः । पुनश्चाक्षुषदेहस्यानात्मत्वमिदन्तयाऽवभासनात् अन्वयव्यतिरेकाभ्यां च दर्शयितुम् उदशरावब्राह्मणेन केवलदेहस्य वसनाभरणाद्यलङ्कृतदेहस्य च छायादर्शने प्रजापतिनियोगस्तयोस्तद्दर्शनं

ळ भावप्रकाशिका ळ

राण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति स उत्तमः पुरुषस्स तत्र पर्येति जक्षन् क्रीडन् रममाणः, स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनं स्मरन्निदं शरीरं स यथा प्रयोग्य आचरणे युक्त एवमेवमेवायमस्मिञ्छरीरे प्राणो युक्तः । अथ यत्रैतदाकाशमनुविषण्णं चक्षुस्स चाक्षुषः पुरुषो दर्शनाय चक्षुः । अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम् । अथ यो वेदेदमभिव्याहराणीति स आत्मा अभिव्याहाराय वाक् अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् । अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दिव्यं चक्षुस्स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके । तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आत्तास्सर्वे च कामास्स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच" । छायापुरुष उपदिष्ट इति मत्वा पुनः पप्रच्छतुः । योयं भगव इत्यादिनेतिपाठः । यो यं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येतावतः प्रश्नत्वादिति द्रष्टव्यम् । सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते इति होवाचेत्यस्य प्रतिवचनरूपत्वात् । केचित्तु योयं भगवोऽप्सु परिख्यायते एष उ– एष एवेत्यर्थ इति पाठः । एष उ एव सर्वेष्वन्तेषु परिख्यायते यश्चायमादर्शे कतम एष इति एष उ एव सर्वेष्वन्तेषु परिख्यायत इत्येतावान् प्रश्नः इति होवाचेत्येतदुत्तरस्योदशरावब्राह्मणस्य शेषभूतः । तत्र च योयं भगवोप्सु परिख्यायते यश्चायमादर्शे य एष उ एव सर्वेष्वन्तेषु नेत्रादिस्थानेषु परिख्यायते कतम एष इति प्रश्नः । प्रश्नमध्यगत इतिशब्दः प्रश्नान्ते निवेशनीय इत्यादि वदन्ति । ( चाक्षुषदेहस्येति ) चक्षुषि दृश्यमानस्य छायापुरुषस्येत्यर्थः । तत्क्रमस्यैव दृढावस्थितत्वेन तस्यैवापनेयत्वादिति द्रष्टव्यम् । ( अनात्मत्वमिति ) इदमुपलक्षणम् । अमृताभयशब्दाद्युक्तभोग्यत्वाद्यभावोपि द्रष्टव्यः, अत एव ह्युत्तरत्र नाहमत्र भोग्यं पश्यामीत्युक्तिरिति द्रष्टव्यम् । ( अन्वयव्यति-

शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानम्" इति शरीरस्याधिष्ठानतामात्मनश्चाधिष्ठातृतामशरीरस्य च तस्यामृतत्वस्वरूपतां चोक्त्वा "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अ-

* श्रुतप्रकाशिका *

चोक्तम् । यथा वसनाभरणादिरन्वयव्यतिरेकाभ्यामनात्मा, एवं चानुपलत्वादिदहारगोचरत्वाच्च देहोऽनात्मेति प्रजापतेरभिसन्धिः । विरोचनोऽपक्वकषायत्वात्तावता तृप्तो जगाम, इन्द्रस्तु प्रजापतेरभिसन्धिमजानन्नपि देहस्यामृतत्वाभयत्वानुपपत्तिं दृष्ट्वा 'नाहमत्र भोग्यं पश्यामि' इति पुनरुपससाद । प्रजापतिस्तु जाग्रद्दशायां वसनादीनामिव जीवाच्छरीरस्यापगमाभावाद्व्यतिरेको दुर्दर्श इति मत्वा स्वाप्नदेहाभिमानिन आत्मनश्शयानदेहव्यतिरेकस्य स्ववगमत्वात् स्वप्नावस्थामुपदिदेश. तदभिप्रायानभिज्ञ इन्द्रः स्वप्ने अमृतत्वाभयत्वानुपपत्तिं जानन् 'नाहमत्र भोग्यं पश्यामी'त्युपासदत्, बाह्याभ्यन्तरदेवत्वमनुष्यत्वरागद्वेषाद्यौपाधिकाकारकालुष्यविरहेण स्वयम्प्रकाशमात्मानं दर्शयितुं सुषुप्त्यवस्थामुपादिशत् । तदानीमपीन्द्रस्तदभिप्रायाज्ञानेनामृतत्वाभयत्वाद्यनुपपत्त्या 'नाहमत्र भोग्यं पश्यामी'त्युपसन्नोऽभूत्; एवमनतिस्फुटं गहनमुपदिशतः प्रजापतेस्तात्पर्यमुक्तं शुश्रूषुयोग्यतापरिचित्तिपयेति । 'मघवन्मर्त्यं वा इदं शरीरम्' इत्यादिना निष्कृष्टात्मस्वरूपं स्फुटतरमुपादिशत् । तदुपदेशप्रकारमाह ( शरीरस्याधिष्ठानतामित्यादिना ) अथ

ꣿ भावप्रकाशिका ꣿ

रेकाभ्याञ्चेति ) देहगुणदोषान्वयव्यतिरेकानुविधानादित्यर्थः । ( यथा वसनाभरणादिरिति ) वसनाभरणादिर्हि उपादानद्रव्यगुणदोषानुविधायी नात्मा, तथा देहगुणदोषान्वयव्यतिरेकानुविधायिगुणदोषतया छायापुरुषो नात्मेत्यर्थः । देहो नात्मेत्यत्र देहशब्दः छायापुरुषपरः, एवमुत्तरत्रापि देहस्यामृतत्वाभयत्वत्रापि देहशब्दश्छायापुरुषपरो द्रष्टव्यः । ( व्यतिरेको दुर्दर्श इति ) एतच्छरीरगुणदोषान्वयव्यतिरेकानुविधायित्वव्यतिरेको दुर्दर्शन इत्यर्थः । स्वप्नावस्थे तु तद्व्यतिरेकस्सुदर्शनः, अत एव यद्यपीदं शरीरमन्धं भवति अनन्धस्स भवतीति स्वप्नावस्थमधिकृत्येन्द्रवाक्यमिति ध्येयम् । (तदभिप्रायानभिज्ञ इति) परिशुद्धात्मस्वरूपविषय-

शरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः" इति कर्मारब्धशरीरयोगिनस्तदनुगुणसुखदुःखभागित्वरूपानर्थं तद्विमोक्षे च तदभावमभिधाय "एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपे-

* श्रुतप्रकाशिका *

मुक्त्यवस्थोपदेशं दर्शयति ( एवमेवैष सम्प्रसाद इति ) एवमित्यादिकमुपाददानस्यायमभिप्रायः,– अस्माच्छरीरादित्यादिवाक्यस्य परोक्तार्थो दार्ष्टान्तिकवाक्याननुगुणत्वादिदोषविध्वस्त इति। तथाहि; शरीरात्समुत्थानं नाम श्रवणमननध्यानाभ्यासरूपविवेकः। स्वेन रूपेणाभिनिष्पत्तिर्नाम प्रपञ्चविलापको वृत्तिरूपसाक्षात्कारः, तेन परं ज्योतिर्भवति। उपसम्पद्येतिनिर्देशो मुखं व्यादाय स्वपितीतिवदिति केचिद्व्याचक्षते। तदयुक्तम्; समुत्थानशब्दस्य विवेकवाचित्वाभावात्. शरीरविषयो विवेक इति पञ्चमी न घटते, तस्य द्वितीयार्थत्वाभावात्। शरीरादात्मनो विवेकश्चेत् आत्मानमित्यध्याहारः, 'तयोर्ध्वमायन्नमृतत्वमेति' इत्यादिश्रुत्यन्तरैकार्थ्यप्रत्यभिज्ञाविरोधश्च। शरीराभिमानादुत्थानमिति चेत् शरीरशब्दस्य लक्षणा। शरीरादात्मन उत्थानं

* भावप्रकाशिका *

परमतात्पर्यानभिज्ञ इत्यर्थः। ( एवमित्यादिकमुपाददानस्येति ) 'एष सम्प्रसादः' इत्येतावन्मात्रमनुपादाय एवमेवैष सम्प्रसाद इति सादृश्यवाच्येवंशब्दोपक्रमं वाक्यमुपाददानस्येत्यर्थः। ( दार्ष्टिकान्तिकेति ) "अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परञ्ज्योति रुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति दृष्टान्तवाक्यम्। 'एवमेवैष सम्प्रसाद' इति दार्ष्टान्तिकवाक्यम्। ( मुखं व्यादाय स्वपितीति ) यथा व्यादानस्य स्वापानन्तरभावित्वेपि मुखं व्यादाय स्वपितीति निर्देशः तथा परञ्ज्योतिर्भावरूपोपसम्पत्तेः प्रपञ्चप्रविलापकवृत्तिरूपसाक्षात्काररूपाभिनिष्पत्त्यनन्तरभावित्वेपि परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत इति निर्देश उपपन्न इति भावः। विवेकः किं शरीरकर्मकः, उत आत्मकर्मकः? इति विकल्प्य दूषयति (शरीरविषय इत्यादिना) सिद्धान्तिनं भ्रान्तस्तटस्थश्चोदयति ( शरीरादात्मन उत्थानं विवक्षितं चेदित्यादिना ) न तु परेषां चोद्यमिति भ्रमितव्यम्। यदा च विवेकसाक्षात्कारश्शरीरात्समुत्थानम्; ननु शरीरा-

णाभिनिष्पद्यते" इति जीवात्मनः स्वरूपमेव शरीरवियुक्तमुपदिदेश । "स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा

* श्रुतप्रकाशिका *

विवक्षितं चेत् सशरीरस्य तत्सम्भवान्मोक्षस्य चाशरीरतालक्षणत्वादस्य वाक्यस्य मोक्षविषयत्वं न स्यादिति चेत्, अर्चिरादिमार्गगमनस्य सूक्ष्मदेहसापेक्षत्वात्तेन गतवत एव सवासनसर्वहेयप्रहाणाच्च मुख्यार्थपरत्वे सत्येव मुक्तिविषयत्वोपपत्तेः । ल्यबन्तपदस्याविवक्षितक्रमत्वं च क्लिष्टं गत्यभावद्योतकम् , 'सम्पद्याविर्भाव' इतिसूत्रविरोधश्च, न ह्याविर्भूय सम्पत्तिरिति सूत्रितम्. भेदप्रविलयातिरेकेण परज्योतिर्भावात्मकार्थान्तरासम्भवात् 'परं ज्योतिरुपसम्पद्ये'ति निर्देशवैयर्थ्यं च, परज्योतिर्भावो नाम न धर्मान्तरं निर्विशेषवस्तुन्युत्पद्यते न चाविर्भवति । ननु परज्योतिर्भावो नाम—अद्वितीयत्वम् , तेन निवर्तकज्ञानसद्वितीयत्वव्युदास इति चेन्न, सम्पत्तिशब्दस्येतरनिवृत्तिवाचित्वाभावात्। न हि घटो भवतीत्युक्ते दण्डचक्रादिद्वितीय-

* भावप्रकाशिका *

पादानकं गमनं तदा तत्सशरीरस्यापि सम्भवतीति वाचस्पतिना शरीरापादानकगमनं सशरीरस्य न सम्भवति, शरीरविवेकरूपं समुत्थानं तु शरीरे वसतोपि सम्भवतीति प्रतिपादनादिति द्रष्टव्यम ( सशरीरस्य तत्सम्भवादिति ) सूक्ष्मशरीरयुक्तस्यैव तत्सम्भवादित्यर्थः । ( मोक्षविषयत्वं न स्यादिति ) शरीरात्समुत्थायेत्यंशोऽपि मुक्तिकालविषय इति भ्रान्तस्येयं शङ्केति द्रष्टव्यम् । ( ल्यबन्तपदस्येति ) मुखं व्यादाय स्वपितीत्यादौ व्यादानानन्तरभाविस्वापमभिप्रेत्य व्यादाय स्वपितीत्युक्तिरुपपद्यते, प्रकृते तु ब्रह्मभावानन्तरं वृत्तिरूपसाक्षात्कारानवकाशात् ल्याप्रत्ययस्सर्वथानुपपन्न इति भावः ।(परज्योतिर्भावेति) परं कार्यत्वादिति निर्देशवत्साधुत्वं द्रष्टव्यम । परञ्ज्योतिर्भावे तु न दोष इति बोध्यम । ( निर्देशवैयर्थ्यं चेति ) अभिनिष्पद्यत इत्यनेनैव भेदप्रविलापकसाक्षात्कारो भवतीति सिद्धत्वाद्भेदप्रविलापकसाक्षात्कारे सति भेदप्रविलापस्याप्यनुक्तिसिद्धत्वादिति भावः ! इदञ्च भेदप्रविलापकत्वमप्यभिनिष्पद्यत इति शब्दार्थान्तर्गतमिति पक्षे दूषणम । ( सद्वितीयत्वव्युदास इति ) अभिनिष्पद्यत इत्येतावन्मात्रे कथिते निवर्तकज्ञानं द्वितीयमस्तीति शङ्का स्यात्.

* श्रुतप्रकाशिका *

निवृत्तिरुक्ता भवति । उपसम्पत्तेः सकर्मकत्वप्रतीतिस्वारस्यविरोधश्च; अस्य वाक्यस्यैवमर्थपरत्वे दृष्टान्तोपस्थापकपूर्ववाक्यविरोधश्च स्यात्, पूर्वं हि 'अशरीरं वा व सन्तं न प्रियाप्रिये स्पृशतः, इत्युक्त्वा 'अशरीरो वायुरभ्रं विद्युत् स्तनयित्नु'रिति वाय्वादीनां कर्मकृतशरीराभावेन प्रियाप्रियानन्वयं दर्शयित्वा 'तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते 'इत्युक्तम्। न हि वाय्वादीनामाकाशात्समुत्थानं नाम विवेकज्ञानरूपम्, अपि तु स्थितिवेलायां स्वकार्यकरणायोर्ध्वदेशेऽभिवृद्धिः । परशब्दो वाय्वादीनां कारणवस्तुवाची । ज्योतिश्शब्दस्तु कारणाना कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तः । वाय्यादीनि च स्वकारणद्रव्यमुपगम्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति, वायुर्ह्यावहप्रवहादिरूपेण सप्तविधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते, विद्युच्च विद्युत्त्वं हित्वा तेजस्त्वेन, अभ्रस्तनयित्नू चाभ्रत्वादिप्रहाणेन स्वकारणभूतरूपेण, एवं जीवश्च मार्गविशेषेण गत्वा परं ब्रह्म प्राप्य संसार्यवस्थाप्रहाणेन परमात्मतुल्यरूपेणाविर्भवतीत्येवमर्थे सति हि दृष्टान्तदार्ष्टान्तिकवाक्यसामञ्जस्यं भवति। अस्य वाक्यस्य सुषुप्तिविषयत्वेऽप्युक्तदूषणानतिवृत्तिरनुसन्धेया। यतः अस्माच्छरीरादितिवाक्यं न मुक्तस्य जीवस्य स्वरूपैक्यप्रतिपादकम्, अत एव 'नासम्भवा'दितिसूत्रकारेण भेदनिर्देशो न जीवपरयोर्वास्तवभेदाभिप्रायः, अपि तु व्योम्नि मालिन्यादिकमिव परस्मिन्नविद्याकल्पितजीवभावमपनेतुं जीवस्वरूपवैलक्षण्याभिप्राय इतीदमपि निरस्तम् । जैवं स्वरूपमपनिनीषोर्भेदनिर्देशे किं फलम्? यावद्भेदनिर्देशेन ईश्वरस्यासंसारित्वमप्रतिपन्नम्, न तावत्तदैक्यापत्तिः पुरुषार्थः स्यात्;

ᎏ भावप्रकाशिका ᎏ

सा मा विज्ञायीति निवर्तकज्ञानकृतसद्वितीयत्वमपि परञ्ज्योतिरुपसम्पद्येत्यनेन निरस्त इत्यर्थः । ( सकर्मकत्वप्रतीतिस्वारस्येति ) परं ज्योतिरुपसम्पद्येति उपसम्पत्तिशब्दस्याकर्मकभवत्यर्थपरत्वमयुक्तमित्यर्थः ( कर्मकृतेति ) अचेतनानां वाय्वादीनां कर्माभावादिति भावः । ( स्वकार्यकरणायेति ) प्रावृट्काले वर्षायोच्छूनानि भूत्वेत्यर्थः 'अन्यार्थश्च परामर्श' इति सूत्रे एष सम्प्रसाद इत्यादिकं सुषुप्त्यवस्थात्मविषयतया परैर्व्याख्यातम् । तदपि निराकरोति ( अस्य वाक्यस्येति ) ( जीवस्वरूपवैलक्षण्याभिप्राय इति ) सूत्रकारेण भेदनिर्देश इति योजना । संसारिणो

नोपजनं स्मरन्निदं शरीरम्" इति प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वम् निवृत्ततिरोधानस्य परं ज्योतिरुपसम्पन्नस्य प्रत्यगात्मनो ब्रह्मलोके यथेष्टभोगावाप्तिं

* श्रुतप्रकाशिका *

मतस्तद्रूपापत्तेः पुरुषार्थत्वाय तस्यासंसारित्वप्रतिपत्तये भेदनिर्देश इति चेत्, तर्हि पश्चाद्विकल्पितेनैक्यावबोधनेन तस्य संसारितया तदैक्यापत्तेरपुरुषार्थत्वं को वारयेत्? अविद्यानिवृत्तौ तत्कल्पितापुरुषार्थत्वं निवर्तत इति चेत् पुरुषार्थत्वप्रतिपत्तेर्जीववैलक्षण्यप्रतिपत्तिमूलकत्वाद्वैलक्षण्यस्याविद्यानिवृत्तौ निवृत्तेः पुरुषार्थत्वप्रतिपत्तिरपि निवर्तेत, अनभिरूपे अभिरूपताबुद्धौ निवृत्तायां तस्मिन् स्पृहणीयताबुद्धिनिवृत्तिवत्, ततश्च तद्भावापत्तिरपुरुषार्थ एव स्यात्। किञ्च ऐक्यमुपदिदिक्षोर्भेदवादमुखेन असंसारित्वं दर्शयतः प्रतारकत्वं च स्यात्। भेदवादोऽनुवादरूपः प्रतिषेधार्थः किंवत इतीदमत्यन्तमयुक्तम्, जीवपरयोर्नियन्तृनियाम्यतादिलक्षणभेदस्यालौकिकत्वात् अतः श्रुतिसूत्राणामञ्जस्यमेव मृषावादिनां स्थितम्। स उत्तमः पुरुष इतिशब्देन परमात्मपरत्वशङ्कायां तत्परिहारायाह (प्राप्यस्य परस्य ज्योतिषः पुरुषोत्तमत्वमिति) जीवस्य प्राप्यतया पुरुषोत्तमप्रसङ्गः, न तु प्रकरणप्रतिपाद्यतयेति भावः। स उत्तमः पुरुष इति यदुपसम्पद्यते स उपसदनीयः पुरुषः उत्तमः पुरुष इति यदुपसम्पद्यते स उपसदनीयः पुरुष उत्तम इत्यर्थः। स तत्र पर्येतीति। सः—उपसम्पत्ता। तत्र—परमात्मनि। पर्येति—तं परितोऽनुभवति। यद्वा अनुसञ्चरति 'कामरूप्यनुसञ्चरन्' 'येन येन धाता गच्छती'ति श्रुत्यन्तरात्। ननु य उपसम्पद्याभिनिष्पद्यते स उत्तमः पुरुषः इति युक्तम्, तच्छब्देन प्रथमानिर्दिष्टप्रकृतपरामर्शस्वारस्यात् 'स तत्र पर्येती'त्यनन्तरवाक्यस्य प्रथमान्ततच्छब्देनैकार्थत्वप्रतीतेश्च। नैवम्, उपसम्पत्तव्यस्यापि प्रकृतत्वात्

* भावप्रकाशिका *

जीवाद्भेदोक्त्या यावदीश्वरस्यासंसारित्वं नोच्यते तावद्भेदव्यपदेशेपि जीवस्यासंसारित्वं न सिध्येदित्यापतितं भेदं सूत्रकारो न वदतीत्यानन्दगिरिणोक्तमाह (यावद्भेदव्यपदेशेनेत्यादिना) (अविद्यानिवृत्ताविति) जीववैलक्षण्यप्रतिपत्तिमूलपुरुषार्थत्वप्रतिपत्त्या अपुरुषार्थत्वकल्पकाविद्यानिवृत्तावपुरुषार्थत्वमपि निवर्तते, अतो भेदनिर्देशस्य सार्थकत्वमिति भावः। (प्राप्यतया पुरुषोत्तमप्रसङ्ग इति)

प्रियाप्रियाावियुक्तकर्मनिमित्तशरीराद्यपुरुषार्थाननुसंधानं चाभिधाय "स यथा प्रयोग्य आचरणे युक्त एवमस्मिन् शरीरे प्राणो युक्तः" इति यथोक्तस्वरूपस्यैव संसारदशायां कर्मतन्त्रं शरीरयोगं युग्यशकटयोग-

* श्रुतप्रकाशिका *

प्रथमानिर्दिष्टेतरविषयत्वे तच्छब्दस्वारस्याभावेऽप्युत्तमपुरुषशब्दयोरुभयोरपि स्वारस्याच्च । न ह्युत्तमपुरुषशब्दो जीवेश्वरसाधारणः, पुरुषत्वमपि हि भगवत्येव स्वरससिद्धम्, केवल एकवचनान्तः पुरुषशब्दोऽपि हि भगवत्येव स्वरसः, "कुत उत्तमपुरुषशब्दः 'उत्तमः पुरुषस्त्वन्यः'" इति स्मृत्यर्थस्य झटिति प्रत्यभिज्ञानाच्च । एवञ्च सति स तत्रेति सप्तम्यन्ततच्छब्दस्याव्यवहितोत्तमपुरुषपरामर्शित्वं च स्यात्, न तु व्यवहितपरज्योतिः परामर्शास्वारस्यम् । ननु स उत्तमः पुरुष इति मुक्तस्य ब्रह्मात्मकत्वपरं स्यात् तदा तच्छब्दस्वारस्यं च स्यात्, प्रकृताप्रहाणात् । नैवम्, स तत्रेत्यनन्तरवाक्ये स इतिपदस्य वैयधिकरण्येन जीवपरामर्शे रीतिभेदेनास्वारस्यापातात्, तदपि पदं समानाधिकरणमस्त्विति चेन्न, तत्रेति परमात्मनो वैयधिकरण्येनोपादानात् । तत्रेतिपदस्य स्वस्मिन्नित्यर्थोऽपि क्लिष्टः, अतो यथोक्तार्थविषयं 'स उत्तमः पुरुष' इति वाक्यम् । नोपजनं स्मरन्नित्यस्यार्थमाह ( प्रियाप्रियेति ) अनुभूतस्य हि

* भावप्रकाशिका *

जीवप्रकरणे पुरुषोत्तमप्रतिपादनं प्रासङ्गिकमिति भावः । ( प्रथमानिर्दिष्टेति ) प्रथमानिर्दिष्टपरामर्शे विभक्त्यैकरूप्यसद्भावात्, अत एव 'प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्च्छत्' इत्यत्र प्रथमान्ततच्छब्दस्य विभक्त्यैकरूप्येण प्रजापतिपरामर्शित्वमिति भावः । ( ब्रह्मात्मकत्वपरं स्यादिति ) स इत्यस्य तच्छरीरकपरमात्मपरत्वमस्त्वित्यर्थः । ( प्रकृताप्रहाणादिति ) प्रथमानिर्दिष्टसम्प्रसादाप्रहाणादित्यर्थः । ( वैयधिकरण्येनेति ) उत्तमपुरुषपर्यन्तत्वमन्तरेण जीवमात्रपरामर्श इत्यर्थः । ( समानाधिकरणमस्त्विति चेदिति ) स तत्र पर्येतीत्यत्रापि प्रथमान्ततच्छब्दस्योत्तमपुरुषपर्यन्तत्वमेव, एवञ्च न रीतिभेद इति भावः । ( नोपजनं स्मरन्नित्यस्येति ) स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्यपुरुषार्थत्वस्यैवोपजनशब्दार्थत्वादिति भावः । ननु स्मरणे को दोष इत्यत आह ( अनुभूतस्य हीति )

दृष्टान्तेनाभिधाय "अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः" इति चक्षुरादीनां करणत्वं रूपादीनां ज्ञेयत्वमस्य च ज्ञातृत्वं प्रदर्श्य तत एव शरीरेन्द्रियेभ्योऽस्य व्यतिरेकमुपपाद्य "स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते य एते ब्रह्मलोके" इति तस्यैव विधूतकर्मनिमित्तशरीरेन्द्रियस्य मनश्शब्दाभिहितेन दिव्येन स्वाभाविकेन ज्ञानेन सर्वकामानुभवमुक्त्वा "तं वा एतं

* श्रुतप्रकाशिका *

स्मरणम्, पूर्वम् अब्रह्मात्मकतया दुःखात्मकत्वेन ह्यनुभूतम्; न तथा स्मरति, कृत्स्नस्य भगवदात्मकत्वेन अनुभाव्यत्वादित्यर्थः। प्रयोग्यः- युग्यः। आचरणं शकटम्। 'अथ यत्रैतत्' इत्यादिश्रुतेरर्थमाह (चक्षुरादीनामिति) आकाशम्. प्रकाशकम्—आलोकादिप्रकाशमानं रूपं वा, प्रकाशयति यस्स चाक्षुषः, चक्षुरुपकरणकः। तत्फलितमर्थमाह (तत एवेति) (इति चादिर्नीति) एतदुक्तं भवतीत्यनेनान्वयः "आवि-

* भावप्रकाशिका *

आकाशशब्दं प्रकाशकालोकादिपरतया व्याख्याय, प्रकाशमानरूपपरतया व्याचष्टे (प्रकाशमानं रूपं वेति) पक्षद्वयेपि प्रकाशयतीतिपदमध्याहरन् योजयति (प्रकाशयतीति) ततश्च यत्रोपकरणत्वेनानुविषण्णं चक्षुराकाशस्यालोकं रूपं वा प्रकाशयति. स चाक्षुषः चक्षुरुपकरणकः पुरुष आत्मा, चक्षुरुपकरणकमुद्दिश्यात्मत्वं विधेयम्, स आत्मा गन्धाय घ्राणमित्याद्युत्तरवाक्यसारूप्यात्, इयं च भङ्गी सम्प्रतिपन्नसर्वप्रकाशकभावालोकप्रकाशकचक्षुरुपकरणत्वमेवात्माति-

देवा आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आप्ताः सर्वे च कामाः" इत्येवंविधमात्मानं ज्ञानिनो जानन्तीत्यभिधाय "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच" इत्येवंविधमात्मानं विदुषस्सर्वलोकसर्वकामावाप्त्युपलक्षितं ब्रह्मानुभवं फलमभिधायोपसंहृतम्; अतस्तत्रापहतपाप्मत्वादिगुणको ज्ञातव्यतया प्रक्रान्तो जीव एवेत्यवगतम्; अतो जीवस्यापहतपाप्मत्वादयस्सम्भवन्ति; अतो दहरवाक्यशेषे श्रूयमाणस्य जीवस्यापहतपाप्मत्वादिगुणसम्भवात्स एव दहराकाश इति निश्चीयत इति चेत—इति ॥

तत्राह– आविर्भूतस्वरूपस्त्विति । पूर्वमनृततिरोहितापहतपाप्मत्वादिगुणकः स्वस्वरूपः पश्चाद्विमुक्तकर्मबन्धः शरीरात्समुत्थितः परं ज्योतिरुपसम्पन्नः आविर्भूतस्वरूपस्सन्नपहतपाप्मत्वादिगुणविशिष्टस्तत्र

* श्रुतप्रकाशिका *

भूतस्वरूप" इति सूत्रखण्डं व्याचष्टे ( आविरिति ) तुशब्दसिद्धमर्थमाह ( आविर्भूतस्वरूपस्यापीति ) आविर्भूतस्वरूपस्य प्रजापतिवाक्योक्तत्वात् दहराकाशस्य स्वत एवापहतपाप्मत्वादिप्रतिपादनात्तच्छरीरान्तस्स्थितस्यैव गुणाष्टकप्रतिपादनान्मुक्तेष्वसम्भादितिसर्वलोकविधरणादिश्रुतेश्च दहराकाशः परं ब्रह्मेत्यर्थः ॥ .... ....

ɸ भावप्रकाशिका ɸ

रायद्योतनार्थो ।भाष्ये– ज्ञानिनो जानन्तीत्यभिधायेति । अत्र 'तं वा एतं देवा आत्मानमुपासत इति देवशब्दार्थमभिप्रेत्य इत्युक्तम् ॥ .... .... ....

प्रजापतिवाक्येऽभिधीयते ; दहरवाक्ये त्वतिरोहितस्वभावापहतपाप्मत्वादिविशिष्ट एव दहराकाशः प्रतीयते । आविर्भूतस्वरूपस्यापि जीवस्यासम्भावनीयास्सेतुत्वसर्वलोकविधरणत्वादयस्सत्यशब्दनिर्वचनावगतं चेतनाचेतनयोर्नियन्तृत्वं दहराकाशस्य परब्रह्मतां साधयन्ति । सेतुत्वसर्वलोकविधरणत्वादय आविर्भूतस्वरूपस्यापि न सम्भवन्तीति [1]"जगद्व्यापारवर्जम्" इत्यत्रोपपादयिष्यामः ॥ १८ ॥

यद्येवं दहरवाक्ये [2]"अथ य एष सम्प्रसादः" इत्यादिना जीवप्रस्तावः किमर्थ इति चेत्तत्राह—

अन्यार्थश्च परामर्शः ॥ १९ ॥

दहराकाशस्यैवापहतपाप्मत्वजगद्विधरणत्वादिवन्मुक्तस्य तदुपसम्पत्त्याऽपहतपाप्मत्वादिकल्याणगुणविशिष्टस्वाभाविकरूपप्राप्तिकथनेन तद्धेतुत्वरूपं परमपुरुषासाधारणं गुणमुपदेष्टुं प्रजापतिवाक्योक्तस्य जीवस्यात्र परामर्शः । प्रजापतिवाक्ये च मुक्तात्मस्वरूप-

* श्रुतप्रकाशिका *

उत्तरसूत्रशङ्कामाह ( यद्येवमिति ) ( किमर्थ इति, ) दहरवाक्ये जीवप्रस्तावो न प्रष्टृप्रतिवक्तृभावेन, तथा श्रवणाभावात्. नाप्युपासनविषयतया, दहरविद्यायामुपासनविध्यन्तराभावात् ; अतः प्रकृतोपासनकर्मत्वेनैव जीवपरामर्शः, अन्यथा तत्प्रतिपादनवैयर्थ्यात् ; प्रकृतोपासनकर्मत्वे च दहराकाशो जीवः स्यादित्यभिप्रायः । ॥ अन्यार्थश्च परामर्शः ॥ दहरविद्यैव मोक्षोपायश्चेत्कथं जीवोपासनविधिः ? कथं च तस्य फलकथनम् ? इत्यत्राह ( प्रजापतिवाक्ये चेति ) परमात्मोपासने परस्य रूपं

१ शारी. ४-४-१७ ॥ | २ छा ८-३-४ ॥

याथात्म्यविज्ञानं दहरविद्योपयोगितयोक्तम्; ब्रह्म प्रेप्सोर्हि जीवात्मनः स्वस्वरूपं च ज्ञातव्यमेव स्वयमपि कल्याणगुण एव सन्ननवधिकातिशयासङ्ख्येयकल्याणगुणगणं परं ब्रह्मानुभविष्यतीति ब्रह्मोपासनफलान्त-

* श्रुतप्रकाशिका *

हि वेद्यम्, तत्कथमनुपास्यजीवात्मविज्ञानोपयोगः? इति शङ्कायां तदुपयोगित्वमुपपादयति (ब्रह्मप्रेप्सोरिति) ब्रह्मणः प्रेप्सितव्यत्वे जीवात्मस्वरूपस्य कथं ज्ञातव्यत्वमित्यत्राह (स्वयमपीति) प्राप्यान्तर्भावात्तस्य ज्ञातव्यत्वम्; अतस्तज्ज्ञानं दहरविद्योपयोगीत्यर्थः। ननु तर्हि विशेषणतयोपास्यत्वाज्जीवस्य ज्ञातव्यत्वे वक्तव्ये प्राप्यान्तर्भावात् ज्ञातव्यतोक्तिः किंनिबन्धना? उच्यते; "आत्मेति तूपगच्छन्ति" इति वक्ष्यमाणस्य जीवात्मवेदनस्य प्राप्यान्तर्भावनिबन्धनत्वं हि 'व्यतिरेकस्तद्भावभावित्वा'दित्यत्र वक्ष्यते, तस्मादिति। ननु जीवात्मज्ञानं दहरविद्याङ्गं चेत् कथं पृथक्फलकीर्तनम्? "फलवत्सन्निधावफलं तदङ्गम्" इति हि न्याय इत्यत्राह

ᛃ भावप्रकाशिका ᛃ

(अनुपास्यजीवविज्ञानेति) परमात्मन एव मोक्षधर्मोपासनकर्मतया जीवोपासनस्य कोपयोग इति भावः। एवमुत्तरत्रापि ज्ञानपदमुपासनपरं द्रष्टव्यम्। (ननु तर्हीति) विशेषणतया जीवोपासनविधानादेव जीवस्योपास्यत्वे वक्तव्ये प्राप्यान्तर्भावरूपयुक्तिबलादुपास्यत्वकथनं किमर्थमित्यर्थः। (उच्यत इति) सूत्रकृता तथा प्रतिपादितत्वात् सैव रीतिर्भाष्यकृतानुसृतेति भावः। 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इतिसूत्रस्यायमर्थः, परमात्मानमुपास्यमात्मत्वेनोपगच्छन्ति पूर्वे उपासितारः शास्त्राणि च तथैव ग्राहयन्तीति। (व्यतिरेकस्तद्भावभावित्वादिति) तत्र ह्यात्मेति तूपगच्छन्तीत्यधिकरणसिद्धं जीवोपास्यत्वमङ्गीकृत्य किं कर्तृत्वादिविशिष्टं सांसारिकं स्वरूपमुपास्यम्, उत तद्व्यतिरिक्तो वा? इति विशये कर्तृत्वादिविशिष्टमेव रूपमनुसन्धेयम्, शरीरे वर्तमानस्योपासितुरात्मनस्तथाभावादित्येके मन्यन्ते इति। 'एक आत्मनश्शरीरे भावात्' इति सूत्रेण पूर्वपक्षं कृत्वा सांसारिकरूपव्यतिरेक एवानुसन्धेयः, तथासत्येव तत्क्रतुन्यायेन तादृशात्मस्वरूपरूपफलप्राप्तेर्भावित्वादिति 'व्यतिरेकस्तद्भावभावित्वात्' इतिसूत्रेण सिद्धान्तितमित्यर्थः।

गतत्वात्स्वस्वरूपयाथात्म्यविज्ञानस्य। "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" "स तत्र पर्येति जक्षन् क्रीडन्" इत्यादिकं प्रजापतिवाक्ये कीर्त्यमानं फलमपि दहरविद्याफलमेव ॥ १९ ॥

अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २० ॥

"दहरोऽस्मिन्" इत्यल्पपरिमाणश्रुतिराराग्रोपमि-

* श्रुतप्रकाशिका *

(सर्वांश्चेति) अङ्गिनः फलमेवाङ्गे कथितमित्यर्थः ॥ अनेन सूत्रेण उपसंहारगतहेतुः प्रत्युक्तः। अथोपक्रमगतं हेतुं प्रतिवक्ति -- ॥अल्पश्रुतेरिति चेत्तदुक्तम्॥ "अर्भकौकस्त्वा"दित्यस्य सूत्रस्य विषयवाक्ये 'सर्वं खल्वि'त्यादौ 'अणीयान्व्रीहेर्वा यवाद्वे'ति वाक्यं नोपक्रमस्थम्, उपक्रमे हि तत्र सर्वात्मत्वमवगतम्; आकाशात्मत्वञ्च उपसंहारे च ज्यायस्त्वमवगतम्; अतोऽल्पश्रुतिस्तदनुरोधेन वर्णितेति युक्तम्. दहरविद्यायां तूपक्रम एव अल्पत्वं श्रुतमिति तदनुरोधेन 'यावान्वा अय'मित्यादिकं नेयम्, उपसंहारे च जीवपरामर्शस्तदुत्तम्भक इत्यधिकाशङ्का। आकाशोपमानत्वस-र्वाधारत्वनिरतिशयभोग्यत्वनिरुपाधिकगुणाष्टकगतिशब्दविधरणत्वफलविशेषपरम-

॥ भावप्रकाशिका ॥

( अङ्गिनः फलमेवेति ) ननु प्रजापतिविद्यायास्तदङ्गत्वे दहरब्रह्मविद्याधिकृतायैवोपदेष्टव्या स्यात्, उपकोसलविद्याङ्गभूताग्निविद्यावत्. प्रकृते च दहरब्रह्मविद्यावि-धुरायेन्द्रायोपदिश्यमानेयं विद्या न ब्रह्मविद्याङ्गं भवितुमर्हतीति चेन्न, प्रजापति-वाक्यस्य 'एष सम्प्रसादः' इति दहरविद्यावाक्यान्तर्गतसम्प्रसादशब्दार्थशोधनार्थं प्रवृत्ततया तदेकवाक्यत्वेन तादर्थ्ये सिद्धे इन्द्रस्यापि दहरविद्या पश्चादुपदिष्टत्येवावगम्यत इति न कश्चिद्दोषः ॥ दहर उत्तरेभ्य इति सूत्रार्थमभिप्रयन्नाह ( आकाशोपमानत्वेत्यादिना --गुणाष्टकान्वयेनेन ) गतिशब्दाभ्यामिति सूत्रार्थमभिप्रयन्नाह ( गतिशब्देति ) धृतेश्चेति सूत्रार्थमभिप्रयन्नाह ( विधरणत्वेति ) अन्यार्थश्च परामर्श इति सूत्रार्थमभिप्रयन्नाह ( फलविशेषेति ) आकाशोपमानादिः फलविशेषान्तो द्वन्द्वः, एतावदर्थपरं यन्महावाक्यं तस्यास्वारस्यदर्शनादित्यर्थः। ननु मा भूदर्भकौ-

तस्य जीवस्यैवोपपद्यते, न तु सर्वस्माज्ज्यायसो ब्रह्मण इति चेत्, तत्र यदुत्तरं वक्तव्यं तत्पूर्वमेवोक्तम् [१]"निचाय्यत्वादेवम्" इत्यनेन । अतो दहराकाशोऽनाघ्राताविद्याद्यशेषदोषगन्धस्स्वाभाविकनिरतिशयज्ञानबलैश्वर्यवीर्यशक्तितेजःप्रभृत्यपरिमितोदारगुणसागरः पुरुषोत्तम एव । प्रजापतिवाक्यनिर्दिष्टस्तु [२]"घ्नन्ति त्वेवैनं

* श्रुतप्रकाशिका *

हावक्यस्वारस्यदर्शनाज्जीवपरामर्शकोपसंहार एव परमात्मनिर्देशमिश्रत्वाच्च परनिर्देशमिश्रोपसंहारस्योत्तम्भकत्वायोगादुपक्रममात्रं महावाक्यस्वारस्यबाध्यमित्यधिकः परिहारः । उपसंहारे जीवपरामर्शात् परमात्मनिर्देशमिश्रतया परिहाराच्च 'प्राणस्तथाऽनुगमा'दित्यधिकरणाद्वैषम्यम् । एवमुपक्रमोपसंहारगतहेतुनिरसनानन्तरं वक्ष्यमाणयोःसूत्रयोः परमप्रकृतार्थेन सङ्गतिः, न त्ववान्तरार्थविशेषेणेति दर्शयितुं परमप्रकृतदहराकाशस्यार्थविरोधेन जीवादन्यत्वं स्फुटयति (अतो दहरेति) यद्वा, इह वाक्यशेषसहकृताल्पत्वश्रुतेरल्पत्वं स्वाभाविकमित्यधिकाशङ्का, न हि शाण्डिल्यविद्यायां वाक्यशेषसहकृताल्पत्वश्रुतिः । प्रकरणरूपवाक्यशेषापेक्षयाऽपहतपाप्मत्वादिलिङ्गं प्रबलमित्यधिकः परिहारः । वस्तुसामर्थ्यं दर्शयति (अनाघ्रातेत्यादिना)

* भावप्रकाशिका *

कस्त्वादित्यतो गतार्थत्वम्, अथाप्युपक्रममात्रस्य महावाक्यस्वारस्यबाध्यत्वं प्राणस्तथानुगमादित्यत्रैव सिद्धमिति तेन गतार्थता स्यादेवेत्याशङ्क्याह (उपसंहारे जीवपरामर्शादिति) ननु यद्युपसंहारे जीवपरामर्शे सत्यपि प्रक्रमस्थस्य महावाक्यस्वारस्येन बाधः, तर्हि प्राणस्तथानुगमादित्यधिकरणपूर्वपक्षो दण्डापूपन्यायहतः स्यादिति चेन्न; प्रक्रमश्रुतजीवमुख्यप्राणलिङ्गानां दहरत्वादिवदनन्यथासिद्धतया अनेनापि तस्य गतार्थत्वाभावादिति भावः । अर्भकौकस्त्वादित्यपेक्षया प्रकारान्तरेणाधिकाशङ्कापरिहारौ सिंहावलोकितकेन दर्शयति (यद्वा इह वाक्यशेषेति) आधिक्यमेव दर्शयति (नहि शाण्डिल्यविद्यायामिति)॥

१ शारी १-२-७ ॥ | २ छां ८-१०-२ ॥

विच्छादयन्ति" इत्येवमादिभिरवगतकर्मनिमित्तदेह-परिग्रहः पश्चात्परञ्ज्योतिरुपसम्पद्याविर्भूतापहतपाप्म-त्वादिगुणस्वस्वरूप इति न दहराकाशः ॥ २० ॥

इतश्चैतदेवम्-

अनुकृतेस्तस्य च ॥ २१ ॥

तस्य-दहराकाशस्य परस्य ब्रह्मणः, अनुकारात्-अयमपहतपाप्मत्वादिगुणको विमुक्तबन्धः प्रत्यगात्मा न दहराकाशः। तदनुकारः- तत्साम्यम्। तथा हि

* श्रुतप्रकाशिका *

अत्र ज्ञानशक्त्यादयस्सत्यसङ्कल्पत्वफलितत्वादुक्ताः ॥ एवमुपक्रमोपसंहारनिर्वाहः प्रमाणान्तरेण परमात्मात्मनोरपहतपाप्मत्वादीनां स्वाभाविकत्वास्वाभाविकत्वे सिद्धे सूपपद्यते, अन्यथा "अनुक्तमन्यतो ग्राह्यम्" इति न्यायाद्दहरवाक्येऽपि मुक्तावस्थस्य गुणाष्टकान्वयो विवक्षितः स्यादिति शङ्कायामाह- ॥ अनुकृतेस्तस्य च ॥ अतथाभूतस्य तथाभावाभिप्रायशङ्काप्रतिक्षेपार्थमाह (तदनुकारस्तत्साम्यमिति) तद्वृत्ति-

* भावप्रकाशिका *

(अतथाभूतत्वेति) नटस्य रामाद्यनुकारित्ववन्न भवतीत्यर्थः। ननु दहराकाशो जीव इति वदन्तं प्रति दहराकाशो न जीवः, जीवस्य दहराकाशानुकर्तृत्वादि-त्युक्तिर्न सम्भवति, जीवस्य दहरानुकर्तृत्वे प्रमाणाभावात्। नच यदा पश्य इति वाक्यात्तदनुकारसिद्धिः, तावता जीवस्य परमात्मानुकर्तृत्वेऽपि दहरानुकर्तृत्वासिद्धेः। नहि दहरस्य परमात्मत्वमद्यापि सम्प्रतिपन्नम्; तथात्वे विवादापर्यवसानादिति चेद्भ्रान्तोऽसि, नह्यस्मिन् सूत्रे जीवस्य दहरानुकर्तृत्वं हेतूक्रियते, येन तदसिद्धि-माशङ्क्येत; अपितु 'यदा पश्यः पश्यते रुक्मवर्णम्' इति श्रुतौ जीवस्य परमा-त्मोपासनायत्ततदनुकारश्रवणात्र नित्याविर्भूतगुणकत्वम्, परस्य तु नित्याविर्भूत-गुणकत्वमिति, स एव दहरवाक्ये परामर्शार्ह इति। 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' इतिसूत्रार्थ एव स्थिरीक्रियते, अत एव श्रुतप्रकाशिकायाम् 'एवमुपक्रमोपसंहारनि-र्वाहः प्रमाणान्तरेण परमात्मात्मनोरपहतपाप्मत्वादीनां स्वाभाविकत्वास्वाभाविकत्वे-

प्रत्यगात्मनो विमुक्तस्य परब्रह्मानुकारः श्रूयते[1] "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमसाम्यमुपैति" इति । अतोऽनुकर्ता प्रजापतिवाक्यनिर्दिष्टः । अनुकार्यं ब्रह्म दहराकाशः ॥ २१ ॥

अपि स्मर्यते ॥ २२ ॥

संसारिणोऽपि मुक्तावस्थायां परमसाम्यापत्तिलक्षणः परब्रह्मानुकारस्स्मर्यते[2] "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" इति ॥ केचित् "अनुकृतेस्तस्य च" "अपि स्मर्यते"

* श्रुतप्रकाशिका *

रिहानुकारो विवक्षितः, तेन तन्मूलभूतं गुणसाम्यमपि लक्षितं भवति । सारे तु 'स्वच्छन्दवृत्तिरूपस्तदनुकारः श्रूयते' इत्युक्तिर्गुणसाम्योपलक्षणार्था ॥ अपि स्मर्यते ॥ 'साम्यमुपैति' इत्युक्ते केन धर्मिणा साम्यमित्यपेक्षापूरणार्थं 'मम साधर्म्यमागताः' इति वचनमुपात्तम् । परैः कृतमधिकरणभेदमनूद्य दूषयति (केचिदित्यादिना)

❀ भावप्रकाशिका ❀

सिद्धे ह्युभयोः । अन्यथा 'अनुक्तमन्यतो ग्राह्यम्' इति न्यायाद्दहरवाक्येपि मुक्तावस्थस्य गुणाष्टकाविर्भावो विवक्षितः स्यादिति शङ्कायामाहेति ' इदं सूत्रमवतारितम् ॥

(परैः कृतमधिकरणभेदमिति) 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति मुण्डकवाक्यप्रतिपाद्यो न परमात्मा, सूर्याद्यभिभावकत्वदर्शनात्, सूर्यादितेजसां तदनुभानश्रवणाच्च । तेजोविशेष एव, तेज एव हि तेजोन्तरमभिभवतीति दृष्टम् । तथानुभानं च सजातीयस्यैवोपपद्यते; अत एव हि 'वराहं गावोऽनुधावन्ति' इत्यत्र गवां स्वसदृशसूकरानुधावनं युज्यते, न तु वायसानुधा-

[1] मु. ३-१-३ ॥ [2] गीता. १४-२ ॥

इति सूत्रद्वयमधिकरणान्तरं [1]"तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इत्यस्याः श्रुतेः परब्रह्मपरत्वनिर्णयाय प्रवृत्तं वदन्ति । तन्न [2]"अदृश्यत्वादिगुणको धर्मोक्तेः" [3]"द्युभ्वाद्यायतनं स्वशब्दात्" इत्यधिकरणद्वयेन तस्य प्रकरणस्य परब्रह्मविषयत्वप्रतिपादनात् [4]"ज्योतिश्चरणाभिधानात्" इत्यादिषु परस्य ब्रह्मणो भारूपत्वावगतेश्च पूर्वपक्षानुत्थानादयुक्तम् ; सूत्राक्षरवैरूप्यं च ॥ २२ ॥

* श्रुतप्रकाशिका *

भारूपत्वश्रवणात् प्राकृतज्योतिष्ट्वशङ्कानिवृत्त्यर्थमधिकरणारम्भो युक्त इत्यत्राह ( ज्योतिश्चरणाभिधानादित्यादिष्विति ) एकप्रकरणस्यानेकाधिकरणनिरूप्यत्वं अधिकाशङ्कायां सत्यामुचितम्, अत्र तदभावादयुक्तमित्यभिप्रायः । हेत्वन्तरमाह ( सूत्राक्षरेति ) अनुकृतिरनुभानमिति हि परैरुक्तम् , तदयुक्तम्; करोतिभात्योरेकार्थत्वाभावात् । तस्य चेति श्रुतिप्रतीकोपादानमित्युक्तम् , तदप्ययुक्तम् ; यदेव विद्ययेति हीतिवदितिकरणाभावात् । तस्यानुकृतेरित्यन्वयस्वारसिकेऽपि तत्प्रहाणेनार्थवर्णनं च क्लिष्टम् । यादवप्रकाशीये तु अनुकृतिः अनुशब्दस्य करणमित्युक्तम् ।

५ भावप्रकाशिका ५

भानमित्युक्तमिति पूर्वपक्षं कृत्वा तमेव भान्तमित्यत्र किमलौकिकं तेजः कल्पयित्वा तदनुभानं सूर्यादीनां परिकल्प्यम्, उत भारूपस्सत्यसङ्कल्प इति प्रसिद्धब्रह्मणो भानेन सूर्यादीनामनुभानं कल्प्यम् ? इति विशये श्रुतिप्रसिद्धब्रह्मणस्सम्भवे अप्रसिद्धतेजोन्तरकल्पनाया अयुक्तत्वात् ब्रह्मैव प्रतिपाद्यते, अनुकृतिरनुभानम् . श्रुतिप्रतीकोपादानरूपस्सौत्रप्रयुक्तस्तच्छब्दश्च 'तस्य भासा सर्वमिदं विभाति' इति श्लोकचतुर्थपादं सूचयति । ततश्च सौत्रतच्छब्दसूचितश्लोकचतुर्थपादप्रतिपाद्यसर्वप्रपञ्चभासकत्वं चैतन्यप्रभया स्वाभ्यन्तरसमस्तप्रपञ्चभासके परमात्मन्येवोपपद्यत इति स एव प्रतिपाद्य । 'न तत्र सूर्यो भाती'त्यस्य च 'न तद्भासयते सूर्यो न शशाङ्को नापि पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥" इति स्मृत्य-

१ मु-२-२-१० ॥ २ शा-१-२-२२ ॥ ३ शा-१-३-१ ॥ ४ शा-१-१-२५ ॥

* श्रुतप्रकाशिका *

तदयुक्तम्; यथा "स्वं रूपं शब्दस्याशब्दसंज्ञा' इति परिभाषासिद्धं व्याकरणे शब्दस्वरूपोपादानम्, एवमस्मिन् शास्त्रे परिभाषाया अभावात् शब्दस्वरूपविवक्षायामितिकरणस्य दर्शितत्वाच्च। "अन्तस्तद्धर्मोपदेशात्" "आकाशस्तल्लिङ्गात्" इत्यादिष्विव प्रतिज्ञाखण्डाभावः, चशब्दवैयर्थ्यं चेति दूषणद्वयं सर्वसाधारणमभिप्रेतम् ॥ दहराकाशो भूताकाशः, तदन्तर्वर्ती जीव इति पूर्वपक्षं कृत्वा दहराकाशः परमाकाशः, तदन्तर्वर्ती परमात्मेति सिद्धान्तितम्। तत्र तावत्पूर्वपक्षस्थितिरनुपपन्ना, भूताकाशान्तर्वर्तित्वस्य जीवासाधारणत्वाभावात्। "यस्य वायुः शरीरम् 'य आकाशे तिष्ठन्' 'यस्याकाशश्शरीरम्' इत्यन्तर्यामिब्राह्मणे भूताकाशान्तर्वर्तिनः परमात्मत्वनिश्चयात्, सिद्धान्ते च "किं तदत्र विद्यते यदन्वेष्टव्यं यद्वा व विजिज्ञासितव्यम्' इति प्रश्नस्य प्रतिवचनसामञ्जस्यं न भवति। न तावत् 'उभे अस्मिन् द्यावापृथिवी' इत्यादिवाक्योक्तद्यावापृथिव्यादिकं तदन्तर्वर्तीति प्रतिवचनं युक्तम्, तस्य विजिज्ञास्यत्वाभावात्।

७ भावप्रकाशिका ७

नुसारात् न तद्भासयतीत्यर्थ इति परैर्व्याख्यातमिति भावः। (अनुशब्दस्य करणमिति) तमेव भान्तमनुभातीति श्रुतावनुशब्दस्योच्चारणादित्यर्थः। अन्यत्सर्वं परमतवदेव बोध्यम् 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति सूत्रस्यायमर्थः,– इह शास्त्रे शब्दस्य स्वमेव रूपं ग्राह्यम्, शब्दसंज्ञां विना। ततश्च 'अग्नेर्ढगि'ति विधीयमानो ढक्प्रत्ययोऽग्निशब्दादेव भवति, न पावकशब्दात्. शब्दसंज्ञायान्तु संज्ञिनोऽर्थस्य ग्रहणम्. न स्वरूपस्य. यथासिद्धिवृद्धिरित्यादौ न वृद्धिशब्दस्य ग्रहणम्. किन्तु संज्ञिन एवेति। (दूषणद्वयं सर्वसाधारणमिति) अधिकरणभेदवादिकुदृष्टित्रयसाधारणमित्यर्थः। यद्यपि मृषावादिमते चशब्दस्य षष्ठ्यन्ततच्छब्दसूचितहेत्वन्तरसमुच्चयपरत्वं शक्यते वक्तुम्, तथापि तन्मते सौत्रतच्छब्दस्यान्वयो दुर्घटः। तथा न तत्र सूर्यो भातीत्यत्र नतद्भासयत इत्यर्थपरत्वं च क्लिष्टम्। किञ्च तमन्ते देवदत्तं गच्छन्तं यज्ञदत्तोऽनुगच्छतीत्यत्र तु गमनद्वयवदिह चैतन्यभानव्यतिरेकेण प्रपञ्चस्य भानाभावेनानुभातीति श्रुत्यर्थोप्ययुक्तः। तथा तस्य भासेति षष्ठ्यर्थव्यतिरेकोपि दुर्घटः, तद्व्यतिरेकेण भासोऽभावात्। किञ्च तज्ज्ञानसाध्यभानान्तराभावेन तस्य भासा भातीति निर्देशश्चानुपपन्न इत्यादिदूषणं स्पष्टम्। (सिद्धान्तितमिति) यादवप्रकाशीयैरिति शेषः शङ्कते। (परमाकाश

* श्रुतप्रकाशिका *

न ह्यन्तर्वर्तिमात्रविषयः प्रश्नः, किन्तु उपास्यभूतान्तर्वर्तिविषयः। 'अस्मिन् कामास्समाहिताः' इति च नोत्तरम्, अस्मिन्निति पदं तावत् प्रकृतब्रह्मपुरविषयम् "एतत् सत्यं ब्रह्मपुरमस्मिन् कामास्समाहिताः" इति हि श्रूयते। परमाकश एव ब्रह्मणः पुरम्। शरीरस्य ब्रह्मपुरत्वं तत्सम्बन्धादौपचारिकमिति षष्ठीतत्पुरुषं वदद्भिर्ब्रह्मपुरशब्दो दहराकाशसंज्ञकपरमाकाशपर इति व्याख्यातम्, ततश्चास्मिन्निति परमाकाशनिर्देशः स्यात्, एवञ्च च सति कामशब्दः किं परमात्मपरः, उत तद्गुणपरः, उत द्यावापृथिव्यादिपरः? । न प्रथमः— बहुवचनान्तत्वात् "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्" इति भेदनिर्देशाच्च। न द्वितीयः— परमात्मगुणाधारतया प्रतीयमानस्य परमात्मत्वापत्तौ अस्मदीयपक्षपरिग्रहः स्यात्। नहि परमात्मगुणानां धर्मी परमाकाशः। न तृतीयः— उपास्यरूपतदन्तर्वर्तिप्रश्नस्योत्तरत्वायोगात्। अन्तर्वर्तिप्रश्नस्योत्तरम् 'एष आत्मा' इतिवाक्यमिति चेन्न; एकवचनान्तस्यैतच्छब्दस्य ब्रह्मपुरविषयत्वेन तदन्तर्वर्तिविषयत्वायोगात्। परमाकाशशरीरः परमात्मैवैतच्छब्देन परामृश्यत इति चेत्, तदप्ययुक्तम्; परमाकाशान्तर्वर्तिविषयप्रश्नप्रतिवचनस्य परमाकाशविशिष्टविषयत्वायोगात्। न हि गृहविशिष्टस्य गृहमधिकरणम्, एष इतिपदं न प्रकृतविषयम्, किन्तु बुद्धिस्थविषयमिति चेत्, प्रकृतपरामर्शित्वस्वारस्यभङ्गः, स च प्रकृतपरामर्शित्वसम्भवेऽनुपपन्नः, किन्तदर्थेनि वैयधिकरण्येन प्रश्नस्य एष आत्मा परमाकाशशरीरक आत्मेति सामानाधिकरण्येनोत्तरम्, ततश्च तदन्तर्वर्तित्वं फलितमिति चेन्न; वैयधिकरण्येन प्रश्नस्य वैयधिकरण्येन प्रतिवचने सम्भवति सामानाधिकरण्येन प्रतिवचनकल्पनायोगात्; असम्भवे हि तथा निर्वाह उपपद्यते। न केवलं परमाकाशशरीरस्य हृदयान्तर्वर्तित्वम् एतत्प्रकरणपर्यालोचनविरुद्धम्, संवादिप्रमाणान्तराभावविस्रम्भं च। 'यो वेद निहितं' मितिवाक्यमन्यथासिद्धम्, 'परमे व्योमन् सोऽश्नुते' इत्यन्वयसम्भवात्। शाण्डिल्यविद्यायां च 'आकाशात्मा' "एष म आत्मान्तर्हृदये" इत्यादिवाक्यैराकाशवत्सूक्ष्मस्वच्छत्व्याप्तिस्वरूपस्य हृदि वर्तमानत्वमुच्यत इत्यन्यथासिद्धम्; अतोऽनुपपन्नमिदम् ॥ ७ ॥ ॥ ७ ॥

* भावप्रकाशिका *

एवेति) दूषयति (एवञ्च सतीति) (किन्तु बुद्धिस्थविषयमिति चेदिति) तेन रक्तं रागात् तस्यापत्यं तद्वति तत्प्रकारत्वमित्यादिवदिति भावः ॥ इति दहराधिकरणम्

## शब्दादेव प्रमितः ॥ २३ ॥

६ अधिकरणम्

कठवल्लीषु श्रूयते— [1]"अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सते । एतद्वै तत्" [2]"अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः । एतद्वै तत्" [3]"अङ्गुष्ठमात्रः पुरुषो

* श्रुतप्रकाशिका *

॥ शब्दादेव प्रमितः ॥ अल्पश्रुतेरिति चेदित्यत्राल्पपरिमाणत्वं भगवत इत्युक्तम् ! अथाल्पपरिमाणत्वविशेषः परमात्मव्यतिरिक्तस्य दृश्यत इति शङ्कया सङ्गतिः । 'शुक्रममृत'मित्यन्तं विषयवाक्यमुपाददानस्यायं भावः,— अङ्गुष्ठप्रमितत्वमात्रं श्रुतम्, नतु स्थानविशेषः, न चोपासनम्; अतः परमात्मपरत्वानादरेण जीवपरत्वं शङ्क्यते

* भावप्रकाशिका *

( भगवत इत्युक्तमिति ) भगवतोपि सम्भवतीत्यर्थः । भगवत्यल्पत्वसम्भवमात्रपरत्वात्तस्येति द्रष्टव्यम् । ( परमात्मव्यतिरिक्तस्य दृश्यत इतीति ) जीवस्यैव दृश्यत इत्यर्थः । ततश्चाङ्गुष्ठमात्रत्वरूपपरिमाणविशेषस्य दहरत्ववत्परमात्मन्यसम्भवादङ्गुष्ठप्रमितो जीवो भवत्विति शङ्कया सङ्गतिरिति भावः । भाष्ये—न ततो विजुगुप्सत इति । भूतभव्येशानत्वादेव ईशितव्यविषये हेयेपि जुगुप्सा नास्तीत्यर्थः । स एवाद्य स उ श्वः— सार्वकालिक इत्यर्थः । प्रवृहेदिति पृथक्कुर्यादित्यर्थः । शरीरभूतात्स्वस्माद्विविक्तं जानीयादित्यर्थः । शुक्रम्— भारूपमित्यर्थः । ( न तु स्थानविशेष इति ) स्थानविशेषरूपोपाधिश्रवणे हि महत्यपि परमात्मन्यल्पपरिमाणोक्तिर्युज्यते, स्थानविशेषरूपोपाधिश्रवणाभावेनौपाधिकपरिच्छेदोक्तिरिति वक्तुमशक्यत्वाज्जीव एवेत्युक्तमित्यर्थः । युक्तं परमात्मनः पूर्वाधिकरणोक्तं हृत्पुण्डरीकस्थानत्वम्, परमात्मस्थानभेदनिर्देशात्; तद्धि तस्योपलब्धिस्थानम्, सालग्राम इव कमलनाभस्य भगवतः । न चेह तथाङ्गुष्ठमात्रश्रुतौ स्थानभेदो निर्दिष्टः, परिमाणमात्रनिर्देशात् । न च मध्य आत्मनीत्यत्रापि स्थानभेदोऽव-

[1] कठ. २-४-१२ ॥ [2] कठ. २-४-१६ ॥ [3] कठ. २-६-१७ ॥

ऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्य्येण। तं विद्याच्छुक्रममृतम्" इति। तत्र सन्दिह्यते ; किमयमङ्गुष्ठमात्रप्रमितः प्रत्यगात्मा, उत परमात्मा ? इति। किं युक्तम् ? प्रत्यगात्मेति। कुतः ? जीवस्यान्यत्राङ्गुष्ठमात्रत्वश्रुतेः। [1]"प्राणाधिपः सञ्चरति स्वकर्मभिः। अङ्गुष्ठमात्रो

* श्रुतप्रकाशिका *

इति पूर्वपक्षं केचिदाहुः। तदयुक्तम् ; 'सदा जनानां हृदये सन्निविष्टः 'तं विद्याच्छुक्रममृत'मित्यनन्तरवाक्ये स्थानोपासनावगमात् तदनवगमस्य हेतुत्वकथनायोगादिति। परमात्मनोऽङ्गुष्ठपरिमितत्वानुपपत्तेर्जीवस्य सर्वेशानत्वानुपपत्तेश्च संशयः। अङ्गुष्ठप्रमितः किं प्रत्यगात्मा ? उत परमात्मेति। तदर्थमीशानत्वं किं देहेन्द्रियाद्यपेक्षम्, उत सर्वापेक्षम् ? इति। उपक्रमावगतं प्रमितत्वं किमीशानत्वलिङ्गस्वारस्यविरोधि ? उत अविरोधीति। तत्प्रमितत्वं किं जीवे समञ्जसम् ? उतोभयत्रासमञ्जसमिति। यदा जीवे समञ्जसं तदानीं स्वसामञ्जस्यसिद्ध्यर्थमुपक्रमावगतं प्रमितत्वमीशानत्वलिङ्गस्वारस्यविरोधीति ईशानत्वस्य देहेन्द्रियाद्यपेक्षत्वादङ्गुष्ठप्रमितो जीव इति पूर्वः पक्षः। यदोभयत्र प्रमितत्वमसमञ्जसं तदा प्रत्यगात्मन्यपि स्वारस्यासिद्धेस्तदर्थमीशानत्वलिङ्गस्वारस्यानुपरोधकत्वादीशानत्वं सर्वापेक्षमिति अङ्गुष्ठप्रमितः परमात्मेति राद्धान्ते फलफलिभावः। कृत्वा चिन्तेयम्, परमात्मनोऽन्यत्राङ्गुष्ठप्रमितत्वश्रवणाभावमभ्युपगम्यानेनैव वाक्येनाङ्गुष्ठप्रमितत्वं किं सिध्यति, उत

* भावप्रकाशिका *

गम्यते, आत्मशब्दो ह्ययं स्वभाववचनो वा जीववचनो वा ब्रह्मवचनो वा स्यात्. तत्र स्वभावस्य स्वभवितृव्यतिरेकेण निरूपणतया स्वस्य प्रभवितुरनिर्देशात्। न ज्ञायते कस्य मध्यमिति न जीवपरयोरस्ति मध्यमञ्जसेति नैष स्थाननिर्देशो विस्पष्टः, स्पष्टस्तु परिमाणनिर्देशः, परिमाणभेदश्च परस्मिन्न सम्भवतीति जीवात्मैवाङ्गुष्ठमात्र इति वाचस्पत्युक्तेरिति भावः। ( न चोपासनमिति ) ननु परसिद्धान्ते अस्य

[1] श्वे. ५-८-७ विश्वाधिप इत्यपि. पा.॥

रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः" इति। न चान्यत्रोपासनार्थतयापि परमात्मनोऽङ्गुष्ठमात्रत्वं श्रूयते। एवं निश्चिते जीवत्वे ईशानत्वं शरीरेन्द्रियभोग्यभोगोपकरणापेक्षयापि भविष्यति ॥

* श्रुतप्रकाशिका *

न? इति विचार्यते। अन्यत्राङ्गुष्ठप्रमितत्वं भगवतः श्रूयते, श्वेताश्वतरे "अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' इति। तैत्तिरीये च "अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्" इति। अन्तरात्मत्वं मोक्षप्रदत्वं सर्वस्य जगत ईशत्वमपि हि तत्र श्रुतम्। यदा सर्वजगच्छब्दादिकमपि क्लिष्टं कृत्वा तावपि मन्त्रौ विवादास्पदीकृतौ, तदानीं न कृत्वा चिन्तेयम्। ननु जीवस्याप्याराग्रमात्रस्याङ्गुष्ठमात्रत्वममुख्यम्. अत उपासनार्थमिति निर्वाह्यम्, तत्परमात्मपरत्वेऽपि सम्भवति, उपासनार्थमल्पपरिमाणत्वं परस्यापि हि श्रुतम्, तत्कथं जीवत्वशङ्केत्यत्राह ( न चेति ) प्राणाधिपस्य कर्मवश्यस्याङ्गुष्ठमात्रत्वममुख्यमपि हि श्रुतम्, न तु परमात्मनः, अतो जीवस्य बुद्धिस्थत्वात्तस्य प्रतिपाद्यत्वशङ्केत्यर्थः। ईशानत्वं कथमित्यत्राह (एवं निश्चित इति)॥ राद्धान्ते— ननु भूतभव्यस्येशान इति वाक्यम्, तच्च प्रमितत्वलिङ्गाद्दुर्बलम्। नैवम्; ईशानशब्दस्यैव शब्दशब्देन विवक्षितत्वात्। ईशानशब्दस्य देहेन्द्रियाद्यपेक्षया सङ्कोचस्य अनुपपत्तिस्फोरणार्थमीशानो भूतभव्य-

ꣻ भावप्रकाशिका ꣻ

वाक्यस्य जीवस्य परमात्मत्वोपदेशपरत्वेनोपासनविध्यनभ्युपगमेपि पूर्वपक्षे उपासनविधिर्न प्रत्याख्यातः, अत एव पूर्वपक्षोपसंहारे जीवात्मैवोपास्य इति वाचस्पतिनोक्तम्, ईशानोऽस्मीति ध्यानं फलतीत्यानन्दगिरिणाप्युक्तमिति चेत्. अत्र केचित्— न चोपासनमितिग्रन्थः पूर्वपक्षमित्यनन्तरं केचिदाहुरित्यस्मात्पूर्वं निवेशनीयः, ततश्च जीवत्वं शङ्क्यत इति पूर्वपक्षं सिद्धान्ते उपासनं नास्तीति चाहुरित्यर्थ इति वदन्ति।' अन्ये तु नायं मृषावादिमतानुवाद इति वदन्ति। ( भूतभव्यस्येशान इतिवाक्यमिति ) वाक्यार्थभूतं लिङ्गमित्यर्थः। ततश्चोपसंहारस्थमीशानत्वमुपक्रमस्थमितत्वलिङ्गाद्दुर्बलमित्यर्थः। 'त्रिशीर्षाणं त्वाष्ट्रमहनमरु-

इति प्राप्ते ब्रूमः— शब्दादेव प्रमितः । अङ्गुष्ठप्रमितः परमात्मा । कुतः ? 'ईशानो भूतभव्यस्य' इति शब्दादेव ; न च भूतभव्यस्य सर्वस्येशितृत्वं कर्मपरवशस्य जीवस्योपपद्यते ॥ २३ ॥

कथं तर्हि परमात्मनोऽङ्गुष्ठमात्रत्वमित्यत्राह—

हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २४ ॥

परमात्मन उपासनार्थमुपासकहृदये वर्तमानत्वादु-

* श्रुतप्रकाशिका *

स्येतिशब्दादेवेति भूतभव्यशब्दोपादानम् । किमीश्वरः, किं जीवः ? इति विचारे नेश्वरसम्बन्धिलिङ्गान्निर्णयः, किं त्वीशत्ववाचिशब्दादेवेत्येवकाराभिप्रायः । यद्वा पूर्वपक्ष्यभिप्रेताया ईशानशब्दान्यथासिद्धेः प्रतिक्षेप एवकाराभिप्रेतः । तं दर्शयति (न च भूतभव्यस्येति) ॥ उत्तरसूत्रस्य शङ्कामाह (कथं तर्हीति) ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ वर्तमानत्वादित्यध्याहारेण योजना । यद्वा हृदीति विषयसप्तमी, हृद्विषयापेक्षयेति । सूत्रार्थे वक्तुमर्थसिद्धमर्थमाह ( वर्तमानत्वादिति )

* भावप्रकाशिका *

न्मुख्यान् यतीन् सालावृकेभ्यः प्रायच्छं यावद्ध्यस्मिञ्छरीरे प्राणो वसतीत्यादौ वाक्यप्रतिपाद्यजीवमुख्यप्राणलिङ्गवद्भूतभव्येशितृत्वस्यापि लिङ्गत्वादिति द्रष्टव्यम् । नन्वीशानश्रुतिर्न ब्रह्मणोऽभिधानश्रुतिः, भूतभव्यस्येत्यैश्वर्यप्रतिसम्बन्ध्युपादानेन तस्य भूतभव्येशितृत्वरूपकेवलयौगिकार्थपरत्वात् योगरूढिमतां शब्दानां यौगिकार्थप्रतिसम्बन्ध्युपादाने रूढ्यनुन्मेषात्, अत एव 'पद्मानि यस्याग्र सरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' इतिश्लोके सरःप्रतिसम्बन्धग्रोपादानवति सरोरुहशब्दे स्थितेऽपि पद्मशब्दप्रयोगः, इतरथा पौनरुक्त्यप्रसङ्गात्, यौगिकार्थप्रतिसम्बन्ध्युपादानेपि रूढ्युन्मेषाङ्गीकारे 'अमृतत्वस्येशानः' इत्यादावपि रूढ्या देवतान्तरप्रसङ्गाच्चेत्याद्यस्वरसादाह ( यद्वा पूर्वपक्षीति ) ततश्च सम्भवदन्यथासिद्धिकाङ्गुष्ठमात्रलिङ्गादनन्यथासिद्धं चरमश्रुतमसङ्कुचितसर्वेशानत्वलिङ्गमेव बलीय इति सिद्धान्तो युक्त इत्यर्थः ॥ ननु वर्तमानत्वादिति पञ्चम्यन्तपदाध्याहारेपि तस्मा-

पासकहृदयस्याङ्गुष्ठप्रमाणत्वात्तदपेक्षयेदमङ्गुष्ठप्रमितत्वमुपपद्यते, जीवस्याप्यङ्गुष्ठप्रमितत्वं हृदयान्तर्वर्तित्वात्तदपेक्षमेव तस्याराग्रमात्रत्वश्रुतेः। मनुष्याणामेवोपासकत्वसम्भावनया शास्त्रस्य मनुष्याधिकारत्वान्मनुष्यहृदयस्य च तत्तदङ्गुष्ठप्रमितत्वात्खरतुरगभुज-

* श्रुतप्रकाशिका *

यदपेक्षया परस्याङ्गुष्ठप्रमितत्वव्यवहारः तस्य हृदयस्य तत्परिमाणत्वमाह ( हृदयस्येति ) अङ्गुष्ठमात्रत्वस्यास्वारस्यमुभयत्र तुल्यम् । को भेदः परमात्मपरिग्रहे इत्यत्राह ( जीवस्यापीति ) अङ्गुष्ठप्रमितस्य जीवत्वपक्षे अङ्गुष्ठप्रमितेशानशब्दयोरुभयोरप्यस्वारस्यम्, परमात्मत्वपक्षेऽङ्गुष्ठप्रमितशब्दस्यैकस्यैवास्वारस्यमिति भावः। खरतुरगादीनामनङ्गुष्ठत्वेन तद्धृदयानां तत्तदङ्गुष्ठप्रमितत्वाभावादङ्गुष्ठप्रमितत्वमननुयायीति शङ्कायां मनुष्याधिकारत्वादितिपदं व्याचष्टे ( मनुष्याणामेवेति ) अत्राङ्गुष्ठप्रमितस्य जीवत्वमभ्युपगम्यैव जीवस्य परमात्मैक्योपदेशपरतया प्रकरणस्य परमात्मप्रतिपादकत्वं यत्परैरुक्तम्, तदयुक्तम्, जीवत्वेश्वरत्वयोरुभयोरपि कल्पितत्वाभ्युपगमात् सर्पभूदलनयोरिव काल्पनिकयोरर्थयोरैक्योपदेशानुपपत्तेः, जीवत्वेशान-

ॐ भावप्रकाशिका ॐ

पेक्षयेत्यन्वयसिद्ध्यर्थं षष्ठ्यन्ततच्छब्दोप्यध्याहार्यः, नचैतद्युक्तमनध्याहारेणोपपत्तेरित्यस्वरसादाह ( यद्वेति ) ( को भेदः परमात्मपरिग्रह इति ) अत्र केचित्, शब्दादेवेति परमात्मत्वसाधकयुक्तेः ग्रन्थकृतैवोपन्यस्तत्वात्को भेद इति वक्तुमयुक्तम्। किञ्चाङ्गुष्ठमात्रत्वस्वारस्यस्य परमात्मत्वसाधकतया प्रागुपन्यस्तत्वात्, वस्तुतस्तस्य परमात्मत्वासाधकतया साधकत्वसम्भावनाया अप्यसम्भवाच्च अङ्गुष्ठमात्रत्वस्वारस्याभावे को भेद इति निर्देशोऽप्ययुक्तः, अतः पूर्वपक्षयुक्तेरन्यथासिद्धिमाहेत्येवावतारिका जीवस्यापीतिभाष्यस्य देयेति वदन्ति । भाष्ये— हृदयान्तर्वर्तित्वात्तदपेक्षमेवेति । ननु महतः परमात्मना अल्पपरिमाणोपाधिसम्बन्धेन घटाकाशस्येवाल्पपरिमाणत्वनिर्देशोपपत्तावपि अतिसूक्ष्मस्य जीवस्याधिकपरिमाणहृदयसम्बन्धेन कथमङ्गुष्ठमात्रत्वव्यवहारः ? नहि घटान्तस्स्थस्य बदरफलस्य घटपरिमाणत्वव्यवहारोस्ति, नवा घटान्तस्स्थस्य परमाणोराकाशस्येव घटपरिमा-

गादीनामनङ्गुष्ठप्रमितत्वेऽपि न कश्चिद्दोषः, स्थितं तावदुत्तरत्र समापयिष्यते ॥ २४ ॥ ❁

तदुपर्यपि बादरायणस्सम्भवात् ॥ २५ ॥

७ अधिकरणम्

परस्य ब्रह्मणोऽङ्गुष्ठप्रमितत्वोपपत्तये मनुष्याधिकारं ब्रह्मोपासनशास्त्रमित्युक्तम् । तत्प्रसङ्गेनेदानीं ब्रह्मविद्यायां देवादीनामप्यधिकारोऽस्ति, नास्तीति विचार्यते । किन्तावद्युक्तम् ? नास्ति देवादीना-

* श्रुतप्रकाशिका *

त्वाद्यनादरेण वस्तुमात्रैक्यपरत्वे ईशानादिशब्दानां लाक्षणिकत्वप्रसङ्गात् । प्रासङ्गिकार्थस्य निरूपयिष्यमाणत्वं बुद्ध्वाऽऽह ( स्थितं तावदिति ) ॥ ❁

॥ तदुपर्यपि बादरायणस्सम्भवात् ॥ प्रसङ्गात्सङ्गतिमाह (परस्येति) मनुष्याधिकारत्वादित्यत्र मनुष्यशब्देन तिर्यङ्मात्रं व्यावर्तितम् , उत देवादिरपीति बुभुत्सया सङ्गतिरित्यर्थः । किं ब्रह्मविद्यायां देवादीनामधिकारोऽस्ति , नेति विचारः । तदर्थं किं तेषां साङ्गब्रह्मविद्योपसंहारसामर्थ्यमस्ति , नेति । तदर्थं किं तेषां विग्रहवत्त्वं

❁ भावप्रकाशिका ❁

णत्वव्यवहारोऽस्ति, अत एव न पूर्वपक्षहेतुमपि पश्याम इति चेन्न; अत्र मात्रशब्देन 'प्रमाणे द्वयस'दित्यादिना मात्रच्प्रत्ययः । अपि तु क्षीरमात्रं पिबेत्यादाविवोत्तरपदत्वनियतं प्रातिपदिकमितरव्यवच्छेदकार्थम् , ततश्चाङ्गुष्ठपरिमाणाधिकपरिमाणव्यवच्छेदे आराग्रमात्रे जीवे सम्भवति, न परमात्मनीति पूर्वपक्षः हृदयगुहावच्छिन्ने परमात्मन्यपि सम्भवतीति सिद्धान्त इति भाष्याभिप्रायः । ( वस्तुमात्रैक्यपरत्व इति ) असङ्कुचितसकलभूतभविष्यद्वर्तमानवस्तुनियन्तृत्वप्राप्तसकलान्तरवस्थानलब्धव्यापकभावब्रह्मस्वरूपमात्रपरत्व इत्यर्थः ॥ ❁

( प्रसङ्गात्सङ्गतिमाहेति ) प्रसङ्गादागतां सङ्गतिमाहेत्यर्थः । ( अर्थित्वाभावस्याप्युपलक्षणमिति ) यद्यप्यत एव तासामर्थित्वमपि न सम्भवतीति भाष्य एवोत्तरत्र स्पष्टत्वान्नेह वक्तव्यम् , तथापि बुद्धिसौकर्यायात्र प्रदर्शितमिति ध्येयम् ।

❁ अत्र प्रमिताधिकरणस्यासमाप्तत्वात्तदवसानसूचनं न कृतम् ॥

मधिकार इति । कुतः ? सामर्थ्याभावात्, न ह्यशरीराणां देवादीनां विवेकविमोकादिसाधनसप्तकानुगृहीतब्रह्मोपासनोपसंहारसामर्थ्यमस्ति । न च देवादीनां सशरीरत्वे प्रमाणमुपलभामहे । यद्यपि परिनिष्पन्नेऽपि वस्तुनि व्युत्पत्तिसम्भावनया वेदान्तवाक्यानि परे ब्रह्मणि प्रमाणभावमनुभवन्ति ; तथापि देवादीनां विग्रहवत्त्वप्रतिपादनपरं न किञ्चिदपि वाक्यमुपलभ्यते। मन्त्रार्थवादास्तु कर्मविधिशेषतयाऽन्यपरत्वान्न देवा-

* श्रुतप्रकाशिका *

सम्भवति, नेति । किं तद्विग्रहप्रतिपादकमन्त्रार्थवादानां तत्परत्वं सम्भवति, नेति । किं मन्त्रार्थवादानाम् अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वं विग्रहादिविवक्षाविरोधि, उत नेति । किं विग्रहादिमत्त्वमनुष्ठेयार्थप्रकाशनस्तुत्योरुपयोगि, नेति । यदाऽनुपयोगि तदाऽनुष्ठेयार्थप्रकाशनस्तुतिपरत्वस्य विग्रहादिविवक्षाविरोधितया मन्त्रार्थवादानां देवताविग्रहादिपरत्वाभावेन देवानां विग्रहविरहेण सामर्थ्याभावात्तदनधिकार इति फलितम् । यदोपयोगि तदाऽनुष्ठेयप्रकाशनस्तुतिपरत्वस्य विग्राहादिविवक्षानुगुणतया मन्त्रार्थवादानां तत्परत्वेन देवानां विग्रहवत्तया साङ्गब्रह्मविद्योपसंहारसामर्थ्यादस्ति ब्रह्मविद्याधिकार इति फलितम्। ( सामर्थ्याभावादिति ) अर्थित्वाभावस्याप्युपलक्षणमेतत् । सामर्थ्याभावमुपपादयति ( नहीति ) उपसंहारः— अनुष्ठानम् । अशरीरत्वं कथमित्यत्राह ( न चेति ) वेदान्ताः प्रमाणं स्युरित्यत्राह ( यद्यपीति ) प्रयोजनपर्यवसायितयैव हिशब्दस्य प्रामाण्यम्, तत्र पूर्वभागवचसां प्रवृत्तिनिवृत्तिरूपप्रयोजनपर्यवसानात् तत्र तात्पर्यम्, ब्रह्मणः पुरुषार्थरूपतया तत्र वेदान्तानां तात्पर्यम्, देवादीनां विग्रहेषु तथात्वाभावान्न तात्पर्यमित्यर्थः । पूर्वभागे मन्त्रार्थवादास्तत्र प्रमाणमित्यत्राह ( मन्त्रार्थवादास्त्विति ) मन्त्राश्चार्थवा-

৬ भावप्रकाशिका ৬

( प्रकाशनस्तुत्योरन्यपरत्वादिति ) प्रकाशनस्तुतिपरत्वादित्यर्थः । ( देवतैश्वर्यस्यापेक्षितत्वादिति ) विग्रहहविस्स्वीकरणभुक्तितृप्तिफलप्रदत्वलक्षणैश्वर्यस्यापेक्षित-

दिविग्रहसाधने प्रभवन्ति । कर्मविधयश्च स्वापेक्षितोद्देश्यकारकत्वातिरेकि देवतागतं किमपि न साधयन्ति । अत एव तासामर्थित्वमपि न सम्भवति । अतस्सामर्थ्यार्थित्वयोरभावाद्देवादीनामनधिकार इति ॥

एवं प्राप्ते प्रचक्ष्महे—तदुपर्यपि बादरायणस्सम्भवात् ।

* श्रुतप्रकाशिका *

दाश्चेत्यर्थः । ( अन्यपरत्वादिति ) अनुष्ठेयार्थप्रकाशनस्तुत्योरन्यपरत्वादित्यर्थः । मा सैत्सीदन्यपरेण मन्त्रार्थवादेन देवताविग्रहादि, किन्तु कर्मविधिभिरेव सेत्स्यति, कर्मणो द्रव्यदेवतानिरूप्यत्वात् क्षणध्वंसिनः कर्मणः कालान्तरभाविफलसाधनत्वनिर्वाहाय देवतैश्वर्यस्यापेक्षितत्वात् श्रुतहानेनाश्रुतापूर्वकल्पनायोगाच्चेत्यत आह ( कर्मविधयश्चेति ) अयमभिप्रायः,-- यद्यपि देवतादत्तम् यागहोमादिकर्मसु देवतैश्वर्याङ्गीकारेणापि फलप्रदत्वनिर्वाहसम्भवः, तथापि दानतपःप्रभृतिषु देवतानामभावात् कल्पनीयमेवापूर्वम्, तथा च समानन्यायतया यागहोमादावप्यपूर्वमेव कल्प्यताम्, किमर्थवैशसेन ? । किञ्च तत्रैव कल्पे सर्वकर्मफलभोगनियमाभावाद्देवतानां सृष्टिप्रलयाभ्युपगमाच्च फलप्रदानुपपत्तेः केषाञ्चित्कर्मणां नैष्फल्यमेव स्यात् । अथ तत्तद्देवताशरीरकः परमात्मा तत्तत्कर्मसमाराधितो नित्यैश्वर्यतया फलप्रद इति मतम्, तथा सति प्रतिमाप्रतिमेयन्यायः स्यात्, यथा प्रतिमोद्देशिभिरुपचारैर्देवताप्रीतिः, एवं देवतोद्देशिभिर्द्रव्यत्यागैः परमात्मप्रीतिः स्यात्, ततश्च प्रतिमाया इव देवताया अप्युद्देश्यकारकत्वमात्रं विवक्षितम्, नैश्वर्यमपीत्यनपेक्षितं देवतैश्वर्यं न कल्प्यमिति । उक्तोपजीवनेनार्थित्वाभावमाह ( अत एवेति ) यत एव न विग्रहवत्त्वं देवतानाम्, अत एवार्थित्वमपि न सम्भवति, दुःखस्य तज्जिहासायाश्च देहसम्बन्धमूलत्वादर्थित्वस्य दुःखजिहासारूपत्वाच्चेत्यर्थः ॥ ( एवं प्राप्त इति )

* भावप्रकाशिका *

त्वादित्यर्थः । ( तत्रैव कल्प इति ) यस्मिन् कल्पे यानि कर्माण्यनुष्ठितानि तेषां तत्रैव कल्पे फलभोग इति नियमाभावादित्यर्थः । ननु सृष्टिप्रकरणस्य सर्वस्यापि 'कारणं तु ध्येयः' इतिवाक्यप्रतिपन्नध्येयोपलक्षणकारणत्वप्रपञ्चनात्मकत्वेना-

तदुपर्यपि– तत्– ब्रह्मोपासनम्, उपरि– देवादिष्वपि, सम्भवतीति भगवान्बादरायणो मन्यते, तेषामर्थित्वसामर्थ्ययोस्सम्भवात्। अर्थित्वं तावदाध्यात्मिकादिदुर्विषहदुःखाभितापात्परस्मिन् ब्रह्मणि च निरस्तनिखिलदोषगन्धे अनवधिकातिशयासङ्ख्येयकल्याणगुणगणे निरतिशयभोग्यत्वादिज्ञानाच्च सम्भवति। सामर्थ्यमपि पटुतरदेहेन्द्रियादिमत्तया सम्भवति। देहेन्द्रियादिमत्त्वं च ब्रह्मादीनां सकलोपनिषत्सु सृष्टिप्रकरणेषूपासनप्रकरणेषु च श्रूयते। तथा हि "सदेव सोम्येदमग्र आसीत्" "तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यारभ्य सर्वमचेतनं तेजोऽबन्नप्रमुखावस्थाविशेषवद्व्याकृत्य "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति सङ्कल्प्य ब्रह्मादिस्थावरान्तं

* श्रुतप्रकाशिका *

अक्षरार्थमाह (तदुपर्यपीति) अर्थित्वमुपपादयति (अर्थित्वमिति) सामर्थ्यमुपपादयति (सामर्थ्यमपीति) पटुतरशब्दो मनुष्यादिदेहादपि पटुत्वातिशयपरः। प्रमाणाकाङ्क्षायामाह (देहेति) तत्त्वोपदेशप्रधानमन्त्रब्राह्मणरूपवेदभागा उपनिषदः, ताश्च द्विविधाः तत्त्वपरा उपासनपराश्चेति। उभयीष्वपि तासु देवतानां विग्रहादिमत्त्वमवगम्यत इत्यर्थः। कानि तत्त्वप्रतिपादकवचांसि कथं तैर्विग्रहवत्त्वप्रतिपादनमित्यत्राह (तथाहीति) (सदेवेत्यादि) नामरूपव्याकरणस्य कण्ठोक्त्या नामरूपाणां चातुर्विध्यस्य प्रमाणसिद्धत्वान्नामरूपव्याकरणश्रुत्यैव देवताविग्रहवत्त्वं सामान्येन सिध्यतीत्यर्थः। "इन्द्रो वरुणस्सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' 'नारायणाद्ब्रह्मा जायते' इत्यादीनि विशेषोक्तिमन्ति च वाक्यान्यभि-

* भावप्रकाशिका *

पासनविधिशेषतया न स्वार्थे तात्पर्यमित्याशङ्कमानं प्रत्युपासनविधिशेषत्वमभ्युपेत्या-

चतुर्विधं भूतजातं तत्तत्कर्मोचितशरीरं तदुचितनामभाक् चायमकरोदित्युक्तम् । एवं सर्वत्र सृष्टिवाक्येषु देवतिर्यङ्मनुष्यस्थावरात्मना चतुर्विधा सृष्टिराम्नायते । देवादिभेदश्च तत्तत्कर्मानुगुणब्रह्मलोकप्रभृतिचतुर्दशलोकस्थफलभोगयोग्यदेहेन्द्रियादियोगायत्तः, आत्मनां स्वतो देवादित्वाभावात् । तथा "[1]तद्धोभये देवासुरा अनुबुबुधिरे ते होचुः .... इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः" "[2]तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्य्यमूषतुः तौ ह प्रजापतिरुवाच" इत्यादिना स्पष्टमेव शरीरेन्द्रियवत्त्वं देवादीनां प्रतीयते । कर्म्मविधिशेषभूतमन्त्रार्थवादेष्वपि "[3]वज्रहस्तः पुरन्दरः"

* श्रुतप्रकाशिका *

प्रेतानि । चतुर्विधसृष्टिराम्नाता भवतु, ततः किमित्यत्राह (देवादीति) उपासनदशायां परमकारणभूतस्य उपास्यस्य लक्षणत्वेन, प्राप्यदशायां प्राप्यविशेषणत्वेन विग्रहादिमत्त्वं सिद्धमित्यर्थः । उपासनप्रकरणेषु दर्शयति (तथेति) कर्मविधिशेषत्वेनापि सिध्यतीत्याह (कर्मविधीत्यादिना) तत्र प्रथमसूत्रे सिद्धवस्तुनि तात्पर्यसम्भवस्य फलत्वेन सिद्धिरुक्ता, अत्र स्मावकत्वप्रकाशकत्वहेतुतया, 'फलमत

* भावप्रकाशिका *

प्याह (उपासनदशायामिति) देवादिचतुर्विधभूतग्रामलक्षणजगत्कारणत्वविशिष्टस्योपास्यतया प्राप्यतया चोपास्यविशेषणतया प्राप्यविशेषणतया च देवताविग्रहादिकं सिध्यतीत्यर्थः । ननु विध्यपेक्षितनया सिद्धवस्तुनि तात्पर्यसम्भवस्य त्रिष्वधिकरणेषु प्रतिपादनात्पौनरुक्त्यमाशङ्क्य विध्यपेक्षिततया सिद्धिप्रकारभेदं दर्शयति (तत्र प्रथमसूत्र इत्यादिना) (स्मावकत्वप्रकाशकत्वहेतुतयेति) स्तुत्यनुष्ठेयार्थस्मृति-

---

[1] छा. ८-७-२ ॥   [2] छां. ८-७-३ ॥   [3] अष्टक. २-प्रश्न. ६-अनु. ७-प. ३४ ॥

'तेनेन्द्रो वज्रमुदयच्छत्' इत्यादिभिः प्रतीयमानं विग्रहादिमत्त्वं प्रमाणान्तराविरुद्धं तत्प्रमेयमेव । न चानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम्, स्तुत्याद्युपयोगित्वात्तेन विना स्तुत्याद्यनुपपत्तेश्च। गुणकथनेन हि स्तुतित्वम् । गुणा-

* श्रुतप्रकाशिका *

उपपत्तेः' इत्यत्र फलसाधनत्वेनेति त्रिधा विभागः । 'आदित्यो यूपः' इत्यादिव्यावृत्त्यर्थमाह ( प्रमाणान्तराविरुद्धमिति ) अन्यपरत्वमनूद्य व्युदस्यति ( न चेत्यादिना ) ( स्तुत्याद्युपयोगित्वादिति ) आदिशब्देन अनुष्ठेयार्थप्रकाशनं मन्त्रकृत्यं गृह्यते । मन्त्रार्थवादेष्वित्युद्देशे अनुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यामित्यनूद्देशे चावगतक्रमोऽत्र परित्यक्तः, तत्र कारणं मन्त्रैरपि क्वचित् स्तुतिदर्शनेन स्तुतेर्व्यापकत्वम्. दृश्यते हि मन्त्रैः स्तुतिः "नकिरिन्द्र त्वदुत्तरो न ज्यायोऽस्ति वृत्रहन्' तथा 'अर्हन् बिभर्षि सायकानि धन्वार्हन् निष्कं यजतं विश्वरूपम् । अर्हन्निदं दयसे विश्वमभ्भुवं न वा ओजीयो रुद्र त्वदस्ति" इत्यादिभिः । अर्हन् बिभर्षीत्यादिमन्त्रस्य स्तुतिपरत्वं ब्राह्मणेनैवावगम्यते 'अर्हन् बिभर्षि सायकानि धन्वेत्याह स्तौत्येवैनमेतत्' इति[1]। तेन विना– प्रतीयमानार्थेन विना । तत्र स्तुत्यनुपपत्तिं विवृणोति ( गुणकथनेनेति ) व्यतिरेकेणोपपादयति ( गुणानामिति ) ( स्तुतित्वमेव हीयेतेति ) प्ररोचकत्वमेव हीयेतेत्यर्थः । शेषभूतस्य शेषिणं प्रति किञ्चित्कारोऽपेक्षितः, स न सिध्यतीति यावत् । ननु यदि गुणकथनेन स्तुतित्वम् तथा सति गुणकथनाभावे स्तुति-

* भावप्रकाशिका *

हेतुतया विग्रहादिसिद्धिप्रकारश्चोत्तरत्र स्पष्टः । भाष्ये– स्तुत्याद्युपयोगित्वादित्यनेनान्वयमुक्त्वा व्यतिरेकमाह– तेन विना स्तुत्याद्यनुपपत्तेरिति । ( व्यतिरेकेणोपपादयतीति ) इदञ्च गुणानामभावे स्तुतित्वमेव हीयेतेति भाष्यस्य गुणकथनाभावे स्तुतित्वमेव हीयेतेत्यर्थ इति मत्वोक्तमिति द्रष्टव्यम् । ( शेषभूतस्येति ) अर्थवादस्य विधिशेषभूतस्य विध्यपेक्षितप्ररोचनाजनकत्वाभावे शेषत्वमेव हीयेते-

[1] काण्ड. २ प्रश्न ४-अनु १२ ॥

**नामसद्भावे स्तुतित्वमेव हीयेत । न चासता गुणेन कथितेन प्ररोचना जायते; अतः कर्म्म प्ररोचयन्तो गुणसद्भावं बोधयन्त एवार्थवादाः । मन्त्राश्च कर्मसु**

* श्रुतप्रकाशिका *

त्वहानिः स्यात्, न गुणानामसद्भाव इत्यत्राह ( न चासतेति ) अनेन "नासता स्तुतिरुपपद्यते" इति द्रमिडभाष्यं स्मार्यते । अर्थप्रकाशनानुपपत्तिं विवृण्वन् मन्त्राणां विग्रहादिमत्त्वे प्रामाण्यमुपपादयति ( मन्त्राश्चेत्यादिना ) द्रव्यदेवते हि कर्मनिरूपिके, एतद्दैवत्यमिदं कर्मेति प्रतिपत्तौ देवताविशिष्टत्वेन हि कर्मप्रतिपत्तिः । "यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेद्वषट्करिष्यन्" इति देवता ध्यातव्येति श्रूयते, देवता चेदृशीत्येव प्रतिपत्तव्या, निर्विशेषवस्तुनः प्रतिपत्तुमशक्यत्वात्, इन्द्रत्वादिकञ्च न शुद्धात्मस्वरूपस्य विद्यते, अतो विग्रहादौ विवक्षितत्वम् । प्रतीतेरालम्बनमात्रमपेक्षितम्, नार्थसद्भाव इति चेन्न; न ह्यतस्मिंस्तद्दृष्टिः फलाय विधीयते, अपि तु यथावस्थितकर्मस्वरूपबोधनं हि क्रियते, तस्मादनुष्ठेयार्थप्रकाशकत्वसिद्ध्यर्थं मन्त्राणां विग्रहादिमत्त्वे च प्रामाण्यमस्त्येवेत्यर्थः । अर्थसद्भावाभावेऽपि प्ररोचना दृश्यत इति चेन्न; इष्टसाधनत्वाभावेऽपि बालातुरादिषु विप्रलम्भवाक्यानां प्रवृत्तिहेतुत्वं दृश्यत इति विधिवाक्यस्याप्ययथार्थत्वप्रसङ्गात् । अपौरुषेयतया निर्दोषं विधिवाक्यं निरूपकविषयमिति याथार्थ्यमिति चेत्तर्हि मन्त्रार्थवादानामप्यपौरुषेयतया निरूपकविषयत्वादतस्मिंस्तद्दृष्टिविधानपरत्वाभावाच्च स्वार्थे प्रामाण्यमस्तीति भावः । एवमर्थशिक्षाप्रदर्शनेन प्रयोगप्रकारोऽर्थसिद्धः, विमता इन्द्रादिशब्दाः स्वरूपातिरिक्तपदार्थप्रतीतिहेतवः, अपारिभाषिकत्वे सति बोधकत्वात्

* भावप्रकाशिका *

त्यर्थः । ( द्रव्यदेवते हि कर्मनिरूपिकेति ) अतश्च "यजामह इन्द्रं वज्रदक्षिणम्" इत्यादिमन्त्रसाध्यदेवताविग्रहप्रकाशनस्य अनेन मन्त्रेण यागं कुर्यादित्येवंरूपेण यागशेषत्वबोधकविधिनापेक्षितत्वाद्ध्यानविधिनापेक्षितत्वात्तत्र तात्पर्यमस्तीति भाष्याभिप्राय इति भावः । शङ्कते ( प्रतीतेरिति ) ( स्वरूपातिरिक्तेति ) शब्दस्वरूपातिरिक्तेत्यर्थः । "दधत्प्रुत्' उदश्विनोऽन्यतरस्याम्' अमेर्ढक्" इत्यादौ शब्दस्वरूपस्यैव ग्रहणेन व्यभिचारस्स्यात्, तद्वारणायाह ( अपारिभाषिकत्वे सतीति )

विनियुक्तास्तत्र तत्र किञ्चित्करत्वायानुष्ठेयमर्थं प्रकाशयन्तो देवतादिगतविग्रहादिगुणविशेषमभिदधत एव

* श्रुतप्रकाशिका *

निर्दोषवाक्यस्थत्वात् विधिपदवत्। विमता चतुर्थी प्रकृत्यतिरिक्तार्थनिष्ठस्वार्था, अपारिभाषिकशब्दस्थविभक्तित्वात् 'दध्नेति' विभक्तिवत्। विमता सम्प्रदानकारकबुद्धिः शब्दातिरिक्तविषया, कारकबुद्धित्वात् करणकारकबुद्धिवत्। विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि, साधकबाधकागोचरार्थबोधकत्वात् विधिवाक्यवत्। विमतशब्देन "आपो वै शान्ताः' 'आदित्यो यूपः" इत्यादिव्यावृत्तिः। विमतानि पदानि मुख्यार्थसंसर्गे प्रमाणानि, साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत्। विमतानि पदानि परगार्थभूतप्रतीयमानार्थसंसर्गाणि, साधकबाधकागोचरार्थप्रतिपादकवाक्यस्थत्वात् विधिपदवत्। न चार्थवादानां वाक्यत्वमसिद्धम्, प्रवर्तकार्थानवबोधनात्, अतः पदशब्दवाच्या अर्थवादा इति वाच्यम्; अर्थवादाः न पदशब्दवाच्याः, तिङ्कारकपदसङ्घातरूपत्वात् विधिवाक्यवत्। अर्थवादाः प्रमाणभूतवाक्यरूपाः, साधकबाधकागोचरसंसर्गप्रत्यायकतिङन्तकारकपदात्मकत्वात् विधिवाक्यवत्। विमता मन्त्रार्थवादाः प्रतीयमानार्थविवक्षान्विताः, साधकबाधकागोचरार्थत्वे सति विधिनैकवाक्यत्वात् प्रयाजादिवाक्यवत्। न च प्रवर्तकवाक्यत्वमुपाधिरिति वाच्यम्; साधिकारविधिवाक्यत्वेन तस्यापि सोपाधिकत्वप्रसङ्गात्। प्रया-

* भावप्रकाशिका *

'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति स्वरूपग्रहणस्य व्याकरणे परिभाषितत्वादिति भावः। एवमनुमानत्रयेण शब्दस्वरूपातिरिक्तं देवतास्वरूपं साधितम्. अथ देवताविग्रहादेः प्रामाणिकत्वं साधयति (विमता मन्त्रार्थवादा इत्यादिना) (आपो वै शान्ता इति) तेजोगतक्रौर्याभावरूपं शान्तत्वमपां प्रमाणान्तरसिद्धमिति साधकमानगोचरत्वान्न स्वार्थे तात्पर्यमिति भावः। अर्थवादानामविरुद्धस्थलेपि लाक्षणिकत्वं परोक्तं दूषयितुमाह (विमतानीत्यादिना) (वाक्यत्वसिद्धमिति) तथाचासिद्धो हेतुरिति भावः। न च प्रवर्तकवाक्यत्वमपि सिद्धमेवेति शक्यते वक्तुम्. अथापि स्वतन्त्रतया प्रवर्तकत्वस्योपाधित्वेन विवक्षितत्वादिति भावः। (साधिकारेति) फलसम्बन्धबोधकेत्यर्थः। (तस्यापीति) प्रवर्तकवाक्यस्यापी-

**तत्र किञ्चित्कुर्वन्ति, अन्यथेन्द्रादिस्मृत्यनुपपत्तेः । न च निर्विशेषा देवता धियमधिरोहति । तत्र प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति; गुणविशिष्टं वा प्रकाशयन्ति; प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशने कुर्वन्ति; विरुद्धत्वे तु तद्वाचिभिश्शब्दैरविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति ।**

* श्रुतप्रकाशिका *

जादिविधीनामविवक्षितार्थत्वेऽनुष्ठानाविरोधात्साधिकारविधिवाक्यत्वं न विवक्षितार्थत्वे प्रयोजकमिति चेत्; अनुष्ठानस्य प्रामाणिकतया हि तद्व्यस्यानिष्टता, एवमपवादाभावे सति स्वतस्सिद्धस्य प्रामाणभावस्य भङ्गप्रसङ्गात् प्रवर्तकवाक्यत्वमप्रयोजकम्; तस्मान्निरुपाधिको हेतुः । विगीता अर्थवादाः परमार्थस्वार्थोपस्थापकाः, निरूपकपुरुषप्ररोचकत्वात्, रसायनायुष्यताप्रतिपादकवाक्यवत् । कारणदोषबाधकप्रत्ययविरहितत्वाद्वा, स्वर्गयागयोः साध्यसाधनभावप्रतिपादकवाक्यवत् । विमता मन्त्रार्थवादाः प्रतीयमानार्थे प्रमाणानि, विध्यपेक्षितार्थसमर्पकत्वात् 'छागस्य वपायाः' इति मन्त्रवत्, रात्रिसत्रार्थवादवच्च । विमता प्राशस्त्यबुद्धिः प्राशस्त्यहेतुभूतार्थपारमार्थ्यनिबन्धना, निरूपकपुरुषाश्रयप्राशस्त्यबुद्धित्वात् औषधविषयप्राशस्त्यबुद्धिवदिति च । "आपो वै शान्ताः" 'आदित्यो यूपः' इत्यादिषु प्रमाणान्तरसिद्धस्य तद्विरुद्धार्थस्य चाप्युच्यमानत्वान्न सर्वत्र प्रामाण्यमिति शङ्कायामाह (तत्र प्रमाणान्तरेति) बोधयित्वा-- विधाय । प्ररोचयन्ति अर्थवादाः प्ररोचयन्ति, मन्त्राः प्रकाशयन्ति । (लक्षयित्वा कुर्वन्तीति) प्ररोचनप्रकाशने कुर्वन्तीत्यर्थः । ननु विध्यपेक्षितार्थे हि तात्पर्यम्

* भावप्रकाशिका *

त्यर्थः । वाशब्दनिबन्धनां प्ररोचनप्रकाशनयोरेककर्तृकत्वप्रतिभां व्युदस्यति (प्ररोचयन्तीत्यादिना) गुणान् लक्षयित्वा कुर्वन्तीत्येतद्व्याचष्टे (प्ररोचनप्रकाशने कुर्वन्तीत्यर्थ इति) ननु प्ररोचनायाः विध्यपेक्षितत्वात्तस्याश्च गुणसत्तामन्तरेणासम्भवात्, तत्रापि तात्पर्यं सिद्धमेवेति प्रागेवोक्तम् । अतश्च ननु विध्यपेक्षितार्थे हीत्यादिशङ्काया एवानवकाशप्रसक्तया कर्मविधिश्चेत्यादिभाष्यग्रन्थो मुधेत्याशङ्क्य

कर्म्मविधेश्च देवताया ऐश्वर्य्यमपेक्षितमेव, कामिनः कर्त्तव्यतया कर्म्म विधीयमानं स्वयं क्षणप्रध्वंसि कालान्तरभाविनः फलस्य स्वर्गादेस्साधकमपेक्षते। मन्त्रार्थवादयोश्च [1]"वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' 'यदनेन हविषाऽऽशास्ते तदश्यात्तदृध्यात्तदस्मै देवा राधन्ताम्" इत्यादिषु देवतायाः कर्म्मणाऽऽराधितायाः फलदायित्वं तदनुगुणञ्चैश्वर्य्यं प्रतीयमानमपेक्षितत्वेन वाक्यार्थे समन्वीयते। देवपूजाभिधायिनो यजिधातोश्च

* श्रुतप्रकाशिका *

देवताविग्रहादेर्विध्यपेक्षितत्वं कथमित्यत्राह ( कर्मविधेश्चेति ) "फलमत उपपत्तेः" इत्यधिकरणार्थो बुद्धिसौकर्यार्थमत्र सङ्गमय्य कथ्यते, न चैतदधिकरणासाधारणार्थतया। असाधारणस्तु स्तावकत्वानुष्ठेयप्रकाशकत्वसिध्यर्थं प्रतीयमानार्थे प्रामाण्यमस्तीत्ययमेवार्थः, स च पूर्वमेवोक्तः । कृष्यादेरङ्कुरादिद्वारकत्वमिवाचेतनद्वारकत्वं कर्मणः स्यादित्यत्राह ( वायुर्वा इति ) श्रुतहानमश्रुतकल्पनञ्चानुपपन्नम्, रात्रिसत्रादिष्विवेति भावः । ( वाक्यार्थे समन्वीयत इति ) आर्थवादिकार्थानां श्रूयमाणत्वात् तद्विशिष्टे वाक्यतात्पर्यमिति निश्चिते सति रक्तः पटो भवतीतिवदुत्थापिताकाङ्क्षत्वेन विधिनैकवाक्यतयान्वयोऽर्थवादानामिति भावः। यत्र वाक्यशेषवशादपेक्षितदेवताप्रीतिद्वारकत्वं न सिध्यति, तत्रापि यजिसामर्थ्यात्तत्सिध्यति। अर्थवादाभावेऽपि विधिसामर्थ्यात् स्तुतिरेवेत्याह ( देवपूजाभिधायिन इति ) न च

ꣳ भावप्रकाशिका ꣳ

प्रकारान्तरेण प्रयोजनमाह ( फलमत उपपत्तेरित्यधिकरणार्थ इति ) ( रक्तः पटो भवतीतिवदिति ) यद्यपि देवतैश्वर्यस्यापेक्षितत्वादुत्थिताकाङ्क्षात्वमेव गामनयेत्यादिवद्वक्तुं शक्यम्. तथापि उत्थिताकाङ्क्षाया वा उत्थापिताकाङ्क्षाया वा एकवाक्य-

१ यजु. काण्ड-२-प्रश्न. १ अनु. १-पं १ ॥ २ अष्ट. प्रश्न. २ ॥

याागाख्यं कर्म्म स्वाराध्यदेवताप्रधानं प्रतीयते । तदेवं कृत्स्नवाक्यपर्यालोचनया वाक्यादेव विध्यपेक्षितं सर्व-

* श्रुतप्रकाशिका *

'यजि देवपूजासङ्गतिकरणदानेषु' इति शाब्दिकानां स्मरणं भ्रान्तिमूलमिति वाच्यम्; विध्यपेक्षितार्थसमर्पकतया स्वार्थे प्रमाणभूतत्वान्मन्त्रार्थवादानाम् अस्य स्मरणस्य तन्मूलत्वोपपत्तेः । विमतो विधिप्रत्ययः चेतनप्रीत्यतिरिक्तफलसाधनकल्पनानिराकाङ्क्षः चेतनप्रीत्यतिरिक्तफलसाधनवाचकत्वकल्पननिराकाङ्क्षश्च, कृतिसाध्यचेतनप्रीत्यवगमकवाक्यस्थत्वात्, राजानं सेवेतेतिवाक्यस्थविधिप्रत्ययवत् । विमतशब्देन जुहुयादित्यादिव्यावृत्तिः, जुहुयादित्यादिषु विधिप्रत्ययेषु विधिप्रत्ययत्वलिङ्गेन पूर्वोक्तसाध्यद्वयं समर्थनीयम् । ( तदेवमिति ) कृत्स्नशब्देन मन्त्रार्थवादविषयो विवक्षितः । वाच्यापूर्ववादपक्षे अश्रुतकल्पनं नास्तीति चेन्न ; वाच्यत्वस्यापि कल्प्य-

* भावप्रकाशिका *

तयान्वयोऽर्थवादानामिति तात्पर्यम् । ( अस्य स्मरणस्य तन्मूलत्वोपपत्तेरिति ) ननु मन्त्रार्थवादविधुरे कर्मणि मन्त्रार्थवादानां देवताप्रीतिद्वारत्वावगमकत्वाभावात् यागमात्रस्य देवताप्रीतिद्वारत्वावगमिकायां शाब्दिकस्मृतौ कथं यागविशेषे देवताप्रीतिद्वारत्वावगमकमन्त्रार्थवादमूलकत्वम्, ननु क्वचित्कर्मणि मन्त्रार्थवादबलाद्देवताप्रीतिद्वारकत्वेऽवगते न्यायतौल्यादन्यत्रापीति तथैति शाब्दिकस्मृतेर्मन्त्रार्थवादमूलकत्वमिति चेत्, हन्तैवं सति भाष्ये स एव न्याय उपन्यस्यताम्, किमनेन तन्न्याययोपजीविशाब्दिकस्मृत्युपन्यासेनेति चेत् . इतिहासपुराणमन्वादिस्मृतिवत्पाणिनिस्मृतेरपि तत्समानार्थश्रुतिमूलत्वसम्भवादिति भावः । कल्प्यापूर्वपक्षं वाच्यापूर्वपक्षञ्च प्रतिक्षिपति ( विमतो विधिप्रत्यय इति ) ( कृतिसाध्येति ) कृतिसाध्यां चेतनप्रीतिमवगमयद्यद्वाक्यं तत्स्थविधिप्रत्ययत्वादित्यर्थः । यजिधातोश्चेतनप्रीतिसाधनत्वान्न हेत्वसिद्धिः ! ननु 'यजि देवपूजायाम्' इतिवद्धोमे तादृशस्मृत्यभावात्, जुहुयादित्यादौ भागासिद्धिरित्याशङ्क्य तस्य पक्षत्वमेव नेत्याह ( विमतशब्देनेति ) यद्यपि साध्यविमतिस्तत्रापि समाना, यागहोमयोरविशेषात् ; तथापि यागगतविमतिविशेषः पक्षतावच्छेदकः, तथापि न हेत्वसिद्धिरिति भावः । ननु तर्हि होमादिष्वपूर्वनैरपेक्ष्यं केन सिद्ध्येदित्यत्राह ( जुहुयादित्यादिष्विति )

मवगतमिति नापूर्वादिकं व्युत्पत्तिसमयानवगतं कर्म-विधिष्वभिधेयतया कल्प्यतया वाऽऽश्रयितव्यम् । तथा

* श्रुतप्रकाशिका *

मानत्वात् । कल्प्यापूर्ववादे अपूर्वमेव कल्प्यम्, वाच्यपक्षे वाच्यत्वमपि कल्प्य-मित्यभिप्रायेण व्युत्पत्तिसमयानवगतमित्युक्तम् । (तथेत्यादि) ब्राह्मणशब्देन विध्युद्देशग्रहणम् । विध्यर्थवादमन्त्ररूपेण विभागवतामस्मदादिभिरनधीतासु अधी-तासु च शाखासु तत्राप्यन्यतरप्रकरणेषु प्रसङ्गादनुप्रविष्टानां भगवता व्यासेन व्यस्तेष्वव्यस्तेषु च वेदभागेषु विप्रकीर्णानां वाक्यानामर्थाः इतिहासादिषु सङ्कलय्य कथ्यन्त इति भावः । सङ्कीर्णशब्देन नित्यानुमेयश्रुतिमूलत्वोत्सन्नशाखामूलत्वव्यु-दासः, तदुभयमपि ह्यनुपपन्नम्; तत्र यस्तावन्नित्यानुमेयतयाऽभिमतो वर्णसमुदायः स किं वर्णमात्रसङ्घातः, उतानुपूर्वीविशेषविशिष्टः ? । प्रथमे कचटतपादिवदर्थावबोध-कत्वाभावेन वाक्यत्वाभावाद्वाक्यविशेषत्वस्वरूपवेदत्वासिद्धेः स्मृतीनां वेदमूलत्वं न स्यात् । द्वितीये नित्यानुमेयत्वं व्याहतम्, स्वतः क्रमरहितानां वर्णानामुच्चारणेन विना आनुपूर्वीविशेषविशिष्टत्वायोगात् । उच्चारणयोग्यताऽस्तीति चेन्न; उच्चारणयोग्यता नाम पटुतरवागिन्द्रियपुरुषबुद्धिस्थितिः, सा च योग्यता किं वर्णमात्रगता; उत-आनुपूर्वीविशेषविशिष्टवर्णगता ? न प्रथमः, वर्णमात्रस्यार्थानवबोधकतया स्मृतेर्नि-र्मूलत्वप्रसङ्गात् । सत्यामानुपूर्व्यां स्मृतिप्रतिपन्नार्थावबोधनक्षमत्वं वर्णेष्वस्तीति चेत् तेष्वेव वर्णेष्वानुपूर्व्यन्तरे सति चैत्यवन्दनकर्तव्यताद्यर्थबोधनक्षमत्वमप्यस्तीति

* भावप्रकाशिका *

(विध्युद्देशग्रहणमिति) विधिवाक्यग्रहणमित्यर्थः । (प्रसङ्गादनुप्रविष्टानामिति) तस्यापि 'वध्यं प्रपन्नं प्रति प्रयच्छन्ति धन्वन्निव प्रपा असि' इत्यादीनामित्यर्थः । (सङ्कीर्णशब्देनेति) भाष्यस्थसङ्कीर्णशब्दस्य विप्रकीर्णत्वमर्थ इति भावः । (उच्चारणेन विनेति) घट इत्यत्र घटस्योच्चारणानन्तरोच्चारणविषयत्वमेवानुपू-र्वीति भावः । उच्चारणयोग्यतास्तीति चेदित्येतद्ग्रन्थात्पूर्वं कदाप्यनुच्चार्यमाणानां मूलत्वासम्भवादिति ग्रन्थोऽपेक्षितः, इतरथा किं वर्णमात्रगता उतानुपूर्वी विशेष विशिष्टवर्णगतेत्याद्युत्तरविकल्पग्रन्थस्यास्य च न सामञ्जस्यं पश्यामः । (उच्चारण-योग्यताऽस्तीति चेदिति) ततश्च आनुपूर्वीं विनापि उच्चारणयोगतासत्त्वान्मूलत्वं

सङ्कीर्णब्राह्मणमन्त्रार्थवादमूलेषु धर्मशास्त्रेतिहासपुरा-

* श्रुतप्रकाशिका *

बुद्धस्मृतेरपि वेदमूलत्वप्रसङ्गः। वेदबाह्यतया सम्प्रतिपन्नत्वान्न तस्याः वेदमूलत्वानुमानशङ्कोदय इति चेत्, मेघसन्देशस्य वेदमूलत्वप्रसङ्गः, प्रवर्तकार्थपरत्वाभावान्न वेदमूलत्वानुमानमिति चेत् "कार्या सैकतलीनहंसमिथुनस्रोतोवहा मालिनी" इति वाक्यस्य वेदमूलत्वप्रसङ्गः । आनुपूर्वीविशेषविशिष्टवर्णगता योग्यतेत्यप्ययुक्तम्, पूर्वं केनचिदुच्चारितत्वाभावादानुपूर्व्यसिद्धेः, ततश्चानाद्यानुपूर्वीविशिष्टतारूपवेदत्वं दूरोत्सारितम्। आनुपूर्वीविशेषणोच्चारणयोग्यत्वं वर्णानामनादीति चेत्, तच्चैत्यवन्दनप्रतिपादनानुगुणानुपूर्व्या अपि तुल्यम्, अतस्तत्रापि वेदमूलत्वं स्यात्. कर्तृसामान्याभावान्न तत्र वेदमूलत्वानुमानम्, श्रुतिस्मृत्यर्थयोस्तुल्यतया कर्तृसामान्यात् स्मृतेर्वेदमूलत्वानुमानमिति चेत्. माभूत्कर्तृसामान्यम्, तेन मन्वादिस्मृतीनां वेदमूलत्वेऽनुमिते तुल्यन्यायतया आपतितं वेदमूलत्वं को वारयेत? स्वावगतार्थप्रतिपादनानुगुणानुपूर्वीविशेषणानादिसम्बन्धयोग्यवर्णास्तित्वज्ञानं हि सर्वत्र समानम्. तज्ज्ञाननियमो बुद्धादीनां ग्रन्थनिर्माणदशायां नास्तीति चेत्, न तज्ज्ञानपूर्वकमेवेदानीं रथ्यातृणानि गणयेत् स्वर्गकाम इत्युक्तस्य वाक्यस्य वेदमूलत्वप्रसङ्गः। ननु अत एव स्मृत्यवगतार्थविशेषणावच्छिन्नानुपूर्वीविशिष्टानां वर्णानां वेदत्वमिति चेन्न; मन्वादिवाक्यस्यापि तदर्थावच्छिन्नानुपूर्वीविशिष्टवर्णसमुदायात्मकतया वेदत्वप्रसङ्गेन अनुमेयान्तराभावान्नित्यानुमेयश्रुतिमूलत्वासिद्धेः, अतो नित्यानुमेयश्रुतिमू-

* भावप्रकाशिका *

सम्भवेदिति भावः। ( वर्णानामनादीनीति ) ततश्चानाद्यानुपूर्वीविशेषोच्चारणयोग्यतावत्त्वमेव वेदत्वमिति भावः। ( तच्चैत्यवन्दनेति ) योग्यताया अनादित्वादिति भावः । ( कर्तृसामान्याभावादिति ) वैदिकत्वेन प्रसिद्धैरग्निहोत्रादिभिस्समानकर्तृकत्वाभावादित्यर्थः। चैत्यवन्दनकर्तव्यताबोधकस्मृतेः प्रसिद्धवैदिकभावाग्निहोत्रादिकर्तव्यताबोधकस्मृतिसमानकर्तृकत्वाभावादिति यावत । ( स्वावगतार्थेति ) स्वशब्देन स्मृतिरुच्यते। (अर्थविशेषणावच्छिन्नेति ) अग्निहोत्रादिसमानकर्तृकमन्वादिस्मृत्यवगतार्थप्रतिपादनानुगुणानुपूर्वीविशेषविशिष्टानामेव वेदत्वमिति चेदित्यर्थः । ( मन्वादिवाक्यस्यापीति ) स्मृतिः स्मृत्यर्थानुभवजनकवेदमूलेति

एषु ब्रह्मादीनां देवासुरप्रभृतीनां देहेन्द्रियादयस्स्वभाव-

* श्रुतप्रकाशिका *

लत्वमनुपपन्नम्। उत्सन्नशाखामूलत्वपक्षेऽपि अधीयमानशाखास्वेव प्रमादात्कतिपयवाक्यानां क्वचित् क्वचिद्देशे प्रलीनत्वात्तन्मूलस्मृतयः प्रणीता इत्यप्ययुक्तम्, पदवाक्यसङ्ख्यानियमेन बहुभिरध्येतृभिरस्खलितमधीयमानत्वात् कतिपयवाक्यानां प्रलीनत्वानुपपत्तेः। स्मृतीनां मूलभूतशाखाकात्स्न्र्येन काचिदुत्सन्ना, तन्मूलाः स्मृतयः इत्यप्ययुक्तम्. तथाहि; शाखाया उत्सादो नाम किं कतिपयदेशेष्विदानीमध्येतृविरहः? उत सर्वदेशेष्वप्यध्येतृविरहः?। प्रथमः कल्पोऽभ्युपगतः। न द्वितीयः, तपःप्रभावाधिगतसार्वज्ञ्यानां व्यासादीनां तत्तच्छाखाविशेषाभिज्ञानां तदध्ययनपरित्यागे कारणाभावात्स्वशिष्याध्यापनसम्भवाच्च। न चेदानीन्तनशिष्यबुद्धिमान्द्यादिदानीं तदध्यापनासम्भवः, बहुशाखाध्ययनासामर्थ्येऽप्यस्मदादेरिव तत्तदेकशाखाध्ययनसमर्थशिष्यसम्भवात्, अतः प्राचीन एव पक्षः परिशिष्यते; अतः स्मृतीनां सङ्कीर्णवेदभागमूलत्वमेव युक्तम्। स्मृतिमूलभूतवेदभागसद्भावे स्मृतिप्रणयनवैयर्थ्यमिति चेन्न, तच्छाखाध्येतृपुरुषविरहितदेशेषु तद्युक्तदेशेष्वपि बहुशाखाध्ययनधारणतदर्थनिरूपणनिर्णयासमर्थपुरुषेषु च सफलत्वात्, अतः स्मृतीनां सङ्कीर्णवेदभागमूलत्वं युक्तम्। कर्मविशेषेत्यादौ भाष्ये इदमर्थसिद्धम्, यदुक्तं यागादौ दानादौ च अर्थवैरूप्याश्रयणादर्थवैशसमिति। तदसत्; सर्वत्राप्यपूर्वकल्पनानभ्युपगमात्। न च फलसाधनतानुपपत्तिः, कर्मोपज्ञनितप्रीतेः परमात्मन एव तत्सिद्धेः, "वासो

* भावप्रकाशिका *

साधने मन्वादिवाक्यस्य वृद्धमनुवाक्यमूलकत्वेनापि साध्यसिद्धेरर्थान्तरम्, त्वदुक्तरीत्या वृद्धमनुवाक्यस्यापि वेदत्वसम्भवात् अन्ततो गत्वा स्मृतिमात्रस्य वेदत्वेन मूलभूतवेदानुमानासम्भवाच्चेति भावः। (प्राचीन एव पक्ष इति) कतिपयदेशेष्वध्येतृविरह इति पक्ष इत्यर्थः। (सङ्कीर्णवेदमूलकत्वं युक्तमिति) विप्रकीर्णवेदमूलकत्वं युक्तमित्यर्थः। (इदमर्थसिद्धमिति) 'तदस्मै देवा राधन्ताम्' इत्यादिष्वित्यत्र वाक्यादेव विध्येोदितं सर्वमित्यत्र च सिद्धवन्निर्देशानुपपत्तिकल्पितविग्रहादिप्रतिपादकश्रुतिवाक्यस्य विप्रकीर्णत्वं पक्षान्तरे दोषजातं च विवक्षितमिति भावः। यद्वा इदमिति वक्ष्यमाणं यदपीत्यादिकं गृह्यत इति

**भेदाः स्थानानि भोगाः कृत्यानि चेत्येवमादयस्तु- व्यक्ताः प्रतिपाद्यन्ते ; अतो विग्रहादिमत्त्वाद्देवादी- नामप्यधिकारोऽस्त्येव ॥ २५ ॥**

* श्रुतप्रकाशिका *

ददाति सर्वदेवत्यं वै वासः सर्वा एव देवताः प्रीणाति" इत्यादिभिर्दानादीनामपि देवताप्रीतिहेतुत्वावगमाच्च। न च परमात्मप्रीत्या फलसम्भवे देवतैश्वर्यानुपयोगः, प्रधानावान्तरापूर्वकल्पनान्यायस्यात्रापीष्टत्वात् . यथाहि पूर्वापरभूतानामङ्गप्रधान- रूपाणामनेकेषां कर्मणां यौगपद्याभावादवान्तरापूर्वद्वारा परमा निष्पत्तिरङ्गीक्रियते, एवमेव तत्तत्कर्मजनितप्रीत्यतिशयाभिर्देवताभिः परमात्मन्यखण्डैकप्रीतिजन- नमातिष्ठामहे । इदमेव च देवतायाः फलदानानुगुणमैश्वर्यम् . यत्फलप्रदे परमात्मनि स्वप्रीतिद्वारा प्रीतिजननम्, उक्तं हि भगवता "यो यो यां यां तनुं भक्तः श्रद्धया- ऽर्चितुमिच्छति" इत्यारभ्य "लभते च ततः कामान् मयैव विहितान् हि तान्" इति । तेन फलोपभोगस्यानियतकालत्वेऽपि न दोषः । न चैवं सति प्रतिमाप्रतिमेयन्यायेन देवताप्रीतिरनास्थेया । "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन् 'साक्षा- देव देवता' प्रीणाति 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' 'त एनं तृप्ता आयुषा तेजसा वर्चसा श्रिया यशसा ब्रह्मवर्चसेन अन्नाद्येन च तर्पयन्ति' 'ये चैव देवास्स्माय यावानो ये च प्रातर्यावाणस्तानेवोभयांस्तर्पयति त एनं तृप्ताः प्रजया पशुभिस्तर्पयेयु" इति देवतातृप्तेः श्रुतत्वात्तत्परित्यागानुपपत्तेः, 'पितरि प्रीतिमापन्ने सर्वास्तुष्यन्ति देवताः' इति न्यायात् भृत्यप्रीणनेन भृभृत्प्रीणनन्यायाच्च देवता- प्रीतेः परमात्मप्रीतिहेतुत्वोपपत्तेश्चेति। सूत्रार्थमुपसंहरति ( अत इति ) ननु कथं दे- वतानां ब्रह्मविद्याधिकारः ? न ह्यत्रैवर्णिकानां तेषामुपनयनाभावेनाध्ययनसिद्धस्वा- ध्यायलब्धविद्यत्वम् , न च तेषां विद्याङ्गभूतकर्मानुष्ठानयोग्यत्वम्. अभिनिष्पत्त्यनुप-

* भावप्रकाशिका *

द्रष्टव्यम् । ( न ह्यत्रैवर्णिकानामिति ) वैदिककर्ममात्रे ' वसन्ते ब्राह्मणमुप- नयीत ग्रीष्मे राजन्यं शरदि वैश्यम् ' इति त्रैवर्णिकमात्राधिकारितया विहितोप- नयनाङ्गकाध्ययनगृहीतस्वाध्यायजन्यज्ञानस्यैवाङ्गत्वात् ब्रह्मविद्यायाश्च वैदिक- त्वात्तदभावे ब्रह्मविद्या न सम्भवतीति भावः । ( अभिनिष्पत्त्यनुपपत्तेरिति ) इद-

* श्रुतप्रकाशिका *

पत्तेः। "वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्य आदधीत शरदि वैश्य आदधीत' इति त्रैवर्णिकविषयाधानविधिः कथं देवानधिकरोति ? अन्यार्षेयस्य चानधिकारोऽधिकरणसिद्धः, देवानां देवर्षीणाञ्च मूलभूतऋष्यन्तराभावादन्यार्षेयतया चानधिकारः । अग्नीन्द्रादीनामग्नीन्द्रादिदेवताभावादग्न्याद्युद्देशेन हविःप्रक्षेपानुपपत्तिश्चेति । उच्यते; न तावदुपनयनाभावात्साङ्गविद्यानधिकारः, तस्याध्ययनाङ्गत्वान् यज्ञादिकर्मब्रह्मोपासनयोरङ्गत्वाभावात्. अध्ययनाभावेऽपि देवतानां सुकृतप्रकर्षेण पूर्वजन्मविशेषाधीतस्वाध्यायतदर्थस्मरणोपपत्तेश्च । पिशाचादयोऽपि हि पूर्वजातिं स्मरन्ति, किं पुनर्देवा देवर्षयश्च । न चोपनयनविरहाच्छूद्रादिवद्विद्याकर्मणोरनधिकारः, शूद्रादीनामप्युपनयनविरहप्रयुक्तत्वाभावादनधिकारस्य, स खलु तेषां सामर्थ्याभावानुगृहीतशास्त्रनिषेधप्रयुक्तः। देवतानां हि विद्याकर्मणी न क्वचित्प्रति-

* भावप्रकाशिका *

मुपलक्षणम् , अध्ययनगृहीतस्वाध्यायजन्यज्ञानाभावादित्यपि द्रष्टव्यम् । अग्निनिष्पत्तिमेवोपपादयति (वसन्ते ब्राह्मण इत्यादिना) (अनधिकारोऽधिकरणसिद्ध इति) पूर्वतन्त्रे षष्ठे– 'अन्यार्षेयस्य हानं स्यात्' इत्यधिकरणे दर्शपूर्णमासयोः श्रूयते– 'आर्षेयं वृणीते एकं वृणीते द्वौ वृणीते त्रीन् वृणीते न चतुरो वृणीते न पञ्चातिवृणीते' इति । तत्रार्षेयो नाम स्वकीय ऋषिः, ततश्च यजमानस्य यो गोत्रस्थ ऋषिः तद्विशिष्टतया यो निर्देशः अत्रिवत् अर्चनानसवत् श्यावाश्ववत् भरद्वाजवत् बृहस्पतिवत् अङ्गिरोवदयं यजमानो यजते इत्येवंरूपनिर्देशः स आर्षेयवरणशब्दार्थः । तत्र एकमृषिं वृणीते द्वावृषी वृणीते त्रीनृषीन्वृणीत इति वाक्यत्रयेण त्रीणि वरणानि विहितानि, ततश्च वरणत्रयस्याप्यङ्गतया एकार्षेयद्व्यार्षेययोस्त्र्यार्षेयवरणाभावेपि एकद्व्यार्षेयवरणसम्भवादधिकार इति पूर्वपक्षं कृत्वा अस्मिन् वाक्ये विधित्रयाभ्युपगमे वाक्यभेदप्रसङ्गात् त्रीन्वृणीत इत्येव विधिः, त्रिषु च एकस्य द्वयोरप्यन्तर्भावात् एकं वृणीते द्वौ वृणीते इत्यनुवादः, ततश्च त्र्यार्षेयवरणमेवाङ्गम् . तद्रहितानामार्षेयवरणवत्सु कर्मसु नाधिकार इति स्थितमित्यर्थः । ननु उपनयनाङ्गकाध्ययनजन्यज्ञानाभावेपि देवादीनामधिकारे शूद्रस्याप्यधिकारस्स्यादित्याशयमुद्घाट्य निराकरोति ( न चोपनयनविरहादिति ) ( सामर्थ्याभावानुगृहीतेति ) अयं भावः, त्रैवर्णिकाधिकारिकोपनयनाङ्गकाध्ययन-

॥ भावप्रकाशिका ॥

लब्धविद्यालक्षणसामर्थ्याभावादनधिकार इति पूर्वमीमांसकैरपशूद्राधिकरणे यदुपन्यस्तं तदभ्युच्चयमात्रम् ; प्रधानयुक्तिस्तु तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इत्याहत्य यज्ञादिप्रतिषेध एव । तथा हि; वर्णविशेषादिग्रहणमन्तरेणाविशेषप्रवृत्ता वैदिककर्मविधयः, कर्मानुष्ठानार्थमनुष्ठेयार्थज्ञानसम्पन्नानधिकारिणोऽपेक्षमाणास्स्वत एवाध्ययनविधिलब्धानुष्ठेयार्थज्ञानान् द्विजातीनासाद्य निर्वृणवन्ति, नतु फलकामत्वाविशेषेपि शूद्रस्याधिकारित्वेन सङ्ग्रहार्थमनुष्ठेयार्थज्ञानमाक्षिपन्तीति हि शूद्रस्यानधिकारे युक्तिर्वक्तव्या । न सा युज्यते; अध्ययनविधेरर्थज्ञानपर्यन्तत्वे हि विध्यन्तरलब्धार्थज्ञानं त्रैवर्णिकेषु सिद्धमिति युज्यते वक्तुम् , न चैतदस्ति; अध्ययनविधेरक्षरग्रहणमात्रविश्रान्ततया त्रैवर्णिकेष्वर्थज्ञानस्य विध्यन्तरसिद्धत्वाभावेनाक्षेप्यत्वाविशेषाच्छूद्रेष्वपि तदाक्षेपस्सम्भवत्येव. अस्तु वायमध्ययनविधिरर्थज्ञानभाव्यः, तथापि शूद्रस्यानिवार्योऽधिकारः । क्रतुविद्याविधिर्हि त्रैवर्णिकानां स्वशाखेतरशाखाविहिताङ्गगुणोपसंहाराय तत्तच्छाखाध्यायिभ्यस्तत्तदङ्गगुणज्ञानस्येव शूद्रस्यापि विद्याविधिभिस्तज्ज्ञानस्येव शूद्रस्यापि विद्याविधिभिस्तज्ज्ञानस्याक्षेप्तुं शक्यत्वात् । अध्ययनविधिना ह्येकस्या एव शाखाया अध्ययनं विधीयते . प्रतिव्यक्ति घटत्वस्येव प्रतिशाखं स्वाध्यायत्वस्यापि परिसमाप्तत्वात् । ननु शूद्रस्य कर्मोपासनानुष्ठानापेक्षितं ज्ञानं कार्त्स्न्येनापेक्षणीयम् । त्रैवर्णिकानां स्वशाखेतरशाखाविहितगुणविषयस्त्वेकदेश इति आक्षेपलाघवात् । क्रतुविद्याविधयस्त्रैवर्णिकानेवाधिकुर्युः . न शूद्रमिति चेत्. एवं तर्हि यस्य कर्मणो यस्यां शाखायां भूयसामङ्गानां विधानं भूयस्त्वेनोभयश्रुतीतिन्यायेन प्रधानस्यापि विधानम् , शाखान्तरे तु किञ्चिदङ्गविधानम् , तत्र कर्मणि तच्छाखाध्यायिनामेवाधिकारस्स्यात् ; ज्ञानाक्षेपकलाघवात् , न तु शाखान्तराध्यायिनाम् । किञ्च यस्य कर्मणस्तदङ्गस्य वा कस्याञ्चिदस्यां शाखायां विधानं नास्ति , किन्तु शाखान्तर एव साङ्गस्य तस्य विधानम् ; तत्र कर्मणि तच्छाखाध्यायिनामधिकारो न स्यात् . शूद्रवत्तेषां तदनुष्ठानोपयोगिज्ञानस्य कार्त्स्न्येनापेक्षणीयत्वात् । सम्भवन्ति हि गुणफलविधिरूपाणि क्षुद्रकर्माणि शाखाविशेषेषु सर्वथैवानिरूपितानि । तस्मात्त्रैवर्णिकानामपि ज्ञानाक्षेपस्य सम्प्रतिपन्नत्वाच्छूद्रस्याप्यनुष्ठानोपयोगिज्ञानाक्षेपसम्भवाद्वेदविद्भ्यो विज्ञाय विद्यानुष्ठानमुपपद्यते , अन्यथाऽध्ययनाभावेन शूद्रस्य विद्या-

* श्रुतप्रकाशिका *

सिद्धे प्राक्तनज्ञानाप्रमोषात्सामर्थ्यं च स्थितम्. न चात्रैवर्णिकत्वादग्न्याधानाभावादन्यार्षेयतया च विद्याङ्गकर्मानधिकारः, मनुष्यकर्तृकाधानस्यैव त्रैवर्णिकत्र्यार्षेयाधिकारित्वनियमात्। किमत्र नियामकमिति चेत् "देवा वै सत्रमासत' 'विश्वसृजः प्रथमास्सत्रमासत" इत्यादिश्रुतिभिर्देवादीनां क्रत्वनुष्ठानत्वदर्शनात्, विशेषत इन्द्रादीनां वृत्रवधादिजनितकल्मषक्षालनाय क्रत्वनुष्ठानस्मरणाच्चेति ब्रूमः । यद्वा ब्राह्मण्यादिकं देवतादीनामप्यस्ति, तत्खल्वदृष्टविशेषसम्बन्धरूपम्, न तु जातिरूपं ब्राह्मणादिभिर्ब्राह्मण्यादिषूत्पत्तिमात्रं वा, अन्यथा आदिकाले ब्रह्मणो मुखबाहूरुप्रभवानां पश्चाद्विश्वामित्रप्रभृतीनाञ्च ब्राह्मण्याद्यभावप्रसङ्गात्। सन्तानविशेषप्रसूतत्वञ्च तादृगदृष्टवत्त्वसूचकम्, सन्तानविशेषोत्पत्तेः प्रकृष्टादृष्टकार्यत्वात् अलौकिकप्रकर्षविशेषकारणत्वाच्च। ईदृशं ब्राह्मण्यादिकं देवतास्वपि सम्भवति, अवगम्यते च तत् वाजपेयं प्रकृत्य 'तं बृहस्पतिरुदजयत्तेनायजत तेनेन्द्रमयाजयत्' इति बृहस्पतिना इन्द्रेण च वाजपेयस्यानुष्ठितत्वमुक्त्वा तत एव हेतोः 'स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः" इति वाजपेयस्य ब्रह्मक्षत्राधिकारत्वमुच्यमानं बृहस्पतेर्ब्राह्मण्यमिन्द्रस्य क्षत्रत्वमपि ह्यवगमयति। "ब्रह्मा बृहस्पतिः क्षत्रमिन्द्रः" इति च श्रूयते। तथा "मरुतो वै देवानां विशः" इति मरुतो विशः श्रूयन्ते; अतो देवताविशेषाणां ब्रह्मक्षत्रविड्भागसिद्धेरग्निसम्बन्धो युक्तः। विद्यानुग्राहकं ब्रह्मचर्यादिकञ्च देवानां श्रूयते "एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास" इत्यादिषु, अतो विद्याङ्गकर्मगुणपौष्कल्यात् सामर्थ्यं सिद्धम्, न च यष्टव्यदेवतान्तराभावाद्यजनानुपपत्तिः, अग्नीन्द्रादिशब्दप्रवृत्तिनिमित्तानां ज्ञानशक्त्यैश्वर्यविशेषाणां निरुपाधिकाश्रयतया तच्छब्दवाच्यस्य परमात्मनोऽव्यवधानेन देवताभिराराध्यत्वात्. अग्नीन्द्रादीनान्तु तत्त-

൭ भावप्रकाशिका ൭

प्रत्याख्याने मैत्रेयीप्रभृतीनां स्त्रीणां ब्रह्मविद्यावासौ का गतिः? नहि संवर्गविद्यागतशूद्रशब्दस्य क्षत्रिय इव मैत्रेयादिशब्दानां पुरुषेषु वृत्तिस्सिद्धान्तिनोपि कल्पयितुं शक्या । 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः, मैत्रेयी कात्यायनी च' इत्यादिवाक्यान्तरविरोधात्; तस्मात्प्रतिषेधबलादेव शूद्रस्यानधिकार इति। वस्तुतस्तु देवादीनामपि जन्मान्तरीयोपनयनाङ्गकाध्ययनमूलज्ञानलक्षणं सामर्थ्यमप्यस्त्येवेत्याह (प्राक्तनज्ञानाप्रमोषादिति) (मनुष्यकर्तृकाधानस्यैवेति) यद्यपि

* श्रुतप्रकाशिका *

यज्ञभागभागित्वं स्वाराधनप्रीतेन भगवता दत्तम्; न तु स्वाभाविकम्, यथोक्तं भगवता व्यासेन कृष्णद्वैपायनेन मोक्षधर्मे यज्ञाग्रहाराध्याये "ततस्ते विबुधास्सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् । तस्मिन् सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् । देवा महर्षयश्चैव सर्वे भागानकल्पयन् । ते कार्तयुगधर्माणो भागाः परमसत्कृताः । प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्" इत्यव्यवधानेन भगवतो यष्टव्यत्वमुक्तम् । तत्र भगवद्वचः "येन यः कल्पितो भागः स तथा समुपागतः । प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम्" तत्र "यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः । कल्पयिष्यन्ति वा भागान् ते नरा वेदकल्पितान् । यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ । स तथा यज्ञभागार्हो वेदसूत्रे मया कृतम्" इत्यत्र भगवता यज्ञभागभाक्त्वं देवानां दत्तमिति स्पष्टतरम्; अतो

* भावप्रकाशिका *

आधाने त्वार्षेयवरणं नास्त्येव. नचाधानेन साक्षात् त्वार्षेयवरणाभावेपि तदङ्गभूतेषु पवमानहविष्षु आतिदेशिकत्वार्षेयवरणमस्तीति वाच्यम्; गुणानां च परार्थत्वादित्यत्र पवमानहविषामाधानार्थत्वाभावस्य साधितत्वात्, तथाप्यत्राधानशब्दोऽग्निसिद्ध्यर्थकर्मपरः, ततश्च पवमानहविषामपि सङ्ग्रहात्तेषु च त्वार्षेयवरणसत्त्वान्न दोष इति द्रष्टव्यम् । ( देवानां दत्तमिति ) ( स्पष्टतरमिति ) नन्वेतादृशानितिहासपुराणदृष्टानर्थवादानालम्ब्य पूर्वमन्यथा प्रवृत्तो धर्मः इदानीमन्यथा प्रवर्तत इति धर्ममर्यादाविप्लवाङ्गीकारो न युक्तः । अन्यथा त्वेवमधर्ममर्यादापि विप्लुताङ्गीक्रियेत. दृश्यते हि भारत एव पूर्वमनावृतानां स्त्रीणां श्वेतकेतुशापप्रभृति एकपत्नीत्वाचरणं प्रवृत्तमित्यादिरधर्मविप्लवार्थवादः - "अनावृता हि वर्णानां सर्वेषामङ्गना भुवि । यथा गावस्थितास्तात स्वे स्वे वर्णे तथा प्रजाः । व्युच्चरन्त्याः पतिर्नार्या अद्यप्रभृति पातकम् । भ्रूणहत्या कृतं पापं भविष्यत्यसुखावहम्" इति । ननु श्वेतकेतूपाख्याने स्त्रीणां पूर्वमनावृतत्वे निर्धनेनोन्मथार्थे क्रियमाणायामाभरणप्रार्थनायामिवापत्नीकेन ब्राह्मणेनापत्यार्थे क्रियमाणायामुद्दालकपत्नीप्रार्थनायां तत्पुत्रस्य श्वेतकेतोः कोपो न स्यात्. कोपश्च तत्रैव वर्णितः । "मातरं तां तदा दृष्ट्वा नीयमानां बलादिव । तपसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे । सङ्गृह्य मातरं हस्ते श्वेतकेतुरभाषत । दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम्"

* श्रुतप्रकाशिका *

देवानां कर्माधिकाराभ्युपगमेन विद्यामात्राधिकारवादोऽनुपपन्नः, अतस्साङ्ग- ब्रह्मविद्योपसंहारसामर्थ्यं देवानामस्तीति सिद्धं देवानां ब्रह्मविद्याधिकारित्वम् ॥

ω भावप्रकाशिका ω

इति । ततः स्त्रीणामेकपत्नीत्वव्रतनियमस्यानादित्वावगमान्नारीणां प्रागनावृत- त्ववचनं तदाप्रभृत्येकपत्नीत्वव्यवस्थापकवचनं च कुन्तीमपत्यार्थं पुरुषान्तरे प्रव- र्तयितुकामस्य पाण्डोस्स्वकल्पितार्थविषयं प्ररोचनामात्रपरमित्यवसीयत इति चेत्, यज्ञाग्रहारोपाख्यानवचनजातमप्येवमित्यवधार्यताम्, अन्यथा हि तत्र बहुस- मञ्जसमापद्येत. तथा हि तस्मिन् सत्रे दीक्षणीयायाम् आग्नावैष्णवः पुराडाशो ऽग्निनानुष्ठितश्चेदग्नेर्भागो न स्यात्, अनुष्ठितश्चेत् विष्णोरिदानीं भागानुवृत्तिर्न स्यात्, उपसत्सु वैष्णवो यागः केनापि देवेनानुष्ठितश्चेत्तदीय एवेदानीं स्यात्, न तु वैष्णवः । नानुष्ठितश्चेत् क्रतुर्विकलस्स्यात्, उदवसानीयावसानाः सर्वेपि पदार्थास्सर्वै- रपि देवर्षिभिरनुष्ठिताश्चेत्. सर्वेषु हविष्षु सर्वेपि भागिनस्स्युः । कैश्चित्कैश्चित्कृ- ताश्चेत्सर्वेषामपि स क्रतुर्विकल इति ततो विष्णोः प्रीतिः ततो देवानां वरलाभश्च न स्यात् । किञ्च पूर्वं वैष्णवः क्रतुः कालविशेषे नानादैवत्यो जात इत्यभ्युपगमे तस्मिन्नुपदेशातिदेशाभ्यां प्रवृत्तेषु विधिषु श्रुतानां देवतासमर्पकपदानां पूर्वं विष्णु- वाचित्वमिदानीं नानादेवतावाचित्वमिति काप्यदृष्टचरं द्विविधार्थवत्त्वं प्रसज्येत. एतेनेन्द्रादयो देवा विष्णुं यजन्तीति न यष्टृयष्टव्यभावाविरोधः । मनुजास्तु इन्द्रा- दीन् यजन्तीति, नेन्द्रादीनां यष्टव्यत्वप्रसिद्धिविरोधश्चेत्यपास्तम् । तथा हि; विधिषु देवतावाचकपदानां नित्यमेव वैयर्थ्यं प्रसज्येत, एवं यज्ञाग्रहारोपाख्यानवद्देव देवानां क्रत्वनुष्ठानवादा अप्यविवक्षितार्था एव, अन्यथा हि तत्राप्यसाङ्गत्यमा- पद्येत. तथाहि; 'देवा वै यशस्कामास्सत्रमासत अग्निरिन्द्रो वायुर्मखः' इति चतुर्णां देवानां सत्रानुष्ठानमुक्तम्. अत्र कथं चत्वार एव ब्राह्मण्यरहितास्सत्रमातिष्ठेयुः ? सप्तदशावराणां ब्राह्मणानामेव हि सत्रानुष्ठानम्. 'ब्रह्म वै देवानां बृहस्पतिः, 'क्षत्रमिन्द्रः' इत्यादिश्रवणाद्देवादिष्वपि ब्राह्मणादिविभागोऽस्तीति चेत्. अस्तु नाम, तथापि बृहस्पतेरेव देवेषु ब्राह्मणत्वेन निर्धारितस्य सत्राधिकारस्स्यात्. न त्वग्न्यादीनामिन्द्रादीनां च सर्वथैव सत्राधिकारः । तथा सर्पाणामयने 'चर्कपि- शङ्गावुन्नेतारा'विति चर्कपिशङ्गयोर्द्वयोरुन्नेतृकर्म श्रूयते । कथमेककर्तृकमुन्नेतृकर्म

## विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥ २६ ॥

देवादीनां विग्रहादिमत्त्वाभ्युपगमे कर्मणि विरोधः प्रसज्यते, बहुषु यागेषु युगपदेकस्येन्द्रस्य विग्रहवत्त्वे [1]"अग्निमग्न आवह' [2]'इन्द्र आगच्छ हरिव आगच्छ" इत्यादिना आहूतस्य तस्य सन्निधानानुपपत्तेः। दर्शयति चाग्न्यादीनां तत्र तत्रागमनं [3]"कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां यजमानानां यो वै

* श्रुतप्रकाशिका *

॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ विग्रहाभ्युपगमे तद्वदार्थवादिके आह्वानागमने चाभ्युपेये तदा युगपदनेककर्मस्वाह्वाने विरोधः, शरीराधीनत्वादागमनस्येत्यर्थः । आगमनमात्रे प्रामाणिके सति हि तद्यौगपद्ये विरोध इत्यागमने प्रमाणमाह ( दर्शयति चेति ) नेत्यादिकं व्याचष्टे ( तन्नेति ) दर्शनादित्येतद्व्या-

* भावप्रकाशिका *

द्वौ कुर्यातान् ? तस्मादविवक्षितार्थ एव देवादीनां क्रत्वनुष्ठानार्थवादा इति चेत्. उच्यते; वैष्णवे हि सत्रे अङ्गप्रधानयागेषु सर्वत्र विष्णुरेव देवता, तादृशं च सत्रं ये देवाः पुरोडाशदध्याज्यप्रभृतिषु यादृशहविर्विभागित्वं कामयमाना आरेभिरे तेषां तेन वैष्णवसत्रानुष्ठानेन तत्सिद्धम् । इदानीं च तत्सत्रमनुष्ठात्रभावात् खिलीभूतमित्युक्तौ विरोधाभावान्महाभारतप्रतिपन्नोपाख्यायिकायां किञ्चिद्विरोधाभासमालम्ब्य प्रत्यवस्थाने सर्वत्राप्यनाश्वासप्रसङ्गेनेतिहासपुराणादिकं सर्वं निरर्थकमेव स्यादित्यलमतिक्षोदेन ॥ भाष्ये—सन्निधानानुपपत्तेरिति । ननु विग्रहराहित्यपक्षेऽपि देवतायास्सर्वत्र सन्निधानाभावेनाक्षत्वविरोधस्तदवस्थ एवेति असारोऽयमाक्षेप इति चेत्. सत्यम्; देवताविग्रहद्वैणिपूर्वमीमांसोक्तानुवादरूपत्वेन सूत्रस्यादोषात्, योग्यानुपलब्धिरस्त्विति पाठो दृश्यते. तत्र योग्यपदं सम्पातायात-

---

1 यजु. अष्ट. ३-प्रश्न. ५ ॥

2 यजु. आरण. प्रश्न. १-अनु-१२ ॥

3 यजु-काण्ड. १-प्रश्न. ६-अनु. ७-पं. २१ ॥

**देवताः पूर्वः परिगृह्णाति स एनाश्श्वो भूते यजते" इति। अतो विग्रहादिमत्त्वे कर्मणि विरोधः प्रसज्यत इति चेत्, तन्न, अनेकप्रतिपत्तेर्दर्शनात्–दृश्यते हि सौभरिप्रभृतीनां शक्तिमतां युगपदनेकशरीरप्रतिपत्तिः ॥२६॥**

* श्रुतप्रकाशिका *

चष्टे ( दृश्यते हीति ) "आत्मनो वै शरीराणि बहूनि मनुजेश्वर । योगी कुर्याद्बलं प्राप्य तैश्च सर्वां महीं चरेत्' इति भारतवचनादि द्रष्टव्यम्, योग्यानुपलम्भस्तु मन्त्रौषधादिभिर्मनुष्याणामिव शक्तिविशेषैर्देवानामपि सम्भवतीति न विरोध इति भावः । ननु यदि देवा इहागत्य हविरदन्ति तर्ह्यन्यत्र मन्त्रार्थवादप्रतिपन्नमग्नेर्हव्यवाहत्वं भज्येत, अवगम्यते च तत् 'हव्यवाडग्निरजरः पिता नः' इति, "अवाड्ढव्यानि सुरभीणि कृत्वा प्रादाः पितृभ्यः स्वधया ते अक्षन्' इति, 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन् ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त" इत्यादिषु। इह प्रक्षिप्तस्य हविषो लोकान्तरप्राप्तिश्च श्रूयमाणाऽनुपपन्ना, अग्निहोत्राहुती प्रकृत्य "ते वा एते आहुती हुते उत्क्रामतः ते अन्तरिक्षमाविशतः ते अन्तरिक्षं तर्पयतः ते दिवमाविशतः ते दिवं तर्पयतः ते तत आवर्तेते ते इमामाविशतः" इति । स्मर्यते च "अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति। तत आवर्तेते इति इह हविषोरावृत्तिश्चानुपपन्ना, कथं देवैर्भक्षितस्यावृत्तिः ? प्रत्यक्षेण दग्धस्य हविषः कथं देवैर्भक्ष्यमाणत्वञ्च युक्तम् ? इति । उच्यते "अवाड्ढव्यानि सुरभीणि कृत्वा प्रादाः " इति श्रवणादग्निना परिणाम्यमानस्य हविषः सूक्ष्मं रूपं किमप्यलौकिकं विद्यत इत्यभ्युपेत्यम्, श्रेयस्साधनत्ववत्; तच्च देवानामिच्छावशादतीव वर्धते, तथा हि ब्राह्मणं "यद्वै देवा हविर्जुषन्ते अल्पमप्येकामाहुतिमपि तद्गिरिमात्रं वर्धयन्ते"। इति अतोऽपरिमितत्वेन किञ्चिद्भुज्यते किञ्चिन्नीयत इति सर्ववाक्यानुगुण्येन कल्प्यम् । यद्वा इह सन्निधायापि हविर्गृहीत्वा

* भावप्रकाशिका *

मिव भाति, प्रत्युतोपलम्भायोग्यत्वस्यैव प्रदर्शनीयत्वात् । अवाड्ढव्यानि–हव्यानि वोढवानसीत्यर्थः । ( अक्षन्निति ) भक्षितवन्त इत्यर्थः । प्रामीयन्त–मृता इत्यर्थः । ( परिणाम्यमानस्येति ) 'मिमिते मितं इत्यः' इति इत्यः । ( इन्द्रेति )

* श्रुतप्रकाशिका *

तत्स्थानं गत्वा भुञ्जतां को बाधः ? हविषोरिहावृत्तिर्नाम तत्फलभूतवृष्ट्यादेरिह सम्भव उपचारादुक्तः । यद्वा "इन्द्र आगच्छ हरिव आगच्छ मेधातिथे' 'अग्निमग्नमावह सोममावह' इति येष्विष्ट्यादिकर्मसु देवताह्वानतदागमने श्रुते, तेष्वेव कर्मसु इहागत्य हविरदनम्, अन्यत्र त्वग्निभिर्हविष उन्नयनमिति विभागः । ' ते वा एते आहुती हुते उत्क्रामतः' इति वाक्यमपि अग्निहोत्राहुतिविषयम्, न तत्र देवताह्वानागमने । ननु तत्रापि सायंयावप्रातर्यावसंज्ञानां देवानामागमनं श्रूयते "सायंयावानश्च वै देवाः प्रातर्यावाणश्चाग्निहोत्रिणो गृहमागच्छन्ति' इति । सत्यम्; ते तु नाग्निहोत्राहुतिभोक्तारः 'सजूर्देवैस्सायं यावभिरिति सायं संमृशति सजूर्देवैः प्रातर्यावभिरिति प्रातः ये चैव देवाः सायं यावानो ये च प्रातर्यावाणस्तानेवोभयांस्तर्पयति' इति संमर्शनमात्रतृप्तिश्रवणात्तेषाम् । हुतहविर्भोक्तृत्वन्तु सूर्यादीनामेव, न च तत्र सूर्यादीनामाह्वानम्; अतो देवताह्वानवत्सु कर्मस्विहागत्य हविरदनम् अन्यत्र हविष उन्नयनमिति विभाग उपपन्नः, अतोऽग्नेर्हव्यवाहत्वश्रुतिराहुत्योरुत्क्रमणश्रुतिः 'अग्नौ प्रास्ताऽऽहुतिस्सम्यगादित्यमुपतिष्ठते' इति स्मृतिश्च चरितार्था, अतोऽनेकशरीरप्रतिपत्त्या देवानां सन्निधानान्न कर्मणि विरोधः । इतरैस्तु "कति देवाः" इत्युपक्रम्य "त्रयश्च त्रीणि च शता त्रयश्च त्रिसहस्रेति' इति निरुच्य 'कतमे त' इत्यस्यां पृच्छायां 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवाः' इति निर्ब्रुवन्ती श्रुतिरेकैकदेवताया अनेकरूप-

ɥ भावप्रकाशिका ɥ

इन्द्र आगच्छ हरिव आगच्छ मेधातिथे मेषेत्यन्नमिन्द्रस्य सम्बोधनम्. हरिव इति पूर्वस्त्वापरपत्तौ. इन्द्रस्य हरितत्वात् हरिवान् ततस्सम्बुद्धौ ' मतुवसोरुस्सम्बुद्धौ छन्दसि' इति रुत्वे 'भो भगो अघो अपूर्वस्य' इतियत्वे 'लोपश्शाकल्यस्य' इति यलोपे च हरिव आगच्छेतिरूपसिद्धिः । मेधातिथिं किल काण्वायनिं मेषो भूत्वेन्द्रो जहारेति सुब्रह्मण्यार्थवादे श्रूयते । ( सम्मर्शनमात्रतृप्तिश्रवणादिति ) अग्निहोत्रहवण्या हस्तेन सम्मर्शनमात्रतृप्तिश्रवणादित्यर्थः । ( इतरैस्त्विति ) ( कति देवा इति ) याज्ञवल्क्यं प्रति शाकल्यप्रश्ने 'त्रयश्च त्रीच शताः त्रयश्च त्रीच सहस्रा इति' निरुच्य 'महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवता' इति तेषां त्रयस्त्रिंशत्येवान्तर्भावं प्रदर्श्य ' कतमे ते' इति सङ्ख्येयप्रश्ने ' अष्टौ वसव एकादश रुद्रा द्वादशादित्याः प्रजापतिरिन्द्रश्चेति त्रयस्त्रिंशत्' इत्युक्त्वा अत्रैवेतेषामन्तर्भावं

**शब्द इति चेन्नातः प्रभवात्**
**प्रत्यक्षानुमानाभ्याम् ॥ २७ ॥**

विरोध इति वर्त्तते। माभूत्कर्मणि विरोधोऽनेकशरीरप्रतिपत्तेः। शब्दे तु वैदिके विरोधः प्रसज्यते, अनित्यार्थसंयोगात्। विग्रहवत्त्वे हि सावयवत्वेनेन्द्रादे-

* श्रुतप्रकाशिका *

तायां प्रमाणत्वेनोपन्यस्ता. अत्र त्रयस्त्रिंशतां देवानां प्राधान्यमितरेषां तद्गुणभावश्च प्रतीयते, महिमान एवैषामेत इति हि श्रूयते, महिमशब्दस्य शरीरवाचित्वेन व्युत्पत्त्यभावात्. एत इति च न शरीरमात्रनिर्देशः, अपि तु सशरीरचेतनव्यपदेशः, कति देवा इत्युपक्रमस्थदेवशब्दसामानाधिकरण्यादेतइतिपदस्य, न हि देवशब्दो देहमात्रपरः। न च देवशब्दनिर्दिष्टा देवा जीवान्तराणां शरीरभूताः, शरीरलक्षणस्य सर्वथाऽनुपपत्तेः। 'कतम एको देव' इति पृष्ट्वा 'प्राण' इति प्रतिवचनवाक्येऽपि प्राणशब्दो न प्रसिद्धप्राणपरः, अपि तु परमात्मपरः, अतोऽस्याः श्रुतेरेकैकदेवताया अनेकरूपताप्रतिपादकत्वानुपपत्तिमभिप्रेत्य अत्र सैषा श्रुतिरनुदाहृता। व्याख्यात्रन्तरैः 'अनेकप्रतिपत्ते'रित्यस्य शब्दस्य युगपदनेकार्थोपलम्भसामर्थ्यपरत्वेन व्याख्यातत्वेऽपि 'आगच्छन्ती'ति श्रुत्यक्षरस्वारस्यानुगुणमनेकशरीरप्राप्तिपरतया व्याख्यातम् ॥ शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम् ॥ शब्दशब्दं विशिनष्टि ( वैदिक इति ) अभिप्रेतं हेतुमाह ( अनित्यार्थसंयोगादिति ) हेत्वर्थं

* भावप्रकाशिका *

प्रदर्श्य पुनश्च ' त्रयस्त्रिंशदपि देवाः अग्निपृथिवीवाय्वन्तरिक्षादित्यदिवां षण्णां देवानां महिमान' इति षट्स्वन्तर्भावं प्रदर्श्य ' षडपि ते त्रयाणां लोकानां महिमान' इति त्रिष्वन्तर्भावं प्रदर्श्य ' तेपि द्वयोरन्नप्राणयोर्महिमान' इत्युक्त्वा ' तौ चैकस्य प्राणस्य महिमा' इतिपरिशेषितत्वादेकस्यानेकविग्रहयोगः परैरुपपादित इत्यर्थः। नन्वनेकप्रतिपत्तेरितिसूत्रखण्डस्य शङ्करादिभिः कृता द्वितीया व्याख्या किमिति भाष्यकृतोपेक्षितेत्यत्राह ( व्याख्यात्रन्तरैरित्यादिना ) ( अनेकार्थोपलम्भेति ) यद्यपि शाङ्करभाष्यवाचस्पत्यानन्दगिरीयेषु एकस्य वस्तुनोऽनेकत्र कर्मणि अङ्गभावप्रति-

रर्थस्यानित्यत्वमनिवार्यम्; ततो देवदत्तादिशब्दवदि-
न्द्राद्यर्थजन्मनः प्राग्विनाशादूर्ध्वं चेन्द्रादिशब्दानां
वैदिकानामर्थशून्यत्वमनित्यत्वं वा वेदस्य स्यादिति

* श्रुतप्रकाशिका *

विवृणोति (विग्रहवत्त्वे हीति) (अर्थशून्यत्वमनित्यत्वं वेति) देवदत्तादिविनाशे देवदत्तादिशब्दस्येवानर्थकत्वम्. अनित्यत्वम् अनुच्चार्यमाणत्वम्. नित्यत्वे अर्थशून्यत्वम् विग्रहादिमदिन्द्राद्यर्थस्य यावच्छब्दभावित्वाभावात् । अर्थवत्त्वे अनित्यत्वं वा, शब्दस्य यावदर्थभावित्वादर्थानां चानित्यत्वादित्यर्थः । ननु कथमर्थशून्यत्वं शब्दानाम्? अतीतानागतभूतभविष्यदादयश्शब्दा अर्थसमकालत्वाभावेऽप्यर्थवन्त एव । न हि तेषां कदाचिदप्यर्थसमकालत्वसम्भवः, न च तेषामर्थशून्यत्वम्। यथा विन्ध्यस्थेनोच्चारितो मेरुशब्दो देशविप्रकर्षेऽप्यर्थवान् भवति. एवमिन्द्रादिशब्दाश्चेन्द्रादिव्यक्तीनां कालविप्रकर्षेऽप्यर्थवन्तः कस्मान्न भवन्ति? क्वचित् कदाचिदर्थस्य प्रामाणिकत्वं हि शब्दस्यार्थवत्त्वनिबन्धनमिति । उच्यते; अनभिज्ञा भवन्तो भाष्यहृदयस्य, य एवं परिचोदयन्ति; एतदपाकरणाय हि शब्दे तु वैदिक इति विशेषितं सौत्रं पदम्; इहापीन्द्रादिशब्दानां वैदिकानामित्युक्तम्; अयमभिप्रायः-- 'इन्द्र आगच्छ हरिव आगच्छ' इत्यादिकं मन्त्रजातं वैदिककर्मसु विनियुज्यते, तत्र पूर्वमेवेन्द्रव्यक्तौ विनष्टायामिन्द्रशब्दवाच्यव्यक्तेः पाश्चात्ययज्ञकर्मण्यागमनाभावात् इन्द्र आगच्छेत्यादिशब्दानामुच्चार्यमाणानामर्थशून्यत्वमनुच्चार्यमाणत्वं वा स्यादिति । इन्द्रव्यक्त्यन्तरेणार्थवत्त्वमिति चेत्. तद्व्यक्त्यन्तरं पूर्वव्यक्तिसमानाकारायुधपराक्रमविभूतिकं वा, न वा?

७ भावप्रकाशिका ७

पत्तेर्दर्शनादित्येव व्याख्यानम्; तथापि वाचस्पत्ये अनेकत्र कर्मण्यङ्गत्वप्रतिपत्तिर्युगपदङ्गभावावगमनम् तस्य दर्शनात्. यथा एकं ब्राह्मणमुद्दिश्य नमस्कारः क्रियते बहुभिस्तथा स्वस्थानस्थितामेकां देवतामुद्दिश्य बहुभिर्यजमानैर्नानादेशस्थितैर्युगपद्धविस्त्यज्यते, तस्याश्च सन्निहिताया अप्यङ्गभावो भवति, अस्ति हि तस्या विप्रकृष्टानेकार्थोपलम्भसामर्थ्यमित्युक्तत्वात् , तत्र विप्रकृष्टानेकार्थोपलम्भसामर्थ्यमित्येतदनेकप्रतिपत्तेर्दर्शनादित्यस्य व्याख्यान्तरमपि भवितुमर्हतीत्यभिप्रेत्यैवं वर्णितमिति द्रष्टव्यम् । अथवा व्याख्यात्रन्तरशब्देन यादवादेर्ग्रहणमिति न काप्यनुप-

चेत्, तन्न; अतः प्रभवात्—अस्मादिन्द्रादिशब्दादेव पुनः पुनरिन्द्राद्यर्थस्य प्रभवात्। एतदुक्तम्भवति—न हि देवदत्तादिशब्दवदिन्द्रादिशब्दाः वैदिकाः व्यक्तिविशेषमात्रे सङ्केतपूर्वकाः प्रवृत्ताः, अपि तु स्वभावत एव गवादिशब्दवदाकृतिविशेषवाचित्वेन। ततश्चैकस्या-

* श्रुतप्रकाशिका *

प्रथममनुपपन्नम्, स्रष्टृखातन्त्र्यस्यानिवार्यत्वात् सरूपसृष्टिनियमानुपपत्तेः वैरूप्यसम्भवात्। ततश्चान्याकारवाचिनामिन्द्रादिशब्दानां प्रवृत्तावाकारान्तरस्य निमित्तत्वायोगादर्थशून्यत्वमवर्जनीयम्। द्वितीये तु या व्यक्तिरिन्द्रशब्दविषयत्वेनाभिमता स्यात् तस्यां व्यक्तौ तच्छब्दप्रवृत्तिनिमित्तस्य कस्यचिदभावादेव तदवाचकतयाऽर्थशून्यत्वम्; तथापि स्रष्टृपुरुषबुद्ध्यधीनसङ्केतवशात् प्रयोगश्चेत् शब्दसङ्केतगोचरस्यार्थस्यसङ्केतयितृपुरुषबुद्ध्यगोचरत्वे सङ्केतानुपपत्तेः देवदत्तादिशब्दानामिवेन्द्रादिशब्दानां पुरुषान्तरबुद्धिसापेक्षप्रवृत्तित्वाद्वेदस्यानपेक्षत्वलक्षणं प्रामाण्यं न स्यात्। यदि प्रधानकालपरमात्मशब्दवदेकैकव्यक्तिवाचित्वमिन्द्रादिशब्दानां स्यात्तदा सङ्केतनैरपेक्ष्येण निरपेक्षत्वलक्षणं प्रामाण्यं स्यात्, अत इन्द्रादीनां प्रधानादीनामिव नित्यत्वाभावात्तन्नाशेऽर्थशून्यत्वानुच्चार्यमाणत्वयोरन्यतरप्रसङ्गो दुर्वार इति। नातः प्रभवादित्येतद्व्याचष्टे (तन्नेत्यादिना) शब्दादर्थस्योत्पत्तिः कथम्? ततश्चार्थशून्यत्वानित्यत्वपरिहारः कथमित्यत्राह (एतदुक्तमिति) धाता तदाकारमेवेतिपदैः 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्'इति श्रुतिः"यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये।

७ भावप्रकाशिका ७

पत्तिः॥ (विग्रहादिमदिति) विग्रहयुक्तेत्यर्थः। (सरूपसृष्टिनियमानुपपत्तेरिति) अत्र सरूपसृष्टिनियमानुपपत्तेर्वैरूप्यसम्भवात्। द्वितीये तु या व्यक्तिरिति पाठस्समीचीनः। मध्ये ततश्चेत्यादिग्रन्थस्य द्वितीयपक्षान्वितत्वादधिक इव प्रतिभाति, कोशाश्च निरीक्षणीयाः। (या व्यक्तिरिति) यावती व्यक्तिरित्यर्थः। (शब्दसङ्केतगोचरस्येति) गोचरत्वेनाभिमतस्य सर्वस्येत्यर्थः। दूषणान्तरमाह (देवदत्तादिशब्दानामिवेति) दूषणदानाय परिशिनष्टि (यदि प्रधानेति) ननु प्रत्यक्ष-

मिन्द्रव्यक्तौ विनष्टायामत एव वैदिकादिन्द्रशब्दान्मनसि विपरिवर्त्तमानादवगततद्वाच्यभूतेन्द्राद्यर्थाकारो धाता तदाकारमेवापरमिन्द्रं सृजति; यथा कुलालो घटशब्दान्मनसि विपरिवर्त्तमानात्तदाकारमेव घटमिति। कथमिदमवगम्यते ? प्रत्यक्षानुमानाभ्याम्—श्रुतिस्मृतिभ्यामित्यर्थः। श्रुतिस्तावत् [1]"वेदेन रूपे व्याकरोत् सतासती प्रजापतिः" इति, तथा [2]"स

* श्रुतप्रकाशिका *

दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" इति स्मृतिश्च स्मर्यते। धीस्थस्य शब्दस्य तत्तदाकृतिस्मारकतया हेतुत्वम्। तदेव दृष्टान्तेन विशदयति (यथेति) मनसि विपरिवर्त्तमानत्वम्—आलोच्यमानत्वम्। (श्रुतिस्मृतिभ्यामिति) प्रत्यक्षग्राह्यो वेदः प्रत्यक्षशब्दवाच्यः, स्वानुरूपवेदानुमापिका स्मृतिरनुमानशब्दवाच्येत्यर्थः। सतासती—चिदचिती रूपे व्याकरोत् विविधकमरोदित्यर्थः। परेस्तु अनित्याच्छब्दाज्जगतः प्रभवानुपपत्तेरनित्यवर्णातिरिक्तो नित्यः शब्दः स्फोट इत्येकदेशिमतेनोपन्यस्य तद्दूषणस्य वर्णानां नित्यत्वं प्रसाध्य वर्णानित्यत्वेऽपि तद्गतजात्या सम्बन्धग्रहणादिकं जगतस्ततः प्रभवादिकं चोपपन्नमित्युक्तम्। तदयुक्तम्; इष्टानुपयोगाद्विरोधाच्च। तथा हि; न तावच्छब्दो जगदुपादानम्, ब्रह्मोपादानत्वाभ्युपगमात्। निमित्तत्वञ्च न दण्डचक्रादिवत्कारकतया, किन्तु बुद्धिस्थित्या अर्थस्मारकतया; तत्र च धर्माधर्मयोरनित्ययोरपि विषमजगदुत्पत्तौ निमित्तत्वमभ्युपगतम्, दण्डचक्रादीनाञ्चानित्यानामपि निमित्तत्वं दृश्यते, किं कार्यमात्रस्य अनित्या-

* भावप्रकाशिका *

ग्राह्यत्वं घटादिष्वतिप्रसक्तमित्यत आह (प्रत्यक्षग्राह्यो वेद इति) ततश्च प्रत्यक्षग्राह्यवेदत्वमत्र प्रत्यक्षशब्दार्थ इति नातिप्रसङ्ग इति भावः। (तद्गतजात्या सम्बन्धग्रहणादिकमिति) गत्वाद्यात्मनैव गकारादीनामर्थसम्बन्धो न व्यक्तिरूपेण, यथा घटादीनां न व्यक्तिरूपेण वाच्यत्वम्, अपितु जात्यात्मना, तद्वदिति भावः।

१ अष्ट. २-प्रश्न. ६-अनु २-१॥ २ अष्ट- २-प्रश्न- २-अनु- ४१-२२॥

भूरिति व्याहरत् स भूमिमसृजत स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत" इत्यादि। वाचकशब्दपूर्वकं तत्तदर्थसंस्थानं स्मरन् तत्तत्संस्थानविशिष्टं तं तमर्थं सृष्टवानित्यर्थः। स्मृतिरपि [1]"अनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतस्सर्वाः प्रसूतयः" इति; [2]"सर्वेषान्तु स नामानि कर्माणि च

* श्रुतप्रकाशिका *

दुत्पत्तिरनुपपन्ना ? उत जगद्रूपकार्यविशेषस्य ?। न प्रथमः, दण्डचक्रादीनां घटादिकारणत्वदर्शनात्। न द्वितीयः, धर्माधर्मयोर्जगन्निमित्तत्वाभ्युपगमात्; एवं सत्त्योपकारकाणामप्यनित्यानां कारणत्वं यदा सम्भवति तदा स्मर्यमाणतयोपकारकाणां शब्दानामनित्यत्वेऽपि कारणत्वसम्भवः किम्पुनर्न्यायसिद्धः, अतो नित्यत्वस्यानुपयोगात् स्फोटवादो न प्रस्तोतव्यः, दूरे तस्य निरसनीयता; वर्णानाञ्च नित्यत्वसमर्थनमत एव निष्फलम्। किञ्च नित्यानामपि वर्णानां न वर्णत्वाकारेणार्थवाचित्वम्, किन्त्वानुपूर्वीविशेषविशिष्टपदवाक्यरूपेण. विभुतया नित्यतया च देशतः कालतश्च क्रमरहितानामानुपूर्व्या उच्चारणनिबन्धनत्वात्, तस्य च क्षणभङ्गुरत्वादर्थावबोधं प्रयोजनमपेक्ष्य वर्णनित्यत्वसाधनं तद्गतजात्यवस्थानवचनं च

७ भावप्रकाशिका ७

ननु वाचस्पत्ये वाचकशब्दप्रभवत्वं हि देवानामभ्युपेत्यम्. वाचकत्वं च न तावद्वर्णानां सम्भवति, प्रत्येकं वाचकत्वे वर्णान्तरवैयर्थ्यात्, क्षणिकेषु च क्रमिकेषु समुदायाभावात्. नच स्फोटस्य वाचकत्वं सम्भवतीत्येवं प्रकारान्तरेण स्फोटविचारसङ्गतेस्सम्पादितत्वान्नासङ्गताभिधानम्, भूतभाविसर्वकारणस्य नित्यत्वावश्यम्भावेन तत्समर्थनमपि सङ्गतमित्यस्वरसादाह (किञ्च नित्यानामपीति) (क्षणभङ्गुरत्वादिति) ततश्च नित्यत्वं तद्विशिष्टस्य कथमपि साधयितुं न शक्यमित्यर्थः। ननु न विशिष्टस्य नित्यत्वं प्रसाध्यते, किन्तु केवलवर्णानामेवेत्याशङ्क्याह (अर्थावबोधं प्रयोजनमिति) आनुपूर्वीविशिष्टरूपेण वाचकत्वाद्आनुपूर्व्याश्च

१ मनु. अ. १-श्लो० २१ ॥ २

पृथक् पृथक् । वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे" इति। संस्थाः–संस्थानानि, रूपाणीति यावत्; तथा [1]"नामरूपञ्च भूतानां कृत्यानां च प्रपञ्चनम् । वेदशब्देभ्य एवादौ देवादीनां चकार सः" इति । अतो देवादीनां विग्रहवत्त्वेऽपि न वैदिकशब्दानामानर्थक्यं वेदस्यादिमत्त्वं च न प्रसज्यते ॥ २७ ॥

* श्रुतप्रकाशिका *

विफलम्, अर्थावबोधकरूपस्यानित्यत्वास्थितेः, यथोदकाहरणरूपं प्रयोजनमपेक्ष्य पृथिवीस्थिरत्वसमर्थनं पृथिवीत्वजात्यवस्थानवचनं च नोपयुज्यते, पृथिव्या घटरूपेणोदकाहरणसाधनत्वात् पार्थिवावयवरचनाविशेषलब्धरूपस्य घटस्य चानित्यत्वात्; तद्वत्। किञ्च वर्णानां नित्यत्वं नाम किमाप्रलयावस्थायित्वम्? उत उभयावधिराहित्यम्? प्रथमे पूर्वोक्तं वैयर्थ्यं स्थितम्, पृथिव्या आप्रलयावस्थायित्वसमर्थनस्य घटेनोदकाहरणेऽनुपयोगात्। द्वितीये शब्दगुणकाकाशसृष्टिप्रलयश्रुतिविरोधः। वर्णानित्यत्वेऽभ्युपगम्यमानेऽपि तद्गतजात्यभ्युपगमश्च विरुद्धः, कृत्स्नव्यक्त्यनवस्थाने जात्यवस्थानानुपपत्तेः। महाप्रलये कतिपयव्यक्त्यवस्थानन्तु कारणवाक्यविरुद्धम् "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति हि श्रुतिः। अवधारणाद्वितीयनिषेधौ कथं कतिपयव्यक्त्यवस्थानं जात्यवस्थानं च सहेते? किञ्च वर्णानित्यत्वादिकं किं बोधकत्वोपयोगितया समर्थ्यते? किं वा जगतः प्रभवोपयोगितया? प्रथमे वर्णनित्यत्वादिकं सर्वमपि 'अथातो ब्रह्मजिज्ञासा' इत्यत्रैव वक्तव्यम्, अनवबोधकत्वस्य शास्त्रानारम्भहेतुत्वात्। द्वितीये च जन्मादिसूत्रे तत्सर्वं समर्थनीयम्, लक्षणसिद्ध्युपयोगित्वात्। किञ्च वर्णानित्यत्वादिकं सर्वाधिकरणेषु यथाकथञ्चित् घटयितुं शक्यते, अत एतैतदधिकरणासाधारणार्थानुपयोगाद्विरोधाभावात्र वर्णनित्यत्वादिप्रपञ्चनमयुक्तम्। "प्रत्यक्षानुमानाभ्याम्" इति सौत्रपद-

卐 भावप्रकाशिका 卐

नित्यत्वादित्यस्य दृष्टान्तमाह ( पृथिव्या घटरूपेणेति ) ( विरोधाभावेति ) ब्रह्मणः

---

१ वि पु. अं-१-अ-५-श्लो० ६३ ॥

## अत एव च नित्यत्वम् ॥ २८ ॥

यत एवेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदा-

* श्रुतप्रकाशिका *

न्यथा व्याख्यातम्, घटादिनिर्माणस्य शब्दपूर्वकत्वस्य प्रत्यक्षसिद्धत्वात् जगत्सृष्टावप्येतदनुमानादिति । तथा सति न तयोस्समुच्चित्य हेतुत्वमेकसाध्ये सिध्यति, जगत्सृष्टेः शब्दपूर्वकत्वे अनुमानस्यैवाव्यवधानेन प्रवृत्तेः प्रत्यक्षस्य व्याप्तिग्रहणौपयिकत्वेन तच्छेषभूतत्वात्, ततश्च प्रत्यक्षानुमानाभ्यामिति द्विवचनं क्लिष्टं स्यात्, न हि दण्डपरशुभ्यां वृक्षः छिद्यत इति व्यपदिश्यते, दण्डस्य परशूपकरणत्वात्; अतः प्रत्यक्षमूलानुमानादिति निर्देष्टव्यम्, तथा च न निर्दिष्टम् । यदि क्वचिदेवमपि दृष्टं तद्गत्यभावात् स्यात्, इह च गत्यन्तरसम्भवादयुक्तम् । कल्पादिकालीनसृष्टेः शब्दपूर्वकत्वं सृष्टित्वादनुमातुं च न शक्यम्, मूककर्तृकघटादिसृष्टौ हेतोरनैकान्त्यात्; अतो यथोक्त एवार्थः । एवमर्थद्वारकमनित्यत्वमाशङ्क्य परिहृतम् ॥ अथ शब्दद्वारकमनित्यत्वं परिह्रियते—॥ अत एव च नित्यत्वम् ॥ उक्तसङ्गतिर्मन्त्रकृतो वृणीत इत्यादिना अभिप्रेता । ( यत एवेति ) अर्थवादानां प्रतीयमानार्थे

* भावप्रकाशिका *

सर्वविधकारणत्ववादविरोधादित्यर्थः । (सौत्रं पदमन्यथा व्याख्यातमिति) एवमपि व्याख्यातमित्यर्थः । शाङ्करभाष्ये प्रत्यक्षं हि श्रुतिः प्रामाण्यं प्रत्यनपेक्षत्वात्. अनुमानं स्मृतिः, प्रामाण्यं प्रति सापेक्षत्वादित्यपि प्रतिपादितत्वादित्यपि द्रष्टव्यम् । ( यदि तु क्वचिदेवमपीति ) अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामित्यादाविति भावः । ननु शब्दविरोधपरिहारार्थमिन्द्रादिशब्दानामिन्द्रत्वादिजातिवाचित्वे हेतुकर्तव्ये किमर्थं सूत्रकृता देवानां शब्दप्रभवत्वं वर्णितमिति चेत्. उच्यते. जातिवाचित्वं तावत् पूर्वोक्तरेन्द्रादिगतजातिसिद्धिसापेक्षमिति तासामेव जातीनां सिद्धये देवादीनां वेदोपवर्णिततत्तन्नामरूपानुसन्धानपूर्वकं प्रजापतिना स्रष्टृत्वं सूत्रे वर्णितम् . तेन हि पूर्वोक्तरेन्द्रादिषु घटादिष्विव नाम्नामाकृतीनां च समानत्वं सिद्ध्यतीति तेषां नाम्नां साक्षादिन्द्रादिषु प्रवृत्तिनिमित्तभूतास्समानजात्यभिव्यङ्ग्याः इन्द्रादिगता जातयस्सिध्यन्ति. साक्षाज्जातिवाचित्वस्य हेतूकरणे तु इन्द्रत्वादिजातीनां पूर्वपक्ष्यसम्मतत्वेनासिद्धिशङ्का स्यात् . यद्यपि तासां जातीनां

कारवाचित्वम्, तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विका च तत्तदर्थसृष्टिः, तत एव [1]"मन्त्रकृतो वृणीते' [2]'नम ऋषिभ्यो मन्त्रकृद्भ्यः' [3]'अयं सो अग्निरिति विश्वामित्रस्य सूक्तं भवति" इत्यादिभिर्वसिष्ठादीनां मन्त्रकृत्त्वकाण्डकृत्त्वऋषित्वादौ प्रतीयमानेऽपि वेदस्य नित्यत्वमुपपद्यते। एभिरेव 'मन्त्रकृतो वृणीते' इत्यादिभिर्वेद-

* श्रुतप्रकाशिका *

तात्पर्यमस्तीति चेत् 'मन्त्रकृत' इत्यादिवाक्येष्वपि मन्त्रकृत्त्वे तात्पर्यसम्भवात् अनित्यत्वमिति शङ्का। इयमपीन्द्रादिशब्दानामाकृतिवाचित्वात्तत्तच्छब्देन तत्तदर्थस्मृतिपूर्वकतत्तदर्थसृष्ट्या परिहृतेत्यर्थः। उक्तशङ्कापरिहारपरं सूत्रं ये न व्याचक्षते तेषां मते सूत्रवैयर्थ्यं स्फुटम्। शङ्कायाः परिहृतत्वं स्पष्टयति (एभिरेवेति) मन्त्रकृत्त्वं नाम अनधीत्यैव मन्त्राणामस्खलितक्रमस्वरवर्णतया दर्शनम्, तच्च तत्तन्मन्त्रस्मृतिपूर्वकं प्रजापतिना यथापूर्वं सृष्टैस्तत्तन्नामरूपभाग्भिः प्रवाहपरम्परया आगतैर्वसिष्ठादिभिः क्रियत इति वेदनित्यत्वमन्त्रकृत्त्वाविरोध इत्यर्थः। नियुङ्क्ते-

* भावप्रकाशिका *

साक्षात्साधकं समाननामरूपत्वं सूत्रयितुं शक्यम्, तस्योदाहरिष्यमाणश्रुतिसिद्धत्वात्; तथापि तद्धेतुदार्ढ्यार्थं तस्याप्युपपादकं देवानां शब्दप्रभवत्वं सूत्रितम्। सोपि हेतुस्समाननामरूपत्वादित्यत्र दर्शयिष्यते. किञ्च 'अत एव च नित्यत्वम्' इत्युत्तरसूत्रे अतश्शब्देन शब्दप्रभवत्वस्य परामर्शार्थं च एष निर्देशः॥ भाष्ये— यत एव चेन्द्रवसिष्ठादिशब्दानां देवर्षिवाचिनां तत्तदाकारवाचित्वमिति। यद्यपीन्द्रवसिष्ठादिशब्दानामाकृतिवाचित्वमर्थानित्यत्वशङ्काव्युदास एवोपयुज्यते, ननु शब्दानित्यत्वशङ्काव्युदास इति नास्मिन् सूत्रे इन्द्रवसिष्ठादिशब्दानामाकृतिवाचित्वमुपन्यसनीयम्, तथापीन्द्रादिशब्दानामाकृतिवाचित्वात् यथार्थानित्यत्वशङ्काया नावकाशः, तथा मन्त्रकृत्त्वे न त्वदभिमतानामपि वसिष्ठेन्द्रादीनां वेदशब्दप्रभवत्वस्य प्रमाणसम्प्रतिपन्नतया मन्त्रकृत्त्वं मन्त्रद्रष्टृत्वमेव, अतो नानित्यत्वशङ्केत्येवमिन्द्र-

१॥ २ आरण. प्रश्न. ७-अनु. १-पं. १॥ ३ यजु का. ५-प्र.२-अनु. १ पं.॥

शब्दैस्तत्तत्काण्डसूक्तमन्त्रकृतामृषीणामाकृतिशक्त्यादिकं परामृश्य तत्तदाकारान् तत्तच्छक्तियुक्तांश्च सृष्ट्वा प्रजापतिस्तानेव तत्तन्मन्त्रादिकरणे नियुङ्क्ते। तेपि प्रजापतिना आहितशक्तयस्तत्तदनुगुणं तपस्तप्त्वा नित्यसिद्धान् पूर्वपूर्ववसिष्ठादिदृष्टान् तानेव मन्त्रादीननधीत्यैव स्वरतो वर्णतश्चास्खलितान् पश्यन्ति; अतश्च वेदानां नित्यत्वमेषाञ्च मन्त्रकृत्त्वमुपपद्यते ॥ २८ ॥

* श्रुतप्रकाशिका *

मन्त्रदर्शनानुगुणं तपश्चरतेति नियुङ्क्त इत्यर्थः। अस्खलितान् पश्यन्ति—पूर्वकल्पाधीतवेदमन्त्रत्वप्रत्यभिज्ञानपूर्वकं पश्यन्ति, न त्विदम्प्रथमतयेत्यर्थः। श्रुतिरपि ऋषिज्ञानपूर्वकमेव मन्त्राणामनुष्ठानं दर्शयति "यो ह वा अविदितार्षेयच्छन्दोदैवतेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्छति गर्तं वा पद्यते प्रवामीयते पापीयान् भवति यातयामान्यस्यच्छन्दाँसि भवन्ति अथ यो मन्त्रे मन्त्रे वेद स सर्वमायुरेति श्रेयाँश्च भवति अयातयामान्यस्यच्छन्दाँसि भवन्ति तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इति। शौनकादिभिश्च स्मर्यते "दाशतय्यो मधुच्छन्दप्रभृतिभिर्दृष्टा" इति। उक्तं च भगवता व्यासेनैव "युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा" इति। एवमादि चात्र प्रमाणं द्रष्टव्यम्। ननु इतिहासानामप्यपौरुषेयत्वम् वेदस्य वापौरुषेयत्वं प्रसजेत्, अस्मिन् वचने वेदानामितिहाससहपाठेन तुल्ययोगक्षेमत्वादिति चेन्न; इतिहासशब्देन वेदशब्दान्तर्गतानां पुरावृत्तानां विवक्षितत्वात्। यथा "वातरशना ह वा ऋषयः श्रमणा ऊर्ध्वमन्थिनो बभूवुः 'पृथुर्वैन्योऽभिषिच्यत 'उशन्ह

❀ भावप्रकाशिका ❀

वसिष्ठादीनामाकृतिवाचिकथनस्य दृष्टान्तार्थत्वमेवेत्यत्र तात्पर्यम्। (श्रुतिरपि ऋषिज्ञानपूर्वकमेवेति) ऋषिर्द्रष्टा यदि हि कर्ता स्यात्तर्हि कर्तृज्ञानपूर्वकमेवानुष्ठेयं दर्शयेदिति भावः। 'यो ह वा अविदितार्षेयच्छन्दोदैवब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयतीति पाठः। (दाशतय्य इति) ऋग्वेदगता ऋच

* श्रुतप्रकाशिका *

वै वाजश्रवसः सर्ववेदसं ददौ" इत्यादीनि पुरावृत्तानि हि श्रूयन्ते, ततश्च सेतिहासानित्यनेन वेदानामर्थज्ञानेन सह लब्धत्वमुक्तं भवति, अतो न प्रबन्धविशेषवाचकोऽयमितिहासशब्दः, अङ्गेषु धर्मशास्त्रादिषु च सत्स्वपीतिहासमात्रोपादानस्य प्रयोजनाभावात्, तथाऽन्यत्र "ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः। शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः" इति वेददर्शनप्रदानं च स्मर्यते, काठकादिशब्दश्च कल्पादावृषिभिस्तपसा लब्धवेदभागानां प्रवर्तितत्वमुत्तम्भाति, न तावत्कठेनादौ प्रोक्तं काठकमिति वेदपौरुषेयत्ववादिनोऽप्यभीष्टम्, ईश्वरप्रणीतत्वविरोधात्। अथ काठकादिसमाख्याः प्रवचननिमित्ताः। न; इदानीन्तनप्रवक्तृसंज्ञाभिश्च व्यपदेशप्रसङ्गात्, कठादिभ्यः पूर्वपुरुषसंज्ञाभिश्च समाख्यानप्रसङ्गात्, पूर्वे त्वेकशाखाध्यायिनः, कठादयस्त्वेकैकशाखाध्यायिन इति तन्नाम्ना समाख्यानमिति न वाच्यम्, सर्वेषां तत्पूर्वपुरुषाणां बहुशाखाध्यायित्वनियमस्यामानकत्वात्, दृष्टविपर्ययेण कल्पनानुपपत्तेश्च। अथ कल्पादिषु प्रथमप्रवचननिबन्धनाः कठादिसमाख्याः। तन्निबन्धनत्वं च जगन्नित्यत्ववादेऽनुपपन्नम्, प्रथमप्रवचनासम्भवात्, अतः काठकादिसमाख्यान्यथाऽनुपपत्तिश्च महर्षीणां तपसा दृष्टवेदभागत्वे प्रमाणम्। एवं "यो वै वेदांश्च प्रहिणोति" "ब्रह्म स्वयंभ्वभ्यानर्षत्" इत्यारभ्य "त एतं ब्रह्मयज्ञमपश्यन्" 'वाचा विरूपनित्यया "वेदेन रूपे व्याकरोत्" 'अनादिनिधना ह्येषा 'याश्च वेदेषु दृष्टयः' 'वेदशब्देभ्य एवादौ' 'युगान्तेऽन्तर्हितान् वेदान्' इत्यादिवचनैः, आद्ये कल्पे प्रथमं वेदोच्चारणं यथापूर्वक्रमविशेषविशिष्टम्, वेदोच्चारणत्वात्, इदानीन्तनवदित्यादिभिरनुमानैरुपपत्तिभिश्च वेदनित्यत्वस्याप्रकम्प्यत्वात् तदनुरोधाय मन्त्रकृत्त्वादिपदान्यस्माभिरन्येन व्याख्यातानि॥

* भावप्रकाशिका *

इत्यर्थः। (पुरावृत्तानीति) आख्यायिका इत्यर्थः (शर्वर्यन्त इति) प्रलयान्त इत्यर्थः। (तान्येवैभ्य इति) एभ्यो वेदेभ्य एव हेतुभ्य इत्यर्थः। (ईश्वरप्रणीतत्वाविरोधादिति) यद्यपीश्वरप्रणीतत्वपक्षादौ प्रवक्तृत्वं कठादेस्सम्भवति। तथापि प्रोक्तमित्यस्योक्तमित्यर्थ इत्यभिप्रेत्यैतदुक्तं द्रष्टव्यः। (दृष्टवेदभागत्वे प्रमाणमिति) यद्यपि काठकशब्दस्य कठेन प्रोक्तं छन्द इत्यर्थे "कलापिवैशम्पायनान्तेवासिभ्यश्च" इति वैशम्पायनान्तेवासित्वाणिणिनिप्रत्यये तदन्तस्य "छन्दो ब्राह्मणानि च तद्विष-

अथ स्यात्—नैमित्तिकप्रलयादिष्विन्द्राद्युत्पत्तौ वेदशब्देभ्यः पूर्वपूर्वेन्द्रादिस्मरणेन प्रजापतिना देवादिसृष्टिरुपपद्यतां नाम; प्राकृतप्रलये तु स्रष्टुः प्रजापतेः भूताद्यहङ्कारपरिणामशब्दस्य च विनष्टत्वात्कथं प्रजापतेः शब्दपूर्विका सृष्टिरुपपद्यते; कथन्तरां विनष्टस्य वेदस्य नित्यत्वम्? अतो वेदनित्यत्ववादिना देवादीनां विग्रहवत्त्वाभ्युपगमेऽपि लोकव्यवहारस्य प्रवाहानादिता आश्रयणीयेति । अत्रोत्तरं पठति—

* श्रुतप्रकाशिका *

उत्तरसूत्रं शङ्कयाऽवतारयति (अथ स्यादिति) महाप्रलये तत्तदर्थस्मृतिपूर्वकस्रष्टृसम्प्रदायप्रवर्त्तकस्य प्रजापतेस्तत्प्रवर्त्यस्य शब्दस्य चाभावान्न शब्दनित्यत्वमिति प्रपञ्चप्रवाहानादित्वमाश्रयणीयमिति चोद्यपरिहारार्थमिदं सूत्रमित्यर्थः ॥ समान-

७ भावप्रकाशिका ७

याणि' इतिसूत्रेणाध्येतृवेदितृविषयत्वनियमेन तदधीते 'तद्वेदे'त्यर्थविहितस्य प्राग्व्यतीय्यप्रत्ययस्य "प्रोक्ताल्लुक्" इति लुकि णिनिप्रत्ययस्य च "कठचरकाल्लुक्" इति लुकि कठाः, ततस्तेषामाम्नाय इत्यर्थे विवक्षिते 'गोत्रचरणाद्वुञ्' इति सूत्रेण तस्येदमित्यविशेषेण शैषिकेष्वर्थेषु प्राप्तस्य "चरणाद्धर्माम्नाययो"रिति वार्तिकेनानयोरर्थयोरेव भवतीति नियमात्तयोरर्थयोर्वुञि काठकमिति भवतीत्येव शाब्दिकैर्व्युत्पत्तिर्दर्शिता, तथापि 'लुब्योगाप्रख्यानात्' इतिसूत्रोक्तन्यायेनैतादृशयौगिकार्थाप्रतीतेरुपपत्तिसहत्वाभावाच्च शाब्दिकोक्तमनादरणीयमिति भावः । (तत्तदर्थस्मृतिपूर्वकमिति) अनेन 'शब्द इति चेन्नातः प्रभवात्' इति सूत्रोक्तमर्थनित्यत्वमाक्षिप्यते, शब्दस्य चाभावादित्येन 'अत एव च नित्यत्वम्' इति सूत्रोक्तं शब्दनित्यत्वमाक्षिप्यते, ततश्च शब्दार्थानित्यत्वाक्षेपपरिहारपरमिदं सूत्रमिति भावः । (प्रपञ्चप्रवाहानादित्वमाश्रयणीयमिति) न तु मध्ये प्राकृतप्रलयोऽभ्युपगन्तव्य इति भावः ॥ ननु समाननामरूपत्वस्य पूर्वसूत्रे कण्ठोक्त्यभावात्कथं पूर्वोक्तादितिभाष्यमित्या-

समाननामरूपत्वाच्चावृत्तावप्य-
विरोधो दर्शनात्स्मृतेश्च ॥ २६ ॥

कृत्स्नोपसंहारे जगदुत्पत्त्याद्यावृत्तावपि पूर्वोक्तात्समाननामरूपत्वादेव न कश्चिद्विरोधः । तथाहि, स भगवान् पुरुषोत्तमः प्रलयावसानसमये पूर्वसंस्थानं जगत्स्मरन् 'बहु स्याम्' इति सङ्कल्प्य भोग्यभोक्तृजातं स्वस्मिन् शक्तिमात्रावशेषं प्रलीनं विभज्य महदादिब्रह्माण्डं हिरण्यगर्भपर्यन्तं यथापूर्वं सृष्ट्वा वेदांश्च पूर्वानुपूर्वीविशेषसंस्थितानाविष्कृत्य हिरण्यगर्भायोपदिश्य पूर्ववदेव देवाद्याकारजगत्सर्गे तं नियुज्य स्वयमपि

* श्रुतप्रकाशिका *

नामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ ( पूर्वोक्तात्समाननामरूपत्वादेवेति ) पूर्वसूत्रद्वयोक्तया तत्तच्छब्देन तत्तदर्थस्मृतिपूर्विकया तत्तदाकृतिविशिष्टवस्तुसृष्ट्या समाननामरूपत्वमुक्तमिति फलितम्, अतः पूर्वोक्तादित्युक्तम् । एवकारेण सूत्रस्थश्चशब्दोऽवधारणार्थ इति गम्यते । समाननामरूपत्वमनुपपन्नम्, तत्तच्छब्दस्मृतिपूर्वकतत्तदर्थस्रष्टुरभावादित्यत्राह ( तथा हीति ) स इति श्रुतिप्रसिद्धिं द्योतयति । भगवानिति ज्ञानशक्त्यादिवैचित्र्यम् । भगवत्पुरुषोत्तमशब्दाभ्यां "सर्वव्यापी च भगवान् महान्' 'प्रभुर्वै पुरुषः" इत्यादिश्वेताश्वतरवाक्यं स्मारितम् । (शक्तिमात्रावशेषमिति) विद्यमानस्यैव भोग्यभोक्तृवर्गस्य भोग्यत्वाद्यनुगुणशक्तिरस्ति, न तु तत्कार्यं भोक्तृत्वादिकमिति भावः । चतुर्मुखादेरेव स्वतन्त्रस्रष्टृत्वभ्रमनिरासायाह .( स्वयमपीति ) " तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्क्वचित" इति चतुर्मुखवचनम्

* भावप्रकाशिका *

शङ्क्याह ( पूर्वसूत्रद्वयोक्त्येति ) ( श्वेताश्वतरवाक्यं स्मारितमिति ) ततश्च 'यो ब्रह्माणं विदधाति पूर्वम्' इत्युदाहरिष्यमाणं श्वेताश्वतरं न देवतान्तरपरमिति

तदन्तरात्मतयाऽवतस्थे; अतो यथोक्तं सर्वमुपपन्नम् । एतदेव च वेदस्यापौरुषेयत्वं नित्यत्वञ्च, यत्पूर्वपूर्वोच्चारणक्रमजनितसंस्कारेण तमेव क्रमविशेषं स्मृत्वा तेनैव

* श्रुतप्रकाशिका *

"सृष्टिं ततः करिष्यामि त्वामाविश्य प्रजापते" इति भगवद्वचनम् 'तदनुप्रविश्य' इति सामान्यविषयां श्रुतिञ्च प्रमाणमभिप्रेत्याह ( तदन्तरात्मतयेति ) अनेन चतुर्मुखपरमात्मनोः कर्तृत्ववचसामैककण्ठ्यसिद्धिः ( सर्वमुपपन्नमिति ) समाननामरूपत्वतत्कृतवेदनित्यत्वतत्सार्थकत्वान्युपपन्नानीत्यर्थः । शब्दस्योत्पत्तिविनाशाभ्युपगमेऽपि कथं वेदनित्यत्वसिद्धिरित्यत्राह ( एतदेव चेति ) अक्षराणां पदानां वा नित्यत्वं वेदनित्यत्वं चेत् कालिदासादिवाक्यानामपि नित्यत्वप्रसङ्गः । वर्णानुपूर्वीनित्यत्वं चेत् तदप्यनुपपन्नम्, युगपत्सर्गप्रलयमनभ्युपगच्छद्भिर्वर्णानां विभुत्वाभ्युपगमात् न देशत आनुपूर्वी सम्भवति, नित्यत्वाभ्युपगमाच्च न कालतः ; तस्मात् उच्चारणगतः क्रम इति तैरभ्युपेत्यम्, उच्चारणन्तु उत्पत्तिविनाशवदेवेति क्रमनित्यत्वमप्यनुपपन्नम्; तस्मात्पूर्वपूर्वोच्चारणक्रमविशेषो यादृशस्तादृशेनैव क्रमेणोत्तरोत्तरमुच्चार्यत्वं नित्यत्वमित्यस्मदभिमतमेव तैरपि स्वीकर्तव्यमित्यभिप्रायेण एतदेवेत्युक्तम् । ननु पूर्वान्ताभावः पुरुषकृतत्वाभावो वा स्यादपौरुषेयता, उत्तरान्ताभावः उभयान्तविरहो वा नित्यता, क्रमविशेषेणोच्चार्य्यत्वन्तु वेदस्य स्वरूपम्, कथमेषामेकत्वम्? सत्यम्, द्विविधावधिवैधुर्यरूपनित्यत्वमेव वेदे विवक्षितम्, तथापि पूर्वावधिविधूननं प्राधान्येन सिषाधयिषितम्, स्वतन्त्रपुरुषविश्रान्तेर्निरसनीयत्वात् तन्निरसने च प्रतिकल्पं तथा भाविनोत्तरावधि वैधुर्यसिद्धेश्च ; अतो वेदस्य नित्यत्वमपौरुषेयत्वञ्चैकमिति फलितम्. तच्चापौरुषेयत्वं नित्यत्वं वा वेदक्रमविशेषविशिष्टोच्चा-

⁂ भावप्रकाशिका ⁂

अमितव्यमिति भावः । ( तत्कृतवेदनित्यत्वेति ) वेदस्यापि कल्पान्तरीयऋग्वेदादिवेदसमाननामरूपत्वात्कल्पान्तरीयानुपूर्वीलक्षणरूपसमानरूपत्वाच्च नियतानुपूर्वीकत्वलक्षणं शब्दनित्यत्वमुपपद्यते . इन्द्राद्यर्थानामपि समाननामरूपतया समाननामरूपाभिव्यङ्ग्यजातिवाचितया नित्यत्वमिति द्वयमप्युपपन्नमित्यर्थः । ( युगपत्सर्गप्रलयमिति ) न कदाचिदनीदृशं जगदिति प्राकृतप्रलयानभ्युपगन्तृ-

**क्रमेणोच्चार्यत्वम्; तदस्मासु सर्वेश्वरेऽपि समानम् । इयांस्तु विशेषः, संस्कारानपेक्षमेव स्वयमेवानुसन्धत्ते**

* श्रुतप्रकाशिका *

रणभाक्के पर्यवसितम्, अपूर्वक्रमविशिष्टोच्चारयितृपुरुषसद्भावातिरेकेणानित्यत्वपौरुषेयत्वयोरभावान्नित्यत्वापौरुषेयत्वयोस्तद्विपरीतरूपत्वाच्च । यद्वा तेनैव क्रमेण सर्वदोच्चार्यमाणत्वमपौरुषेयत्वनित्यत्वयोस्साधकमिति हेतुहेतुमद्भावादभेदव्यपदेशः । एवमेव भगवताप्युच्चार्यमाणत्वाद्युगपत्सर्वोत्पत्तिसंहारेऽपि नित्यत्वमुपपन्नमित्यभिप्रायेणाह (तदस्मास्विति) सर्वेश्वरोऽपि पूर्वक्रमविशेषं स्मृत्वोच्चारयति चेत्तत्संस्कारोद्बोधात् पूर्वमज्ञत्वमन्याधीनज्ञानत्वञ्च स्यादित्यत्राह (इयांस्त्विति) अस्माकं स्वोच्चारणजनितसंस्कारानपेक्षोच्चारणमध्यापयितृसापेक्षम्, अध्यापयितृनिरपेक्षोच्चारणं स्वोच्चारणजनितसंस्कारसापेक्षम्, एतदुभयं व्यावर्त्तयति संस्कारानपेक्षं स्वयमेवेति, स्वयमेवेत्यध्यापकोच्चारणजनितसंस्कारापेक्षाव्यावृत्तिः । यद्वा संस्कारानपेक्षम् अध्यापकोच्चारणस्वोच्चारणजनितसंस्कारानपेक्षमित्यर्थः । स्वतन्त्रस्येश्वरस्य क्रमान्तरापरिकल्पनेन पूर्वक्रमेणैवोच्चारणे को नियामक इत्यत्राह- स्वयमेवेति । वेदाख्यं शब्दराशिं पूर्वपूर्वक्रमविशिष्टमेव उच्चारणीयम्, न तु क्रमान्तरं कल्पनीयमिति 'बहु स्याम्' इतिवत् स्वसङ्कल्पादेव क्रमान्तरमपरिकल्पयन् यथापूर्वमनुसन्धत्ते, न त्वन्यपरतन्त्रतयेत्यर्थः । अनुसन्धत्ते जानातीत्यर्थः । स्मरणार्थत्वे संस्कारानपेक्षत्वव्याघातात् । ननु 'संस्कारास्तेऽभवन्वेदाः' इति स्मृत्या वेदानामीश्वरस्मृतिविषयत्वमवगम्यते . नैवम्; संस्कारशब्दस्य स्मृतिविषयवाचित्वाभावात् । स्मृतेः संस्कारकार्यतया तद्विषयो लक्षितलक्षणया प्रतिपाद्यत इति चेत्तर्हि प्रमाणविरुद्धलक्षणायाः प्रमाणानुसारिणी लक्षणा वर्णनीया, ईश्वरस्य च स्वतः सर्वदा सम्यक् सर्वार्थसाक्षात्कारित्वं 'यः सर्वज्ञस्सर्ववित्' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुति-

* भावप्रकाशिका *

मीमांसकैरित्यर्थः । ( अपूर्वक्रमेति ) पूर्वानुपूर्वीविसदृशक्रमेत्यर्थः । ( इयांस्त्विति ) ततश्च तदस्मास्वितिभाष्ये तच्छब्देन तेनैव क्रमेणोच्चार्यमाणत्वस्यैवांशस्य परामर्श इति भावः । संस्कारानपेक्षमित्यत्र स्वोच्चारणजन्यसंस्कारमात्रपरत्वेन सङ्कोचो निष्प्रमाणक इत्यस्वरसादाह ( यद्वा संस्कारानपेक्षमिति ) ननु

**पुरुषोत्तमः। कुत इदं यथोक्तमवगम्यत इति चेत्तत्राह— दर्शनात् स्मृतेश्च । दर्शनं तावत् [1]" यो ब्रह्माणं**

* श्रुतप्रकाशिका *

सिद्धम् । ज्ञानस्य स्वाभाविकत्वम् इन्द्रियादिनैरपेक्ष्यम् विविधत्वं विषयवैविध्यात् , परत्वम् याथार्थ्यापरोक्षत्वरूपप्रकर्षः, अतस्तदनुगुणया लक्षणया भवितव्यम् । ततश्च संस्कारा इति—संस्कारबोध्याः, यथापूर्वं बुद्धिस्था इत्यर्थः । यद्वा संस्कारवत्स्वस्मिन्नवस्थिता इत्यर्थः । नन्वीश्वरस्य सर्वज्ञतया शब्दानां सर्वा अप्यानुपूर्व्यः सदा बुद्धिस्था इति सर्ववाक्यानामनाद्यानुपूर्वीविशिष्टतया वेदत्वं स्यात्, पौरुषेयापौरुषेयविभागश्च न स्यात्. नैवम् , ईश्वरस्य सार्वज्ञ्यादेव सर्वविभागसिद्धेः. सर्वासामानुपूर्वीणां तद्बुद्धिस्थत्वेऽपि यादृशक्रमविशिष्टशब्दराशेर्याथार्थ्यं स्वरादिनियमवत्त्वं देशकालादिनियमवत्तयैवोच्चार्यत्वञ्च, तमेव शब्दराशिं वेदाख्यं मन्वानस्तादृशक्रमविशिष्टं तमेव प्रतिब्रह्माण्डसर्गं प्रमाणतया प्रवर्तयति, न त्वन्यच्छब्दजातम्, अतो याथार्थ्यसनियमकोच्चार्यत्वाभ्यां वेदावेदविभागसिद्धिः । सर्वदा पूर्वपूर्वक्रमपरामर्शसापेक्षोच्चारयितृकत्वं तन्निरपेक्षवक्तृकत्वं चेति पौरुषेयापौरुषेयवैषम्यमिति न काचिदनुपपत्तिरिति । दर्शनात् स्मृतेश्चेतिसूत्रपदद्वयस्य शङ्कामाह (कुत इति) युगपत्सर्वसृष्टौ भगवतो यथापूर्ववेदसम्प्रदायप्रवर्त्तकत्वे च श्रुतिस्मृती दर्शयति (दर्शनन्तावदित्यादिना) उदाहृतश्रुतिस्मृतिवाक्येषु सर्वेषु चतुर्मुखस्य भगवता सृष्टत्वं दृश्यते, वेदोपदेशस्तु केषुचिन्न दृश्यते, तत्र 'अनुक्तमन्यतो ग्राह्य'मितिन्यायात् वेदोपदेशोऽपि सृष्ट्युपयोगित्वात्सिध्यतीति भावः । सम्प्रदायप्रवर्त्तकसद्भावमात्रे प्रमाणं वा स्यात्तद्वचनजातम् ।

* भावप्रकाशिका *

सर्वपदार्थानामपि सर्वदा परमात्मबुद्धिस्थतया नित्यानित्यपदार्थविवेक एव न स्यादित्यपि वक्तुं शक्यतया केयमाशङ्का, नहि बुद्धिस्थमात्रेण सत्त्वमप्यस्तीत्याशयवानाह (सर्वदा पूर्वपूर्वेति) (पौरुषापौरुषेयत्ववैषम्यमिति) अत एव वेदावेदवैषम्यं चेति भावः । (सम्प्रदायप्रवर्तकसद्भावमात्र इति) परमात्मनः प्रवर्तकस्य सद्भाव इत्यर्थः । उदाहृतवचनजातस्य समाननामरूपत्वे प्रमाणत्वाभावा-

१ श्वे. ६-१८ ॥

विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति । स्मृतिरपि मानवी [1]"आसीदिदं तमोभूतम्" इत्यारभ्य "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा

* श्रुतप्रकाशिका *

उदाहृतवचनजातं प्रदर्शनार्थम्, ईदृशानि वचनान्तराण्यपि अस्मिन्नर्थे द्रष्टव्यानि; यथा "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् दिवञ्च पृथिवीं चान्तरिक्षमथो सुवः" "यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु" इतिश्रुतिस्मृत्योर्वेदान्तसारे दर्शितत्वात् । 'हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते' इत्यनेन पूर्वसृष्टिसारूप्यं प्रतीयते । किञ्च "तथाभिमानिनो नीतास्तुल्यास्ते साम्प्रतैरिह । देवादेवैरतीतैर्हि रूपैर्नामभिरेव च । "यस्मिन् यो यः पुरा क्लृप्तो यस्मिन् देशे यथा स्थितिः । तस्य तस्यानुरूप्येण प्रजासर्गः प्रवर्तते 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः" इत्यादि । किञ्च 'अग्निर्वा अकामयत अन्नादो देवानां स्यामिति स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत् ततो वै सोऽन्नादो देवानामभवत् अग्निर्वै देवानामन्नादः" तथा "इन्द्रो वा अकामयत ज्यैष्ठ्यं देवानामभिजयेयमिति स एतमिन्द्राय ज्येष्ठाय पुरोडाशमेकादशकपालं निरवपन्महाव्रीहीणां ततो वै स ज्यैष्ठ्यं देवानामभ्यजयत्" इत्यादिना पूर्वपूर्वामीन्द्रादियजनेन पाश्चात्यामीन्द्रादीनामैश्वर्यप्राप्तिरित्यवगम्यते, प्रथमान्ताग्न्यादिशब्दा यजमानं चेतनं सिषाधयिषितरूपेण निर्दिशन्ति, इदानीमिन्द्रः पूर्वस्मा इन्द्राय निरवप-

* भावप्रकाशिका *

दाह (उदाहृतवचनजातं प्रदर्शनार्थमिति) (हिंस्राहिंस्रे इति) पूर्वं हिंस्रस्तद्वासनावासितस्सन् हिंस्रतामापद्यते, एवमहिंस्रादयोपीत्यर्थः । (सिषाधयिषितरूपेणेति) कल्पान्तरे लिप्सितेन्द्रादिभावः । पुरुषस्तत्कल्पवर्तिनमिन्द्रमाराध्य

[1] मनु. १-५-८-९ ॥

सर्वलोकपितामहः" इति । तथा पौराणिकी "तत्र सुप्तस्य देवस्य नाभौ पद्ममजायत । तस्मिन् पद्मे महाभाग वेदवेदाङ्गपारगः । ब्रह्मोत्पन्नस्स तेनोक्तः प्रजाः सृज महामते"। तथा "परो नारायणो देवस्त-

* श्रुतप्रकाशिका *

दित्यर्थः । अतः पूर्वपूर्वामीन्द्रादिसरूपतयोत्तरोत्तरामीन्द्रादिसृष्टिरिति निश्चीयते । किञ्च कर्मविधानमिष्टप्राप्त्यनिष्टनिवृत्तिफलम्, पुरुषप्रवृत्तिश्च सुखलिप्सादुःखजिहासामूला, रागद्वेषौ च दृष्टानुमितश्रुतसुखदुःखतत्साधनभूतभोग्यतदुपकरणतत्साधनविषयौ, न त्वप्रतिपन्नविषयौ; अतः पूर्वकल्पावगतेन्द्रादिपदकामनासञ्चितधर्मफलभोगानुगुणोत्तरोत्तरसृष्टिश्च पूर्वसृष्टिसजातीया भवितुमर्हति, अतो वेदनित्यत्वं नाम प्रत्युच्चारणं पूर्वपूर्वक्रमसुसदृशानुपूर्वीविशिष्टतयोच्चार्यमाणत्वम् । अर्थनित्यत्वं नाम प्रतिसर्गमिन्द्राद्यर्थानां पूर्वपूर्वार्थाकारसुसदृशसंस्थानविशिष्टत्वम्. तथाविधार्थप्रतिपादकत्वमेव वेदस्य नित्यार्थसंयोगः । ननु प्रलयदशायामेकस्य प्रतिभातो वेदः कृतकादविशिष्टः स्यात्, एकस्य प्रतिभातः कुमारसम्भवो हि कृतक इति चेत्. उच्यते; कृतकादविशिष्टत्वं वदतः कोऽभिप्रायः ? एकस्य प्रतिभातत्वं कृतकत्वव्याप्तमिति वा, कृतकत्वशङ्काजनकमिति वा ? । न प्रथमः, बहुषु सुप्तेषु जाग्रत एकस्य प्रतिपन्ने स्वात्मनि व्यभिचारात् । न ह्यात्मा कृतकः, एकस्य प्रतिभातवाक्यत्वं विवक्षितमिति चेत्. किमेकस्य प्रतिभातत्वं नाम एकस्य प्रतिपन्नत्वम् ? उत एकस्य प्रथमप्रतिपन्नत्वम् ? । न प्रथमः, दृष्टान्तस्य साधनविकलत्वात् । न हि कुमारसम्भवोऽस्माकमन्येषां च कदाचिदप्रतिपन्नः । द्वितीये हेत्वसिद्धिः, पञ्चीकृतेषु वेदेषु ह्येकस्य प्रथमप्रतिपन्नत्वं नास्ति, सर्गप्रवाहस्यानादित्वात् । यस्य कल्पस्यादौ प्रतिभानं प्रथममिति विवक्षितम्, ततः पूर्वकल्पेऽपि तेषामेव वेदानां प्रतिभातत्वात् प्राथम्यासिद्धिः, तेषामेव वेदानां तत्तत्पूर्वकल्पेऽपि प्रतिभातत्वं वेदोच्चारणत्वेन लिङ्गेन सिद्धम् । विगीतं वेदोच्चारणं पूर्वाध्ययनसिद्धक्रमविशिष्टविषयम्, वेदोच्चारणत्वात्सम्प्रतिपन्नवदिति । न च

७ भावप्रकाशिका ७

कल्पान्तरे इन्द्रत्वं प्राप्नोतीत्यर्थः । ( पूर्वपूर्वामीन्द्रादिस्वरूपतयेति ) तत्कतु-

स्माज्जातश्चतुर्मुखः" इति । तथा "आदिसर्गमहं वक्ष्ये" इत्यारभ्योच्यते "सृष्ट्वा नारं तोयमन्तस्स्थितोऽहं येन स्यान्मे नाम नारायणेति । कल्पे कल्पे तत्र

* श्रुतप्रकाशिका *

वाच्यं वेदाः कृतकाः, कल्पादावेकस्य प्रतिभातत्वात् ; चतुर्मुखवक्तृकप्रथमवाक्यवदिति। दृष्टान्तस्य साधनविकलत्वात्, चतुर्मुखस्य प्रथमवाक्यं हि स्वतस्सर्वज्ञेन तदन्तरात्मना ज्ञायते । कल्पादावेकक्षेत्रज्ञस्य प्रतिपन्नत्वं हेतुरिति चेन्न ; असिद्धेः । असिद्धिश्च यौगपद्येन प्रवाहतश्चाण्डबाहुल्येन चतुर्मुखतत्सृष्टमहर्षिबाहुल्यात् । एकस्मिन् ब्रह्माण्ड इति हेतुर्विशेष्य इति चेत् तर्ह्येकस्मिन् गृहे दिवसादावेकस्य प्रतिपन्नत्वादुपाध्यायवक्तृकप्रथमवाक्यवद्वेदस्य तदुक्तत्वं किं न स्यात्? देशकालान्तरवर्तिपुरुषप्रतिपन्नत्वात्तेनाप्युपाध्यायेन पूर्वसिद्धत्वेन प्रतिपन्नत्वाच्च तद्वक्तृकत्वस्य बाधितत्वादिति चेत्तुल्यम्। तथा हि ; एकस्मिन्नण्डे कल्पदावेकक्षेत्रज्ञप्रतिपन्नत्वरूपहेतुसिद्धिः कुतः ? " यो वै वेदांश्च प्रहिणोति तस्मै" इत्यादिश्रुतेरिति चेत्तर्हि सैव श्रुतिर्वेदानां पूर्वसिद्धत्वमवगमयतीति हेतुग्राहकप्रमाणेन बाधितविषयता स्यात्, एकस्य प्रतिभातवाक्यत्वं कृतकत्वशङ्कावहमिति चेत्। न, आप्ततया परिज्ञातेन तेनैव पुरुषेण अनादिसिद्धतयोपदिष्टवाक्ये कृतकत्वशङ्कानुदयात्। ईश्वरेण प्रथमसृष्टाश्चतुर्मुखादयः प्राचीनसुकृतातिशयादीश्वराप्त्यवगमानुगुणज्ञानान्विता एव जायन्त इति न शङ्कोदयः । नन्वीश्वरसिद्धौ वेदसम्प्रदायाविच्छेदसिद्धिः, तत्सिद्धौ वेदनित्यत्वसिद्धिः, तत्सिद्धौ वेदप्रामाण्य-

* भावप्रकाशिका *

न्यायादिति भावः । ( यौगपद्येन प्रवाहतश्चेति ) एकसमयोत्पन्नान्यपि बहून्यण्डानि सम्भवन्ति, केषुचिदण्डेष्विदानीमुत्पद्यमानेषु पूर्वकालोत्पन्नान्यप्यण्डानि सम्भवन्ति. ततश्च कल्पादौ एकस्य चतुर्मुखस्य भानसमये तादात्विकाण्डान्तरगतचतुर्मुखस्यापि भानादेकक्षेत्रज्ञप्रतिपन्नत्वं नास्ति. पूर्वोत्पन्नाण्डगतचतुर्मुखसृष्टमहर्षीणां भानाच्च नैकक्षेत्रज्ञमात्रप्रतिपन्नत्वमस्तीति भावः । ( सैव श्रुतिरिति ) तत्सजातीया 'वाचा विरूपनित्यये'त्यादिश्रुतिरेवेत्यर्थः। प्रथमविकल्पे द्वितीयं शिरश्शङ्कते ( एकस्य प्रतिभातवाक्यत्वमिति ) ( ईश्वराप्त्यवगमानुगुणेति )

**शयामि भूयः सुप्तस्य मे नाभिजं स्याद्यथाऽब्जम् ॥ एवम्भूतस्य मे देवि नाभिपद्मे चतुर्मुखः । उत्पन्नस्स**

* श्रुतप्रकाशिका *

सिद्धिः, तत्सिद्धावीश्वरसिद्धिरिति चक्रकमिति । एवं तर्हि पूर्वमीमांसायामपि वेद-प्रामाण्यसमर्थनपरे प्रथमेऽध्याये प्रथमे पादे बाह्यहेतूत्थाप्रामाण्यं निराकृत्य त्रिपाद्या अवान्तरहेतूत्थाप्रामाण्यनिरासे क्रियमाणे त्वदुक्तं चक्रकं प्रसजेत् । तथाहि 'सन्दिग्धे तु वाक्यशेषात्' इत्यादिषु "अक्ताः शर्करा उपदधाति" इत्यादिवेदवाक्या-नामञ्जनसाधनद्रवद्रव्यविशेषानुपस्थापनेन सन्देहलक्षणाप्रामाण्ये पूर्वपक्षिणोक्ते 'तेजो वै घृत'मित्यादिवाक्यशेषावगतद्रव्यविशेषसिद्ध्या तन्निरासस्सिद्धान्तिना क्रियते, तत्र 'तेजो वै घृत'मित्यादिवाक्यशेषप्रामाण्यसिद्धौ अक्ताश्शर्करा इत्यादि-वाक्यविशेषस्य सन्देहलक्षणाप्रामाण्यनिराससिद्धिः, तत्सिद्धौ कृत्स्नवेदप्रामाण्य-सिद्धिः तत्सिद्धौ कृत्स्नवेदान्तर्गतवाक्यशेषप्रामाण्यसिद्धिरिति चक्रकं प्रसज्यत एवेति । न प्रसज्यते; प्रथमे पादे शब्दस्य स्वतःप्रामाण्यसमर्थनादपवादहेतोश्च अपूर्वकमविशेषविशिष्टोच्चारयितृविशेषरूपकर्तुः स्मर्तव्यत्वे सति अस्मर्यमाणत्व-लक्षणयोग्यानुपलब्धिनिरस्तत्वात् वेदप्रामाण्यसिद्धौ तदन्तर्गतवाक्यविशेषस्याभि-धानवृत्तिः प्राक्सिद्धप्रामाण्यविरोधिनीव प्रतिभातीति शङ्कामात्रस्य वाक्यशेषादि-

ঌ भावप्रकाशिका ঌ

चतुर्मुखानां सर्वेषामीश्वराप्तत्वनिश्चयशालितया ईश्वरोपदिष्टवेदनित्यत्वेन शङ्कानिम-षतीतिभावः । इदमुपलक्षणम् । इतरेषामपि वैदिकानां शङ्कानिमिषतीति द्रष्ट-व्यम् । ( बाह्यहेतूत्थेति ) अर्थवादानां हेतुसमर्पकतयैवान्वयस्य वक्तव्यत्वेन तत्सापेक्षतया प्रामाण्यमित्यादिरूपेत्यर्थः । ( सन्देहलक्षणाप्रामाण्य इति ) प्रक्र-मस्थविध्युद्देशगतसामान्यवाच्यक्तपदानुरोधादौपसंहारिकार्थवादगतघृतपदं द्रवद्रव्य-मात्रलक्षकं वा स्यात् , उत विध्यविरोध्यर्थवादगतविध्यपेक्षितविशेषोपपादनाय-क्तघृतमुख्यत्वानुरोधादक्तपदं घृतमात्रपरं वा स्यादित्यनध्यवसायादप्रामाण्यमिति पूर्वपक्षे उपक्रमगतविध्युद्देशगतस्यापि अक्तपदस्यौपसंहारिकार्थवादादेरपि बाधा-भावाद्वाक्यशेषवशेन घृतेनाक्ता इत्यध्यवसायात्प्रामाण्यमिति गुरुमते निर्णीतमिति भावः । ( अभिधानशक्तिरिति ) शब्दशक्तिरित्यर्थः । ( तदसत्पक्षे समान-

मया चोक्तः प्रजास्सृज महामते" इति । अतो देवादीनामप्यर्थित्वसामर्थ्ययोगाद्ब्रह्मविद्यायामधिकारोऽस्तीति सिद्धम् ॥ २९ ॥

मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ ३० ॥

८ अधिकरणम्

ब्रह्मविद्यायां देवादीनामप्यधिकारो-

---

* श्रुतप्रकाशिका *

कृत्स्नपदान्वितवाक्यपर्यालोचनान्नाभिधानवृत्तिस्तथा प्रतिभातीति परिहारमात्रस्य क्रियमाणत्वादिति चेत्, तदसत्पक्षेऽपि समानमिति परितुष्यतामायुष्मता । ये तु 'अक्ताश्शर्करा' इत्यादिवाक्यमात्रस्याप्रामाण्यशङ्का, न तु कृत्स्नवेदस्य, तावन्मात्रस्य परिहारश्चेति वदन्ति तन्मतेऽपि इयमेव प्रतिबन्दी, अक्ताः शर्कराः इत्यादिकतिपयवाक्याप्रामाण्येन कृत्स्नाप्रामाण्यशङ्का हि दुर्निवारा, वेदत्वाविशेषात् । अक्ताः शर्करा इति वाक्याप्रामाण्यनिरासे कृत्स्नवेदाप्रामाण्यशङ्कानिवृत्तिः, तन्निवृत्तौ 'तेजो वै घृतम्' इत्यादिवाक्यशेषाप्रामाण्यशङ्कानिवृत्तिः, तन्निवृत्तौ अक्ताश्शर्करा इत्यादिवाक्यस्य सन्देहलक्षणाप्रामाण्यनिवृत्तिरिति परिहारस्तुल्यः । अधिकरणार्थमुपसंहरति ( अत इति ) ॥ ७ ॥

॥ मध्वादिष्वसम्भवादनधिकारं जैमिनिः ॥ पूर्वाधिकरणे उपासनसामान्ये देवतासामान्यस्याधिकारोऽस्तीत्युक्तम् । अथोपासनविशेषे देवताविशेषस्याधिकारो निरूप्यत इति सङ्गतिः । इममर्थमाह ( ब्रह्मविद्यायामित्यादिना ) इदमधिकरण-

७ भावप्रकाशिका ७

मिति ) सिद्धेपि वेदप्रामाण्ये नित्यत्वे च सिद्धे प्राकृतप्रलये सम्प्रदायप्रवर्तकाभावेन शब्दार्थयोरनित्यत्वशङ्कायां प्राप्तायां महाप्रलयेपि सम्प्रदायप्रवर्तकपरमात्मसद्भावो वाक्यान्तरादवसीयत इति समानमितिभावः । ( इयमेव प्रतिबन्दीति ) वक्ष्यमाणेत्यर्थः । ( सन्देहलक्षणाप्रामाण्यनिवृत्तिरितीति ) चक्रकमिति शेषः । परिहारस्तुल्य इत्यर्थः ॥ ॥ ७ ॥ इति देवताधिकरणम् ॥ ७ ॥

"असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः । तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः ऋच एव

ऽस्तीत्युक्तम्; इदमिदानीं चिन्त्यते, येषूपासनेषु या देवता एवोपास्यास्तेषु तासामधिकारोस्ति, न? इति; किं प्राप्तम्?

* श्रुतप्रकाशिका *

न मधुविद्यामात्रविषयम्, अपि तु ईदृशसर्ववाक्यविषयम् ; अत एव हि मध्वादिष्विति आदिशब्दप्रयोग इत्यभिप्रेत्योक्तम्। (येषूपासनेष्विति) किं मधुविद्यादिषु या देवतोपास्या तासु किं तस्या अधिकारोऽस्ति नेति विचारः। तदर्थम् 'य एतदेव-

७ भावप्रकाशिका ७

मधुकृतः ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः। एतमृग्वेदमभ्यतपन् तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोजायत तद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितं रूपम् ॥ अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यः यजूंष्येव मधुकृतो यजुर्वेद एव पुष्पं ता एता अमृता आपः ॥ तानि वा एतानि यजूंषि एतं यजुर्वेदमभ्यतपन् तस्याभितप्तस्य यशस्तेज इद्रियं वीर्यमन्नाद्यं रसोजायत । तद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लं रूपम् ॥ अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यस्सामान्येव मधुकृतस्सामवेद एव पुष्पं ता अमृता आपः। तानि वा एताति सामानि एतं सामवेदमभ्यतपन् तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोजायत। तद्व्यक्षरत्तदादित्यमभितोऽश्रयत् तद्वा एतद्यदेतदादित्यस्य कृष्णं रूपम् ॥ अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यः अथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः। ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपन् तस्याभितप्तस्य यशस्तेज + तद्वा एतदादित्यस्य परः कृष्णं रूपम् ॥ अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यः गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपस्ता एव एते गुह्या आदेशा एतद्ब्रह्माभ्यतपन् तस्याभितप्तस्य यशस्तेज + तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ते वा एते रसानां रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ तद्यत् प्रथमममृतं तद्वसव उपजीवन्ति अग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति। स य एत-

* श्रुतप्रकाशिका *

ममृतं वेद' इति यच्छब्दः किं सङ्कोचेन वस्वादिव्यतिरिक्तविषयः, उतासङ्कुचितवृत्तिरिति। किं तस्या देवतायास्तद्विद्योपसंहारसामर्थ्यमस्ति, न? इति। किं मधुविद्यायां वस्वादिदेवतामात्रमुपास्यम्, उत तदवस्थं ब्रह्म? इति। किं वसुत्वमात्रं मधुविद्या-

ध भावप्रकाशिका ध

देवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति॥ स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता॥ अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्ति इन्द्रेण मुखेन न वै देवा + रुद्राणामेवैको भूत्वा इन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति +एतस्माद्रूपादुदेति +स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेता उत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेता आदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता। अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन वै देवा +मरुतामेवैको भूत्वा सोमेनैव मुखेन +स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येता। अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा + साध्यानामेवैको भूत्वा ब्रह्मणा मुखेन एतदेवामृतं दृष्ट्वा स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व उदेता अर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता। अथ तत ऊर्ध्व उदेत्यनैवोदेता नास्तमेता एकल एव मध्ये स्थाता तदेषः श्लोको न वै तत्र न निम्रोचनोदियाय कदाचन। देवास्तेनाहँ सत्येन मा विराधिषि ब्रह्मणेति। न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवा हैवास्मै भवति। य एतामेवं ब्रह्मोपनिषदं वेद तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः। तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच इदं वा व तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय वाऽन्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात्। एतदेव ततो भूय इत्येतदेव ततो भूय इति। अस्यार्थः— देवमधु देवानां मोदनात् मध्विव मधु। नन्वादित्यस्य कथं मधुत्वमित्यत आह— द्यौरेवेति। तस्य मधुनो द्यौरेव द्युलोक एव तिरश्चीनवंशः अन्तरिक्षं मध्वपूपम्, मध्वाश्रयापूपो हि तिरश्चीनवंशलग्नस्सन् लभ्यते, एव-

* श्रुतप्रकाशिका *

फलम् , उत ब्रह्मप्राप्तिपर्यन्तवसुत्वमिति । यदा वसुत्वमात्रं फलं तदा वस्वादिदेवतामात्रस्योपास्यत्वेन तस्या देवतायास्तद्विद्योपसंहारसामर्थ्याभावात्-यच्छब्दस्य तद्व्यतिरिक्तविषयत्वात्तत्रानधिकार इति । यदा ब्रह्मप्राप्तिपर्यन्तं वसुत्वं फलं तदा

ꣳ भावप्रकाशिका ꣳ

मन्तरिक्षमपि द्युलोकलग्नं लम्बत इव भातीत्यतो मध्वपूपत्वम् । मरीचयः पुत्राः मरीचिशब्देन मरीचिस्थास्सवित्राकृष्टा भौम्य आप उच्यन्ते, ताः पुत्रा इव पुत्राः भ्रमरबीजभूताः मध्वपूपच्छिद्रस्थास्सूक्ष्मकीटा इत्यर्थः । तस्य ये प्राञ्च इति । तस्यादित्यस्य ये प्राञ्चो रश्मयस्ता एव मधुनाड्यः मधुच्छिद्राणि । ऋच एव मधुकृतः— ऋङ्मन्त्रा एव भ्रमराः । ऋग्वेद एव पुष्पम्— ऋग्विहितं कर्म पुष्पस्थानीयम् । ता अमृता आपः— ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपाः अग्नौ प्रक्षिप्ताः पाकाभिनिर्वृत्ता अमृता अत्यन्तरसवत्य आपो भवन्ति । ता वा एता ऋचः— पुष्पेभ्यो रसमाददाना भ्रमरा इव एताहग्वेदविहितं कर्म पुष्पस्थानीयमभ्यतपन्— अभितापं कृतवत्य इव. एता ऋचः कर्मणि प्रयुक्ता ऋग्भिर्मन्त्रैश्शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकरसं मुञ्चति । पुष्पमिव भ्रमरैराचूष्यमाणं यशस्तेज इन्द्रियं वीर्यमित्यादीनि फलान्युत्पन्नानि । तद्व्यक्षरत्— विशेषेणागात् . गत्वा चादित्यमभितस्सवितुः पूर्वभागमाश्रितवदित्यर्थः । अयमिह निर्गलितार्थः । रोहितं शुक्लं परं कृष्णं मध्ये क्षोभत इवेत्युक्तानि पञ्च रोहितादीनि अमृतानि प्रागाद्यूर्ध्वान्तदेशस्थितरश्मिनाडीतस्तत्तद्वेदोक्तकर्मकुसुमेभ्यस्तत्तद्वैदिकमन्त्रमधुकरैरादित्यमण्डलानीतानि सोमाज्यपयःप्रभृतिद्रव्यनिष्पन्नानि यशस्तेजोवीर्यमिन्द्रियमित्येवमात्मकानि आदित्यमधुसम्बन्धानि वस्वाद्युपजीव्यानि चिन्तयतां फलं वस्वादिप्राप्तिरित्युच्यते । अथ येऽस्य दक्षिणा रश्मयः इत्यादि स्पष्टम् । परः कृष्णम्— अतिशयेन कृष्णमित्यर्थः । गुह्या एवादेशा— रहस्यादेशा कर्माङ्गविषयोपासनानि च । ब्रह्मैव पुष्पम्— प्रणव एव पुष्पम् । मध्ये क्षोभत इव—चलतीव समाहितदृष्टेर्दृश्यते । वसव उपजीवन्ति अग्निनैव मुखेन— अग्निप्रधानास्सन्त उपजीवन्तीत्यर्थः । स्वाराज्यं पर्येता— वसूनामेव तावदाधिपत्यं स्वाराज्यं च पर्येता अनुभवति । द्विस्तावत्— द्विगुणं कालम् । दक्षिणत उदेता , एवमुत्तरत्रापि । एकलः— एकस्वभाव इत्यर्थः । न निम्रोचति—नास्तमेतीत्यर्थः । ननु

नास्त्यधिकारस्तेषु मध्वादिष्विति जैमिनिर्मन्यते ; कुतः ? असम्भवात्– नह्यादित्यवस्वादिभिरुपास्या आदित्यवस्वादयोऽन्ये सम्भवन्ति । न च वस्वादीनां

* श्रुतप्रकाशिका *

तदवस्थब्रह्मण उपास्यत्वेन तद्विद्योपसंहारसामर्थ्याद्यच्छब्दस्य तद्व्यतिरिक्तविषयत्वाभावात्तस्या देवतायास्तस्यां विद्यायामस्त्यधिकार इति । ननु तदवस्थब्रह्मण उपास्यतया सिद्धान्तश्चेत् प्रतर्दनविद्यान्यायेन गतार्थत्वादारम्भवैयर्थ्यम् । नैवम् ; तत्र प्रतिपाद्यविशेषस्यैव निरूपितत्वात्, नहीन्द्रस्य तस्यां विद्यायामधिकारोऽस्ति नेति निरूपितम्; अतोऽधिकारनिरूपणार्थमारम्भणीयत्वमिति । किञ्च तत्रोपक्रममात्रे जीवलिङ्गम्, अवयविनो महावाक्यस्य परमात्मलिङ्गभूयस्त्वादवयविविरोधेऽवयवमात्रस्य दुर्बलत्वाद्राद्धान्त उक्तः । इह तूपसंहारमात्रे परमात्मलिङ्गम्, न तु महावाक्यरूपेऽवयविनि; अतोऽधिकरणमारम्भणीयम् । नन्वेवं सति उपक्रमापेक्षया उपसंहारदौर्बल्याद्राद्धान्तानुपपत्तेरनारम्भणीयता स्यात् । नैवम्; उपक्रमोपसंहारयोर्मिथोविरोधेन उपक्रमावगतार्थपरित्यागे प्राप्ते हि तत्प्राबल्येन उपसंहारबाधः, इह तूपक्रमावगतार्थपरित्यागहेत्वभावान्नोपसंहारबाधः, कथं तर्हि संशयोत्थानम् ? अर्थित्वाद्यसम्भवब्रह्मोपनिषत्त्वश्रवणाभ्यां संशयः । (असम्भवादिति) अर्थित्वसामर्थ्ययोरितिशेषः । कर्मकर्तृविरोधात् सामर्थ्याभाव इत्याह (नहीति) प्राप्तफलत्वादर्थित्वाभाव इत्याह ( नचेति ) आदित्यवस्वादय इत्यादिशब्देन मरुद्रुद्रसाध्या विवक्षिताः, वस्वादित्यमरुद्रुद्रसाध्यगणा एकैकं प्रतिदिशमुपरि च स्थित्वा आदित्यं प्रधानमनुभवन्ति । वस्वादीनामेवोपास्यत्वं वस्वादित्वस्यैव प्राप्यत्वं च किं श्रूयत इत्यपेक्षायां कर्मकर्तृविरोधं प्राप्तफलत्वञ्च

७ भावप्रकाशिका ७

प्रतिपाद्यविशेषे निरूपिते इन्द्रस्याधिकारोऽपि सिद्ध इत्यधिकारनिरूपणार्थं नेदमधिकरणमारम्भणीयमित्यस्वरसादाह ( किञ्च तत्रोपक्रममात्र इति ) उपक्रमोपसंहारयोस्सर्वात्मना विरोधं मन्वानश्चोदयति ( कथं तर्हीति ) ( अर्थित्वाद्यसम्भवब्रह्मोपनिषत्त्वेति ) यद्युपक्रमोपसंहारयोर्निपुणनिरूपणेन विरोधः, तथाप्युपसंहारपर्यालोचनदशोत्पन्नप्रक्रमगतादित्यवस्वादिशब्दजन्यापातप्रतीतिमवलम्ब्य पूर्वपक्ष-

सतां वस्वादित्वं प्राप्यं भवति , प्राप्तत्वात् ; मधुविद्याया-मृग्वेदादिप्रतिपाद्यकर्म्मनिष्पाद्यस्य रश्मिद्वारेण प्राप्तस्य रसस्याश्रयतया लब्धमधुव्यपदेशस्यादित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वं वस्वादित्वञ्च

* श्रुतप्रकाशिका *

श्रुत्यर्थोपन्यासेन विशदयति ( मधुविद्यायामित्यादिना ) (ऋग्वेदादीति ) 'अग्नौ प्रास्ताऽऽहुतिस्सम्यगादित्यमुपतिष्ठते' इति वचनार्थोऽभिप्रेतः। ( आदित्यस्यांशानां वस्वादिभिर्भुज्यमानानामुपास्यत्वमिति ) वस्वादिभिर्भोक्तृभिस्सह तद्भोग्यभूताः आदित्यांशाः उपास्या इत्यर्थः । ननु कथं कर्मकर्तृविरोधः ? स्वात्मविषयमपि ह्यनुसन्धानं सुकरम्, भूमविद्याधीतायां प्राणविद्यायाञ्च कर्मकर्तृविरोधाभावश्च भवदभिमतः, उच्यते; न तावत्स्मृतिसन्ततिमात्रमुपासनम् , घटादिस्मृतिसन्ततेरपि उपासनशब्दवाच्यत्वप्रसङ्गात् , अतः प्रकृष्टवस्तुविषयस्मृतिसन्ततिरेवोपासनम् . नामाद्याशापर्यन्तोपासनेषु नामादीनामन्तवत्फलप्रदानामपि प्रकर्षवत्त्वं विवक्षितम्, वस्वादीनान्तु स्वस्मात्प्रकृष्टत्वाभावात् स्वापेक्षया प्रकृष्टविषयमुपासनं स्वस्मिन् कर्तुं न शक्यते । प्राणविद्यायामप्यवस्थाभेदेनोपास्यप्रकर्षस्सम्भवति, बद्धावस्थ उपासकः, निरतिशयभोग्यं मुक्तावस्थस्वरूपमुपास्यम्, तच्च बद्धादतीव

* भावप्रकाशिका *

प्रतिभोद्गम इति भावः । भाष्ये— आदित्यस्यांशानां वस्वादिभिर्भुज्यमानानामिति। नन्वादित्यांशानां वस्वादिपञ्चदेवगणोपजीव्यानां मधुविद्यायामुपास्यत्वं चेत् वस्वादीनां तदधिकारे काऽनुपपत्तिः ? नहि स्वोपजीव्यत्वेनान्यस्योपासनं विरुद्धम्, तथासत्युपासनमात्रोच्छेदप्रसङ्गात्. सर्वेष्वप्युपासनेषु स्वापेक्षयोत्कृष्टत्वस्योपजीव्यत्वादीनामवश्यानुसन्धेयत्वाच्च . किञ्च उपजीवकपञ्चदेवगणान्तःपातीनां वस्वादीनां पञ्चगणोपजीव्यपञ्चामृतोपासनास्वनधिकारे सर्वेश्वरत्वप्रकारकोपासनायां कस्यापि जन्तोरधिकारो न स्यात्. सर्वमध्ये स्वस्याप्यनुप्रविष्टत्वात् तत्कभमयं पूर्वपक्षः , कथं वा एतत्पूर्वपक्षाभ्युपगमेनैव वस्वादित्याद्यवस्थब्रह्मोपास्यमिति सिद्धान्त इति चेदुच्यते; ' तं देवा ज्योतिषां ज्योतिरायुर्होपासते अमृ-

प्राप्यं श्रूयते [1]"असौ वा आदित्यो देवमधु" इत्युपक्रम्य [2]"तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति" इत्युक्त्वा [3]"स य एतदेवममृतं वेद वसूनामेवैको भूत्वा अग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति" इत्यादिना ॥ ३० ॥

* श्रुतप्रकाशिका *

प्रकृष्टम्, उभयविषयपरविद्यास्वपि स्वात्मांशे कर्मकर्तृविरोधोऽप्यवस्थाभेदेनैव प्रतिहृतः। मधुविद्यायान्तु वस्वादीनामेवोपास्यत्वम्, न तु परिशुद्धावस्थानाम्, अतोऽवस्थाभेदेनापि अविरोधस्य दुर्वचत्वात्कर्मकर्तृविरोध इति । यद्वा स्वयमेवस्वाभीष्टसम्प्रदानाशक्तेन फलार्थिना पुरुषेण उपास्या देवता स्वोपासनप्रीता फलार्थिने फलं दिशति, वस्वादीनान्तु स्वोपासनजनितस्वप्रीत्या स्वस्य फलप्रदत्वमयुक्तमित्युपासनप्रीणनीयत्वाकारेण कर्मकर्तृविरोधः । यदा एकस्यैव फलप्रदत्वफलार्थित्वरूपप्रकर्षापकर्षरूपविरोधगर्भत्वात् कर्मकर्तृविरोध इति स्थिते सामर्थ्याभावः, अतः शक्तत्वाशक्तत्वविशेषप्रीणनीयत्वप्रीणयितृत्वफलप्रदत्वार्थित्वरूपविरोधगर्भत्वात् कर्मकर्तृविरोधः । ईदृशविरोधः प्राणविद्यायामपि स्थित

* भावप्रकाशिका *

तम्' इतिश्रुतिबलाद्रोहितादिपञ्चामृतोपासकत्वमपि न सम्भवतीत्यत्र तात्पर्यमिति । (उभयविषयपरविद्यास्विति) जीवविशिष्टपरविषयविद्यास्वित्यर्थः । ननु प्राणविद्यायामप्यवस्थाभेदेन विरोधसमाधानस्य प्रागनुपपादितत्वात्, तस्या अप्येतदधिकरणविषयत्वं युक्तमित्यभिप्रयन् शक्तत्वाशक्तत्वप्रीणनीयत्वप्रीणयितृत्वफलप्रदत्वार्थित्वादिमुखेन कर्मकर्तृविरोधान्तरं दर्शयन् पक्षान्तरमाह (यद्वा स्वयमेवाभीष्टसम्पादनाशक्तेरित्यादिना) ननु कथं प्राणविद्यायामपि वक्ष्यमाणन्यायोपजीवनेन परिहारः? मधुविद्यायां ब्रह्मविद्यात्मकत्वेनोपासनं विवक्षितमिति हि वक्ष्यमाणन्यायः प्राणविद्यायामनपेक्षितः, तत्र हि शरीरभूते जीवे उपासिते परमात्मा प्रीणाति फलञ्च प्रयच्छतीति सम्भवान्न प्रीणनीयत्वप्रीणयितृत्वविरोधः,

1 छां. ३-१-१ ॥
2 छां. ३-६-१ ॥
3 छां. ३-६-२ ॥

**ज्योतिषि भावाच्च ॥ ३१ ॥**

[1]"तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्" इति ज्योतिषि परस्मिन् ब्रह्मणि उपासनं देवानां श्रूयते। देवमनुष्योभयसाधारणे परब्रह्मोपासने देवानामुपासकत्वकथनं देवानामितरोपासननिवृत्तिं द्योतयति; अत एषु वस्वादीनामनधिकारः ॥ ३१ ॥

* श्रुतप्रकाशिका *

एवात्र वक्ष्यमाणन्यायोपजीवनेन परिहार्य इति। प्राणविद्यायां ब्रह्मात्मकत्वेन उपासनस्याविवक्षितत्वेऽपि वस्तुतो जीवान्तर्यामिणः परस्य प्रीतिजननद्वारा स्वर्गार्थयज्ञादेरिव फलप्रदत्वमित्येतावता वैषम्यम्, प्रकर्षापकर्षगर्भकर्मकर्तृविरोधस्य ब्रह्मात्मकतया परिहारस्तु समानः, अतः प्राणविद्याप्येतन्न्यायसापेक्षेति तत्र विरोधस्यापरिहृतत्वात् तन्निबन्धनस्य सामर्थ्याभावस्यात्र पूर्वपक्षहेतुतया उपन्यासः। इत्यादिना यथोक्तार्थः श्रूयत इत्यन्वयः ॥ ज्योतिषि भावाच्च ॥ ततः किमित्यत्राह (देवमनुष्येति) देवा एव ज्योतिरुपासते, देवा ज्योतिरेवोपासत इति वा वाक्यभङ्गी स्यात्, तत्र न प्रथमः कल्पो युज्यते, मनुष्याणामनधिकारप्रसङ्गात्; तस्मात् ज्योतिरेवोपास्यमित्यर्थः। अन्यथा विशेषवचनवैयर्थ्यं स्यादित्यभिप्रायः ॥ ३१ ॥

* भावप्रकाशिका *

प्रीणनीयत्वस्य परमात्मगतत्वादिति समाधानस्य तत्र सम्भवादित्याशङ्क्य विरोधान्तरसमाधानस्य तथा सम्भवेपि प्रकर्षापकर्षगर्भविरोधस्यावस्थाभेदेनैव परिहरणीयत्वादित्यभिप्रेत्याह (प्राणविद्यायां ब्रह्मात्मकत्वेनेति) (प्रकर्षापकर्षेति) प्रकृष्टस्योपासनकर्मत्वमप्रकृष्टस्योपासनकर्तृत्वमिति विरोध इत्यर्थः। (ब्रह्मात्मकतया परिहारस्त्विति) अवस्थाभेदेन परिहार इत्यर्थः। प्राणविद्यायां ब्रह्मात्मकत्वस्योपास्यकोटिनिवेशासम्भवेन बद्धमुक्तावस्थाभेदेन परिहारः। मधुविद्यायान्तु ब्रह्मात्मकत्वावस्थातद्राहित्याभ्यामुपास्योपासकभेद इति भावः ॥ ३१ ॥

---

1 बृ. ६-४-१४ ॥